वृत्तित्वेन तस्माद्वाक्यात् प्रतीयेत निर्णीयेत । तत्सामान्यात् विधिसमीपवृत्तित्वसामान्यात् साजात्याद् इतरेषु यजमानः प्रस्तर इत्यादिषु तथात्वं स्तावकत्वं न तु प्रस्तरकार्ये यजमानो योज्य इति विधिपरमिति भावः ॥ २३ ॥

प्रकरणे च संभवन् अपकर्षो न कल्पेत विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥

ननु यो विदग्धः स नैर्ऋत इत्यत्र यो निर्ऋतियागः तमुद्दिश्य विदग्धद्रव्यविधिसंभवे अर्थवादत्वकल्पनमन्याय्यमत आह । प्रकरणइति । प्रकरणे दर्शपूर्णमासप्रकरणे संभवन् निविशमानः अर्थवादरूपेण अपकर्षः प्रकरणवियोगो न कल्पेत विधिपरत्वं मुक्त्वा प्रकरणसंबन्धकल्पनपक्षो न संभवति अतो विधिकल्पनानर्थक्यं दर्शपूर्णमासे निर्ऋतियागाभावादिति भावः ॥ २४ ॥

विधौ वाक्यभेदः स्यात् ॥ २५ ॥

ननु तस्मादविदहता अपयितव्य इति विधिस्तावकं सद् नैर्ऋतं चरुं परिशृत्ये गृह इत्यत्र हविषो दाहरूपगुणविधायकमप्यास्तामत आह । विधाविति । उभयतात्पर्ये वाक्यभेदः वाक्यवृत्तिरूपः स्पष्टः ॥ २५ ॥

हेतुवन्निगदाः । अधि० ३

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

चातुर्मास्ये श्रुतम् । शूर्पेण जुहोति तेन ह्यन्नं क्रियतइति । अत्र तेन ह्यन्नमिति वाक्यस्य हेतुविधित्वेन स्तावकत्वेन वा प्रामाण्यमिति संशये पूर्वपक्षमाह । हेतुरिति । उक्तवाक्यं हेतुः हेतुविधायकं शूर्पेण होमः कुत इत्याक्षेपे हि यतः तेनान्नं क्रियते अतः । इत्थं च यदन्नसाधनं तद्धोमसाधनमिति सिद्धम् । तथा च दर्वीस्थाल्यादीनामपि होमसाधनत्वविधायकतया अर्थवत्त्वं फलवत्त्वं शूर्पपदस्यान्नसाधनमात्रोपलक्षकत्वेन उपपत्तिश्चेति ताभ्यां हेतुभ्याम् ॥ २६ ॥

## स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥

सिद्धान्तमाह । स्तुतीति । स्तुतिः शूर्पस्तुतिः शब्दपूर्वत्वात् शब्दः शूर्पेणेति करणत्वबोधकतृतीयान्तः पूर्वं यस्य तेन ह्मत्वमित्यस्य तस्मात् तस्य दर्वीपिठरादेरचोदना न विधिः । होमस्य साधनाकाङ्क्षायां प्रत्यक्षश्रुतशूर्पेण निराकाङ्क्षत्वात्* स्तुतिपरमिति भावः ॥ २७ ॥

## व्यर्थं स्तुतिरन्याय्येति चेत् ॥ २८ ॥

ननु प्रकृष्टाचसाधनत्वं यथा स्थाल्यादौ तथा न शूर्पे इति अविद्यमानधर्मेण स्तुतिरन्याय्येत्याशङ्कते । व्यर्थइति । व्यर्थं उक्तधर्मशून्ये शेषं स्पष्टम् ॥ २८ ॥

## अर्थस्तु विधिशेषत्वाद्यथा लोके ॥ २९ ॥

समाधत्ते । अर्थ इति । विधिशेषत्वाद् विधेयशूर्पस्तावकत्वाद् अर्थः सफलः । यथा लोके चैत्रो बलवत्तरः मैत्रादीन्सहतइत्युक्ते मैत्राद्बलवत्त्वे ऽपि न सिंहाद्बलवान् तथा शूर्पस्य अन्नं प्रति स्थाल्यपेक्षया बहिरङ्गत्वे ऽपि लाङ्गलाद्यपेक्षया ऽन्तरङ्गत्वेन साधकत्वमस्तीति भावः ॥ २९ ॥

## यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥ ३० ॥

तुष्यतु दुर्जन इति न्यायेन हेतुविधित्वमङ्गीकृत्यापि न परसमीहितसिद्धिरित्याह । यदि हेत्विति । यदि हेतुः हेतुविधिः तदा ऽपि निर्देशात् शूर्पस्य निर्देशात् तच्चिह्नमन्नहेतुत्वमेव अवतिष्ठेत प्राप्नुयाद् न तु दर्वीपिठरादिगतम् । पदश्रुत्यपेक्षया प्रत्ययश्रुतेः प्रबलत्वाद् । अविशेषश्रुत्या तृतीयया अन्नकरणसामान्यं बुध्यतइत्याशङ्कते । सामान्यात् । अविशेषतृतीयाश्रवणात् । समाधत्ते । अव्यवस्थेति । विधीनां तथा सत्यव्यवस्था स्याद् वस्तुमात्रे किंचिन्निरूपितहेतुतायाः सत्त्वादिति भावः ॥ ३० ॥

---

* स्वतः प्रमाणभूतवेदबोधितहोमसाधनत्वस्य हेत्वन्तरानपेक्षत्वादिति भावः।

मन्त्राणामर्थप्रत्यायनार्थत्वम् । अधि० ४ ।

## तदर्थशास्त्रात् ॥ ३१ ॥

मन्त्रोच्चारणमदृष्टार्थमुत कर्मसमवेतार्थस्मारकतया तदुपयोग इति संशये पूर्वपक्षमाह । तदिति । देवस्य त्वेत्यारभ्य गायत्रेण छन्दसा ऽऽददे त्रैष्टुभेन जागतेन त्वा छन्दसा ऽऽददे पाङ्क्तेन छन्दसा ऽऽददइति मन्त्राः सन्ति। तत्र लिङ्गेनैव आदानसिद्धौ चतुर्भिरभ्रिमादत्तइति आदानार्थकशास्त्रान्तरश्रवणं तथा इमामगृभ्णन् रशनामित्यत्र लिङ्गेनैव आदानसिद्धौ इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्तइति श्रवणं *व्यर्थम् । उरु प्रथस्वेत्यत्र तदर्थः पुरोडाशप्रथनरूपो ऽर्थः यादृशि शास्त्रे तादृशशास्त्राद् उरु प्रथस्वेति पुरोडाशं प्रथयतीति विधिवाक्यात् तज्ज्ञानसंभवात् । मन्त्रानर्थक्यमित्यत्र †सर्वपञ्चम्यन्तानामन्वयः ॥ ३१ ॥

## वाक्यनियमात् ॥ ३२ ॥

हेत्वन्तरमाह । वाक्येति । वाक्यस्य वाक्यक्रमस्य नियमात् । अग्निर्मूर्धा दिवः ककुदित्यत्र मूर्धा दिव इति व्युत्क्रमपाठे ऽपि अर्थप्रतिपत्तिसंभवात् क्रमनियमो व्यर्थः स्यादिति भावः ॥ ३२ ॥

## बुद्धशास्त्रात् ॥ ३३ ॥

हेत्वन्तरमाह । बुद्धेति । आग्नीध्रेण प्रयोगाद् बहिरेव अग्निविहरणादिकर्म मदीयमिति बुद्धे ज्ञाते अग्नीदग्नीन्विहर बर्हिस्तृणीहीति शास्त्रात् पाठाद् ज्ञातस्य ज्ञानं निष्प्रयोजनमिति भावः ॥ ३३ ॥

## अविद्यमानवचनात् ॥ ३४ ॥

इतो ऽपि मन्त्रानर्थक्यमाह । अविद्येति । अविद्यमानवस्तुनः वचनात् कथनाद् । चत्वारि शृङ्गा त्रयो अस्य पादा इति प्रतिपादितं वस्तु प्रकृतौ विकृतौ वा नास्तीति भावः ॥ ३४ ॥

---

* अदृष्टार्थत्वे तु प्रकरणात्तत्र क्व चन तदुच्चारणं प्रसज्येतेति कर्मविशेषे विनियोगार्थं चतुर्भिरभ्रिमादत्ते इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्तइत्यादीनां सार्थक्यमिति भावः ।

† अनित्यसंयोगान्मन्त्रानर्थक्यमित्येकोनचत्वारिंशत्तमसूत्रस्थइति शेषः ।

### अचेतनार्थसंबन्धात् ॥ ३५ ॥

शृणोत ग्रावाणः स्वधिते मैनं हिंसीरित्यचेतनसंबोधनादप्यी-त्याह । अचेतनेति । अचेतनार्थे स्वधित्यादौ संबन्धात् संबोधन*विभक्तिप्रयोगात् ॥ ३५ ॥

### अर्थविप्रतिषेधात् ॥ ३६ ॥

हेत्वन्तरमाह । अर्थेति । अर्थयोः मन्त्रघटकपदार्थयोः विप्रतिषेधाद् विरोधात् । अदितिर्द्यौरदितिरन्तरिक्षमित्यत्रादितिः चेतना तस्या अचेतनेन अन्तरिक्षादिना साकं संबन्धो विरुध्यतइति भावः ॥ ३६ ॥

### स्वाध्यायवद्वचनात् ॥ ३७ ॥

यथा स्वाध्यायो ऽध्येतव्य इति अक्षरग्रहणविधिः तथा अवचनादर्थस्मरणं मन्त्रेण कर्त्तव्यमिति विध्यभावात् ॥ ३७ ॥

### अविज्ञेयात् ॥ ३८ ॥

अन्यं हेतुमाह । अविज्ञेति । सृण्येव जर्भरी तुर्फरीत्यादिमन्त्राणामविज्ञेयार्थकपदघटितत्वादिति भावः ॥ ३८ ॥

### अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३९ ॥

अन्यमाह । अनित्येति । किं ते कृण्वन्ति कीकटेषु गाव इत्यत्र कीकटदेशादिरूपानित्यवस्तुवचनपदघटितत्वात् । अर्थविवक्षायामनित्यत्वं वेदस्य स्यादतो मन्त्रानर्थक्यं दृष्टस्यार्थस्मरणस्य कारणं न किंतु तदुच्चारणमदृष्टार्थमिति भावः ॥ ३९ ॥

### अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥

सिद्धान्तमारभते । अवीति । लोके यानि पदानि ये च तेषामर्थाः तेभ्यः अविशिष्टः अविलक्षणः वेदे पदसहितो ऽर्थः । यथा लोके उच्चारितशब्दार्थो विवक्षितः तथा वेदे ऽपीति भावः ॥ ४० ॥

---

* ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीः शृणोत ग्रावाण इत्यादाविति शेषः । संबोधनं नामाऽभिमुखीकरणं न च तत्संभवति अचेतने इति भावः ।

† अप्रकाशिते यज्ञे यज्ञाङ्गे च यागस्याभिनिर्वर्तयितुमशक्यतया संभवति दृष्टफलकत्वे ऽदृष्टफलकल्पनाया अन्याय्यत्वाच्च अर्थस्मरणार्थत्वं मन्त्राणामवश्यं वक्तव्यमिति भावः ।

## गुणार्थेन पुनः श्रुतिः ॥ ४१ ॥

चतुर्भिरभ्रिमादत्तइत्यस्य फलमाह । गुणेति । गुणार्थेन चतुष्टयरूपगुणलाभार्थं पुनः श्रुतिः पुनर्विधानम् । आदाने लिङ्गेनैकैकमन्त्रस्य विकल्पेन प्राप्तौ चतुर्णां समुच्चयार्थं पुनर्विधिरिति भावः ॥ ४१ ॥

## परिसंख्या ॥ ४२ ॥

अश्वाभिधानीमादत्तइत्यस्य फलमाह । परीति । परिसंख्याया गर्दभरशनातो निवृत्तिः फलम् । लिङ्गस्योभयसाधारणत्वादिति भावः ॥ ४२ ॥

## अर्थवादो वा ॥ ४३ ॥

उरु प्रथस्वेति ब्राह्मणवाक्यं लिङ्गेन कल्पितविधिशेषो ऽर्थवाद इत्याह । अर्थेति ॥ ४३ ॥

## अविरुद्धं परम् ॥ ४४ ॥

वाक्यनियमादित्यस्योत्तरमाह । अविरुद्धमिति । परं नियतक्रमकं पठनमविरुद्धमर्थस्मरणपत्ते ऽप्यविरुद्धं क्रमपाठनियमापूर्वकल्पनादिति शेषः ॥ ४४ ॥

## संप्रैषे कर्मगर्हाऽनुपालम्भः संस्कारत्वात् ॥ ४५ ॥

बुद्धशास्त्रादित्यस्योत्तरमाह । संप्रैषइति । संप्रैषे ऽग्नीदग्नीनिति वाक्ये कर्मणि कर्मबोधे गर्हा दूषणं तदनुपालम्भः अदूषणम् । संस्कारत्वात् । मन्त्रेण पुनः स्मरणेन आग्नीध्रस्य संस्कारो भवति व्रीहीणामिव प्रोक्षणेनेति भावः ॥ ४५ ॥

## अभिधाने ऽर्थवादः ॥ ४६ ॥

अविद्यमानवचनादित्यस्योत्तरमाह । अभिधानेति । अभिधाने चत्वारीति मन्त्रे चत्वारि शृङ्गा इत्यादीनि पदानि अर्थवादः गौण्या वृत्त्या स्तावकानि । अयमृग्वेदे विषुवसंज्ञकएकाहे आग्नेय्या होता शंसतीति विहितआज्यशस्त्रे अग्निस्सूर्याद्भिन्न इति स्तुत्यर्थे प्रवृत्तः । अस्य सूर्यस्य चत्वारि शृङ्गा दिवससंबन्धिनः यामाः त्रयः शीतोष्णवर्षाः

पादाः द्वे अयने शीर्षे सप्त अश्वाः हस्तासः त्रिधा त्रिप्रकारेण सवनत्रयरूपेण बद्धः वृष्टिहेतुत्वाद्वृषभः महोदेवः मर्त्याननुत्साहयन् आविवेशेति सूर्य्याभिन्नो ऽग्निरित्यर्थः । एतेनाचेतने स्वधित्यादौ चैतन्यारोपेण तत्स्तुतिरिति अचेतनेति सूत्रमपि प्रत्युक्तम् ॥ ४६ ॥

## गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥

अर्थविप्रतिषेधादित्यस्योत्तरमाह । गुणादिति । गुणाद् गुणकथनात् । अविप्रतिषेधः अविरोधः । अदितिर्द्यौरित्यत्र त्वं माता त्वं पितेतिवदविद्यमानगुणैरेव स्तुतिरिति भावः ॥ ४७ ॥

## विद्यावचनमसंयोगात् ॥ ४८ ॥

स्वाध्यायेति हेतुं निवारयति । विद्येति । विद्याया अर्थज्ञानस्यावचनमविधानम् । संयोगादर्थसिद्धत्वात् स्वाध्यायविधिभाव्यमर्थज्ञानमिति सिद्धत्वादिति भावः ॥ ४८ ॥

## सतः परमविज्ञानम् ॥ ४९ ॥

सृण्येव जर्भरीत्यादौ सतः अर्थस्य सतः अविज्ञानं ज्ञानाभावः आलस्यादिति पूरणीयम् । तस्या ऋचो ऽर्थः कौस्तुभे स्पष्टः ॥ ४९ ॥

## उक्तश्चानित्यसंयोगः ॥ ५० ॥

अनित्यसंयोगपरिहारस्तूक्तः प्रथमपाद इत्याह । उक्त इति । अनित्यसंयोगः तद्वारणोपायः ॥ ५० ॥

## लिङ्गोपदेशश्च तदर्थत्वात् ॥ ५१ ॥

एवं परोक्तदोषानुद्धृत्यार्थविवक्षायां साधकमाह । लिङ्गेति । आग्नेय्या ऽऽग्नीध्रमुपतिष्ठत इत्यत्र विधौ आग्नेय्येति मन्त्रे ऽग्निलिङ्गोपदेशः अर्थज्ञानमन्तरा न संभवति । तदर्थत्वाद् अग्निः देवता प्रतिपाद्या अस्यामृचीत्याग्नेयीति तद्धितार्थत्वात् । अस्यामृच्यग्निर्देवता प्रतिपाद्येत्यर्थज्ञानमन्तरा ऽसंभवादिति भावः ॥ ५१ ॥

## ऊहः ॥ ५२ ॥

साधकान्तरमाह । ऊहः ऊहनिषेध उपपन्न इति शेषः । अयं भावः । बहुपशुकयागे अर्थबाधेन एनमित्यत्र एनानिति बहुवचनोहवन् माता

मन्यतामनुपितेत्यत्र मातरो मन्यन्तामनुपितर इत्यूहप्राप्तौ न माता वर्धते नो पितेति माता बहुवचनाद्यूहेन न *वर्धयितव्य इति निषेधः अर्थज्ञानार्थत्वउपपद्यते। केवलमदृष्टार्थत्वे ऊहस्याप्रसक्त्या निषेधो विरुध्यतइति ॥ ५२ ॥

## विधिशब्दाश्च ॥ ५३ ॥

साधकान्तरमाह। विधीति। विधिश्च क्वचिदर्थवादश्च मन्त्रस्यार्थवत्त्वसाधकः। यथा ऽग्निहोत्रप्रकरणे महोपस्थाने अग्ने गृहपते सुगृहपतिरहं त्वयेति मन्त्रे शतं हिमा इत्यस्ति। तत्र हिमा इत्यस्य व्याख्यानं शतं हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वा वैतदाहेति। शतं हिमाः शतं हेमन्तानिति एतद्यजुराहेति व्याख्यानवाक्यार्थः। यद्धि यजुषो ऽर्थज्ञानपर्यन्तं तात्पर्यं न स्यात् तर्हि एतद्यजुरिममर्थमाहेति यजुरर्थप्रकाशनं व्यर्थमिति भावः ॥ ५३ ॥

इति जैमिनिसूत्रवृत्त्यां प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

स्मृतिप्रामाण्यम्। अधि० १।

## धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥

उक्तदिशा विध्यर्थवादमन्त्राणां धर्मे प्रामाण्यं व्यवस्थाप्येदानीं †स्मृतिशिष्टाचाराणां धर्मे प्रामाण्यं व्यवस्थापयन् पूर्वपक्षमाह। धर्मस्येति। धर्मस्य उक्तलक्षणलक्षितस्य शब्दः वेदः मूलं यस्य तस्मात्।

---

* शब्दवृद्धिर्नाम द्विवचनबहुवचनसंयोगः।

† यद्यपि चोदनाप्रामाण्यमप्रामाण्ये ऽपि स्मृतीनां न विहन्यते तथा ऽपि किंलक्षणो धर्म इति जिज्ञासाधिकारात् स्मृतिप्रामाण्यं लक्षणे सङ्गतम्। के चित्तु स्मृतीनामप्रामाण्ये याज्ञिकाः प्रतिनन्दन्तीति मन्त्रस्य स्मार्तरात्रिदेवताककर्माङ्गत्वेन तत्सापेक्षस्यातदप्रामाण्येन अप्रामाण्यात्तत्सामान्येन सकलस्य वेदस्याप्रामाण्यं प्रसज्येतेति वेदप्रामाण्यसिद्ध्यर्थं स्मृतिप्रामाण्यमिति संगतिमाहुः। तन्न समञ्जसम्। स्मृत्यप्रामाण्ये मन्त्रस्य स्मार्तकर्माङ्गत्वे प्रमाणाभावात्। लिङ्गस्यापि तु विनियोजकत्वं फलवदङ्गत्वेनाफलस्य विनियोगात् स्मृत्यप्रामाण्ये च स्मार्तकर्मणः फलवत्त्वाऽभावाच्च वक्तुं शक्यम्। किं च मन्त्राऽप्रामाण्ये ऽपि न सर्वस्य वेदस्याऽप्रामाण्यमापादयितुं शक्यम्। सापेक्षत्वलक्षणहेतोस्तत्राऽभावेन अप्रामाण्यलक्षणसाध्यसिद्धेरयोगात्। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिं प्रति पक्षतावच्छेदकावच्छेदेन हेतुनिश्चयस्य कारणत्वात्। तस्मादुक्तरीत्यैव सङ्गतिरिति।

अष्टकाः कर्तव्या इतिकेवलपौरुषवाक्यप्रतिपाद्यमशब्दमवेदमूलमनपेक्ष्य-मनादरणीयं स्यात् ॥ १ ॥

## अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥

सिद्धान्तमाह । अपि वेति । दृढवैदिकप्रणयनान्यथानुपपत्तिरूप-मनुमानं स्मृतिमूलभूतश्रुतिसत्त्वे स्यात् । तद्दित्थ स्मृतिः स्वमूलभूत-वेददर्शनवत्प्रणीता वेदातिरिक्तगम्यो धर्मो न भवतीतिनिश्चयवता परेषां धर्मज्ञानार्थं प्रणीतत्वात् कल्पसूत्रादिवत् । नन्विदं प्रतारकवाक्य-मित्येव किं नोच्यतइत्यत आह । कर्तृसामान्याद् वैदिकानुष्ठानस्मृ-त्योरेककर्तृकत्वात् । न हि वैदिकं कर्म धर्मबुद्ध्या अनुतिष्ठन् प्रतारको भवेदिति भावः ॥ २ ॥

श्रुतिप्राबल्यम् । अधि० २ ।

## विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ॥ ३ ॥

औदुम्बरीं स्पृष्ट्वोद्गायेदितिश्रुतिविरुद्धा औदुम्बरी सर्वा वेष्टयि-तव्येति स्मृतिः पक्षे श्रुतिबाधिका संकोचिका वा सती धर्मे प्रमाणं स्मृतित्वादिति बहिः पूर्वपक्षे सिद्धान्तमाह । विरोधइति । विरोधे उपलभ्यमानश्रुतिविरोधे अनपेक्ष्यं स्मृतिप्रामाण्यमनादरणीयं कल्प्यश्रुत्य-पेक्षया प्रत्यक्षश्रुतेः प्रबलत्वेन बाधासंभवादिति भावः । विरोधे ऽसति श्रुतिकल्पकमनुमानं प्रवर्तते ॥ ३ ॥

दृष्टमूलकस्मृत्यप्रामाण्यम् । अधि० ३ ।

## हेतुदर्शनाच्च ॥ ४ ॥

ननु सर्वा वेष्टयितव्येतिस्मृतिप्रणयने किं कारणमत्राह । हेत्विति । प्रणयने विस्तीर्णवस्त्रलाभो भवतीति लोभस्य स्मृतिप्रणयने कारणत्व-दर्शनात् । एतेन वैसर्जनीयं वासो ऽध्वर्युर्गृह्णातीति श्रुतिविरुद्धस्मृतेरपि मूलं लोभ एवेति सूचितम् ॥ ४ ॥

पदार्थप्राबल्यम् । अधि० ४ ।

## शिष्टाकोपे ऽविरुद्धमिति चेत् ॥ ५ ॥

वेदं कृत्वा वेदिं करोतीति श्रुत्या वेदवेद्योः पूर्वापरभावः प्रति-

पाद्यते । तयोर्मध्ये क्षुतश्चाचामेदिति क्षुन्निमित्तमाचमनं स्मृत्या प्राप्तम् । एवं श्रौतक्रमेण प्राप्ते स्मार्ताचमनस्य विरोधे आचमनं बाध्यते न वेति संशये सिद्धान्तेनोपक्रमते । शिष्टेति । शिष्टानां वैदिकानां पदार्थानामकोपे अविरोधे आचमनमविरुद्धमनुष्ठेयम् । क्रमस्य पदार्थधर्मत्वेन आचमनेन प्रबलेन पदार्थेन बाधे बाधकाभाव इति भावः ॥ ५ ॥

## न शास्त्रपरिमाणत्वात् ॥ ६ ॥

पूर्वपक्षमाह । नेति । शास्त्रावगतं प्रयोगविध्यवगतं परिमाणं संख्याविशेषो यत्र तत्त्वात्पूर्वोक्तं न । प्रयोगविधिना अस्मिन्कर्मणि इयन्तः पदार्था इति संख्याविशेषो बोधितः तद्विरोधादाचमनस्मृतिबाध इति भावः ॥ ६ ॥

## अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥

सिद्धान्तं द्रढयति । अपि वेति । कारणानां स्मृतिप्रणयनकारणानां लोभादीनामग्रहणे अदर्शने सति प्रयुक्तानि अनुष्ठितान्याचमनादीनि अविरुद्धानि प्रतीयेरन् । न हि स्वगुणरूपसंख्यानुसारेण *प्रधानपदार्थबाधो युक्त इति भावः ॥ ७ ॥

---

* प्रमेयावगमस्य प्रमाणपूर्वकत्वात्पूर्वभाविप्रमाणास्यं बलाबलं पूर्वं गृह्यते । तेनाचमनादिभ्यः क्रमादीनां बलवत्त्वे निर्णीते पश्चादवगतं प्रमेयबलाबलं नादरणीयमिति तु न शक्यम् । प्रमेयगतविरोधालोचनयैव प्रमाणविरोधबुद्धेरुदयेन प्रमेयविरोधावगमकाले एव तयोर्बलाबलस्याप्यवगमात्तत एव निर्णये प्रमाणबलाबलस्येव नैराकाङ्क्ष्येणाऽनादरणीयत्वात् ।

अत्र वार्तिककारो ऽन्यथा अधिकरणमारचयति स्म । भाष्योक्तपूर्वपक्षस्यातिमन्दत्वात् । शाक्योक्ताऽहिंसादिवचनं प्रमाणमप्रमाणं वेति संशये शिष्टाकोपे ऽविरुद्धमिति चेदिति पूर्वपक्षसूत्रम् । अस्यार्थः । शिष्टस्य श्रुतिस्मृतिविहितस्य अकोपे व्याकोपाऽभावे अविरुद्धं तत्प्रमाणं भवत्विति । सिद्धान्तयति । न शास्त्रपरिमाणत्वादिति । "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" । इत्यादिभिरेव धर्मप्रमाया नियतत्वात् श्वदृतिधृतगोक्षीरस्य शुचित्वाऽभाव इव शाक्योक्ताऽहिंसादेः फलसाधनत्वाऽभावेन धर्मत्वाऽभावात्तद्वचनस्याऽप्रामाण्यमिति । अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् । इति सूत्रं तु सदाचारप्रामाण्यबोधनार्थमधिकरणान्तरत्वेन व्याख्यातवान् । सदाचारो ऽप्रमाणं प्रमाणं वेति संशये मूलभूतवेदाऽभावादप्रमाणमिति बहिः पूर्वपक्षे प्रयुक्तानि वैदिकैर्धर्मबुद्धेरनुष्ठितानि कारणस्य रागद्वेषादिनिमित्तकस्य धर्मव्यतिक्रमसाहसस्याग्रहणे श्रुतिस्मृतिविरोधादर्शनाच्च प्रतीयेरन् प्रमाणतया गृह्येरन् । मन्वादिभिरपि श्रुतिः स्मृतिः सदाचार इति संक्षेपेण सदाचारस्य प्रामाण्यं प्रतिपादितम् । तस्मात्प्रमाणमिति सिद्धान्तः ।

शास्त्रप्रसिद्धपदार्थप्रामाण्यम् । अधि० ५ ।

## तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ ॥

यवमयश्चरुर्भवतीत्यत्र आर्ययवनव्यवहारद्वैविध्येन यवपदार्थसंशये पूर्वपक्षमाह । तेष्विति । तेषु व्यवहारेषु विरोधस्य प्रबलदुर्बलभावस्यादर्शनाद् विप्रतिपत्तिः शक्तिग्रहः समा तुल्यः स्यात् ॥ ८ ॥

## शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥

सिद्धान्तमाह । शास्त्रस्थेति । शास्त्रस्था शास्त्रप्रतिपाद्या प्रतिपत्तिः यवशब्दस्य "वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिन" इति शास्त्रप्रतिपत्तिर्बलीयसी । कुतः तन्निमित्तत्वात् । तस्य धर्मज्ञानस्य निमित्तं शास्त्रं तत्त्वात् । यवमयश्चरुर्भवतीति धर्मसाधनयवशक्तिज्ञानं शास्त्रजमेव धर्मउपयुज्यते । यवनानां व्यवहारस्य शक्तिभ्रमेणापि संभवादिति भावः ॥ ९ ॥

म्लेच्छप्रसिद्धप दार्थप्रामाण्यम् । अधि० ६ ।

## चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥ १० ॥

पिकतामरसादिशब्दप्रयोगः आर्याणां न कुत्रापि म्लेच्छास्त्वर्थविशेषे व्यवहरन्ति । तत्र म्लेच्छव्यवहारं परित्यज्य व्याकरणेन प्रकृतिप्रत्ययौ परिशोध्यार्थकल्पनमुचितं म्लेच्छव्यवहारक्लृप्त एव वेति संशये म्लेच्छव्यवहारस्य धर्मसाधनत्वाभावाद् व्याकरणादिना कल्प्योऽर्थ इति बहिः पूर्वपक्षे सिद्धान्तमाह । चोदितमिति । चोदितं यवनैर्व्यवहृतं प्रतीयेत तत्पदार्थत्वेन ज्ञातव्यम् । बलवता प्रमाणेन अविरोधात् । यथा ऽर्थवादविरुद्धो यवव्यवहारः तथा ऽत्राभावादिति भावः ॥ १० ॥

कल्पसूत्राणां स्वतः प्रामाण्याऽभावः । अधि० ७ ।

## प्रयोगशास्त्रमिति चेत् ॥ ११ ॥

बौधायनापस्तम्बादिसूत्राणि पौरुषेयाणि न वेति संशये पूर्वपक्षमाह । प्रेति । प्रयोगशास्त्रं कल्पसूत्रम् अपौरुषेयमनादीति चेत् ॥ ११ ॥

## नासन्नियमात् ॥ १२ ॥

सिद्धान्तमाह । नेति । न अपौरुषेयाः असतः पूर्वमसतः बौधा-

यनाचार्यादिभिः नियमाद् निर्माणात् । तत्र कर्तुः स्पष्टमुपलभ्यमानत्वादिति भावः ॥ १२ ॥

अवाक्यशेषाच्च ॥ १३ ॥

अवाक्यशेषात् । प्रयोगविधिसन्निधौ तच्छेषार्थवादपाठाभावाच्च न वेदतुल्यः ॥ १३ ॥

सर्वत्र प्रयोगात्सन्निधानशास्त्राच्च ॥ १४ ॥

सर्वत्र सर्वकल्पसूत्रेषु सन्निधानशास्त्रात् सन्निधिपठितशास्त्रार्थात् । विरुद्धस्येति शेषः । विरुद्धार्थकस्य प्रयोगात् । यथा ऽऽपस्तम्बसूत्रे सर्वाणि हवींषि पर्यग्नि करोतीति पुरोडाशं पर्यग्नि करोतीति प्रत्यक्षश्रुतिविरुद्धम् । एवमन्यसूत्रेष्वपि द्रष्टव्यानि । अयं भावः । कल्पसूत्राणां वेदमूलत्वमुभयवादिसिद्धं तस्य नित्यत्वे श्रुत्यर्थानुवादकत्वात्प्रत्यक्षश्रुतिविरुद्धं वाक्यं न स्यात् । अनित्यत्वे न्यायाभासज्ञानेन वाक्यरचनं संभवतीति ॥ १४ ॥

सामान्यश्रुतिकल्पनम् । अधि० ८ ।

अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १५ ॥

होलाकाद्याचारः प्राच्यैरेव क्रियते । तन्मूलभूता कल्प्यमाना श्रुतिः होलाकाद्याचारः प्राच्यैः कर्तव्य इति कल्प्यते उत सा प्राच्याद्यघटितेति संशये पूर्वपक्षमाह । अनुमानेति । अनुमानस्य अनुमितिकारणीभूतलिङ्गस्याचारस्य व्यवस्थापनात्प्राग्देशे* एव नियतत्वात् प्रमाणमनुमिता श्रुतिः तत्संयुक्तं प्राच्यादिपदघटितं स्यात् ॥ १५ ॥

अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य ॥ १६ ॥

सिद्धान्तमाह । अपि वेति । होलाकादिः सर्वेषां धर्मः स्यात् । विधानस्याचारानुमितश्रुतेस्तन्न्यायत्वात् । सः प्राच्याद्यघटितवाक्यकल्पको न्यायः तर्कः तत्त्वात् । प्राच्यत्वादेरनुगतस्य निर्वक्तुमशक्यत्वेन प्राच्यादिघटितवाक्यकल्पको ऽत्र हेतुर्नास्तीति भावः ॥ १६ ॥

* हेतुसाध्ययोः सामानाधिकरण्यनियमाद्यत्र हेतुस्तत्रैव साध्यसिद्धिरिति भावः ।

दर्शनाद्विनियोगः स्यात् ॥ १७ ॥

ननु शिखाकर्मवद्व्यवस्था किं न स्यादत्राह । दर्शनादिति । शिखायां मुण्डा भृगव इति गोत्रोपपददर्शनाच् श्रवणाद्विनियोगव्यवस्था इह तथा नेति भावः ॥ १७ ॥

लिङ्गाभावाच्च नित्यस्य ॥ १८ ॥

इतो ऽपि नेत्याह । लिङ्गेति । नित्यस्य कर्तृविशेषनियमकर्तुः लिङ्गस्याभावात् ॥ १८ ॥

आख्या हि देशसंयोगात् ॥ १९ ॥

ननु प्राच्यत्वजातिं स्वीकृत्य तद्घटितश्रुतिकल्पनं संभवतीत्यत्राह । आख्येति । प्राच्यत्वं न जातिः किं तु प्राचीदेशसंयोगाद् व्यवहारः ॥ १९ ॥

न स्याद्देशान्तरेष्विति चेत् ॥ २० ॥

ननु यः प्राच्य इति समाख्यावान् सो ऽन्यस्यां दिशि गतः तदा प्राच्य इति व्यवहारो न स्यात् । प्राग्देशसंयोगस्य व्यवहारनिमित्तस्याभावादिति शङ्कते । न स्यादिति ॥ २० ॥

स्याद्योगाख्या हि माथुरवत् ॥ २१ ॥

मथुरायां भवो माथुर इति योगवदत्रापि प्राच्यां भव इति योगः न देशसंयोगप्रयुक्त इति समाधत्ते । स्यादिति ॥ २१ ॥

कर्मधर्मो वा प्रवणवत् ॥ २२ ॥

ननु मास्तु कर्तृपरिच्छेदः तथा ऽपि करञ्जवृत्तादिपूजनस्य कृष्णामृद्वति देशे आचारात् तादृशभूः कर्मधर्मः कर्माङ्गम् । वैश्वदेवकर्मणि प्राचीनप्रवणदेशवत् ॥ २२ ॥

तुल्यं तु कर्तृधर्मेण ॥ २३ ॥

यथा कृष्णवर्णकर्त्रा ऽनुष्ठिते कर्मणि कृष्णवर्णो नाङ्गन्तथा देशवर्णो ऽपीत्यभिप्रायेण समाधत्ते । तुल्यमिति ॥ २३ ॥

साधुपदप्रयोगनियमः । अधि० ६ ।

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥**

व्याकरणशास्त्रं प्रमाणं न वेति संशये पूर्वपक्षमाह । प्रयोगेति । प्रयोगोत्पत्तौ प्रयोगनियमे गौरित्येव प्रयोक्तव्यं न तु गावीति नियमे व्याकरणस्य निर्मूलत्वेनाशास्त्रत्वाच्छब्देषु गोगाव्यादिशब्देषु न व्यवस्था स्यात् ॥ २४ ॥

**शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २५ ॥**

सिद्धान्तमाह । शब्दइति । शब्दे साधुशब्दे प्रयत्नेन स्वरवर्णादिलोपभीतिपूर्वकतया निष्पत्तेः उत्पत्तेः वर्णस्वरादिलोपे अपराधभागित्वस्य दोषप्रयुक्तत्वस्य श्रवणमप्यस्ति अतः गोशब्दः साधुः गावीशब्दस्त्वसाधुरिति फलितोऽर्थः ॥ २५ ॥

**अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥**

ननु गोशब्दस्य गावीशब्दस्योभयोरप्यर्थवत्त्वमस्तामत आह । अन्याय इति । अनेकशब्दत्वमनेकशब्दवाच्यत्वमन्याय्यमनुचितम् । अनेकपदेषु शक्तिकल्पनायां गौरवादिति भावः* ॥ २६ ॥

**तत्र तत्त्वमभियोगविशेषात्स्यात् ॥ २७ ॥**

तत्र संस्कृतशब्दे तत्त्वं साधुत्वज्ञानम् अभियोगविशेषाद् व्याकरणशास्त्राभ्यासजनितसंस्कारविशेषात् ॥ २७ ॥

**तदशक्तिश्च तदनुरूपत्वात् ॥ २८ ॥**

ननु गाव्यादिपदाद् गोबोधश्च शक्तिभ्रमाद्वाच्यः । भ्रमे मूलं किमित्याकाङ्क्षायामाह । तदिति । तत्र गोपदे अशक्तिः किंचित्करणापाटवदोषादुच्चारणासामर्थ्यं क्व चित्कल्प्यते । नन्वेतावता गावीशब्दे गवार्थत्वं कथमत्राह । तदनुरूपत्वाद् गोशब्दसदृशत्वात्। अयमभिप्रायः केन चिद्गोशब्दोच्चारणेच्छावता कण्ठे दोषवशेन गावीत्युक्तं शिष्येण

* सास्नादिमति अर्थे गोशब्द एव वाचक इतिवद् गावीशब्द एव वाचक इति नियमस्याप्यङ्गीकारे अष्टदोषग्रस्तविकल्पापत्तेरित्यर्थः । हर्यादिशब्दे तु अगत्या तत्स्वीकार इति बोध्यम् ।

तदभिप्रायं ज्ञात्वा गौरानीता समीपस्थो गावीशब्दो गोवाचक इति भ्रमेण गावीशब्दं प्रायुङ्क्त तद्दृष्ट्वा ऽन्यः एवमन्यपरम्परया गोशक्तिभ्रम इति भावः ॥ २८ ॥

## एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २९ ॥

एवमेकदेशविकारे ऽप्यर्थस्मरणाङ्गीकारादेव अश्मकैरागच्छतीति पञ्चमीस्थाने तृतीयाप्रयोगे ऽपि विभक्तेर्व्यत्यये अन्यस्योच्चारणे ऽपि अश्मकेभ्य इति समुदायैकदेशत्वादश्मकशब्दस्य तस्मादश्मकदेशस्मरणमिति । तथा गावीशब्दस्य गौरिति शब्दैकदेशत्वाद्गोस्मरणमुपपन्नमिति भावः ॥ २९ ॥

लोकवेदयोः शब्दार्थैक्यम् । अधि १० ।

## प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥

लोकवेदयोः शब्दार्थौ भिन्नौ उताभिन्नाविति संशये शब्दार्थौ भिन्नौ । देवासः भवाति कर्णेभिरिति रूपभेदात् । उत्ताना हि देवगवा वहन्तीति चार्थभेदादिति बहिः पूर्वपक्षे सिद्धान्तमाह । प्रयोगेति । पूर्वमुभयोर्भेद इति पूरणीयम् । प्रयोगस्य वाक्यस्य चोदना उच्चारणजन्यार्थप्रतीतिः तदभावात् । अभावप्रसङ्गात् । अयं भावः । वैदिकशब्दार्थयोः भिन्नत्वे तयोरपूर्वत्वेन शक्तिग्रहासम्भवादर्थज्ञानं न स्यादिति । अतः शब्दानामविभागादभेदादर्थैक्यमपि । लोके गृहीतशक्तिकत्वात्तदुपपत्तिः* ॥ ३० ॥

आकृतिशक्तिः । वर्णकान्तरम् ।

## अद्रव्यशब्दत्वात् ॥ ३१ ॥

पदानां व्यक्तौ जातौ वा शक्तिरिति संशये पूर्वपक्षमाह । अद्रव्येति । जातिवाचकत्वपक्षे अद्रव्यवाचकता स्याद् इत्यर्थः । एका देया द्वे देये इत्यादौ जातेरेकत्वेन संख्यान्वयासम्भवादिष्टापत्तिर्न सम्भवतीति भावः ॥ ३१ ॥

* यूपादिशब्दानां तु प्रसिद्धपदसमभिव्याहाराच्छक्तिग्रह उपपद्यते इति भावः ।

अन्यदर्शनाच्च ॥ ३२ ॥

इतो ऽपि न जातिरर्थ इत्याह । अन्येति । अन्यशब्दार्थस्य दर्शनात् । यदि पशुरुपाकृतः पलायेतान्यं पशुमुपाकुर्यादित्यत्र अन्यपदार्थस्य पशुपदार्थेनान्वयो वाच्यः । स न सम्भवति । तव मते जातेः पशुपदार्थस्यैकत्वेन तत्रान्यपदार्थान्वयासम्भवात् । जातेः पलायनासम्भवात्* । अतो व्यक्तावेव शक्तिरिति प्रणीयम् ॥ ३२ ॥

आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥

सिद्धान्तमाह । आकृतिरिति । क्रियार्थत्वात् क्रियाप्रयोजनत्वात् । आकृतिः जातिः पदवाच्या । अयं भावः । व्यक्तिशक्तिवादिना ऽप्यवश्यं जातिर्भासतइति वाच्यम् । अन्यथा श्येनचितं चिन्वीतेतिवाक्यार्थानुपपत्तिः । तथा हि । धात्वर्थे श्येनः किं करणत्वेनान्वेत्युत कर्मत्वेन । नाद्यः । कर्मण्यग्न्याख्यायामिति पाणिनिसूत्रम् । कर्मवाचके श्येनादिरूपे उपपदे धात्वर्थे ऽपि कर्मणि अग्न्याख्यस्थण्डिलसंज्ञायां कर्तव्यायां चिनोतेर्धातोः क्विप् स्यादिति तदर्थः । इत्थं चोक्तसूत्रानुसारेण श्येनसदृशे लक्षणां स्वीकृत्य श्येनसदृशं चीयमानं स्थण्डिलं चयनक्रियया भावयेदिति वाक्यार्थः संपद्यते । करणत्वेनान्वये कर्मवाचकोपपदाभावेन निरुक्तसूत्रविरोधः । अतो ऽवश्यं कर्मत्वेनान्वये सादृश्यलक्षणया कर्मत्वं श्येनपदार्थस्य संपादनीयम् । चयनक्रियायाः फलं श्येनसादृश्यं तादृशगुणस्यैव श्येनचितं चिन्वीत स्वर्गकाम इत्यत्र स्वर्गसाधनत्वं प्रतीयते । एवं सति केवलव्यक्तिशक्तिवादिना यावद्व्यक्तिसादृश्यमिष्यत-उत यत्किंचिद्व्यक्तिसादृश्यम् । सर्वव्यक्तिसादृश्यस्यैकत्रासंभवान्नाद्यः । न द्वितीयः । यद्व्यक्तिसादृश्यं वेदतात्पर्यविषयीभूतं तन्नाशे ऽनुष्ठानलोपापत्तिः । तात्पर्यविषयीभूतवस्तुनो ऽभावादगत्या श्येनत्वाश्रयसादृश्यमिति वाच्यम् । तथा च श्येनत्वबोधस्यावश्यकतया तद्बोधार्थं तत्रापि शक्ति-

* एवं वृक्षौ वृक्षानित्यादौ लिङ्गसंख्याकारकान्वयाऽसम्भवो ऽपि द्रष्टव्यः । न च व्यक्तेर्वाच्यत्वे आनन्त्यव्यभिचाराविति वाच्यम् । जातेरुपलक्षणत्वाङ्गीकारात् । तावतैव धर्मान्तरप्रकारकबोधापत्तिवारणे तत्र शक्तिकल्पनाया अनुपयोगात् । अत एव पुरुषो देवदत्त इत्यादौ एकार्थकत्वरूपसामानाधिकरण्योपपत्तिरिति पूर्वपक्ष्यभिप्रायः ।

स्तत्रावश्यकी । तथा सति तत्रैव शक्त्या सर्वकार्यनिर्वाहे व्यक्तिशक्तिः निरर्थिकेति बहुविस्तरेणालम् । इममेवार्थं भट्टपादा आहुः ॥ "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति ॥ ३३ ॥

## न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३४ ॥

सिद्धान्ते दूषणान्याह । नेति। व्रीहीन्प्रोक्षतीत्यत्र जातेः प्रोक्षणरूपा क्रिया न स्यात् । तथा पदार्थान्तरे अन्यपशुस्थाने अन्यपशोर्विधानं स्यात् । द्रव्यं द्रव्यकार्यम् एका देया षड् देया इति च न स्यात् । इति द्वयं संपातायातम् ॥ ३४ ॥

## तदर्थत्वात्प्रयोगस्याविभागः ॥ ३५ ॥

सिद्धान्त्युक्तदूषणानि परिहरति । तदर्थत्वादिति । उक्तानां व्रीह्यादिपदानां लक्षणया तदर्थत्वाद् व्रीह्याद्यर्थत्वात् प्रयोगस्य व्रीहीन्प्रोक्षतीति प्रयोगस्याविभागः अबाधः । तदुक्तं भट्टपादैः । "आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः । न व्यक्तावाकृतौ तु स्यात्सर्वमेतत्समञ्जसम् । अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः । आकृतेः प्रथमं ज्ञाने तस्या एवाभिधेयता । व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता । लिङ्गसंख्यादिसंबन्धः सामानाधिकरण्यधीः। सर्वोपपन्ना च यतस्तस्मात्तत्रैव कल्पयेदिति"* ॥ ३५ ॥

इति जैमिनिसूत्रवृत्त्यां प्रथमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

* अयमभिप्रायः। अन्वयव्यतिरेकाभ्यां जातिरेव वाच्या। न च लिङ्गसंख्याक्रियाकारकाणामन्वयस्य सामानाधिकरण्यस्य चानुपपत्तिः । व्यक्त्याकृत्योरभेदाद् व्यक्तौ लक्षणास्वीकाराद्वा । न चैतदनुरोधेन व्यक्तिशक्तिकल्पनावकाशः। आनन्त्यदोषस्य दुष्परिहरत्वात् । न चोपलक्षणत्वमात्राश्रयणेन तत्परिहारः संभवति । अस्मिन्नपवरके स्थिताः शकटादयो ऽक्षपदवाच्या इत्युक्तौ अपवरकस्थितत्वरूपोपलक्षणधर्मेण शक्तिग्रहे ऽपि तदनादरेण अक्षशब्दात् तेन तेन रूपेणाभिधानवज्जातेरुपलक्षणत्वे ऽपि व्यक्तिस्वरूपेणैवाभिधानतादवस्थ्यात् । किं च अन्यव्यक्तिव्यावृत्तजातिबोधं विना गोशब्दादश्वादिविलक्षणप्रतीत्युदयासंभवेन तत्प्रतीतेरावश्यकतया विशिष्टशक्तिस्वीकारस्यावश्यकत्वे विशेष्यं नाभिधा गच्छेदिति न्यायेन जातावेव शक्तिः स्वीकार्येति ।

उद्भिदादिशब्दानां यागनामताधिकरणम् १।

**उक्तं समाम्नायैतदर्थ्यं* तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥**

विध्यर्थवादमन्त्राणां विधिस्तुत्यनुष्ठेयार्थप्रकाशैर्धर्मे प्रामाण्यं दर्शितम्। इदानीमुद्भिदा यजेतेत्यत्रोद्भिदादिपदानां कथं प्रामाण्यमिति प्रश्ने पूर्वपक्षमाह। उक्तमिति। समाम्नायस्य वेदस्यैतदर्थ्यं विधिस्तुत्यनुष्ठेयार्थप्रकाशार्थत्वमुक्तं यस्मात्तस्मात्सर्वं वैदिकपदं तदर्थमुक्तान्यतमार्थं स्यात् ॥ १ ॥

**अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥**

सिद्धान्तमाह। अपि वेति। यस्य पदस्योद्भिदादेरुत्पत्तौ प्रथमश्रवणे अपूर्वमर्थान्तरे रूढत्वज्ञानं न, तद् उद्भिदादिपदं कर्मनामधेयं स्यात्। अविधायकत्वाद् विध्यसंभवात्। गुणविधौ मत्वर्थलक्षणापत्तेरिति भावः† ॥ २॥

चित्रादिशब्दानां यागनामताधिकरणम् २।

**यस्मिन्गुणोपदेशः प्रधानतोऽभिसंबन्धः ॥ ३ ॥**

चित्रया यजेत पशुकाम इत्यत्र चित्रापदस्य गुणे रूढत्वेन नामत्वासंभवादग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वोभयविधिरिति पूर्वपक्षे सिद्धान्तमाह। यस्मिन्निति।

यस्मिन्वाक्ये रूढ्या अनेकगुणोपदेशः प्रतीयते नासौ गुणविधिः। वाक्यभेदप्रसङ्गादिति‡ पूरणीयम्। चित्रापदस्य का गतिस्तत्राह। प्रधानतः धात्वर्थेन साकं नामत्वेनाभिसंबन्धः ॥ ३ ॥

---

* समाम्नायैदमर्थ्यमिति शा· भा· पाठः।

† अत्र भाष्ये उद्भिदादिपदान्युदाहृत्य गुणविधिर्नामधेयं वेति विचार्य उक्तं समाम्नायैदमर्थ्यमिति सूत्रेण पूर्वपक्षमभिधाय अपि वा नामधेयं स्यादित्यनेन सिद्धान्तितम्। तत्तु प्रमाणलक्षणासंगतमिति वार्तिककारेण भेदमाश्रित्य प्रथममुद्भिदादिशब्दानां धर्मे प्रामाण्यमस्ति न वेति विचार्य पश्चाद्गुणविधिनामधेयविचारो दर्शित इति शास्त्रदीपिकाकारः।

‡ अग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वोभयविधाने वाक्यभेदप्रसङ्गादिति भावः। चित्रत्वस्त्रीत्वविशिष्टकारकविधाने तु अनेकधर्माणां विधेयतावच्छेदकत्वकल्पनाकृतं गौरवं ज्ञेयम्।

अग्निहोत्रादिशब्दानां यागनामताधिकरणम् । ३ ।

## तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

अग्निहोत्रं जुहोतीत्यत्राग्निरूपगुणविधिर्नामधेयं वेति संशये अत्र वाक्यभेदाभावाद्गुणविधिरिति बहिः पूर्वपक्षे सिद्धान्तमाह । तदिति । तस्य गुणस्य श्रूयमाणस्याग्न्यादेः प्रख्यं प्रापकमन्यशास्त्रमग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्रलिङ्गादि यत्र तदपि कर्मनामधेयम् । एवमेवाघारमाघारयति पञ्चदशान्याज्यानि सप्तदशानि पृष्ठानीत्यत्राघाराज्यपृष्ठपदानि कर्मनामधेयानि । तदुक्तं भट्टपादैः । "विधित्सितगुणप्रापि शास्त्रमन्यद्यतस्त्विह । तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यतामिति" ॥ ४ ॥

श्येनादिशब्दानां यागनामताधिकरणम् । ४ ।

## तद्व्यपदेशं च ॥ ५ ॥

श्येनेनाभिचरन्यजेतेत्यत्र श्येनो गुणो वा कर्मनाम वेति विशये* श्येनशब्दस्य पक्षिणि रूढत्वाद्गुणविधिरिति बहिः पूर्वपक्षे सिद्धान्तमाह । तदिति । तस्य गुणस्य श्येनस्य व्यपदेशः सादृश्यं यस्मिन्कर्मणि तत्तद्व्यपदेशं तदपि नाम स्यात् । अयं भावः । यथा श्येनो निपत्यादत्त एवमयं निपत्यादत्तइति निपत्यादानेन श्येनसादृश्यं प्रतीयते । न हि श्येनगुणविधौ स्वस्मिन् स्वसादृश्यस्तुतिः संभवत्यतः श्येनसदृशमिति गौणवृत्त्या कर्मनामधेयम् ॥ ५ ॥

वाजपेयादिशब्दानां यागनामताधिकरणम् । ५ ।

## नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥

वाजपेयेन स्वाराज्यकामो यजेतेत्यत्र वाजस्यान्नस्य पेयं द्रवीभूतो रस इति व्युत्पत्त्या वाजपेयपदार्थो यवागूरूपगुणस्तस्य विधिर्नामधेयं वेति संशये पूर्वपक्षमाह । नामेति । नामधेये वाजपेये नामधेयत्वेन संभाविते उक्तव्युत्पत्त्या गुणस्य यवागूरूपस्य श्रवणात्तस्य विधानमिति चेत् ॥ ६ ॥

* विशयः संशयः ।

तुल्यत्वात्क्रिययोर्न ॥ ७ ॥

सिद्धान्तमाह । तुल्येति । क्रिययोः दर्शपूर्णमासवाजपेययोः तुल्यत्वाद् इतिकर्तव्यतांशे तुल्यत्वापादनाद् यवाग्वा ओषधिद्रव्यप्रभवत्वे द्रव्यसादृश्येन बलवता दर्शपूर्णमासधर्मातिदेशापत्तिः । न चेष्टापत्तिः । सप्तदशोपसत्को वाजपेय इतिसौमिकधर्मश्रवणविरोधात् । तस्माद्गुणविधिर्न ॥ ७ ॥

एकशब्दे* परार्थवत् ॥ ८ ॥

हेत्वन्तरमाह । एकेति । एकशब्दे एकवारमुच्चारिते धात्वर्थे युगपत्कर्मत्वकरणत्वान्वये परो यवागूरूपो यो ऽर्थः तद्विधानवद् विधानाश्रयः तदर्थमनुवादवत्स्यात् । कस्य चित्समीपे पाठाभावेन धात्वर्थानुवादासंभवादथवा स्वार्थविधानवान्यागः तथा परस्य गुणस्य विध्यर्थमनुवाद्यमपीति विरुद्धयोर्विधेयत्वानुवाद्यत्वयोः एकस्मिन्काले समावेशापत्तिरिति †भावः ॥ ८ ॥

आग्नेयादिशब्दानामनामत्वम् । अधि· ६ ।

तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ९ ॥

यदाग्नेयो ऽष्टाकपालो ऽमावास्यायां च पौर्णमास्यां चाच्युतो भवतीत्यत्र वाक्यभेदभिया ऽऽग्नेयादिशब्देन न गुणविधिः किं तु कर्मनामेति बहिः पूर्वपक्षे सिद्धान्तमाह। तद्गुणा इति । तच्च कर्म च देवताद्रव्याष्टाकपालरूपा गुणाश्च विधीयेरन्। विधानार्थे विधीयमाने ऽर्थे यागे उक्तगुणेषु चाविभागात् क्रियैव विधेया गुणा एव विधेया इति नियामकाभावात् । अन्येन अन्यवाक्येन शिष्टा विहिता न चेत् । सर्वे ऽप्यपूर्वा अतो नियमासंभवः । न च वाक्यभेदः । गुणविशिष्टक्रियाविधिसंभवादिति भावः ॥ ९ ॥

* एकशब्दे इति शा· भा· पाठः ।

† एवमुपादेयत्वोद्देश्यत्वयोः गुणत्वमुख्यत्वयोश्च विरुद्धयोः समावेशापत्तिर्बोध्या । सेयं विरुद्धत्रिकद्वयापत्तिरिति गीयते मीमांसकैः ।

बर्हिरादिशब्दानां जातिवाचिताऽधिकरणम् । ७ ।

## बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः स्यात् ॥ १० ॥

बर्हिराज्यशब्दप्रवृत्तिनिमित्तं विहितसंस्कारः यूपाहवनीयवदिति बर्हिः पूर्वपक्षे सिद्धान्तमाह । बर्हिरिति । बर्हिराज्यशब्दयोः असंस्कारे संस्कारशून्ये ऽपि शब्दलाभाच्च शब्दप्रयोगादतच्छब्दः संस्कारनिमित्तभिन्नः जातिवाचक इति भावः ॥ १० ॥

प्रोक्षण्यादिशब्दानां यौगिकताऽधिकरणम् । ८ ।

## प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

तर्हि प्रोक्षणीशब्दो ऽपि जातिवाचक इति पूर्वपक्षे सिद्धान्तमाह । प्रोक्षेति । प्रोक्षणीषु प्रोक्षणसाधनजलेषु प्रोक्षणीपदस्य यो ऽर्थः योगार्थः तेन योगाच्च रूढिः सेचनसाधनं द्रवद्रव्यसामान्यमर्थ इति भावः ॥ ११ ॥

निर्मन्थ्यशब्दस्य यौगिकताऽधिकरणम् । ९ ।

## तथा निर्मन्थ्ये ॥ १२ ॥

निर्मन्थ्यशब्दे ऽपि प्रोक्षणीशब्दधर्मयोगमतिदिशति । तथेति । स्पष्टो ऽर्थः ॥ १२ ॥

वैश्वदेवादिशब्दानां नामधेयताऽधिकरणम् । १० ।

## वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालमिति वाक्येन द्रव्यदेवताविशिष्टानष्टौ यागान्विधाय तस्यैव समीपे वैश्वदेवेन यजेतेति श्रुतम् । तत्र वैश्वदेवइति गुणविधिर्नामधेयं वेति संशये पूर्वपक्षमाह । वैश्वदेवइति । वैश्वदेवे वैश्वदेवशब्दे गुणविधायकत्वादिति शेषः । देवतारूपस्य द्रव्यरूपस्य वा गुणस्य विधायकत्वादाग्नेयमष्टाकपालं निर्वपतीतिवाक्यविहितदेवतया द्रव्येण वा विकल्पः ॥ १३ ॥

## न प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥ १४ ॥

सिद्धान्तमाह । नेति । प्रकरणात् समीपपाठात् । बलवत इति शेषः । प्रत्यक्षविधानात् उत्पत्तिविधिश्रुतत्वात्* उत्पत्तिशिष्टगुणस्याग्न्यादेः पक्षे ऽपि बाधो न संभवतीति भावः । ननु देवताबाधो मा भवतु पक्षे द्रव्यं पुरोडाशादि बाध्यतामत्राह । न हीति । प्रकरणं समीपपाठमात्रं द्रव्यस्य उत्पत्तिशिष्टद्रव्यस्य न बाधकम् । तस्मादगत्या नामधेयमष्टानां यागानां समुदायस्य† ॥ १४ ॥

## मिथश्चानर्थसंबन्धः ॥ १५ ॥

ननु वैश्वदेवशब्देनाष्टौ यागान् अनूद्य तदुद्देशेन यागावृत्त्या आवृत्तयागे विश्वदेवगुणविधिश्चास्तां प्रथममग्न्याद्युद्देशेन द्वितीयवारं विश्वदेवदेवताक आस्तामत आह । मिथश्चेति । वाक्यावृत्तिमन्तरेणेति शेषः । वैश्वदेवशब्दस्यावृत्तिं विना मिथः यागदेवतयोः परस्परमुद्देश्यविधेयभावाख्यसंबन्धः अनर्थः कर्तुमशक्यः ॥ १५ ॥

## परार्थत्वाद्गुणानाम् ॥ १६ ॥

कर्मावृत्तिर्नेत्यत्र हेत्वन्तरमाह । परेति । गुणानां देवतादिगुणानां परार्थत्वादप्रधानत्वात् । न ह्यप्रधानगुणानुसारेण प्रधानावृत्तिः संभवतीति भावः ॥ १६ ॥

वैश्वानरे ऽष्टत्वाद्यर्थवादताधिकरणम् । ११ ।

## पूर्ववन्तो ऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥

वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाती-

* तथा च पूर्वोत्पत्तिशिष्टत्वरूपान्तरङ्गत्ववतो ऽग्न्यादेः बहिरङ्गेण तेन बाधो न संभवतीति भावः ।

† प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यादौ वैश्वदेवशब्देन अष्टानां संघस्य व्यवहारः वैश्वदेवेन यजेतेत्यनेन समुदायानुवादस्य फलं बोध्यम् । अतो न नामत्वपक्षे वैयर्थ्यशङ्केति ।

त्यादि । अष्टाकपालादिशब्दा गुणविधिरूपा अर्थवादा वेति संशये पूर्वपक्षमाह । पूर्ववन्त इति । वैश्वदेवेन यजेतेत्यत्र गुणा अग्न्यादयः पूर्ववन्तः उत्पत्तिवाक्येन प्रथमं प्राप्ता इति वैश्वदेवेनेतिवाक्यगतगुणा अविधानार्थाः सन्तु । प्रकृते समाम्नाये अष्टाकपालनवकपालादिवाक्ये तत्सामर्थ्यं विधिसामर्थ्यमस्ति । पूर्वमप्राप्तेः । अतो गुणविधायकमिति भावः ॥ १७ ॥

**गुणस्य तु विधानार्थे ऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ता ऽस्ति ॥ १८ ॥**

सिद्धान्तमाह । गुणस्येति । गुणस्याष्टाकपालादिरूपस्य गुणस्य विधानार्थे वाक्ये सति अतद्गुणाः वैश्वानरं द्वादशकपालं निर्वपेदिति कर्मण्यगुणाः । तत्र द्वादशकपालविरोधात् । यागान्तरविधाने असमर्थाः सन्तः प्रयोगे अनुष्ठाने अनर्थका अनुपयुक्ताः स्युः । न हि तं प्रति द्वादश कपाले कर्मणि अष्टाकपालस्य अर्थवत्ता ऽस्ति । अतो निष्फलमेव स्यादिति भावः ॥ १८ ॥

**तच्छेषो नोपपद्यते ॥ १९ ॥**

ननु सिद्धान्ते वक्ष्यमाणद्वादशकपालस्तुतिः अष्टाकपालादिभिः कथमपि न संभवतीत्याशङ्कते । तच्छेषेति । तच्छेषः द्वादशकपालविधिशेषः ॥ १९ ॥

**अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥ २० ॥**

समाधत्ते । अवीति । विधानार्थे कपालगतद्वादशसंख्यायामष्टत्वादिसंख्याया अविभागान्नियतत्वादिति फलितो ऽर्थः । द्वादशसंख्याया अवयवरूपत्वादिति निष्कर्षः । द्वादशकपालस्तुत्यर्थत्वेनाष्टाकपालादिशब्दा उपपद्येरन् । अवयवस्तुतिद्वारा अवयविस्तुतिरिति भावः ॥ २० ॥

**कारणं स्यादिति चेत् ॥ २१ ॥**

ननु गायत्र्यैवैनं ब्रह्मवर्चसेन पुनातीति श्रूयमाणफलसाधनत्वेनाष्टाकपालादिगुणविधिः किं न स्यादिति शङ्कते । कारणेति । कारणं श्रूयमाणफलकारणम् ॥ २१ ॥

**न प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥ १४ ॥**

सिद्धान्तमाह । नेति । प्रकरणात् समीपपाठात् । बलवत इति शेषः । प्रत्यक्षविधानाद् उत्पत्तिविधिश्रुतत्वाद्* उत्पत्तिशिष्टगुणस्याग्न्यादेः पक्षे ऽपि बाधो न संभवतीति भावः । ननु देवताबाधो मा भवतु पक्षे द्रव्यं पुरोडाशादि बाध्यतामत्राह । न हीति । प्रकरणं समीपपाठमात्रं द्रव्यस्य उत्पत्तिशिष्टद्रव्यस्य न बाधकम् । तस्मादगत्या नामधेयमष्टानां यागानां समुदायस्य† ॥ १४ ॥

**मिथश्चानर्थसंबन्धः ॥ १५ ॥**

ननु वैश्वदेवशब्देनाष्टौ यागान् अनूद्य तदुद्देशेन यागावृत्त्या आवृत्तयागे विश्वदेवगुणविधिश्चास्तां प्रथममग्न्याद्युद्देशेन द्वितीयवारं विश्वदेवदेवताक आस्तामत आह । मिथश्चेति । वाक्यावृत्तिमन्तरेणेति शेषः । वैश्वदेवशब्दस्यावृत्तिं विना मिथः यागदेवतयोः परस्परमुद्देश्यविधेयभावाख्यसंबन्धः अनर्थः कर्तुमशक्यः ॥ १५ ॥

**परार्थत्वाद्गुणानाम् ॥ १६ ॥**

कर्मावृत्तिर्नेत्यत्र हेत्वन्तरमाह । परेति । गुणानां देवतादिगुणानां परार्थत्वादप्रधानत्वात् । न ह्यप्रधानगुणानुसारेण प्रधानावृत्तिः संभवतीति भावः ॥ १६ ॥

वैश्वानरे ऽष्टत्वाद्यर्थवादताधिकरणम् । ११ ।

**पूर्ववन्तो ऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥**

वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाती-

---

* तथा च पूर्वोपस्थितत्वरूपान्तरङ्गत्ववतो ऽग्न्यादेः बहिरङ्गेण तेन बाधो न संभवतीति भावः ।

† प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यादौ वैश्वदेवशब्देन अष्टानां संघस्य व्यवहारः वैश्वदेवेन यजेतेत्यनेन समुदायानुवादस्य फलं बोध्यम् । अतो न नामत्वपक्षे वैयर्थ्यशङ्केति ।

त्यादि । अष्टाकपालादिशब्दा गुणविधिरूपा अर्थवादा वेति संशये पूर्वपक्षमाह । पूर्ववन्त इति । वैश्वदेवेन यजेतेत्यत्र गुणा आग्न्यादयः पूर्ववन्तः उत्पत्तिवाक्येन प्रथमं प्राप्ता इति वैश्वदेवेनेतिवाक्यगतगुणा अविधानार्थाः सन्तु । प्रकृते समाम्नाये अष्टाकपालनवकपालादिवाक्ये तत्सामर्थ्यं विधिसामर्थ्यमस्ति । पूर्वमप्राप्तेः । अतो गुणविधायकमिति भावः ॥ १७ ॥

## गुणस्य तु विधानार्थे ऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ता ऽस्ति ॥ १८ ॥

सिद्धान्तमाह । गुणस्येति । गुणस्याष्टाकपालादिरूपस्य गुणस्य विधानार्थे वाक्ये सति अतद्गुणाः वैश्वानरं द्वादशकपालं निर्वपेदिति कर्मण्यगुणाः । तत्र द्वादशकपालविरोधात् । यागान्तरविधाने असमर्थाः सन्तः प्रयोगे अनुष्ठाने अनर्थका अनुपयुक्ताः स्युः । न हि तं प्रति द्वादश कपाले कर्मणि अष्टाकपालस्य अर्थवत्ता ऽस्ति । अतो निष्फलमेव स्यादिति भावः ॥ १८ ॥

## तच्छेषो नोपपद्यते ॥ १९ ॥

ननु सिद्धान्ते वक्ष्यमाणद्वादशकपालस्तुतिः अष्टाकपालादिभिः कथमपि न संभवतीत्याशङ्कते । तच्छेषेति । तच्छेषः द्वादशकपालविधिशेषः ॥ १९ ॥

## अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥ २० ॥

समाधत्ते । अवीति । विधानार्थे कपालगतद्वादशसंख्यायामष्टत्वादिसंख्याया अविभागान्नियतत्वादिति फलितो ऽर्थः । द्वादशसंख्याया अवयवरूपत्वादिति निष्कर्षः । द्वादशकपालस्तुत्यर्थत्वेनाष्टाकपालादिशब्दा उपपद्येरन् । अवयवस्तुतिद्वारा अवयविस्तुतिरिति भावः ॥ २० ॥

## कारणं स्यादिति चेत् ॥ २१ ॥

ननु गायत्र्यैवैनं ब्रह्मवर्चसेन पुनातीति श्रूयमाणफलसाधनत्वेनाष्टाकपालादिगुणविधिः किं न स्यादिति शङ्कते । कारणेति । कारणं श्रूयमाणफलकारणम् ॥ २१ ॥

## आनर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थं विधीयन्ते ॥ २२ ॥

पूर्वोक्तं गुणफलसंबन्धं दूषयति । आनर्थक्यादिति । अकारणम् अष्टाकपालादि पूतत्वादिकारणं न । वाक्यभेदोपक्रमोपसंहारभङ्गादिदोषग्रस्तत्वेन गुणफलसंबन्धबोधासंभवेन वाक्यस्यानर्थक्यात् । गुणार्थं स्तुत्यर्थं विधीयन्ते तात्पर्यविषयीक्रियन्ते । हि यस्माद्गुणफलानि कर्तुः दृष्टानि गोदोहनादिजनितानि फलानि पश्वादीनि । सूत्रे कर्तुरित्यनन्तरं फलेष्विति पूरणीयम् । यागकर्तृसंबन्धिफलकारणानि गुणादीनि पूतत्वादिफलानि जातस्य शिशोः न तु कर्तुरित्यतो ऽपि न गुणफलसंबन्धः ॥ २२ ॥

यजमानपदस्य प्रस्तरादिस्तुत्यर्थताऽधिकरणम् । १२ ।

## तत्सिद्धिः ॥ २३ ॥

इतः परं गौणवृत्तिप्रसरे निमित्तान्याह । तदित्यादिना । यजमानः प्रस्तर इत्यत्र यजमानकार्यं परिधिपरिधानं प्रस्तरः करोतीति तस्मात्प्रस्तराद्यजमानकार्यसिद्धिः ॥ २३ ॥

आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थत्वम् । अधि० १३ ।

## जातिः ॥ २४ ॥

प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवता ऽन्वसृज्यत गायत्रीछन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या इति प्रजापतिमुखप्रभवत्वेनाग्नेर्ब्राह्मणस्य चैकजातिमत्त्वाद् अग्निर्वैश्वानरो यद्ब्राह्मण इति ब्राह्मणस्तुतिः ॥ २४ ॥

यूपादिशब्दानां यजमानस्तुत्यर्थत्वम् । अधि० १४ ।

## सारूप्यम्* ॥ २५ ॥

आदित्यो यूप इत्यत्र यूपस्याष्टाश्रीकरणे तत्र घृतेनाज्यमाने तेजस्वित्वं संपद्यते । आदित्ये ऽपि तेजस्वित्वमिति तेजस्वित्वेन सारूप्यात् स्तुतिः ॥ २५ ॥

* सारूप्यादिति शा० भा० पाठः ।

अपश्वादिशब्दानां गवादिस्तुत्यर्थत्वम् । अधि· १५ ।

## प्रशंसा ॥ २६ ॥

अपशवो वा अन्ये गोअश्वेभ्य इत्यनेनान्येषामपशुत्वनिन्दया गोरश्वस्य च प्रशंसा ॥ २६ ॥

बाहुल्येन सृष्टिव्यपदेशः । अधि· १६ ।

## भूमा ॥ २७ ॥

सृष्टीरुपदधातीत्यत्र सृष्टिलिङ्गमन्त्रोपधेयादन्यत्रापि सृष्टिपदप्रयोगो गौण्या । तत्र निमित्तं भूमा भूयस्त्वं सृष्टिलिङ्गकमन्त्राणां भूयस्त्वेन तन्मध्यवर्तिनि असृष्टिलिङ्गे ऽपि तथा प्रयोग* इति भावः ॥ २७ ॥

प्राणभृदादिशब्दानां स्तुत्यर्थत्वम् । अधि· १७ ।

## लिङ्गसमवायात् ॥ २८ ॥

प्राणभृत उपदधातीत्यत्र प्राणलिङ्गकमन्त्रसमीपपठितानामप्राणभृतामपि प्राणभृत्त्वं गौण्या वृत्त्या । प्रथमं प्राणलिङ्गकमन्त्रपाठात्तस्य प्राधान्यम् ॥ २८ ॥

वाक्यशेषेण संदिग्धार्थनिरूपणम् । अधि· १८ ।

## संदिग्धेषु वाक्यशेषात् ॥ २९ ॥

अक्ताः शर्करा †उपदध्यादित्यत्र येन केन चिदञ्जनमुत घृतेनैवेति संशये नियामकशास्त्राभावाद्येन केनाप्यञ्जनमिति बाहिः पूर्वपक्षे सिद्धान्तमाह । संदिग्धेष्विति । संदिग्धेषु संदेहविषयीभूतेषु विध्यर्थेषु सत्सु वाक्यशेषाद् अर्थवादात् तेजो वै घृतं स तैजसमेवाग्निं चिनुत इत्यर्थवादेन घृतस्तुत्या विधेयार्थो ऽपि घृतमेवेति सिध्यति । अर्थवादेन विधेयार्थस्यैव स्तुतेरिति भावः ॥ २९ ॥

सामर्थ्यानुसारेण व्यवस्था । अधि· १९ ।

## अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

हस्तेनावद्यति स्रुवेणावद्यति स्वधितिना ऽवद्यतीति विहितमवदानसाधनत्रयं प्रत्येकं यावदवदानोद्देशेन उत द्रव्यविशेषे साधन-

* छत्रिणो यान्तीत्यादाविवेति भावः ।

† उपदधातीति शा· भा· पाठः ।

विशेष इति संशये नियामकाभावात्प्रथमकल्प एवेति बर्हिः पूर्वपक्षे सिद्धान्तमाह । अर्थादिति । अर्थाद् वस्तुवृत्तिसामर्थ्याद् । विधेयार्थसिद्धिरिति पूरणीयम् । ननु तर्कात्सिद्धस्याधर्मत्वमित्याशङ्कायामाह । कल्पनेति । कल्पनायाः हस्तेन चरुपुरोडाशादीनामेव स्वधितिना मांसस्यैव स्रुवेणाज्यादेरेव ग्रहणमिति सामर्थ्यानुसारेण कल्पितपदेषु वेदैकदेशत्वात् । तथा च वेदप्रतिपाद्यत्वेन धर्मत्वमव्याहतमिति भावः ॥ ३० ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्च प्रथमोऽध्यायः ॥



अपूर्वस्याख्यातपदप्रतिपाद्यत्वम् । अधि० १ ।

## भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥

प्रमाणनिरूपणानन्तरं तदधीनो भेदो द्वितीये निरूप्यते । सोमेन यजेतेति वाक्ये सोमपदं यागपदं चास्ति । तत्र विनिगमनाविरहाद् द्वयोरर्थयोरपूर्वद्वारा फलसंबन्ध इति पूर्वपक्षे अनेकादृष्टकल्पनागौरवादेकस्मादपूर्वमिति सिद्धौ किं सोमपदार्थस्योत धात्वर्थस्य फलेन संबन्ध इति संशये द्रव्यस्य सिद्धत्वात्सिद्धसाध्ययोरिति न्यायेन द्रव्यादेवापूर्वमिति पूर्वपक्षे सिद्धान्तमाह । भावार्था इति । भावार्थाः भावनारूपो य आख्यातार्थस्तस्य परिच्छेदः अर्थः प्रयोजनं येषाम् एतादृशाः आख्यातेन भावनासामान्ये उपस्थिते इतरदानादिभावनातो व्यावर्त्तयन् यागरूपो धात्वर्थः अवच्छेदको भवत्येवेति भावः । एवमवच्छेदकीभूता ये कर्मशब्दाः धात्वर्था इति यावत् । तेभ्यः क्रिया अपूर्वं प्रतीयेत ज्ञायेत । हि यतः एषो ऽर्थः विधीयते । एकपदश्रुत्या तस्यैव विधानात् । यो विधीयते स तत्करणत्वेन संबध्यतइति व्याप्तिरिति भावः ॥ १ ॥

## सर्वेषां भावो ऽर्थ इति चेत् ॥ २ ॥

ननु सर्वेषां पदार्थानां प्रथमं भावनायामन्वय इति सिद्धान्ताद् धात्वर्थवत्सोमादीनामपि क्रियायामवच्छेदकत्वसंभवात्सर्वे ऽपि भावार्था इत्याशङ्कते । सर्वेषामिति । सर्वेषामर्थो भावः भावनाया अवच्छेदकम् ॥ २ ॥

## येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् ॥ ३ ॥

उत्पत्तौ उत्पत्तिवाक्ये सोमेन यजेतेत्यादौ स्वे प्रयोगे सोमेनेति प्रयोगे उच्चारणसमये येषां यत्पदवाच्यानां सोमादिद्रव्याणां रूपस्य स्वरूपस्य उपलब्धिः प्रत्यक्षयोग्यता तानि सोमादिपदानि नामानि नामसंज्ञानि यानि चिरस्थायीनि तद्वाचकपदानि द्रव्यगुणवाचकानीति निष्कर्षः । तेभ्यः नामार्थोत्पत्त्यर्थं यस्यान्यस्याकाङ्क्षा । नेत्यस्या

हारः । यद्वा अग्रिमसूत्रस्थं न विद्यते इत्यनुषङ्गम् । कुतः भूतत्वाद् उत्पन्नत्वात् । पूर्वमेव सिद्धत्वादिति यावत् । तथा च द्रव्यरूपसोमोत्पत्त्यर्थं न क्रियापेक्षेति न द्रव्यार्था क्रियेति भावः ॥ ३ ॥

## येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य ॥ ४ ॥

नामपदलक्षणमुक्त्वा आख्यातान्तं लक्षयति । येषामिति । उत्पत्तौ उत्पत्तिविधौ येषां पदानां प्रयोगे इति शेषः । प्रयोगकाले स्वार्थे उच्चारिते ऽर्थे प्रयोगः सत्त्वं न विद्यते तान्याख्यातानि आख्यातान्तानि । तस्माद् अविद्यमानोत्पत्तिकत्वात्तेभ्यः आख्यातान्तार्थेभ्यः अपूर्वं प्रतीयेत । अयं भावः । सोमस्य स्वर्गहेतुत्वे तदुत्पत्तेः पुरुषप्रयत्नानधीनत्वेन पुरुषानपेक्षात् स्वर्गाद्युत्पत्त्यापत्तिः । तथा च पुरुषं प्रवर्त्तयितुमुच्चारितविधिवैयर्थ्यम् । यदि यागेन पुरुषप्रयत्नाधीनेन द्रव्ये कश्चन संस्कारः संस्कृतत्वविशिष्टद्रव्योत्पत्तेरुच्चारणकाले ऽसत्त्वादुत्पत्तौ पुरुषं प्रवर्त्तयन् विधिरपि सफल इत्युच्यते तदा ऽनेकादृष्टकल्पना । यागादपूर्वोत्पत्तिपक्षे यागादपूर्वं यागं प्रति दृष्टविधयैव द्रव्यं कारणमिति नोक्तदोष इति । इममेवार्थं संक्षेपेणाह सूत्रकारः आश्रितत्वादित्यनेन । प्रयोगस्य उत्पत्तेः आश्रितत्वात्पुरुषाश्रितत्वात्पुरुषाधीनत्वादिति यावत् ॥ ४ ॥

अपूर्वास्तित्वम् । अधि० २ ।

## चोदना पुनरारम्भः ॥ ५ ॥

एकापूर्वकल्पना अनेकापूर्वकल्पना चेत्यादिवचनान्यपूर्वसिद्धावुत्तिष्ठेरन् । तत्रैव मानं न पश्याम इत्याक्षेपे समाधानमाह । चोदनेति । चोदना अपूर्वम् । अस्तीति शेषः । पुनरिति शब्दालंकारे । यतः आरम्भः स्वर्गस्य यागः साधनमित्युपदेशारम्भः । आशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वोपदेशानुपपत्तिरेवाऽपूर्वे मानमिति *भावः ॥ ५ ॥

* ननु शास्त्रप्रामाण्यादेव यागात्स्वर्गः सेत्स्यति अन्यथा यागे स्वर्गसाधनत्वबोधकश्रुतेरप्रामाण्यापत्तिरिति व्यर्था ऽपूर्वकल्पनेति चेन्न । प्रत्यक्षावगतनाशस्य तस्य साध-

कर्मणां गुणप्रधानभावविभागः । अधि॰ ३ ।

## तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

व्रीहीनवहन्तीत्यादौ सर्वत्र आख्यातान्तादेवापूर्वं भावाख्याताधिकरणन्यायादिति बहिः पूर्वपक्षे सिद्धान्तमाह । तानीति । तानि आख्यातानि द्वैधं द्विप्रकाराणि । क्व चिद् द्रव्यं प्रति गुणभूतानि क्व चिद् द्रव्यं प्रति प्रधानानि च ॥ ६ ॥

प्रधानकर्मलक्षणम् ।

## यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥

द्वैविध्यं व्युत्पादयति । यैरिति । यैः आख्यातान्तैः द्रव्यं संस्कार्यत्वेन चिकीर्ष्यते तानि आख्यातान्तवाच्यानि कर्माणि यागदानादीनि द्रव्यं प्रति प्रधानानि । यथा स्वर्गकामो यजेत हिरण्यं ददातीति । तत्र द्रव्यस्य गुणभूतत्वाल्लोकतः गुणत्वेन क्लृप्तत्वात् ॥ ७ ॥

गुणकर्मलक्षणम् ।

## यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥

यैः कर्मभिः द्रव्यं संस्कार्यत्वेन चिकीर्ष्यते तत्र धात्वर्थः गुणः प्रतीयेत तस्य धात्वर्थस्य द्रव्यप्रधानत्वाद् द्रव्यं प्रधानं यस्य तत्त्वात् । यथा व्रीहीनवहन्ति तण्डुलान्पिनष्टीत्यादौ वितुषीभावरूपदृष्टफलसंभवान्नादृष्टकल्पनेति भावः ॥ ८ ॥

---

न्त्वकल्पने प्रमाणान्तरविरोधप्रसङ्गात् । श्रुतेरप्रामाण्यशङ्का तु तस्य यागशक्तित्वादवान्तरव्यापाररूपत्वाद्वा निरसनीया । न हि बाणव्यापारस्य कारणत्वे बाणस्य तद्द्वारा कारणत्वं विहन्यते येन श्रुतौ अप्रामाण्यशङ्कावकाशः स्यात् । तस्माच्छ्रुतार्थापत्त्या अवश्यमपूर्वं कल्पनीयम् । "कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात् । गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनात् । इति धर्मस्य कीर्तनादितो नाशबोधनाद् ध्वंसस्य च नाशासंभवाद् न ध्वंसस्य व्यापारत्वसंभवः । अभावस्य कारणत्वासंभवाच्च । न चैवं सति नित्याननुष्ठाने प्रत्यवायानुत्पत्तिप्रसङ्गः । तदनुष्ठानकाले अन्यानुष्ठानत एव तदुत्पत्तेरुपपत्तेरिति दिक् ।

संमार्जनादीनामप्रधानत्वम् । अधि॰ ४ ।

## धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥

यत्र दृष्टफलं दृश्यते तत्रास्तु गुणकर्म यत्र दृष्टं फलं न दृश्यते स्रुचः संमार्ष्टीत्यादौ गुणकर्म प्रधानकर्म वेति संशये पूर्वपक्षमाह । धर्मेति । दृष्टोपकारशून्ये धर्ममात्रे संमार्गादियावत्कर्मणि कर्म प्रधानकर्मत्वं स्यात् स्रुभिस्संमार्गं भावयेदित्येव स्यात् । यथा प्रयाजास्तथा अनिर्वृत्तेः द्रव्यं प्रत्युपकारस्य कर्मणा ऽदृष्टत्वात् ॥ ९ ॥

## तुल्यश्रुतित्वाद्वेतरैः सधर्मा स्यात् ॥ १० ॥

सिद्धान्तमाह । तुल्येति । इतरैः अवहननादिभिः सधर्मा तुल्यः स्याद् गुणकर्म स्यात् । तुल्यश्रुतित्वाद् व्रीहीनितिवद् द्वितीयाश्रुतेस्तुल्यत्वात् । स्रुच इत्यत्र द्वितीयया प्रधानत्वबोधनाद् द्रव्यस्येति भावः ॥ १० ॥

## द्रव्योपदेश इति चेत् ॥ ११ ॥

सिद्धान्तमाक्षिपति । द्रव्येति । द्रव्योपदेशः गुणतया द्रव्योपदेशः क्वचिद् दृश्यतइति शेषः । यथा सक्तूञ्जुहोतीत्यत्र द्वितीयान्तसक्तूनां होमं प्रति गुणत्वमतः गुणवाचिका ऽपि द्वितीयेति भावः ॥ ११ ॥

## न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥

आक्षेपं वारयति । नेति । न करणार्थे द्वितीया कुतः तदर्थत्वात् कर्मणि द्वितीयेत्यनुशासनेन द्वितीयायाः तदर्थत्वात् कर्मार्थत्वात् । लोके ग्रामं गच्छतीतिवदश्वं गच्छतीति द्वितीयां न प्रयुङ्क्ते करणवाचकपदात् । ननु सक्तूञ्जुहोतीति कथं प्रयोग इत्यत्राह । तस्येति । स्रुगादिद्रव्यस्य शेषभूतत्वाद् आज्यादिकत्वर्थहविर्धारणशेषभूतत्वात् । अयं भावः । सक्तूञ्जुहोतीत्यत्र द्वितीया कर्मत्वार्थिकेत्युक्ते होमेन सक्तूनां भस्मीभूतत्वेनाग्रे तस्य विनियोगाभावात्संस्कारो व्यर्थः स्यात् । अतो द्वितीयाया लक्षणया करणत्वमर्थ इत्यवश्यं वाच्यम् । स्रुचां तु संस्कारयुक्तानां हविर्धारणे विनियोगो ऽस्तीति सक्तुवैषम्यमिति ॥ १२ ॥

स्तोत्रादिप्राधान्यम् । अधि० ५ ।

## स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १३ ॥

स्तोत्रशस्त्रयोः किं सन्निपत्योपकारकत्वमुत आरादुपकारकत्वमिति संशये पूर्वपक्षमाह । स्तुतेति । स्तुतशस्त्रयोः स्तोत्रशस्त्रयोः* फलमिति शेषः । संस्कारः देवतायाः स्मरणेन संस्कारः । यथा याज्यायाः देवतास्मरणं फलं तद्वद् देवताभिधानत्वात् देवतायाः अभिधानं प्रकाशनं यत्र तत्त्वस्य याज्यास्तुतिशस्त्रे तुल्यत्वादिति भावः ॥ १३ ॥

## अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ १४ ॥

अस्मिन्पक्षे दूषणमाह । अर्थेनेति । माहेन्द्रग्रहयागसन्निधौ स्तोत्रशस्त्रयोः केवलेन्द्रलिङ्गकः अभि त्वा शूर नोनुम इत्यादिमन्त्रः पठितः । तत्रत्या स्तुतिः देवतास्मरणं प्रत्यङ्गभूता तर्हि अर्थेन केवलेन्द्रदेवतास्मरणरूपकार्यानुरोधेन माहेन्द्रयागादपकृष्येत वियुज्येत देवतायाः नाम्ना इन्द्र इति नाम्ना चोदिता जनिता या उपस्थितिस्तद्रूपार्थः कार्यं तं प्रति गुणभूतत्वादृचः । तथा च कार्यानुसारेण यत्रेन्द्रयागः तत्र संयुज्येत केवलेनेन्द्रशब्देन महेन्द्रास्मरणाद्वियुज्येत पूषानुमन्त्रणमन्त्रवत् । तथा सति माहेन्द्रग्रहसन्निधिपाठवैयर्थ्यमिति भावः ॥ १४ ॥

## वशावद्वा गुणार्थं स्यात् ॥ १५ ॥

पूर्वदूषणोपरि समाधानमाह । वशेति । गुणार्थं महत्त्वरूपगुणसहितेन्द्रस्मरणार्थं पूर्वोक्ता ऋक् स्यात् । वशावत् । सा वा एषा सर्वदेवत्या यदजावशा वायव्यामालभेतेत्यस्मिन्यागे छागस्य वपाया मेदस इतिमन्त्रस्यच्छागपदेन वशारूपगुणविशिष्टच्छागोपधानविरहवत् ॥ १५ ॥

---

* अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम् । प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम् इति तयोर्विशेषः ।

## न श्रुतिसमवायत्वात्* ॥ १६ ॥

इमं पक्षं दूषयति । नेति । न, अनुत्कर्ष इति न, श्रुत्या इन्द्रपदश्रुत्या मन्त्रस्य समवायत्वात् संबन्धत्वात् । यद्वा श्रुत्या देवतावाचकतद्धितश्रुत्या समवायत्वादितिपूर्वार्थकम् । महेन्द्रपदाज्जाततद्धितः स्वार्थेन देवतारूपेण स्वप्रकृत्यर्थं योजयेत् । न तु प्रकृत्यर्थैकदेशमिन्द्रम् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् । इत्थं चेन्द्रो महेन्द्रश्च भिन्न इति भावः ॥ १६ ॥

## व्यपदेशभेदाच्च ॥ १७ ॥

उक्तार्थे साधकान्तरमप्याह । व्यपेति । दर्शपूर्णमासे बहु दुग्धीन्द्राय देवेभ्यः, बहु दुग्धि महेन्द्राय देवेभ्य इति व्यपदेशस्य निर्देशस्य भेदात् । यदीन्द्रपदेन महेन्द्रोपस्थितिः तर्हि निर्देशभेदो व्यर्थ इति भावः ॥ १७ ॥

## गुणश्चानर्थकः स्यात् ॥ १८ ॥

यदि इन्द्रमहेन्द्रयोरैक्यं तदा महत्त्वरूपगुणकथनं व्यर्थं स्यादिति भाव इत्याह । गुण इति ॥ १८ ॥

## तथा याज्यापुरोरुचोः ॥ १९ ॥

तथा द्वयोरभेदे दर्शपूर्णमासहौत्रकाण्डे याज्यायाः पुरोरुचः पुरोऽनुवाक्यायाश्च महाꣳ इन्द्रो य ओजसेति ऐन्द्र सानसिमिति च भेदेन पाठो ऽनर्थकः स्यात् ॥ १९ ॥

## वशायामर्थसमवायात् ॥ २० ॥

पूर्वं वशावदिति दृष्टान्तः प्रतिपादितः स विषमः । अस्मिन् सूत्रे प्रत्यक्षेणेति पूरणीयम् । तथा च वशायां वन्ध्यारूपच्छाग्यामर्थस्य वन्ध्यात्वस्य समवायात् प्रत्यक्षेण संबन्धावगमात् । अयं भावः । छाग्या वपाया मेदस इति निगदे छागीपदश्रवणे या छागी तदभिन्ना वशेति प्रत्यक्षेण ज्ञातुं शक्यते । इन्द्रपदोपस्थाप्ये महत्त्वरूपो गुणः शास्त्रैकगम्य इति वैषम्यम् ॥ २० ॥

* श्रुतिसमवायित्वादिति शा भा॰ पाठः ।

## यन्त्रे*ति वा ऽर्थवत्त्वात्स्यात् ॥ २१ ॥

पुनः पूर्वपक्ष्युत्तिष्ठते । यन्त्रेति । यन्त्रेन्द्रः तन्त्रेति उत्कर्षः स्यात् । अर्थवत्त्वात् । इन्द्रस्मरणरूपकार्यत्वात्† ॥ २१ ॥

## अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २२ ॥

सिद्धान्तमाह । अपि वेति । श्रुतिसंयोगाद् धात्वोः शक्तिरूपार्थ-संबन्धात् शक्यार्थेन साकं संबन्धादिति यावत् । स्तौतिशंसती तयोरर्थौ प्रकरणे प्रकृतमाहेन्द्रग्रहणत्र क्रियोत्पत्तिमपूर्वरूपां विदध्यातां कुरुतः । अयं भावः । स्तौतिशंसतिधात्वोः मुख्यार्थः स्तुतिः सा स्तुतिश्च गुणि-निष्ठानां विद्यमानानामविद्यमानानां च गुणानां प्रकाशनम् । तथा च गुणप्रकाशेन भावयेदिति न तु गुणप्राकाशकशब्देन भावयेदिति । तथा सति लक्षणा स्यात् शक्यार्थगुणप्रकाशविधाने तस्य दृष्टं किमपि फलं नेत्यदृष्टं कल्प्यतइति प्रधानकर्मेदमिति ॥ २२ ॥

## शब्दपृथक्त्वाच्च ॥ २३ ॥

अत्रैव हेत्वन्तरमाह । शब्देति । शब्देन संख्यावाचकद्वादश-शब्देन पृथक्त्वात् स्तोत्राणां शस्त्राणां पृथक्त्वावगमात् । अयं भावः ।

---

* यच्चेतीति शा· भा· पाठः ।

† एतदुत्तरं सूत्रद्वयव्याख्यानमस्यां वृत्तौ नोपलभ्यते शाबरभाष्ये तन्त्रवार्तिके जैमिनिसूत्रदीधितौ चोपलभ्यते अतस्तद्व्याख्यानं दीधित्युक्तमुपन्यस्यते ।

न त्वाम्नातेषु ॥ १ ॥

एकदेशी त्वाह । न त्वाम्नातेष्विति । तुरवधारणे । इन्द्राम्नातेषु मन्त्रेषु उत्कृष्टे-ष्वपि नैव । अर्थवत्त्वमस्तीति शेषः । यतो, याम्याः शंसति, शिपिविष्टवतीः शंसति, आग्निमारुते शंसति, मण्डूकसूक्तमक्षसूक्तमित्यादिष्वगत्या ऽदृष्टार्थत्वमेवमत्रापि प्रधा-नकर्मतया तथैव प्रकरणे एवास्त्विति भावः ॥ १ ॥

दृश्यते ॥ २ ॥

पूर्वपक्षवादी निराकरोति । दृश्यतइति । याम्यादीनामुत्कृष्टानामर्थवत्त्वं दृश्यते इत्यर्थः । याम्यादीनां तत्तद्देवताके कर्मणि । मण्डूकसूक्तस्य चयने मण्डूकेन विकर्ष-तीति विधानात् । राजसूये ऽक्षसूक्तस्य अक्षैर्दीव्यतीति विधानात् । एवमन्यत्र । इत-श्चार्थवत्त्वं सर्वेषाम् । वाचः स्तोमे कर्मविशेषे सर्वा ऋच इत्यादि दाशतयीरनुब्रूया-दित्यन्तेनार्थवत्त्वस्य दृष्टेरित्यर्थः । तस्मात् संस्कारकर्मणी स्तोत्रशस्त्रे इति ।

सिद्धान्ते संख्यया अपूर्वाणां स्तोत्रजन्यानां द्वादशत्वात् तत्साधनानां द्वादशत्वं युक्तम् । अर्थस्मरणपक्षे प्रत्यृचं स्मरणस्य भिन्नत्वेन तत्साधनानामपि तावत्संख्याकत्वं तत्र द्वादशत्वं बाध्येतेति भावः ॥ २३ ॥

## अनर्थकं च तद्वचनम् ॥ २४ ॥

किं चानर्थकं व्यर्थं तद्वचनम् आग्नेयीषु स्तुवतइति वचनम् । तथा हि । अग्निष्टुति क्रतौ प्राकृतग्रहानुवादेनाग्नेया ग्रहा भवन्तीति अग्निसंबन्धविधौ अग्निप्रकाशार्थत्वेनाग्नेयीनामृचां प्राप्तौ पुनराग्नेयीभिः स्तुवतइति तत्सन्निधौ विधिर्व्यर्थः स्यात् । अदृष्टार्थत्वे तत्साधनत्वस्याग्नेयीष्वदृ शास्त्रैकगम्यत्वाद्विधिः सफल इति भावः ॥ २४ ॥

## अन्यश्चार्थः प्रतीयते ॥ २५ ॥

अपि च अन्यः स्तोत्रजन्यफलादन्यः विजातीयः शास्त्राद् अर्थः फलं प्रतीयते । उभयोः अपूर्वफलत्वे उभाभ्यामपूर्वस्य विजातीयस्य जायमानत्वाद् उपपन्नम् । स्मरणार्थत्वे तस्यैकजातीयत्वादनुपपत्तिरिति भावः ॥ २५ ॥

## अभिधानं च कर्मवत् ॥ २६ ॥

इतो ऽपि प्रधानं कर्मेत्याह । अभीति । कर्मवत्कर्मप्रत्ययान्तं द्वितीयान्तमिति यावत् । अभिधानं कर्मनाम प्रउगं शंसति निष्केवल्यं शंसतीति यतः अतः यन्नाम द्वितीयान्तं तत्प्रधानकर्म यथा ऽग्निहोत्रं जुहोतीति व्याप्तेरिति भावः ॥ २६ ॥

## फलनिर्वृत्तेश्च ॥ २७ ॥

साधकान्तरमाह । फलेति । स्तोत्रशस्त्राभ्यामिति पूरणीयम् । तथा च ताभ्यां फलस्य निर्वृत्तेरुत्पत्तेः श्रवणात् । एष वै स्तुतशस्त्रयोर्दोह इति दोहः फलम् । संस्कारपक्षे देवताया एव फलसाधनत्वं श्रूयेतेति भावः ॥ २७ ॥

मन्त्राणामविधायकत्वम् । अधि॰ ६ ।

## विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ २८ ॥

देवांश्च याभिर्यजते ददाति चेति मन्त्रे यजते ददातीति च श्रूयमाणं पदं विधायकं न वेति संशये पूर्वपक्षमाह । विधीति । विधिमन्त्रयोः विधिवाक्यमन्त्रवाक्यघटकाख्यातयोरैकार्थ्यं विधिरूपैकार्थप्रतिपादकत्वम् । एकशब्दादेकजातीयशब्दात् ॥ २८ ॥

## अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥ २९ ॥

सिद्धान्तमाह । अपि वेति । मन्त्रः मन्त्रस्थाख्यातपदम् अभिधानवाची अर्थप्रकाशनमात्रपरम् । प्रयोगे अनुष्ठाने क्रियमाणे तावदर्थस्मरणमात्रसामर्थ्यात् । तदुक्तं वार्तिके । "एषामाख्यातशब्दानां तत्कृत्वाद्यनुबन्धनात् । विधिशक्तिः प्रणश्येत ते सर्वे ऽत्राभिधायकाः" इति ॥ २९ ॥

मन्त्रलक्षणम् । अधि॰ ७ ।

## तच्चोदकेषु मन्त्राख्या ॥ ३० ॥

†प्रसङ्गाद् वेदो द्विविधो मन्त्रो ब्राह्मणमिति विभज्याद्यस्य लक्षणमाह‡ । तदिति । तत् कर्मसमवेतार्थस्मरणं चोदकं फलं येषां तेषु मन्त्राख्या मन्त्रनाम§ ॥ ३० ॥

ब्राह्मणलक्षणम् । अधि॰ ८ ।

## शेषे ब्राह्मणशब्दः ॥ ३१ ॥

शेषे मन्त्रभिन्ने ब्राह्मणशब्दः ब्राह्मणपदं वाच्यम् ॥ ३१ ॥

---

* ऐकशब्द्यादिति शा॰ भा॰ पाठः ।

† स्वतस्योपेक्षानर्हत्वं प्रसङ्गः ।

‡ लक्षणस्योपयोगश्च पूर्वाचार्यैर्दर्शितः । अपणे ऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चित इति जैमिनीयन्यायमालाविस्तरे माधवाचार्याः ।

§ प्रायिकमिदम् । वसन्ताय कपिञ्जलानालभेतेत्यादिषु विध्यादिरूपेषु मन्त्रेऽव्याप्तेः । किं तु याज्ञिकसमाख्यानं लक्षणं मन्त्राणां दूषणरहितं बोध्यमिति ।

ऊहादीनाममन्त्रत्वम् । अधि॰ ९ ।

## अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्* ॥ ३२ ॥

ऊहप्रवरनामधेयेषु मन्त्रत्वमस्ति न वेति संशये तस्यापि पूर्वोक्तलक्षणाक्रान्तत्वादस्ति मन्त्रत्वमिति पूर्वपक्षे सिद्धान्तमाह । अनाम्नातेष्विति । हि यतः विभागः मन्त्रो ब्राह्मणमिति विभागः आम्नातेषु कण्ठरवेण पठितेष्वेवातः ऊहे सूर्याय जुष्टमिति , प्रवरे काश्यपावत्सारेति, सुब्रह्मण्यानिगदादिषु कृष्णशर्मा यजत इत्यादिषु अनाम्नातेषु अमन्त्रत्वम् ॥ ३२ ॥

ऋग्लक्षणम् । अधि॰ १० ।

## †ऋग्यत्रार्थवशेन पादव्यवस्था ॥ ३३ ॥

एवं मन्त्रसामान्यलक्षणमुक्त्वा ऋक्सामयजुषां प्रत्येकं लक्षणमाह । ऋगित्यादिना । यत्र वाक्ये अर्थवशेन छन्दोविशेषवशेन पादव्यवस्था सा ऋक् ॥ ३३ ॥

सामलक्षणम् । अधि॰ ११ ।

## गीतिषु सामा‡ ॥ ३४ ॥

तत्रैव गीतिषु गाने सति साम§ ॥ ३४ ॥

यजुर्लक्षणम् । अधि॰ १२ ।

## शेषे यजुःशब्दः ॥ ३५ ॥

शेषइति । स्पष्टो ऽर्थः ॥ ३५ ॥

---

* शा॰ भा॰ स्याच्छब्दरहितः पाठः ।

† तेषामृगिति शा॰ भा॰ पाठः ।

‡ सामाख्येति शा॰ भा॰ पाठः ।

§ इह मन्त्रविभागमात्रं विवक्षितं गीतिवाचकत्वसाधनस्योपयोगाभावात् । तस्य च गीतिवाचित्वे गीतिविशिष्टऋग्वाचकत्वे वा सामशब्दस्य ऋग्यजुरन्यत्वस्य सर्वथा ऽपि सिद्धत्वेन अनुपपत्त्यभावात् । सप्तमे तु अतिदेशोपपत्तये गीतिवाचित्वं सामादिशब्दानां युक्त्या साधितमित्यपौनरुक्त्यम् । भाष्यकारादीनामत्र गीतिवाचकत्वसाधनप्रयासस्तु प्रासङ्गिकः ।

निगदानां यजुःषु अन्तर्भावः । अधि १३ ।

**निगदो वा चतुर्थः स्याद्धर्मविशेषात् ॥ ३६ ॥**

निगदानां यजुष्यन्तर्भावो न वेति विचारे पूर्वपक्षमाह । निगद इति । निगदः चतुर्थः ऋग्यजुःसामभ्यो ऽतिरिक्तः । उच्चैर्ऋचा क्रियते उच्चैः साम्नोपांशु यजुषोच्चैर्निगदेनेति यजुषः उपांशुत्वादतिरिक्तधर्मत्वात् ॥ ३६ ॥

**व्यपदेशाच्च ॥ ३७ ॥**

साधकान्तरमाह । व्यपेति । व्यपदेशाद् यजूंषि निगदा इति भिन्ननाम्ना व्यवहाराच्च यजुर्भ्यो भिन्नः ॥ ३७ ॥

**यजूंषि वा तद्रूपत्वात् ॥ ३८ ॥**

सिद्धान्तमाह । यजूंषि वेति । निगदा यजूंषि तद्रूपत्वाद् यजुर्लक्षणसत्त्वात् ॥ ३८ ॥

**वचनाद्धर्मविशेषः ॥ ३९ ॥**

यश्चोच्चैस्त्वरूपो धर्मविशेषः स पूर्वोक्तवचनात् ॥ ३९ ॥

**अर्थाच्च ॥ ४० ॥**

उच्चैस्त्वधर्मस्यार्थात् परप्रत्यायनरूपफलवत्त्वाच्च । न ह्यग्नीदग्नीन्विहरेत्युपांशु निगदोच्चारे परो ज्ञास्यतीत्युच्चैस्त्वमिति भावः ॥ ४० ॥

**गुणार्थो व्यपदेशः ॥ ४१ ॥**

पूर्वोक्तसंज्ञाभेदस्य का गतिस्तत्राह । गुणेति । गुणार्थो गुणनिमित्तो व्यपदेशः भेदेन व्यवहारः ब्राह्मणपरिव्राजकवत् ॥ ४१ ॥

**सर्वेषामपि चेत् ॥ ४२ ॥**

उच्चैस्त्वगुणेन साम्यादृगादीनामपि निगद इतिव्यवहारापत्तिरिति शङ्कते । सर्वेषामिति ॥ ४२ ॥

**न ऋग्व्यपदेशात् ॥ ४३ ॥**

समाधत्ते । नेति । न ऋग् निगदः । अयाज्या वै निगदाः ऋचैव यजन्तीति ऋग्भ्यो ऽन्यत्वेन व्यवहारात् ॥ ४३ ॥

एकवाक्यत्वलक्षणम् । अधि० १४ ।

## अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४४ ॥

अथैकवाक्यतालक्षणमाह । अर्थेति । विभागे वाक्यघटकपदानां विभागे साकाङ्क्षमेकपदरहितस्यापरपदस्य शाब्दबोधाजनकत्वं तयोरेवार्थैकत्वम् एकफलप्रतिपादकत्वम् । विभागे साकाङ्क्षत्वे सत्येकफलप्रतिपादकं यत्तदेकं वाक्यमित्यर्थः* । यथा अग्नये जुष्टं निर्वपामीत्यत्र विभागे परस्परसाकाङ्क्षं निर्वापरूपैकार्थप्रतिपादकम् ॥ ४४ ॥

वाक्यभेदः । अधि० १५ ।

## समेषु वाक्यभेदः स्यात् ॥ ४५ ॥

तथा समेषु परस्परनिरपेक्षेषु पदेषु तु वाक्यभेदः स्यात् । यथा इषे त्वा, ऊर्जे त्वेति† ॥ ४५ ॥

अनुषङ्गः । अधि० १६ ।

## अनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४६ ॥

ज्योतिष्टोमे, या ते अग्ने ऽयाशया या ते अग्ने रजाशया या ते अग्ने हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत्त्वेषं वचो अपावधी-

* अत्र विशेष्यानुपादाने स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इत्यत्र तस्मिन्नित्याद्युत्तरार्धघटकतत्पदस्य बुद्धिविषयतावच्छेदकधर्मावच्छिन्नवाचकत्वेन बुद्धिविषयतावच्छेदकत्वज्ञानापेक्षशाब्दबोधोपयोगिशक्तिग्रहविषयत्वाद् बुद्धिविषयतावच्छेदकत्वज्ञानस्य च सादनादिपदार्थज्ञानाधीनत्वाद् उत्तरार्धस्य विभागे सति साकाङ्क्षत्वस्य स्फुटत्वेन तत्रैकवाक्यत्वलक्षणातिव्याप्तिः स्यादतस्तद्वारणाय तदुपादानम् । भगो वां विभजतु, पूषा वां विभजतु, अनयोरेकवाक्यत्ववारणाय च सत्यन्तम् । विशेषणविशेष्ययोरुभयोरुपादाने तु न दोषः । पूर्वत्र सदनसादनरूपभिन्नपदार्थप्रतिपादकत्वात् । उत्तरत्र विभागे साकाङ्क्षत्वाभावात् ।

† इषे त्वेति छिनत्ति, ऊर्जे त्वेति अनुमार्ष्टीति आभ्यां पलाशशाखाच्छेदनमार्जनयोरनयोर्विनियोगात्तदनुसारेण छिनद्मि अनुमार्ज्मि इति क्रियापदयोरध्याहारेण भोः पलाशशाखे इषे इष्यमाणायान्नाय त्वां छिनद्मि ऊर्जे बलाय त्वामनुमार्ज्मि इत्यर्थे भिन्नार्थत्वान्नैकवाक्यत्वम् । एतेन एतयोरर्थस्मारकत्वाभावेन अदृष्टार्थत्वात्तस्मै च एकादृष्टकल्पनायां लाघवादेकादृष्टफलत्वेन मन्त्रैक्यमिति पूर्वपक्षः परास्तः । अर्थस्मारकत्वसंभवस्य दर्शितत्वात् । एवमेव आयुर्यज्ञेन कल्पतामित्यत्रापि मन्त्रभेदो द्रष्टव्यः ।

स्त्वाहेत्याम्नातम् । अत्र तनूर्वर्षिष्ठेत्यनुषङ्गेण त्रिषु योज्यम् उत चरममन्त्र एवेति संशये सन्निहितत्वाच्चरममन्त्र एवेति पूर्वपक्षे सिद्धान्तमाह । अन्तेति । वाक्यस्य असन्निहितवाक्यस्य परिसमाप्तिराकाङ्क्षाशान्तिः यस्मात्तादृशो ऽनुषङ्गः कार्यः सर्वेषु वाक्येषु तुल्ययोगित्वाद् आकाङ्क्षा परिपूरकत्वस्य तुल्यत्वात् ॥ ४६ ॥

व्यवेतानानुषङ्गः । अधि· १७ ।

## व्यवायान्नानुषज्यते ॥ ४७ ॥

सं ते प्राणो वायुना गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषेत्यत्र प्रथममन्त्रस्थं गच्छतामिति पदं चरममन्त्रे नानुषज्यते। मध्यममन्त्रे ऽङ्गानीतिकर्तृवाचकपदसमानवचनकत्वोपपत्तये गच्छन्तामित्यस्यबहुवचनान्तस्याध्याहारे अनुषङ्गविभेदात्तृतीये ऽपि नानुषङ्गः किं त्वध्याहार इत्याह । व्यवायादिति ॥ ४७ ॥

इति जैमिनिसूत्रवृत्त्यां द्वितीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

अङ्गापूर्वभेदः । अधि· १ ।

## शब्दान्तरे कर्मभेदः कृतानुबन्धित्वात् ॥ १ ॥

प्रथमपादे उपोद्घातं समाप्य द्वितीयपादे शब्दान्तरादिभिः सापवादैः कर्मभेदो निरूप्यते । ज्योतिष्टोमे, सोमेन यजेत, दाक्षिणानि जुहोति, हिरण्यमात्रेयाय ददातीत्यादीनि पर्यायरहितानि बहून्याख्यातान्तानि श्रूयन्ते । तानि सर्वाण्येकफलभावनायामन्वयं प्राप्नुवन्त्युत नानाफलभावनास्विति संशये नानाधात्वर्थेभ्यो नानाऽपूर्वकल्पने गौरवादेकापूर्वभावनायामन्वयं प्राप्नुयुरिति बहिः पूर्वपक्षे सिद्धान्तमाह । शब्देति । शब्दान्तरे धातुभेदे कर्मणो ऽपूर्वस्य भेदः । कुतः अनुबन्धः भावनाव्यवच्छेदो ऽनेनेति कृतानुबन्धित्वात् । एकधात्वर्थस्यैकभावनायामन्वये प्रागभावनेतरभावनाव्यवच्छेदादिति भावः ॥ १ ॥

समिदाद्यपूर्वभेदः । अधि· २ ।

## एकस्यैव पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥

समिधो यजति, तनूनपातं यजतीत्यादौ धातुभेदाभावाच्चा-

पूर्वभेद इति बहिः पूर्वपक्षे सिद्धान्तमाह । एकस्येति । एकस्य धातोः अविशेषाद् गुणाद्यविधायकत्वेन पुनः श्रुतिरपि शब्दान्तरवत्कर्मभेदकं प्रमाणं स्यात् । दध्ना जुहोतीत्यत्र दध्यादिवदन्यस्य विधेयस्याभावेन सकृदुच्चारणादेव कार्यसिद्धौ असकृदुच्चारणमनर्थकं स्यादिति भावः* ॥ २ ॥

आघाराद्याग्नेयादीनामङ्गाङ्गिभावः । विद्वद्वाक्यस्यानुवादकत्वम् । अधि० ३ ।

## प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

दर्शपूर्णमासप्रकरणे यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति, तावब्रूतामग्नीषोमावाज्यस्यैव नो उपांशु पौर्णमास्यां यजन्निति । ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् । ऐन्द्रं दध्यमावास्यायाम् ऐन्द्रं पयोऽमावास्यायामिति षड्यागान्विधाय तत्समीपे, य एवं विद्वान्पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते इति विद्वद्वाक्ये श्रूयमाणं यागान्तरम् उत षण्णामनुवादकं यजतिपदमिति संशये सिद्धान्तेनारभते । प्रकरणमिति । पौर्णमास्यां पौर्णमास्युपलक्षितविद्वद्वाक्यद्वये प्रकरणं प्रकृतपूर्वोक्तषड्यागानुवादः । रूपावचनाद् देवताद्रव्यप्रतिपादकशब्दाभावात् । देवताद्रव्यलाभमन्तरा यागविध्यसंभवादिति भावः ॥ ३ ॥

## विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥ ४ ॥

ननु अनुवादपक्षे तत्सन्निधिपठितानां प्रयाजानुयाजचतुःप्रभृतीनां सर्वेषामनुवादकं सद्राजसूयवत्सर्वाण्येव प्रधानानि सन्त्वत आह । विशेषेति । पूर्वेषाम् आग्नेयादिषण्णाम् अनुवादः विद्वद्वाक्येन । विशेषदर्शनात् । क्व चित्सौर्ययागे, प्रयाजे प्रयाजे कृष्णलं जुहोतीत्यतिदेशदर्शनात् । समेषु सर्वेषु प्रधानेषु सत्सु प्रयाजानां प्रधानतया सौर्ययागे अप्र-

* ननु समिदादिसंज्ञाभेदाद् अथैष ज्योतिरथैष विश्वज्योतिरितिवद्यागभेदः स्यात् तथा चेदमधिकरणं नारम्भणीयमिति चेन्न । शब्दैकत्वेनार्थैकत्वस्य दृढतरप्रत्यभिज्ञानात् । स्पष्टे च यागैकत्वे तस्य समित्संज्ञाऽवरुद्धस्य संज्ञान्तरमन्याय्यमिति तनूनपादादिशब्दाः समिद्यागे देवता विधास्यन्ति न तु संज्ञाः येन संज्ञातो भेदः स्यादिति शा० दी० ।

वृत्तिः अतिदेशेन प्रवृत्त्यभावः स्यात् । प्रधानस्यातिदेशाभावादिति भावः ॥ ४ ॥

## गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥

नेमौ समुदायानुवादकौ किं त्वपूर्वकर्मणी । रूपलाभस्तु यदाग्नेयो ऽष्टाकपाल इति वाक्ये श्रूयमाणामावास्यापौर्णमासीपदे कर्मनामनी । अमावास्यापौर्णमासीसंज्ञकयागे आग्नेयो ऽष्टाकपालः कार्य इति यदाग्नेयवाक्यार्थः । तथा च नायमुत्पत्तिविधिः किं तु गुणविधिः । विद्वद्वाक्ये ऽमावास्यापौर्णमासीशब्दौ तत्रत्ययागवाचकौ । तथा चाग्निहोत्रशब्देन प्राकृताग्निहोत्रधर्मा विकृताग्निहोत्रे यथा तथा ऽत्रापि विद्वद्वाक्यविहितयागे देवता ऽग्निः द्रव्यं पुरोडाश इत्यभिप्रायेण शङ्कते । गुण इति । श्रुत्या पौर्णमास्यादिशब्देन संयोगाद् गुणः यदाग्नेयवाक्यविहितो गुणः । द्रव्यं देवता च लभ्यतइति शेषः ॥ ५ ॥

## चोदना वा गुणानां युगपच्छास्नाचोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥

यदाग्नेयेति न गुणविधिरिति सिद्धान्तमाह । चोदनेति । चोदना कर्मोत्पत्तिविधिः एकवाक्येनानेकेषां गुणानां शासनात् । हि यतः यदि गुणविधिः स्यात् तदा चोदिते विध्यन्तरेण प्राप्ते कर्मणि तदर्थत्वात्कर्मार्थत्वाद्विधीयमानगुणस्य तस्य तस्य प्रत्येकं विध्यर्थं प्रत्येकमुपदिश्येत प्रत्येकं विधिः स्यात् । ऋजुमाघारयति, संततमाघारयतीतिवत् । अपूर्वकर्मविधिपक्षे तावद्गुणविशिष्टमेकं कर्म विधातुं शक्यते ऽतो न गुणविधिरिति भावः ॥ ६ ॥

## व्यपदेशश्च तद्वत् ॥ ७ ॥

किं च पौर्णमास्यां पौर्णमास्या, अमावास्यायाममावास्यया यजेतेत्यनेन विहितकर्मणः यदाग्नेयादिवाक्ये ऽनुवादः तर्हि ताभ्यामेतमग्नीषोमीयमित्यादिशेषवाक्येष्वपि श्रूयमाणामावास्यापौर्णमासीशब्दा अपि तत्पराः स्युः तथा सत्येककर्मानुवादेनानेकदेवताविकल्प एव देवताया यागश्चैक इति स्यात् । तथा चोवाणि ह वा एतानि हवींषि अमावा-

स्यायां संक्रियमाणत्राग्नेयं प्रथममैन्द्रं उत्तरे इत्यनेन व्यपदेशः आग्नेयेन्द्रयागयोः सहानुष्ठानं श्रूयमाणं तद्वद् विरुध्येतेति ॥ ७ ॥

## लिङ्गदर्शनाच्च ॥ ८ ॥

किं च चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति लिङ्गम् एकयागपक्षे विरुध्येत । सिद्धान्ते पञ्च प्रयाजास्त्रयोऽनूयाजाः द्वे चतुर्थी प्रधानत्रयं स्विष्टकृदिति चतुर्दश ॥ ८ ॥

उपांशुयागापूर्वत्वम् । अधि० ४ ।

## पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥

जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयागमन्तरा यजति, विष्णुरुपांशु यष्टव्यः प्रजापतिरुपांशु यष्टव्यः, अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति पठितम् । अन्तरावाक्यं विष्ण्वादियागत्रयानुवादकमुतापूर्वयागविधायकमिति संशये पूर्वपक्षमाह । पौर्णमासीवदिति । पौर्णमासीवद् यथा विद्वद्वाक्यस्य पौर्णमासीपदं समुदायानुवादकं तथोपांशुयागः ऽन्तरावाक्यस्थो ऽपि समुदायानुवादकः* ॥ ९ ॥

## चोदना वा ऽप्रकृतत्वात् ॥ १० ॥

सिद्धान्तमाह । चोदनेति । अन्तरावाक्यमेव चोदना कर्मोत्पत्तिवाक्यं न विष्ण्वादिवाक्यानि विधायकानि अप्रकृतत्वाद् उपक्रमवाक्येनानाकाङ्क्षितत्वात् । अयं भावः पूर्वोदाहृतवाक्ये जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावित्युपक्रमवाक्ये पुरोडाशसांतत्ये दोषकथनादन्तराले किं चिद्विधेयमस्तीति निश्चयादन्तरालघटितवाक्यमुपक्रमेण साकं यथा संबद्धं तथा न विष्ण्वादिवाक्यमत इदमेव विधायकं विष्ण्वादिवाक्यानि अन्तरालगुणककर्मविधिशेषा अर्थवादा इति† ॥ १० ॥

---

* द्रव्यदेवतयोरभावेन रूपाभावाद्वर्तमानापदेशाच्चेति भावः ।

† विष्ण्वादिवाक्येष्वन्तरालसंयोगाभावाज्जामितापरिहाराय अन्यत्र क्व चिद्विष्ण्वादयो यष्टव्या अजामित्वायेत्युक्तौ असांगत्येन प्रशंसा नावकल्पत इति भावः ।

## गुणोपबन्धात् ॥ ११ ॥

ननूपांशुयाग इतिनामप्रवृत्तिः कथं तत्राह । गुणेति । तावन्तृतामग्नीषोमाउपांशु पौर्णमास्यां यजेरन्निति वाक्यादुपांशुत्वगुणे तत्र सिद्धे तद्गुणोपबन्धात् तत्प्रख्यन्यायेन नामत्वं तस्य ॥ ११ ॥

## प्रायवचनाच्च ॥ १२ ॥

किं च तस्य वा एतस्याग्नेय एव शिरः हृदयमुपांशुयाजः पादावग्नीषोमीय इति प्राये प्रधानपङ्क्तौ वचनाद् उपांशुयाग इत्युक्तवाक्ये ग्रहणादुपांशुपदघटितस्य विधायकत्वमिति भावः ॥ १२ ॥

आघारादीनामपूर्वत्वम् । अधि० ५ ।

## आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥

ऋजुमाघारयति, संततमाघारयतीत्युक्त्वा तत्समीपे यदाघारमाघारयतीति श्रुतम् । एवं दध्ना जुहोति पयसा जुहोतीति तत्समीपे ऽग्निहोत्रं जुहोतीति श्रुतम् । आघारवाक्यमग्निहोत्रवाक्यं च विधायकं समुदायानुवादकं वेति संशये पूर्वपक्षमाह । आघारेति । आघाराग्निहोत्रम् इदं पदद्वयं समुदायानुवादकं विद्वद्वाक्यवदरूपत्वाद् देवताद्रव्यबोधकाभावात् ॥ १३ ॥

## संज्ञोपबन्धात् ॥ १४ ॥

संज्ञया अग्निहोत्रम् आघारमिति द्वितीयान्तसंज्ञया उपबन्धाद् निर्देशात् । द्वितीयान्तनिर्देशः सिद्धस्यैव न त्वसिद्धस्य, अत एवासिद्धत्वाच्चित्रया यजेतेति तृतीयान्तनिर्देश इति भावः ॥ १४ ॥

## अप्रकृतत्वाच्च ॥ १५ ॥

इतो ऽपि नेत्याह । अप्रेति । न विद्यते प्रकृतं समीपवृत्तिदेवताद्रव्यप्रकाशकवाक्यान्तरं ययोः तत्त्वात् । तथा च रूपाभावो दृढीकृतो ऽनेन । दध्ना जुहोतीति वाक्येनापि केवलदध्नः सिद्धस्य विधानासम्भवाद् दधिविशिष्टो व्यापार एव विधेय इति तदनुवादो ऽनेन युक्त इति भावः ॥ १५ ॥

**चोदना* शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ॥ १६ ॥**

सिद्धान्तमाह । चोदनेति । चोदना कर्मोत्पत्तिवाक्यम् । शब्दार्थस्य उक्तवाक्यार्थस्य प्रयोगभूतत्वाद् अग्निहोत्राघारनामके कर्मणी अनुष्ठेये इति अनुष्ठानापरपर्यायप्रयोगरूपत्वाद्विधेयत्वम् । अग्निहोत्राघारसंज्ञके कर्मणी विधेये तत्सन्निधेः अग्निहोत्राघारसन्निधेः पुनः अग्निहोत्राघारयोः श्रवणं गुणार्थेन गुणलाभार्थत्वेन दध्ना जुहोतीत्यनेन गुणविशिष्टकर्मविधौ मत्वर्थलक्षणापत्तेः । अनुवादे फलाभावाच्च अग्निहोत्रादिवाक्यमेव कर्मविधायकमिति भावः† ॥ १६ ॥

पशुसोमयोरपूर्वत्वम् । अधि० ६ ।

**द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७ ॥**

ज्योतिष्टोमे श्रूयते, हृदयस्याग्रे ऽवद्यत्यथ जिह्वाया अथ वक्षस इति । तत्रैवाग्नीषोमीयं पशुमालभेतेति श्रुतम् । तथा ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णात्याश्विनं गृह्णातीति पठित्वा तत्रैव सोमेन यजेतेति श्रुतम् । अत्र हृदयादिवाक्यैरुत्पन्नस्य कर्मणो ऽनुवादकं यदग्नीषोमीयं पशुमालभेत इति वाक्यं, तथा ऐन्द्रवायवादिवाक्यैरुत्पन्नकर्मणां समुदायानुवादकं सोमेनेति वाक्यं विद्वद्वाक्यवदिति बहिः पूर्वपक्षे सिद्धान्तमाह । द्रव्येति । पशुसोमयोः पशुसोमघटितवाक्ययोः चोदना अपूर्वकर्मलाभः द्रव्येण पशुना सोमेन च संयोगात् तद्वाचकपशुसोमघटितत्वादिति निष्कर्षः । प्रकरणे प्रकरणपठितहृदयैन्द्रवायववाक्यविहिते यागे सति द्रव्यसंयोगः द्रव्यवाचकपशुसोमपदसंयोगः अनर्थकः व्यर्थः हृदयादिवाक्यैरव्या धारया गृह्णातीति च द्रव्यलाभेन तस्य पशुपदस्य सोमपदस्य च दध्ना जुहोतीतिवद्गुणार्थेन सार्थकता न हि ॥ १७ ॥

---

* चोदना चेति शा० भा० पाठः ।

† यद्यपि अग्निहोत्रादिवाक्ये रूपं न ज्ञायते तथा ऽपि विधिवशादेव सामान्यमतिक्रम्य तल्लक्षितो ऽन्यत्रा ऽविहितो होमविशेषो ऽयमित्येतावतैव गम्यमानत्वात् विधानासंभवः इति शा० दी० ।

## अचोदकाश्च संस्काराः ॥ १८ ॥

किं च ऐन्द्रवायवं गृह्णातीत्यादयः अचोदका अपूर्वकर्मविधायका न, किं तु संस्काराः ग्रहणेन इन्द्रवायुसंबन्धिद्रव्यं संस्कुर्यादित्येवार्थः* । ऐन्द्रवायवमितिद्वितीयान्तग्रहणादिति पूरणीयम् । हृदयस्येत्यत्र षष्ठ्या हृदयादीनां प्राधान्यं ज्ञेयम् ॥ १८ ॥

## तद्भेदात्कर्मणो ऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥ १९ ॥

ननु सोमेनेति वाक्यस्य कर्मोत्पादकत्वे तस्यैकत्वाद् ऐन्द्रवायवाद्यनेकदेवतासंबन्धो विकल्पेन वाच्यः तथा सति दशैतान् ग्रहानध्वर्युः प्रातःसवने गृह्णातीति ग्रहसमुच्चयो विरुध्येतेत्यत्राह । तदिति । सोमेनेति विहितकर्मणो ऽभ्यासः आवृत्तिः सायंप्रातरग्निहोत्रवत् । तद्भेदाद् देवतासंबन्धभेदात् । ननु दशानां ग्रहाणां ग्रहणं युगपदेव संभवति किमभ्यासेनेत्यत्राह । द्रव्येति । द्रव्यस्य पृथक्त्वात् पात्रभेदेन पृथक्त्वात् संस्कारस्य भेदः । ननु तथा ऽपि एकद्रव्यसंस्कारे किमिति यावतां ग्रहणं तत्राह । द्रव्यं प्रति गुणीभावादङ्गत्वाद्ग्रहणस्य । तथा च प्रतिप्रधानमङ्गावृत्तिरिति न्यायेन संस्काराभ्यासः । यागस्यापि देवतासंबन्धभेदादभ्यासः । तथा चोक्तसमुच्चयो ऽप्युपपन्न इति भावः । ननु सकृदेव गृहीत्वा विभज्य यागं कुर्वन्त्वत आह अनर्थकमिति । हि यतः आश्विनो दशमो गृह्यत इति क्रमविधिरनर्थकः व्यर्थः स्यात् ॥ १९ ॥

## संस्कारस्तु न भिद्येत परार्थत्वाद् द्रव्यस्य गुणभूतत्वात् ॥ २० ॥

ननु खादिरे पशुं बध्नाति, पालाशे बध्नातीत्यत्रापि बन्धनस्य कुतो नाभ्यासस्तत्राह । संस्कार इति । संस्कारः पशुसंस्कारः बन्धनरूपः न

---

* ननु ग्रहणमात्रेण तद्देवत्यत्वं न संभवति त्यज्यमानद्रव्योद्देश्यत्वं हि देवतात्वमिति चेत् । मैवम् । यागसहितेन द्रव्येण तत्सम्भवात् । यागापेक्षायां च सर्वत्र सोमेन यजेतेत्येव द्रव्यदेवतासंबन्धमुपपादयद्यागान्तरकल्पनां निरुणद्धीति बोध्यम् ।

भिद्येत नाभ्यस्येत द्रव्यस्य यूपस्य परार्थत्वाद् बन्धनार्थत्वात् । परार्थत्वमेव विवृणोति गुणभूतत्वादङ्गत्वात्, तथा चाङ्गानुसारेण न प्रधानावृत्तिरिति भावः ॥ २० ॥

संख्यया कर्मभेदः । अधि० ७ ।

## पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ॥ २१ ॥

वाजपेये सप्तदश प्राजापत्यान्पशूनालभतइति श्रुतम् । अत्र सप्तदशपशुकरण एको याग उत सप्तदश यागा इति संशये अनेकयागपक्षे अनेकापूर्वकल्पनापत्तेरेको याग इति बहिः पूर्वपक्षे सिद्धान्तमाह । पृथगिति । संख्यया सप्तदशत्वादिसंख्यया सह पृथक्त्वस्य निवेशात् सामानाधिकरण्यात् । यत्रोत्पत्तिवाक्ये कर्मसमानाधिकरणा* देवताविशिष्टद्रव्यसमानाधिकरणा† वा संख्या श्रूयते तत्र स्वाश्रयसमवेतत्वसंबन्धेन स्वाश्रयावधिकं पृथक्त्वमिति नियमात्कर्मणो भेदः स्यात् । प्रजापतिना साकं प्रथममन्वितेषु पश्चात्साप्तदश्यान्वये प्रत्येकपशौ देवतासंबन्धसत्त्वाद्यागाः सप्तदशेति भावः‡ ॥ २१ ॥

संज्ञाकृतः कर्मभेदः । अधि० ८ ।

## संज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥

ज्योतिष्टोमसन्निधौ श्रूयते, अथैष ज्योतिरथ विश्वज्योतिरथ सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेति । किमेभिर्नामभिः ज्योतिष्टोममनूद्य सहस्रदक्षिणारूपगुणो विधीयतउत कर्मान्तरमिति संशये प्रकरणानुग्रहाद्गुण एव विधीयतइति बहिः पूर्वपक्षे सिद्धान्तमाह । संज्ञेति । संज्ञा च

* तिस्र आहुतीर्जुहोतीत्यादौ ।

† सप्तदश प्राजापत्यान् पशूनालभतइत्यादौ ।

‡ कर्मैकत्वे अस्यैकादशिनपशुगणविकारत्वाद् एकादशिनपशुगणस्य च सवनीयविकारत्वात्तत्र च एकपशुनिष्ठैकादशावदानद्रव्यत्वादत्रापि एकस्यैवावदानगणस्यातिदेशे सप्तदशानां प्राजापत्यत्वं न संपद्येत, अतोऽपि कर्मान्तरत्वम् । अत एव वसन्ताय कपिञ्जलानालभेतेत्यादिष्वपि कर्मभेदः सिध्यति । अन्यथा तत्र देवताया भिन्नपदोपात्तत्वेन तद्विशिष्टे संख्यान्वयायोगेन तत्सिद्धिर्न स्यादिति शास्त्रदीपिकातोऽवगन्तव्यम् ।

कर्मभेदिका । उत्पत्तिवाक्यसंयोगात्पाठात् । अथेत्यनेन प्रकरणविभेदात्संज्ञया कर्मभेद एवेति भावः ॥ २२ ॥

देवताभेदकृतः कर्मभेदः । अधि० ९ ।

## गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥

तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति । अत्र वाजिभ्य इत्यनेन पूर्वकर्मानुवादेन वाजिनरूपं गुणान्तरं विधीयते उत कर्मान्तरमिति संशये अपूर्वद्वयकल्पने गौरवाद्गुणविधिरिति बहिः पूर्वपक्षे सिद्धान्तमाह । गुण इति । अपूर्वसंयोगे पूर्वकर्मनिवेशाभावे गुणश्च कर्मभेदकः । ननु पूर्वकर्मैवोत्तरवाक्ये निविशतामत्राह । वाक्ययोर्द्वयोरपि समत्वात् । उत्तरकर्मैव पूर्वत्र निविशतामिति नियामकाभावादिति भावः ॥ २३ ॥

## अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत* ॥ २४ ॥

ननु दध्ना जुहोति, पयसा जुहोतीत्यत्र कथं विकल्पस्तत्राह । अगुणइति । कर्मशब्दे कर्मोत्पत्तिवाक्ये अगुणे गुणपदशून्ये सति यथाऽग्निहोत्रं जुहोतीति तत्र तत्समीपवृत्तिगुणवाचकशब्दघटितवाक्ये गुणः गुणविधिः प्रतीयेत तथा दधिपयोवाक्ये । गुणपदघटितोत्पत्तिवाक्ये तु उत्पत्तिशिष्टगुणावरुद्धे उत्पन्नशिष्टगुणस्य दुर्बलस्य पक्षे ऽपि बाधकत्वं न संभवति । दध्यादौ तु द्वयोरप्युत्पन्नशिष्टत्वेन तुल्यत्वात्पक्षे बाधाद्विकल्पो युक्त इति भावः ॥ २४ ॥

दध्यादिद्रव्यस्य सफलत्वम् । अधि० १० ।

## फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ २५ ॥

दध्नेन्द्रियकामस्य जुहुयादित्यग्निहोत्रसमीपे श्रुतम् । उदाहृतवाक्येन विहितं कर्माग्निहोत्रादतिरिक्तमुत गुणफलसंबन्ध इति संशये पूर्वपक्षमाह । फलेति । भावार्थाधिकरणानुरोधेन फलस्येन्द्रियरूपस्य कर्मणा

* भाष्यकारेण अधिकरणान्तरपरतया ऽपि इदं सूत्रं व्याख्यातम् । संमतं च शास्त्रदीपिकाकारादीनाम् । सुबोधिनीकारेण तु पूर्वाधिकरणशङ्कानिरासपरत्वेनैव व्याख्यातमतो नाधिकरणोल्लेखः कृतः ।

धातुप्रतिपादितक्रियया साकं संबन्धात् । वाक्ये फलश्रुतेः कर्म अपूर्वं कर्म स्यात् ॥ २५ ॥

## अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥

सिद्धान्तमाह । अतुल्येति । अग्निहोत्रं जुहोति स्वर्गकामः, दध्नेन्द्रियकामस्य जुहुयादित्यनयोरतुल्यत्वात् । स्वर्गकामवाक्ये भावार्थाधिकरणप्रवृत्तिः विधेयान्तराभावात्कर्मफलसंबन्धमात्रविधायकत्वेन इन्द्रियकामवाक्ये गुणफलविधिसंभवेन भावार्थाधिकरणाप्रवृत्त्या चासदृशत्वात् । तस्य होमस्य गुणे फलसंबन्धः प्रतीयेत ॥ २६ ॥

वारवन्तीयादीनां कर्मान्तरत्वम् । अधि० ११ ।

## समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वृक्षु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेत्यग्निष्टुतं प्रकृत्य पठित्वा तदुत्तरम् एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति । अस्यार्थः । अग्निष्टोमस्य विकृतिरूपः अग्निष्टुन्नामकक्रतुः स च पृष्ठस्तोत्रे त्रिवृत्स्तोमसंयुक्तत्वात्त्रिवृदित्युच्यते । अग्निष्टोमादिसप्तसंस्थासु अग्निष्टोमसाम्ना क्रतुसमाप्तिरग्निष्टोम इत्युच्यते । प्रकृतौ तृतीयसवने आर्भवपवमानस्योपरि यज्ञायज्ञीयं *साम गीयते । तस्यैवाग्निष्टोमसामेत्यपरं नाम तेन क्रतुः समाप्यते । तच्च साम प्रकृतौ यज्ञायज्ञा वो अग्नयइत्याग्नेयीष्वृक्षु गीयते अग्निष्टुति ब्रह्मवर्चसहेतुभूते वायो शतं हरीणामिति वायव्यास्वृक्षु गातव्यम् । पशुकामेन तु रेवतीर्नः सधमादइति रेवतीपदघटितेषु गातव्यमिति । अत्र पशुरूपफलं रेवत्यृगधिकरणसामगानेन संबध्यतइत तादृशसामगानविशिष्टकर्मणा अपूर्वेण संबध्यतइति संशये इन्द्रियकामाधिकरणन्यायेन गुणेनैव फलं संबध्यतइति बाह्यः पूर्वपक्षे सिद्धान्तमाह । समेष्विति । समेषु क्रियात्वाविशेषादाश्रयानपेक्षत्वेन तुल्येषु श्रूयमाणेषु कर्मयुक्तम् अपूर्वकर्मसंबद्धं फलं स्यात् ।

* यज्ञायज्ञशब्दो ऽस्मिन्नस्तीत्यर्थे मतौ छः सूक्तसाम्नोरिति छप्रत्ययः ।

अयं भावः । दध्नेन्द्रियकामेत्यत्र शिक्यस्थदध्ना इन्द्रियाजननात् क्रियामाश्रयत्वेनापेक्षते दधि । स्वव्यापारं क्रियामुत्पाद्य तद्द्वारा फलसाधनं भवति । इह तु रैवत्यधिकरणकसामगानमपि क्रिया यागोऽपि क्रियारूपः यागस्य व्यापारो गानं गानस्य व्यापारो यागो वेति नियन्तुमशक्यतया भावार्थाधिकरणन्यायेन गानविशिष्टम् अपूर्वं कर्मैव फलेन संबध्यते । अथैष ज्योतिरितिवद्वेतच्छब्दो विधीयमानकर्मपर इति । यदि च विधीयमानं गानं फलं प्रति करणम् अनूद्यमानो यागः तस्य व्यापार इत्युच्यते तथाऽपि साम्नः रैवत्यधिकरणकत्वं फलसंबन्धश्चोभयं विधेयमिति वाक्यभेदः । दध्नः यागरूपक्रियाजनकत्वं लोकगम्यत्वेन अविधेयं फलसंबन्धमात्रं विधेयमिति न वाक्यभेद इति ॥ २७ ॥

सौभरनिधनयोः कामिकत्वम् । अधि० १२ ।

## सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २८ ॥

यो वृष्टिकामो योऽन्नाद्यकामः यः स्वर्गकामः स सौभरेण* स्तुवीतेत्युक्त्वा हीषिति वृष्टिकामाय निधनं† कुर्याद् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामायेति । अत्र सौभरसामफलादन्यद्धीषादिफलम् उत प्रथमफलानुवादेन हीषादिनियमविधिरिति संशये पूर्वपक्षमाह । सौभरइति । सौभरे सौभरसंबन्धिनि निधने निधनाश्रितहीषादौ कामसंबन्धः फलान्तरजनकत्वं । पुरुषश्रुतेः । उत्तरवाक्ये वृष्टिकामायेत्यादिपदैः पुरुषश्रुतेः शक्त्या पुरुषप्रतिपादनात् । एकफलपक्षे वृष्टिकामपदस्य वृष्टिकामकर्तृकप्रयोगसंबन्धिनि लक्षणां कृत्वा निधनेनान्वयः कार्य इति लक्षणादोष इति भावः ॥ २८ ॥

## सर्वस्य वोक्तकामत्वात्तस्मिन्कामश्रुतिः स्यान्निधनार्था श्रुतिः ॥ २९ ॥

सिद्धान्तमाह । सर्वस्येति । सर्वस्य निखिलसौभरसाम्न उक्तवृष्ट्यादयः फलानि यस्मात्सौभरसाम्नः तस्वाद् एकमेव फलम् । अयं

* सौभरं नाम सामविशेषः । जै· न्या· वि· ।

† निधनं नाम पञ्चभिः सप्तभिर्वा भागैरुपेतस्य साम्नोऽन्तिमो भाग इति जै· न्या· वि· ।

भावः । शाखाभेदेन हीष् इति स्थाने सौभरसाम्नो निधनभागः अन्यवर्णघटितो ऽप्यस्ति कस्यां चिच्छाखायां हीष्वर्णघटितो ऽप्यस्ति यो वृष्टिकामः स सौभरेण स्तुवीतेति वचनेन सर्वस्य साम्नः फलहेतुत्वे सिद्धे हीष् इत्यपि सिद्धमेवेति न फलसंबन्धविधिसंभव इति । ननु हीष् इति वृष्टिकामायेति व्यर्थमत आह । तस्मिन्हीष् इति समुदाये कामश्रुतिः फलसंबन्धश्रुतिः निधनार्था हीष् इतिघटितनिधननियमार्था । अयं भावः । नानाशाखापाठवशादन्यवर्णानामपि प्राप्तौ वृष्टिकामकर्तृकप्रयोगे सर्वदा हीषित्येव निधनमिति नियमार्थम् । अपूर्वविध्यपेक्षया नियमविधौ लाघवस्यान्यत्र दर्शितत्वाल्लाघवानुसारेणोक्तलक्षणा ऽकिंचित्करीति ॥ २९ ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां द्वितीयस्य द्वितीयः पादः ॥ २ ॥

ग्रहाग्रत्वस्य ज्योतिष्टोमाङ्गत्वम् । अधि० १ ।

## गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥

ज्योतिष्टोमे श्रुतं यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामा आग्रयणाग्रानिति* । अत्र तत्तद्वाक्योक्ताग्रतागुणविशिष्टं रथंतरादिसामविशिष्टं ज्योतिष्टोमादन्यत्कर्म विधीयते उत श्रुतौ तत्तत्साम्नि निमित्ते नैमित्तिकमुक्ताग्रतामात्रं विधीयतइति संशये पूर्वपक्षमाह । गुण इति । रथंतरसाम गुणः स्यात् । रथंतरं साम यत्रेति समासेन क्रतुना संयोगात् संबन्धात् । ननु तथा ऽपि प्रकरणात्प्रकृतक्रतुनैव संबध्यतामत्राह । संयोगस्य रथंतरसामसंबन्धस्य अशेषभूतत्वात् । त्रिवृत्स्तोमो भवतीतिवत्

* तत्र सोमशब्देन सोमलतासाधनको यागो विधीयते । तस्मिंश्च यागे माध्यन्दिने सवने पृष्ठस्तोत्रे रथंतरबृहज्जगन्नामकानि सामानि विकल्पेन विहितानि । अभि त्वा शूरेत्येतस्यां योनावुत्पन्नं रथंतरम् । त्वामिद्धि हवामहे इत्येतस्यामुत्पन्नं बृहत् । जगतीच्छन्दस्कायामृच्युत्पन्नं जगत् । ऐन्द्रवायवो मैत्रावरुण आश्विनः शुक्रो मन्थ्याग्रयण उक्थ्यो ध्रुव इत्यादिनामका ग्रहाः प्रातःसवने गृह्यन्ते । दारुपात्रेषु सोमरसस्य ग्रहणाद् ग्रहा भवन्ति । सोमयागस्य रथंतरसामोपेतत्वपक्षे एतेषु ग्रहेष्वैन्द्रवायवः प्रथमं ग्रहीतव्यः । बृहत्सामोपेतत्वपक्षे शुक्रः । जगत्सामोपेतत्वपक्षे आग्रयणः प्राथमिक इति विषयवाक्यस्यार्थ इति जैमिनीयन्यायमालाविस्तरे ।

क्रतुसंबन्धियावत्सामकार्येण व्याप्तत्वात्। ज्योतिष्टोमे रथंतराद्यन्यानि सामानि सन्ति अतः रथंतरसामसाध्ययावत्सामकार्यकं कर्मान्तरमपूर्वमेव प्रयोजयेदुत्पादयेत्। यदीति कामप्रवेदने। यथा लोके यदि शालीन् भुञ्जीत तत्र दध्युपसिञ्चेदित्यत्र यदीत्यस्य व्यत्ययेनोत्तरवाक्येऽन्वयं संपाद्य यदि दध्युपसेचनमिति चेत् तर्हि शालीन्भुञ्जीतेति तथा प्रकृते व्यत्यासेन अन्वयो योज्यः॥ १॥

## एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यात्॥ २॥

सिद्धान्तमाह। एकस्येति। एकस्यैव ज्योतिष्टोमस्य माध्यन्दिनसवने पृष्ठस्तोत्रे विकल्पेन बृहद्रथंतरयोः समावेशेन लिङ्गयोः बृहद्रथंतरयोर्भेदादैन्द्रवायवाग्रताशुक्राग्रतयोः प्रयोगभेदेन नियमविधिरूपप्रयोजनार्थमिदं वाक्यमुच्यते। अतः गुणवाक्याद् ज्योतिष्टोमे अङ्गत्वेन क्लृप्तबृहद्रथंतरादिरूपगुणवाक्याच्च एकत्वमेतद्वाक्यविहितकर्मणः। अयं भावः। रथंतरं साम यस्य पृष्ठस्तोत्रे इति व्युत्पत्तिकरणेन निखिलक्रतुसंबन्धं विना ऽप्यन्यपदार्थत्वस्य क्लृताडपपत्तिसंभवात्प्रकरणभङ्गमप्रकृतकल्पनं व्यत्ययेनान्वयश्चेत्यनेकदोषाङ्गीकारस्यान्याय्यत्वादिति* ॥ २॥

अवेष्टेः कर्मान्तरत्वम्। अधि० २।

## अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते॥ ३॥

राजसूये अवेष्टिसंज्ञकाः पञ्च यागाः। आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणेति। तत्समीपएव यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा ऽभिघारयेद्यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमिति। अत्र ब्राह्मणादिकर्तृकत्वे निमित्ते राजसूयान्तः-

* यद्यपि प्रकृतिरूपसोमयागे जगत्सामाभावात्र तत्र आग्रयणाग्रत्वं विधातुं शक्यं तथा ऽपि यत्र विकृतौ तत्संभवस्तत्रैव तद्विधानमस्तु नैतावता अपूर्वकर्मविधायकत्वं सिध्यतीति भावः।

यात्विषु गुणविधिः उत कर्मान्तरमिति संशये पूर्वाधिकरणसिद्धान्तयुक्त्या गुणविधिरिति बहिः पूर्वपक्षे सिद्धान्तमाह । अवेष्टाविति । अवेष्टिसमीपे पठितं यदि ब्राह्मण इत्यादि क्रतुप्रधानमपूर्वकर्मान्तरविधायकम् । यज्ञसंयोगात् । क्षत्रियस्यैवेत्यध्याहारः । राजा राजसूयेन यजेतेति वाक्येन क्षत्रियस्यैव यज्ञेन राजसूयाख्येन संयोगाद् अधिकारविधानात् । राजसूयाङ्गभूते अवेष्टिकर्मणि ब्राह्मणस्याधिकाराभावान्न गुणविधिः किं तु कर्मान्तरमिति भावः* ॥ ३ ॥

आधानस्य विधेयत्वम् । अधि० ३ ।

## आधाने ऽसर्वशेषत्वात् ॥ ४ ॥

वसन्ते ब्राह्मणो ऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति । अत्र यदाहवनीये जुहोतीति होमसामान्यस्याहवनीयविधानादर्थात्सिद्धाधाने रथंतरादिसामवद्ब्राह्मणकर्तृकत्वे निमित्ते वसन्तकालविधिरिति बहिः पूर्वपक्षे सिद्धान्तमाह । आधानइति । आधाने विषये वसन्तादिवाक्यं प्रापकम् । ननु यदाहवनीये इतिविध्यन्यथानुपपत्त्या प्राप्तमाधानमित्यत्राह । असर्वशेषत्वात् । आहवनीयस्य एकेनाधाने कृते सिद्धौ तत्रैवान्येषां पुरुषाणां क्रतुसंभवेनाक्षेपसिद्धाधानस्य सर्वपुरुषान्प्रत्यनङ्गत्वात् । अनेन वाक्येन आधानविधाने आत्मनेपदश्रवणादेकेनाधानं कृतं तदनुष्ठितक्रतुफलं तस्यैव नान्यस्येति प्रतिपुरुषमाधानावृत्तिः सिध्यतीति भावः ॥ ४ ॥

दाक्षायणादीनां गुणत्वम् । अधि० ४ ।

## अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥

* यद्यपि लोके राजशब्दस्य राज्यकर्तरि ब्राह्मणादावपि प्रयोगो दृश्यते राज्यपदस्य च जनपदरक्षणे तथा ऽपि राजानमभिषेचयेदित्यादौ वेदे राज्ययोगात्पूर्वमेव क्षत्रियमात्रे राजपदप्रयोगदर्शनाद्राजपदं क्षत्रियजातौ रूढमित्यवगम्यते । लोके ऽपि द्रविडेषु प्रयोगो दृश्यतएव । राज्यपदं तु पत्यन्तपुरोहितादिभ्यो यगितिसूत्रस्थेन राजा ऽसे इति गणसूत्रेण राज्ञः कर्मेत्यर्थे यविधानाद् राजसंबन्धनिमित्तकम् । अन्यत्र राजादिपदप्रयोगस्तु गौणः । एवं च राजा राजसूयेन यजेतेति विहिते राजसूये ब्राह्मणादेरधिकाराभावाच्च गुणविधिः किं त्ववेष्टिः कर्मान्तरमिति भावः ।

दाक्षायणयज्ञेन स्वर्गकामो यजेतेति दर्शपूर्णमासप्रकरणे श्रुतम्। अत्र गुणफलसंबन्ध उत कर्मान्तरमिति संशये संज्ञया कर्मभेद इति पूर्वपक्षमाह। अयनेष्विति। अयनेषु अयनपदघटितवाक्येषु चोदनान्तरं कर्मान्तरविधानम्। संज्ञोपबन्धात्॥ ५॥

## अगुणा च कर्मचोदना॥ ६॥

इतोऽपि कर्मान्तरमित्याह। अगुणा चेति। अगुणा गुणविधिशून्या कर्मचोदना केवलकर्ममात्रविधिः श्रूयते॥ ६॥

## समाप्तं च फले वाक्यम्॥ ७॥

किं च वाक्यमुदाहृतं फले स्वर्गरूपफले समाप्तं कर्मणः संबन्धं बोधयन् निराकाङ्क्षम्॥ ७॥

## विकारो वा प्रकरणात्॥ ८॥

सिद्धान्तमाह। विकार इति। विकारः दर्शपूर्णमासविकारः तस्यैव गुणविशेषविधायक इति यावत्। शेषं स्पष्टम्॥ ८॥

## लिङ्गदर्शनाच्च॥ ९॥

कर्मान्तरत्वे लिङ्गविरोधमाह। लिङ्गेति। तथा हि। त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत यदि दाक्षायणयाजी स्यादथो अपि पञ्चदशैव वर्षाणि यजेतात्रैव सा संपत्संपद्यते द्वे हि तत्र पौर्णमास्यौ द्वे अमावास्ये अत्र ह्येव सा संपद्भवतीति। यदि दाक्षायणयज्ञो दर्शपूर्णमासावेव तत्र प्रयोगाभ्यासस्य फलसंबन्धः तदा द्विवारमावर्तने पञ्चदशसु वत्सरेषु त्रिंशत्संवत्सरपर्यन्तं सकृदनुष्ठाने यावत्संख्या प्रयोगावृत्तौ तावती संख्या पञ्चदशसु वत्सरेषु भवति। तावत्संख्याकप्रयोगावृत्त्या फलं भवतीत्यभ्यासस्य फलहेतुत्वे लिङ्गम्॥ ९॥

## गुणात्संज्ञोपबन्धः॥ १०॥

यस्तु संज्ञया कर्मभेद इति नेत्याह। गुणात्संज्ञेति। गुणाद् दक्षस्य यजमानस्येमे दाक्षाः ऋत्विजः तेषामयनमभ्यासो यत्र स दाक्षायण इति व्युत्पत्त्या गुणविधिहेतोः दाक्षायण इति संज्ञानिबन्धः॥ १०॥

## समाप्तिरविशिष्टा ॥ ११ ॥

यच्च पूर्वपक्षे समाप्तमिति सूत्रं तदुत्तरमाह । समाप्तिरिति । कर्मफलसंबन्धे अभ्यासरूपगुणफलसंबन्धे ऽपि निराकाङ्क्षत्वमविशिष्टं तुल्यम् ॥ ११ ॥

द्रव्यदेवतायुक्तानां कर्मान्तरत्वम् । अधि० ५ ।

## संस्कारस्त्वाप्रकरणे ऽकर्मशेषत्वात् ॥ १२ ॥

अनारभ्य पठितं वायव्यं श्वेतमालभेतेति । दर्शपूर्णमासे ईषामालभेतेति । ईषा शकटस्य दीर्घकाष्ठं तस्य स्पर्शः कार्य इति तदर्थः । ईषावाक्येन विहितस्पर्शरूपसंस्कारानुवादः उत यावद्वाक्यश्रुतमपूर्वं फलहेतुः उत यागान्तरं विधीयतइति संशये आद्यपक्षमाह । संस्कार इति । संस्कारः ईषावाक्यविहितस्पर्शरूपः अप्रकरणे वायव्यवाक्ये अनूद्यतइति शेषः । अकर्मशेषत्वात् । कर्म शिष्यते बोध्यते ऽनेनेति कर्मशेषः न कर्मशेषः कर्मवाचकं पदं यस्मिन्वाक्ये सः अकर्मशेषः तत्त्वात् । यागवाचकपदाभावादिति फलितो ऽर्थः ॥ १२ ॥

## यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥

द्वितीयपक्षमाह । यावदिति । यावदुक्तं श्वेतं यत्किं चिद् द्रव्यं स्पृशेदिति श्वेतद्रव्यसाध्या स्पर्शक्रिया फलाय विधीयते कर्मणः श्रूयमाणस्पर्शरूपकर्मणः भावार्थाधिकरणन्यायेन एकपदश्रुतिमूलत्वान्न यागकल्पनेति भावः ॥ १३ ॥

## यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धात् ॥ १४ ॥

सिद्धान्तमाह । यजतिरिति । यजतिः यागः विधीयते । द्रव्यस्य पश्वादेः फलस्य भूत्यादेः भोक्तुर्देवतायाश्च परस्परसंयोगात् संबन्धश्रवणात् । ननु गुणफलसंबन्धपक्षे ऽपि द्रव्यस्याश्रयतया फलस्य साध्यतया कर्मणश्च साधनतया संबन्ध उपपन्न इति यावदुक्तं कर्म कर्तव्यमिति पक्षस्य न निरास इत्यत्राह । एतेषां द्रव्यगुणफलानाम् ।

द्रव्यं वायव्यमित्यनेन प्रतिपादितं गुणः श्वेतपदेन प्रतिपादितः फलं भूतिकाम इति प्रतिपादितम् । एतेषां कर्मणा प्रधानकर्मणा संबन्धात् । यावदुक्तपक्षे देवतासंबन्धः प्रथमपक्षे फलसंबन्धो ऽनुपपन्न इति भावः ॥ १४ ॥

## लिङ्गदर्शनाच्च ॥ १५ ॥

किं च यो ब्रह्मवर्चसकामः स्यात् तस्माएतं सोमारौद्रं चरुं निर्वपेदिति श्रुतम् । तथा दर्शपूर्णमासे चतुरो मुष्टीन्निर्वपेदिति श्रुतम् । तत्रत्यनिर्वापमनूद्य चरुरूपगुणो ब्रह्मवर्चसाय विधीयतइति वायव्यन्यायतुल्यत्वाद्वक्तव्यं तथा सति सोमारौद्रं चरुं निर्वपेदत्रत्यनिर्वापपदार्थे यजिना अनूद्य परिश्रयणगुणविधानं विरुध्येतेत्याह । लिङ्गेति ॥ १५ ॥

वत्सालम्भादीनां संस्कारत्वम् । अधि॰ ६ ।

## विशये प्रायदर्शनात् ॥ १६ ॥

अग्निहोत्रे वत्समालभेतेति श्रुतम् । तत्र वत्सालम्भो यजिः स्यात् प्राणिद्रव्यालम्भत्वाद् अग्नीषोमीयालम्भवदिति बहिः पूर्वपक्षे सिद्धान्तमाह । विशयइति । विशये यागविधिः संस्कारविधिर्वेति संशये संस्कारविधिः न यागविधिः प्रायदर्शनाद् दोहनादिसंस्कारमध्यपाठाद् अनुमानं पूर्वोक्तमप्रयोजकमिति भावः ॥ १६ ॥

## अर्थवादोपपत्तेश्च ॥ १७ ॥

किं च तद्विधिसमीपे वत्सनिकान्ता हि पशव इति तच्छेषो ऽर्थवादः श्रूयते । निकान्ताः प्रिया इत्यर्थः । एतेन वत्सस्य धेनुसमीपस्थितौ दुग्धप्रस्रवः प्रसिद्धो लोके तदर्थं वत्सस्य समीपे आनयनार्थमालम्भः स्पर्शो भवति । यदि आलम्भनं यागः तदा वत्समरणादुक्तार्थवादो विरुध्येतेति भावः ॥ १७ ॥

नैवारचरोराधानार्थत्वम् । अधि॰ ७ ।

## संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥

महाग्निचयने नैवारश्चरुर्भवति यदेनं चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवारा इति श्रुतम् । तत्र चरुमुपदधातीत्यनेन हुतशेषस्योपधानमुपयुक्तसंस्कारो विधीयते । अन्यथा बृहस्पत्युद्देशेन त्यागाभावेन

बृहस्पतेरन्नमित्यर्थवादासंगतेरिति बहिः पूर्वपक्षे सिद्धान्तमाह । संयुक्त इति । चरुरर्थशब्देन कार्यशब्देन उपदर्धातिना संयुक्तः संबद्धः तदर्थ एव न तु यागार्थः । श्रुतिसंयोगात् शक्यार्थलाभाद् । बृहस्पतेरिति विधिशेषो ऽर्थवादः । यथा रात्रिसत्रे फलाकाङ्क्षया ऽर्थवादगतं फलं कल्प्यते तथा श्रूयमाणमुपधानं देवतां नाकाङ्क्षते । यतो ऽर्थवादगतदेवता कल्प्येतेति भावः ॥ १८ ॥

त्वाष्ट्रपात्नीवतस्य पर्यग्निकरणान्तत्वम् । अधि० ८ ।

## पात्नीवते तु पूर्ववत्त्वादवच्छेदः ॥ १९ ॥

त्वाष्ट्रं पात्नीवतमालभेतेति श्रुतम् । तत्रैव पर्यग्निकृतं पात्नीवतमुत्सृजतीति श्रुतम् । अत्रोत्तरवाक्येन पूर्वयागादन्ययागो विधीयतउत शेषपरिसंख्येति संशये पर्यग्निकृतमित्यनेन द्रव्यस्य पशोः पात्नीवतमित्यनेन देवताया लाभाद्देवताद्रव्यसंबन्धादपूर्वयागविधिरिति बहिः पूर्वपक्षे सिद्धान्तमाह । पात्नीति । पात्नीवते पर्यग्निकृतं पात्नीवतमिति वाक्ये पूर्ववत्त्वात् तदेवेदमिति पूर्ववाक्यविहितकर्मणः प्रत्यभिज्ञया विषयीकृतपूर्वकर्मणः बोधकतासंबन्धवत्त्वात् । अवच्छेदः अग्रिमकर्मणां विशसनप्रभृतीनां निवृत्तिः* ॥ १९ ॥

अदाभ्यादिशब्दानां ग्रहनामत्वम् । अधि० ९ ।

## अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ २० ॥

अनारभ्य श्रुतम् एष ह वै हविषा हविर्यजति यो ऽदाभ्यं गृहीत्वा

* ननु आग्नेयं चतुर्धा करोतीति विहितं चतुर्धाकरणं केवलाग्निदेवताके पुरोडाशे न तु अग्नीषोमीये अग्निपर्याप्त्युद्देश्यताकत्वाभावादिति तृतीयाध्यायस्य प्रथमपादे पञ्चदशाधिकरणे व्यवस्थापयिष्यते तद्वदत्रापि त्वाष्ट्रं पात्नीवतमिति उत्पत्तिवाक्ये त्वष्टृपत्नीवत एव देवतात्वं गम्यते न तु केवलपत्नीवत इति कथं पर्यग्निकृतं पात्नीवतमित्यत्र तस्य प्रत्यभिज्ञानमिति चेद् न । अग्नीषोमीयादौ विशिष्टात्तद्धितोत्पत्त्या देवतात्वस्य उभयपर्याप्तत्वेन अग्निपर्याप्त्योद्देश्यताकत्वेन विहितचतुर्धाकरणाभावे ऽपि अत्र प्रत्येकं तद्धितोत्पत्त्या प्रत्येकं देवतात्वबोधनेन पर्यग्निकृतं पात्नीवतमित्यत्र प्रत्यभिज्ञानसंभवात् । एवं चात्र पर्यग्निकरणान्ताङ्गविधिः पूर्वयागमुद्दिश्य न तु कर्मान्तरत्वम् । त्वाष्ट्रं पात्नीवतमित्यस्य च चोदकोपस्थापितकप्रत्यक्षवचनविहितपर्यग्निकरणान्ताङ्गोपकारेण निराकाङ्क्षत्वाच्चोदकस्याप्रवृत्त्या अग्रिमाणां विशसनादीनां निवृत्तिः सिध्यति । गृहमेधीये आज्यभागौ यजतीत्यनेन आज्यभागविधानादन्याङ्गनिवृत्तिवत् । अतो नात्र त्रिदोषग्रस्ता परिसंख्या चोदनीयेति बोध्यम् ।

सोमाय जुहोतीति । इदं कर्मान्तरम् अप्रकरणपाठादिति बहिः पूर्वपक्षे सिद्धान्तमाह । अद्रव्येति । अद्रव्यत्वाद् द्रव्यस्य तदुपलक्षितदेवतायाश्चाभावात् । केवले गृह्णातिमात्रश्रवणे ज्योतिष्टोमे गृह्णातिभूयस्त्वसत्त्वात्तेन उपस्थितस्य कर्मणः ज्योतिष्टोमस्य शेषः स्यात् ॥ २० ॥

अग्निचयनस्य संस्कारत्वम् । अधि० १० ।

## अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥ २१ ॥

य एवं विद्वानग्निं चिनुतइति श्रुतम् । अत्राग्निशब्दः कर्मनामधेयं चिनोतिधातोर्लक्षणया यागो ऽर्थः । लक्षणायां तात्पर्यग्राहकम् अग्नेः स्तोत्रम् अग्नेः शस्त्रमिति क्र त्वव्यभिचरितस्तोत्रशस्त्रश्रवणं लिङ्गम् । तथा चाग्निनामकयागेन भावयेदिति वाक्यार्थाभिप्रायेण पूर्वपक्षमाह । अग्निरिति । अग्निः क्रतुशब्दः क्रतुवाचकः लिङ्गस्य स्तोत्रशस्त्ररूपस्य दर्शनात् ॥ २१ ॥

## द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥

सिद्धान्तमाह । द्रव्यं वेति । द्रव्यम् अग्निरूपद्रव्यम् । उष्णस्पर्शवदाधानसंस्कृतं यद् द्रव्यम् आहवनीयपदवाच्यं स एवाग्निशब्दार्थः । चोदनायाः विधेयस्य चिनोतिधात्वर्थस्य तदर्थत्वाद् अग्निसंस्कारपरत्वात् । तथा च चयनेन उत्तरवेदिस्थानापन्नेन स्थण्डिलविशेषेण स्वस्मिन् स्थापनद्वारा संस्कुर्यादिति फलितो वाक्यार्थः । संस्कृतस्याग्नेर्विनियोगाकाङ्क्षायामथातो ऽग्निमग्निष्टोमेनानुयजतीत्यग्निष्टोमाद्यङ्गत्वम् ॥ २२ ॥

## क्रतुसंयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥२३॥

ननु स्तोत्रशस्त्ररूपोक्तलिङ्गस्य का गतिरत्राह । क्रत्विति । अग्नेः क्रतुसंबन्धात् । अथातो ऽग्निमित्यनेन क्लृप्ताङ्गाङ्गिभावरूपसंबन्धात् । क्रतुः ज्योतिष्टोमादिः अग्नेः स्तोत्रम् अग्नेः शस्त्रमिति वाक्ये तदाख्यः अग्निनामा शक्यसंबन्धरूपलक्षणया तयोर्वाक्ययोः क्रतुं ब्रूतइति न लिङ्गविरोध इति भावः । तेन अग्नेः स्तोत्रमित्यादिवाक्येन अग्निपदलक्ष्यक्रतौ धर्माणां स्तोत्रशस्त्रादीनां विधानानि विधिर्भवतीत्यर्थः ॥ २३ ॥

मासाग्निहोत्रादीनां कर्मान्तरत्वम् । अधि॰ ११ ।

## प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

कुण्डपायिनामयने उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोतीति श्रुतम् । अत्र नित्याग्निहोत्रानुवादेन मासरूपगुणविधिरित्युत्सूत्रे पूर्वपक्षे सिद्धान्तमाह । प्रेति । प्रकरणान्तरे* सति प्रयोजनस्य कर्मणः अन्यत्वं भेदः । त्वाष्ट्रं पात्नीवतं पर्यग्निकृतं पात्नीवतमितिवद्भेदप्रत्यभिज्ञाऽसंभवादिति भावः ॥ २४ ॥

आग्नेयादीष्टीनां कर्मान्तरत्वम् । अधि॰ १२ ।

## फलं च कर्मसन्निधौ ॥ २५ ॥

अनारभ्य श्रुतम् । आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः† इति । अत्राग्निं प्रकृतमनूद्य फलं विधीयतइति बहिः पूर्वपक्षे सिद्धान्तमाह । फलमिति । कर्मसन्निधौ श्रूयमाणं फलं च कर्मभेदकम् ॥ २५ ॥

अवेष्टेरन्नाद्यफलकत्वम् । अधि॰ १३ ।

## सन्निधौ त्वविभागात्फलार्थेन पुनः श्रुतिः ॥ २६ ॥

राजसूयाङ्गभूता अवेष्टयः आग्नेयादयः अस्मिन्पादे द्वितीयाधिकरणउदाहृताः । तत्समीपे एतेनान्नाद्यकामं याजयेदिति श्रुतम् । इदं कर्मान्तरं कर्मसन्निधौ फलपाठादिति पूर्वपक्षे सिद्धान्तमाह । सन्निधाविति । सन्निधौ पाठे अविभागात् । एतच्छब्देन अभेदप्रत्ययात् तदेव कर्म । ननु किमर्थं पुनः श्रुतिस्तत्राह । फलार्थेन फलसंबन्धित्वेन पुनर्विधिः । अवेष्टित्वेन पूर्ववाक्यात् ज्ञाने ऽपि फलजनकत्वेनाज्ञातत्वादनेन वाक्येन ज्ञाप्यतइति भावः । फलमुद्दिश्य पुनः कर्मविधिः फलस्य प्रमाणान्तरेण ज्ञातत्वेनाविधेयत्वात् । अयमेव न्यायः देशकालनिमित्तसंस्कारेषु द्रष्टव्यः ॥ २६ ॥

---

* प्रकरणान्तरं पूर्वकर्मासन्निधानं न तु अप्रकृताभिधानं, तथा सति गुणादीनामपि वाजिभ्यो वाजिनमित्यादौ अप्रकृतविषयताऽऽपादकत्वानापत्तेरिति निरूपितं विस्तरेण शास्त्रदीपिकायाम् ।

† रुक्कामस्तेजस्कामः ।

आग्नेयद्विरुक्तेः स्तुत्यर्थत्वम् । अधि॰ १४ ।

## आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २७ ॥

दर्शपूर्णमासे यदाग्नेय इति वाक्येनाग्नेययागद्वयं विधाय पुनरपि यदाग्नेयो ऽष्टाकपालो ऽमावास्यायां भवत्यैन्द्रं दधीति विहितम् । इदं कर्मान्तरमुतार्थवाद इति संशये पूर्वपक्षमाह । आग्नेय इति । आग्नेयः अभ्यासेन पुरोडाशद्वयेन प्रतीयेत । उक्तहेतुत्वात् । अभ्यासरूपोक्तहेतोः सत्त्वात् ॥ २७ ॥

## अविभागात्तु कर्मणो द्विरुक्तौ न विधीयेत ॥ २८ ॥

सिद्धान्त्येकदेशी त्वाह । अविभागेति । द्विरुक्तो ऽप्याग्नेययागः द्वाभ्यां न विधीयेत । कर्मणः प्रकरणैक्येनाविभागाद् अभेदप्रत्यभिज्ञानात् । किं तु विकल्पेन अन्यतरेण विधीयतइति ॥ २८ ॥

## अन्यार्थो वा पुनः श्रुतिः ॥ २९ ॥

सिद्धान्तमाह । अन्येति । अन्यार्था इन्द्रयागस्तुत्यर्था पुनः श्रुतिः । इन्द्रयागशेषो ऽर्थवाद इति भावः ॥ २९ ॥

इति जैमिनिसूत्रवृत्त्यां द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

यावज्जीविकाभ्यासस्य कर्तृधर्मत्वम् । अधि॰ १ ।

## यावज्जीविको ऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥

यावज्जीवमग्निहोत्रं जुहोतीति श्रूयते । अत्र दर्शपूर्णमासकर्मार्थतया यावज्जीवकालो विधीयते अथ वा जीवने निमित्ते दर्शपूर्णमासकर्म विधीयते पुरुषार्थतया इति संशये पूर्वपक्षमाह । यावज्जीविक इति । यावज्जीविकः दर्शपूर्णमासाभ्यासः आवृत्तिः कर्मधर्मः कर्माङ्गं प्रकरणात् तत्प्रकरणपाठात् ॥ १ ॥

## कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥

सिद्धान्तमाह । कर्तुर्वेति । कर्तुः धर्मः अङ्गं पुरुषार्थतया जीवने निमित्ते दर्शपूर्णमासौ नैमित्तिकौ प्रत्यवायपरिहाराय विधीयेते नैमित्तिकाननुष्ठानस्य प्रत्यवायजनकत्वात् । उक्तार्थे हेतुमाह । श्रुतिसंयोगात् ।

यावज्जीवमित्यस्य शक्यार्थलाभात् । कर्मधर्मपक्षे जीवनकाले लक्षणा स्यात् । निमित्ते नैमित्तिकस्यावश्यकतया निमित्तावृत्तौ प्रयोगाभ्यास इत्यभ्यासो ऽपि अर्थसिद्धः । यद्यपि प्रकृतहानिः अप्रकृतकल्पना च पुरुषार्थत्वपक्षे तथा ऽपि लक्षणाभिया वक्ष्यमाणलिङ्गादिहेतुभ्यश्च पुरुषार्थतैव युक्तेति भावः ॥ २ ॥

## लिङ्गदर्शनाच्च कर्मधर्मो हि प्रक्रमेण नियम्येत तत्रानुष्ठेयमन्यत्स्यात् * ॥ ३ ॥

किं च यदि यावज्जीववाक्यं कालपरं सत् तावत्कालपर्यन्तमेक एव प्रयोगः संवत्सरसाध्यसत्रादिवत्तर्हि किं चिल्लिङ्गं विरुध्यतइत्याह । लिङ्गेति । दर्शपूर्णमासे ऽपि यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति श्रुतम् । तथा यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वा ऽतिपादयति स स्वर्गाच्च्यवते । अग्नये पथिकृते ऽष्टाकपालं निर्वपेदिति श्रुतम् । यदि चैकः प्रयोगो मरणपर्यन्तं तदा दर्शपूर्णमासप्रयोगस्य मरणानन्तरमेव समाप्तेः दर्शपूर्णमासयाजी सन् इति कथनं विरुध्येतेति । यदि दर्शपूर्णमासयाजी सन्निति अस्य प्रक्रमेण आरम्भेण चकारसूचितेन अतिपादयेदित्यस्य असमाप्त्या च नियम्येत व्याख्यां कुर्वीत तर्हि अन्यत् पथिकृदनुष्ठानविधिरनर्थकः स्यात् । मरणपर्यन्तमसमाप्तेः मरणानन्तरमनुष्ठानासम्भवादिति भावः । सिद्धान्ते माससाध्यप्रयोगस्य फलहेतुत्वान्मासे सम्पूर्ण एकः समाप्तः । एवं जीवने निमित्ते ऽभ्यासः प्रतिमासम् । तत्र कदा चिदेकप्रयोगलोपे प्रायश्चित्तमिति न किं चिदनुपपन्नम् ॥ ३ ॥

## व्यपवर्गं च दर्शयति कालश्चेत्कर्मभेदः स्यात् ॥ ४ ॥

किं च दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति व्यपवर्गं दर्शपूर्णमासप्रयोगसमाप्तिं दर्शयति । तव मते मरणसमयएव प्रयोगसमाप्तेः । अथ कालश्चेत् कर्मभेदः भिन्नसोमरूपं कर्म स्यात्तदेव नेति भावः ॥ ४ ॥

## अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥

यो ऽग्निहोत्रं न जुहोति न दर्शपूर्णमासौ यजते तस्याहुति-

* तत्रानर्थकमिति शा· भा· पाठः ।

भाजो ऽनुध्यायिनीः करोति इत्यर्थवादः नैमित्तिकत्वपक्षे उपपन्नः नैमित्तिककर्मणो नियमेनानुष्ठेयत्वाद्यः नियमेन यस्य ददाति तस्यैकस्मिन् दिने ऽदाने तस्मिन् समये तं ध्यायतीति लोकप्रसिद्ध्या उपपन्नः । काम्यपक्षे काम्यानुष्ठानस्यानित्यत्वान्नैवं स्याद् ध्यानोपपत्तिर्न स्यात् ॥ ५ ॥

## विरोधश्चापि पूर्ववत् ॥ ६ ॥

किं च यावज्जीवकालस्याङ्गत्वे यावत्काम्येष्टिष्वतिदेशेन प्राप्तौ सर्वासामिष्टीनां यावज्जीवानुष्ठानं ब्रह्मणा ऽपि कर्तुमशक्यमित्यननुष्ठानलक्षणो विरोधः पूर्ववद् दर्शपूर्णमासाभ्यामिष्ट्वा सोमेनेतिवत् ॥ ६ ॥

## कर्तुस्तु धर्मनियमात्कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥

उक्तार्थमुपसंहरति । कर्तुरिति । कालशास्त्रं कालशास्त्रवद्भासमानं यावज्जीवमिति वाक्यम् उक्तरीत्या निमित्तं निमित्तपरं स्यात् । उक्तरीत्या कर्तुर्धर्मनियमात् । कर्त्रङ्गत्वसिद्धान्तात् ॥ ७ ॥

नानाशाखासु विहिताऽग्निहोत्रादिकर्मणामैक्यम् । अधि० २ ।

## नामरूपधर्मविशेषपुनरुक्तिनिंदाऽशक्तिसमाप्तिवचनप्रायश्चितान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥ ८ ॥

एकस्यैव वेदस्य बहुषु शाखासु अग्निहोत्रदर्शपूर्णमासादीनि पठितानि । तानि सर्वाणि भिन्नान्युताभिन्नानीति संशये पूर्वपक्षमाह । नामेति । शाखान्तरेषु सन्तु कर्मभेदः स्यान्नामभेदादिहेतुभ्यः । नाम्नो भेदः काठकं कौथुममिति । कस्यां चिच्छाखायामग्नीषोमीय एकादशकपालः अन्यत्र द्वादशकपालः इति रूपेण भेदः । कारीर्यध्ययने भूमिभोजनं धर्मः अन्यत्र न इति धर्मभेदः । पुनरुक्तिः प्रसिद्धा तया । शाखाभेदेन उदितानुदितहोमयोः निन्दया । एकस्मिन्कर्मणि सर्वशाखागतानुष्ठानाशक्त्या । महाग्निचयनसमाप्तेः शाखाभेदेन भिन्नत्वेन । उदितानुदितहोमयोः स्वस्वकालातिक्रमे प्रायश्चित्तदर्शनेन । द्वादशाहे यदि दीक्षितो बृहत्क्रतुमुपेयाद्यद्यदीक्षितो रथन्तरमिति दीक्षितादीक्षितयोरधिकारं दर्शयति । ताण्डके तु एष वा प्रथमो यज्ञो यज्ञानां यज्ज्योति-

ष्टोम इति सर्वप्राथम्यं दर्शयति । इदं शाखाभेदेन कर्मभेदे एकस्मिन् ज्योतिष्टोमे ताण्डकशाखोक्तं प्राथम्यं निविशेत अन्यत्रादीक्षिताधिकार इत्यन्यार्थदर्शनेनेति नवहेतुभिः ॥ ८ ॥

## एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ ९ ॥

सिद्धान्तमाह । एकमिति । सर्वशाखास्वेकं कर्म । संयोगस्य फलस्य रूपस्य द्रव्यदेवतयोः चोदनायाः पुरुषप्रयत्नस्य आख्यायाः नाम्नः अविशेषाद् ऐकरूप्यात् ॥ ९ ॥

## न नाम्ना स्यादचोदनाभिधानत्वात् ॥ १० ॥

पूर्वपक्ष्युपन्यस्तहेतुषु प्रथमहेतुं दूषयति । नेति । नाम्ना काठकादिनाम्ना कर्मभेदो न । अचोदनाभिधानत्वात् । चोदनायां कर्मोत्पत्तिवाक्ये यदभिधानं नाम तत्त्वाभावात् । उत्पत्तिवाक्यगतकर्मनामैव कर्मभेदकं न ग्रन्थनाम तथेति भावः ॥ १० ॥

## सर्वेषां चैककर्म्यात् ॥ ११ ॥

ननु ग्रन्थनामैव भेदकमस्त्वत आह । सर्वेषामिति । ग्रन्थनाम्न एव कर्मभेदकत्वे दर्शपूर्णमासाग्निहोत्रज्योतिष्टोमादियावत्क्रतूनामेककर्मत्वं स्यात् । तैत्तिरीयमिति ग्रन्थसंज्ञाया एकत्वात् । अतो ग्रन्थसंज्ञैक्यं न भेदप्रतिपादकमिति भावः ॥ ११ ॥

## कृतकं त्वभिधानम् ॥ १२ ॥

इतो ऽपि न संज्ञया कर्मभेद इत्याह । कृतेति । कृतकम् अनित्यम् । अभिधानं काठकादिसंज्ञा । यदा कठेन प्रवचनं कृतं तदारभ्य प्रवृत्ता संज्ञा तत्पूर्वं भेदकसंज्ञाभावादेकं कर्म पश्चाद्भिन्नमिति वैरूप्यं स्यादिति भावः ॥ १२ ॥

## एकत्वे ऽपि परम् ॥ १३ ॥

द्वितीयं निरस्यति । एकेति । एकत्वे ऽपि कर्मणः परं द्वादशकपालरूपं त्रिकल्पेन निविशतइति शेषः ॥ १३ ॥

## विद्यायां धर्मशास्त्रम् ॥ १४ ॥

तृतीयं निरस्यति । विद्यायामिति । धर्मस्य भूमिभोजनादेः शास्त्रं विद्यायाम् अध्ययने अङ्गत्वबोधकं न कारीर्याम् ॥ १४ ॥

## आग्नेयवत्पुनर्वचनम् ॥ १५ ॥

चतुर्थं दूषयति । आग्नेयेति । पुनरुक्तिः आग्नेयवत् । यथा ऽऽग्नेयवाक्येन सिद्धे कर्मणि यदाग्नेयो ऽष्टाकपालो भवत्यैन्द्रं दधीत्यत्रानुवादः तथा ॥ १५ ॥

## अद्विर्वचनं वा ऽश्रुतिसंयोगाविशेषात् ॥ १६ ॥

नन्वनुवादे फलाभावेन पाठवैयर्थ्यमतः पक्षान्तरमाह । अद्विरिति । अद्विर्वचनम् अनुवादाभावः अश्रुतिसंयोगस्याज्ञातार्थसंबन्धस्य यावच्छाखागतवाक्येष्वविशेषात् । अज्ञातज्ञापकत्वस्य तुल्यत्वादिति भावः । न चैकेनाज्ञातज्ञानसंभवे शेषवैयर्थ्यम् । तत्तच्छाखिना स्वस्वशाखागतवाक्येनैवार्थज्ञानं संपादयेदिति स्वाध्यायविधितात्पर्यात् ॥ १६ ॥

## अर्थासन्निधेश्च ॥ १७ ॥

अर्थस्य शाखान्तरप्रतिपादितदर्शपूर्णमासादेः शाखान्तरस्थयोः तयोरसन्निधेः । असन्निहितस्यानुवादासंभवादिति भावः ॥ १७ ॥

## न चैकं प्रति शिष्यते ॥ १८ ॥

ननु यस्य शाखायां यावन्तो धर्माः पठिताः तावद्धर्मानुष्ठानेनैवापूर्वोत्पत्तिसंभवे कुतो विकल्पसमुच्चयाद्यनुसरणमत्राह । न चेति । तच्छाखायां पठितो धर्मः तच्छाखिनं प्रति शिष्यते विधीयते न । उद्देश्यसंकोचे मानाभावादिति हेतुः पूरणीयः ॥ १८ ॥

## समाप्तिवच्च संप्रेक्षा ॥ १९ ॥

महाग्निचयनस्यसमाप्तिभेदहेतुं निरस्यति । समाप्तीति । समाप्तिवत् । यथा समाप्तिर्भेदकत्वे हेतुः तथा संप्रेक्षा उत्प्रेक्षा । सा च मैत्रायणीयानामग्निः अन्वारोहेषु परिसमाप्यते नास्माकमिति बुद्धिरभेदमुपो-

दूषयति । यदि भिन्नं कर्म स्यात्तदा नास्माकमिति न स्यात् । किं तु अस्माकमनेन समाप्यतइत्येव स्यात् ॥ १९ ॥

**एकत्वे ऽपि पराणि निन्दाऽशक्तिसमाप्तिवचनानि ॥ २० ॥**

पराणि शेषाणि निन्दाऽशक्तिसमाप्तिवचनानि पूर्वपक्षिणा भेदसाधकत्वेनोपन्यस्तानि कर्मैक्ये ऽप्युपपद्यन्ते । निन्दाया न हि निन्दायां तात्पर्यं किं तु पक्षान्तरविधाविति । अशक्तिः विरुद्धार्थानां युगपदनुष्ठानाशक्तिश्च विकल्पेन प्रयोगभेदानुष्ठानेनोपपन्नेति भावः ॥ २० ॥

**प्रायश्चित्तं वा निमित्तेन ॥ २१ ॥**

ननु सर्वेषां हेतूनामुपपत्तावपि उदितानुदितहोमयोः स्वस्वकालातिक्रमे प्रायश्चित्तं श्रूयते । अस्य सर्वथा कर्मभेदमन्तरा गत्यभावः । वैकल्पिकत्वव्यवस्थापने च वैकल्पिकपक्षातिक्रमे व्रीहियवप्रयोगे प्रायश्चित्तमस्तीत्याशङ्कते । प्रेति । निमित्तेन तत्तत्काललोपनिमित्तेन । ज्ञानज्ञाप्यत्वं तृतीयार्थः । प्रायश्चित्तं कथमिति शेषः ॥ २१ ॥

**प्रक्रमाद्वा नियोगेन ॥ २२ ॥**

समाधत्ते । प्रक्रमेति । प्रक्रमात् प्रथमप्रयोगात् । नियोगेन नियमेन प्रायश्चित्तगतिः प्रथमप्रयोगे समविकल्पः द्वितीयादिप्रयोगेषु यत्र प्रायश्चित्तश्रवणं तत्र सर्वत्र प्रथमप्रयोगपरिगृहीतस्यैवानुष्ठानं तदतिक्रमे प्रायश्चित्तमिति कल्प्यतइति भावः ॥ २२ ॥

**समाप्तिश्च पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ॥ २३ ॥**

ननु महाग्निचयनसमाप्तिः कर्मभेदलिङ्गमुक्तसंप्रेषा कर्मैक्ये लिङ्गमिति तुल्यत्वमापतितमत्राह । समाप्तिरिति । पूर्ववत्त्वाद् अभेदप्रत्यभिज्ञादिपूर्वयुक्तिमत्त्वात्ताभिर्युक्तिभिर्यथाज्ञाते अभेदप्रत्ययविषयीभूते ऽर्थएव समाप्तिः समाप्तिलिङ्गं प्रतीयेत । समाप्तिरपि अभेदपरेति भावः ॥ २३ ॥

**लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद् द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २४ ॥**

यच्च पूर्वदर्शिततारख्डकशाखास्थं ज्योतिष्टोमे शाखाविशेषस्थे इत्युक्तं तद्दूषयति । लिङ्गमिति । लिङ्गं प्राथम्यरूपम् अविशिष्टमुभयोस्तुल्यम् । सर्वशाखास्थज्योतिष्टोमशेषत्वात् । ननु तारख्डकशाखायां श्रूयमाणं प्राथम्यं तच्छाखास्थज्योतिष्टोमएव निविशते न त्वन्यत्रेति कथं सर्वशेषत्वमत्राह । न हीति । तत्र तारख्डकशाखायां कर्मणः ज्योतिष्टोमस्य चोदना नास्ति अतः विनिगमनाविरहात्सर्वशेषत्वे दीक्षितादीक्षितविरोधः कर्मभेदे ऽपि तदवस्थः । तस्माद् द्वादशाहस्य य आहारः प्रयोगः तस्मिन् व्यपदेशः विरुद्धानुष्ठानं विकल्पेन प्रयोगभेदेन स्यात् ॥ २४ ॥

**द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद् व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥ २५ ॥**

ननूक्तलिङ्गस्योक्तदिशा निर्वाहे ऽपि लिङ्गान्तरं कर्मैक्ये विरुध्यते । तथा हि । महाग्निचयनप्रकरणे यत्पक्षसंमितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात्पापीयस्यात्मनः प्रजा स्याद्वेदिसंमितां मिनोतीति । अस्यार्थः । पक्षसंमितां श्येनाद्याकारो यो ऽग्निः तस्य पक्षः तन्मानपरिमितो देशो यदि यूपैकादशिन्या भवेद् यज्ञक्रतुमल्पं प्राप्नुयात् । क्रतुजन्यं किं चिदल्पं फलं भवेत् । स्वीयप्रजाः पापवासनावत्यः स्युः । अतो वेदिसंमिताः स्युरिति वेदिपरिमितो देश एकादशिन्या भवेदिति । यथा शाखान्तरे रथाक्षमितानि यूपान्तरालानि भवन्तीति । अस्या अपि तत्र निवेशे रथाक्षमानान्तरालसहितायाः पक्षसंमितायाः वेदिसंमितायाः यूपैकादशिन्याः कर्तुमशक्यत्वात्कर्मभेदमङ्गीकृत्यैव व्यवस्था संपाद्येत्याशङ्कायामाह । द्रव्य-इति । द्रव्ये चयनरूपद्रव्यप्रकरणे । अचोदितत्वात् । यूपैकादशिन्या अविहितत्वात् । विधीनां पक्षसंमितनिन्दावेदिसंमितरथाक्षान्तरालविधीनाम् । अव्यवस्था परस्परविरोधः । कथमिति पूरणीयम् । कथं स्याद् । न विरोध इत्यर्थः । महाग्निचयने एकादशयूपानामविधानादेक एव यूपः तस्यान्तरालाप्रसक्तेः । रथाक्षमितान्तरालगुणस्तु न निविशतइति न को ऽपि विरोध इति भावः । ननु रथाक्षमितान्तरालशास्त्रस्य कुत्र निवेशस्तत्राह । निर्देशाद् वाचःस्तोमे एकादशयूपविधानेन तत्रैकादश-

यूपनिवेशात् । तत्रैव रथाक्षमानशास्त्रं व्यवतिष्ठते । ननु पक्षसंमितमानस्यैकयूपे सर्वथा ऽसंभवेन निन्दाऽनवकाशस्तत्राह । तस्मादिति । तस्मादुक्तहेतोः । यथा यदन्तरिक्षे चिन्वीतान्तरिक्षं शुचा ऽर्पयेदिति अन्तरिक्षे चयनाभावस्य अन्तरिक्षे चयनासंभवेन लोके सिद्धस्य दोषकथनपूर्वको नित्यानुवादः तथा पक्षमानं नित्यानुवादः स्यात् ॥ २५ ॥

## विहितप्रतिषेधात्पक्षे ऽतिरेकः स्यात् ॥ २६ ॥

ननु लिङ्गद्वयोपपत्तावपि अपरं लिङ्गं विरुध्यते विराजं संस्तुतानां द्वे अतिरिच्येते इति । शाखान्तरे तिस्रो ऽतिरिच्यन्तइति । कर्मैक्ये विरुद्धसंख्यायाः कथं निवेशस्तत्राह । विहितेति । अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति विधिनिषेधौ एककर्मणि विकल्पेन स्तः । तस्माद् ग्रहणपक्षे तिसृणामतिरेकः अग्रहणपक्षे द्वयोरतिरेक इति पक्षे विकल्पेन स्यात् । अतिरेकोपपत्तिर्भाष्यादवगन्तव्या ॥ २६ ॥

## सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २७ ॥

नन्वेवमपि सारस्वतसत्त्रे ये पुरोडाशिनस्तउपवसन्ति ये सान्नायिनः ते वत्सान्धारयन्तीति । पुरोडाशिनः असोमयाजिनः । सान्नायिनः सोमयाजिनः । पूर्वोदाहृतेनैष वा प्रथमो यज्ञ इति वाक्येन सर्वेषां क्रतूनां सोमपूर्वकत्वाद्धे पुरोडाशिन इति कथं न विरुध्यते कर्मैक्ये अत्राह । सारस्वतइति । सारस्वते सारस्वतसत्त्रे विप्रतिषेधात् पूर्वदर्शितविरोधाद् यदेति पदमध्याहार्यं स्यात् । सोमयाजिनामपि पौर्णमास्यां केवलपुरोडाशित्वाद्यदा पौर्णमास्यां सोमयाजिना ऽपि पुरोडाशित्वं तदा केवलोपवास इति योज्यमिति भावः ॥ २७ ॥

## उपहव्ये प्रतिप्रसवः ॥ २८ ॥

ननु उपहव्यनामके क्रतौ शाखाविशेषे उपहव्यो ऽग्निष्टोमः रथन्तरं सामाश्वः श्यावो दक्षिणेति । अन्यत्रोपहव्य उक्थ्यो यज्ञः बृहत्सामाश्वः श्वेतो रुक्मललाटो दक्षिणेति । अत्र वाक्यद्वये बृहद्रथन्तरसाम्नोर्ग्रहणं व्यर्थं कर्मैकत्वे प्रकृतितः द्वयोर्विकल्पेन प्राप्तत्वात् । कर्मभेदे तु

प्रकृतितो विकल्पेन प्राप्तौ तत्तच्छाखोक्ते उपहव्ये नियमार्थं तद्ग्रहणं संगच्छतइति शङ्कते । उपेति । प्रतिप्रसवः विकल्पबाधार्थं पुनस्तयोर्ग्रहणं सफलमिति पूरणीयम् ॥ २८ ॥

## गुणार्था वा पुनः श्रुतिः ॥ २९ ॥

समाधत्ते । गुणेति । तत्तत्साम्नि निमित्ते संख्याविशेषस्य दक्षिणाविशेषस्य विधानार्थं पुनः श्रुतिः पुनः पाठः सफलः अतो न कर्मभेदे लिङ्गमिति भावः ॥ २९ ॥

## प्रत्ययं चापि दर्शयति ॥ ३० ॥

एवं भेदसाधकानि लिङ्गान्युद्धृत्य कर्मैक्यसाधकं लिङ्गं दर्शयति । प्रत्ययमिति । प्रत्ययं कर्माभेदज्ञानं वक्ष्यमाणं लिङ्गं दर्शयति । तथा हि । मैत्रायणीयशाखायां समिदादयः प्रयाजा न विहिताः तैत्तिरीयशाखास्थान् समिदादिप्रयाजाननूद्य ऋतवो वै प्रयाजा इत्यनेन, समा होतव्या इति पञ्चानां देशैक्यरूपो गुणो विधीयते । यदि तैत्तिरीयं कर्म भिन्नं तदा तदनुवादो मैत्रायणीये ऽनुपपन्नः अतः कर्मैकम् ॥ ३० ॥

## अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां शाखायां व्यवतिष्ठेत ॥ ३१ ॥

सिद्धान्ते शङ्कते । अपि वेति । एकस्यां शाखायामेकशाखास्थकर्मणि विधिपृथक्त्वम् अपरशाखास्थकर्मणः पृथक्त्वं व्यवतिष्ठेत सिध्येत् । क्रमसंयोगात् स्वशाखायां क्रमकल्पकपाठादिप्रमाणानां संयोगात् । तथा दर्शपूर्णमासे स्विष्टकृदुत्तरं प्राशित्रदानं पठितं तत इडावदानं कस्यांचिच्छाखायाम् । अपरस्यां तद्विपरीतम् । एवं पाठव्यत्यये अनुष्ठानक्रमो ऽपि पाठानुसारेण विपरीतो भवेत् । तथा सति कर्मैक्यं व्यवस्थाप्य यावच्छाखास्थाङ्गोपसंहारे स्वशाखास्थपाठादिक्रमो ऽत्र बाध्येत । एतदपेक्षया कर्मान्तरमित्यङ्गीकृत्य तत्तच्छाखिनां स स क्रमो नियत इति कल्पनमेव वरिष्ठमिति भावः ॥ ३१ ॥

**विरोधिनां त्वसंयोगादैककर्म्यं तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ॥ ३२ ॥**

उक्तदूषणं परिहरति । विरोधिनामिति । पूर्वोक्तयुक्तिभिः सर्वशाखास्थानामैककर्म्यं कर्मणामेकत्वे सिद्धे विधीनां सर्वशाखापठितानामङ्गविधीनां तत्संयोगात्कर्मसंबन्धात् सर्वेषामङ्गानां कर्मणि एककर्मणि प्रत्ययः समन्वयः स्यात् । ननु विरुद्धक्रमस्य कथमन्वयस्तत्राह । विरोधिनां विरुद्धानां पूर्वोदाहृतानां क्रमाणामेकप्रयोगे असंयोगाद् असंबन्धादुपपत्तिः । तथा च प्रयोगभेदेन समावेशः कार्यं इति भावः ॥ ३२ ॥

इति जैमिनिसूत्रवृत्त्यां द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्च द्वितीयो ऽध्यायः ॥ २ ॥



शेषलक्षणप्रतिज्ञा । अधि॰ १ ।

## अथातः शेषलक्षणम् ॥ १ ॥

शब्दान्तरादिभिः प्रमाणैः कर्मभेदं सापवादं द्वितीये निरूप्य तदुपजीवकं* शेषशेषित्वनिरूपणं प्रतिजानीते । अथेति । अथ भेदनिरूपणानन्तरम् । अतः भेदाधीनत्वाच्छेषशेषिभावस्य । शेषस्य वक्ष्यमाणलक्षणस्य लक्षणम् अध्यायः प्रारभ्यतइति शेषः । प्रतिज्ञावाक्यरूपत्वान्न विषयाद्यपेक्षा ॥ १ ॥

शेषलक्षणम् । अधि॰ २ ।

## शेषः परार्थत्वात् ॥ २ ॥

तत्र कः शेषः केन हेतुना शेष इति प्रश्ने ऽर्थश्रुतिभ्यामुभयोरुत्तरमाह । शेष इति । परार्थत्वाद् व्रीह्यादीनां स्वभिन्नयागार्थत्वाद् व्रीह्यादयः यागं प्रति शेषभूताः । यो यदर्थं प्रवृत्तिविषयीक्रियते स तदङ्गमिति व्याप्तिः । सूत्रे परार्थत्वादितिपञ्चमीश्रुत्या हेतुत्वं स्पष्टम् । यः परार्थः स शेष इति स्वरूपकथनमार्थिकम्† ॥ २ ॥

शेषत्वलक्षणम् । अधि॰ ३ ।

## द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥

निरुक्ताङ्गत्वं द्रव्यगुणसंस्कारेष्वेवोत यागफलयोरपीति संशये पूर्वपक्षमाह । द्रव्येति । द्रव्यं व्रीह्यादि गुणः अरुणादिः संस्कारः प्रोक्ष-

---

* कर्मभेदोपजीवकमित्यर्थः । भिन्नानामेव शेषशेषिभावस्य संभवादिति भावः । व्रीहीनवहन्तीत्यादौ द्रव्यकर्मणां शेषशेषिभावस्य कर्मभेदानपेक्षत्वे ऽपि प्रयाजाग्नेयादीनां कर्मणां तद्भेदापेक्षशेषशेषिभावस्य कर्मभेदनिरूपणोत्तरमेव वक्तव्यतया तन्निरूपणोत्तरमेव शेषलक्षणारम्भ इति बोध्यम् ।

† पारार्थ्यं च परोद्देशप्रवृत्तकृतिव्याप्यत्वम् । इदमेव शेषलक्षणं निर्दुष्टम् । अन्यानि तु अतिव्याप्त्यादिदूषणग्रस्तानि । तथा हि यो येन विना न भवति स तस्य शेष इति अविनाभावस्तल्लक्षणम् आग्नेयादिप्रधानयागानां परस्परमविनाभावसत्त्वात्तत्रातिव्याप्तम् । प्रयोज्यत्वं तु तुषोपवापाऽप्रयोज्येषु कपालेषु शेषत्वदर्शनादव्याप्तम् । यथा कपालानां तुषोपवापप्रयोज्यत्वं न, तथा चतुर्थस्य प्रथमपादे स्फुटीभविष्यति । उपकारकत्वमपि लक्षणं प्रधानानामनुष्ठानोपयोगरूपाङ्गोपकारकर्तृत्वात्तेषामपि तच्छेषत्वापत्त्या हेयम् । एवमन्येषु लक्षणेषु दूषणं शास्त्रदीपिकादितो ऽवगन्तव्यम् ।

णादिः एष्वेव पारार्थ्यमिति बादरिराचार्यो मनुते । एवकारेण प्रधानयागफलव्यवच्छेदः । ननु फलार्थत्वाद्यागस्य कथं नाङ्गत्वमिति चेदुच्यते । यथा फलार्थत्वं यागस्य नास्ति तथा षष्ठाद्याधिकरणपूर्वपक्षसूत्रे वक्ष्यते । तथा फलस्य पुरुषं प्रति शेषत्वं नास्ति तदपि तत्रैव स्पष्टम् ॥ ३ ॥

## कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥

सिद्धान्तमाह । कर्माण्यपीति । पारार्थ्यमिति योज्यम् । फलरूपपारार्थ्यलक्षणस्य तत्र सत्त्वात् । यथालक्षणसत्त्वोपपत्तिस्तथा षष्ठे व्यक्तीभविष्यति । अपिना द्रव्यगुणसंस्कारपरिग्रहः ॥ ४ ॥

## फलं च पुरुषार्थत्वात् ॥ ५ ॥

पुरुषरूपो यः परः तदर्थत्वरूपलक्षणं फले ऽप्यस्त्यतः फलं पुरुषस्याङ्गमित्याह । फलमिति । सूत्रार्थः स्पष्टः* ॥ ५ ॥

अवहननादीनां व्यवस्थितविषयत्वम् । अधि० ४ ।

## तेषामर्थेन संबन्धः ॥ ६ ॥

दर्शपूर्णमासे पुरोडाशधर्माः अवहननादयः आज्यधर्मा उत्पवनादयः सान्नाय्यधर्माः वत्सापाकरणादयः दृश्यन्ते । ते सर्वार्था उतावहननादयः पुरोडाशार्था उत्पवनादय आज्यस्यैव वत्सापाकरणादयः सान्नाय्यस्यैव धर्मा इति संशये सिद्धान्तेनारभते । तेषामिति । तेषाम् अवहननादीनाम् अर्थेन दृष्टेन फलेन वितुषीभावादिना व्यवस्थया संबन्धः शेषशेषिभावः । दृष्टे फले संभवत्यदृष्टकल्पनाया अन्याय्यत्वादिति भावः ॥ ६ ॥

## विहितस्तु सर्वधर्मः स्यात्संयोगतो ऽविशेषात्प्रकरणाऽविशेषाच्च ॥ ७ ॥

पूर्वपक्षयत्तिष्ठते । विहित इति । विहितः शास्त्रेण विहितः सर्वधर्मः सर्वशेषः स्यात् । संयोगतः अविशेषात् साक्षात्परम्परया वा

* इत उत्तरं "पुरुषश्च कर्मार्थत्वाद्" इति सूत्रं भाष्यवार्तिकादिषु व्याख्यातम् । अत्र तु नोपलभ्यते । कर्मार्थत्वात्पुरुषो ऽपि शेष इति तदर्थः स्पष्टः ।

सर्वेषां परमापूर्वसंबन्धाविशेषात् । प्रकरणस्य दर्शपूर्णमासप्रकरणपाठस्य अविशेषात्तुल्यत्वाच्च । अयं भावः व्रीहीनवहन्ति आज्यमुत्पुनातीत्यादौ व्रीह्यादिशब्दा न स्वार्थपराः किं तु प्रकृतापूर्वसाधनद्रव्यपरा इति वक्ष्यति । तथा चोद्देश्यतावच्छेदकस्य सर्वद्रव्यवृत्तित्वाविशेषादव्यवस्थिता एव प्रवर्तन्ते इति ॥ ७ ॥

## अर्थलोपादकर्म स्यात् ॥ ८ ॥

सिद्धान्तयुक्तिमाह । अर्थेति । अर्थस्य दृष्टोपकारस्य लोपाद् लोपापत्त्या अकर्म अवहननस्याज्यादिष्वननुष्ठानम् । उत्पवनस्य व्रीह्यादिषु च ॥ ८ ॥

## फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ ९ ॥

ननु विधिबलाद्दृष्टोपकारलोपो भवत्वत आह । फलमिति । फलं दृष्टं वितुषीभावादि चेष्टया अवहननादिक्रियया दृश्यते । तत्रैवावघातादिशास्त्रं प्रवर्ततइति पूरणीयम् । विप्रयोगे दृष्टफलस्य वितुषीभावादेरसति अभावाद् दृष्टोपकारकत्वाभावादाज्यादिष्वप्यवघातरूपः शब्दार्थः न स्यात् । दृष्टालाभात् । अयं भावः तण्डुलपदस्य न परमापूर्वसाधने लक्षणा किं तु आग्नेयोत्पत्त्यपूर्वसाधने सन्निकृष्टत्वात् । स च शब्दार्थः व्रीहिरेव नाज्यादिः । अतो न शास्त्रबलेन दृष्टलोप इति ॥ ९ ॥

स्फ्यादीनां व्यवस्थितत्वम् । अधि॰ ५ ।

## द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्यते ॥ १० ॥

दर्शपूर्णमासे श्रुतं स्फ्यश्च कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानीति । एतानि दश यज्ञसाधनानीत्यर्थः । तथा स्फ्येनोद्धन्ति । कपालेषु पुरोडाशं श्रपयति । अग्निहोत्रहवण्या हवींषि निर्वपति । शूर्पेण तण्डुलान् विविनक्ति । कृष्णाजिनमुलूखलस्याधस्तादुपस्तृणाति । शम्यायां दृषदमादधाति । उलूखलमुसलाभ्यामवहन्ति । दृषदुपलाभ्यां पिनष्टि । इति च श्रुतम् । अत्र दशवाक्यगतस्फ्यादिद्रव्यवाचकपदानि

सर्वाण्यपूर्वसाधनद्रव्यमात्रलक्षकाण्युत शक्यार्थमेव प्रवदन्तीति संशये अत्र स्फ्यादिपदानां यज्ञसाधनपात्रमात्रे लक्षणायां तात्पर्यग्राहकस्य एतानि वै दश यज्ञायुधानीति वाक्यस्य सत्त्वाद् येन केनाप्युद्धननं कर्तव्यमिति बहिः पूर्वपक्षे सिद्धान्तमाह । द्रव्यमिति । द्रव्यं स्फ्यादिद्रव्यं यादृशकार्यार्थं चोद्यते तदर्थं तदङ्गत्वेनैव विधीयते न तु क्रियान्तराङ्गम् । उत्पत्तौ उत्पत्तिवाक्ये स्फ्येनोद्धन्तीत्यादौ उद्धननादिक्रियासंयोगात् । साध्यसाधनभावादिसंबन्धश्रवणात् । अयं भावः स्फ्येनोद्धन्तीत्यत्र मत्वर्थलक्षणया स्फ्यविशिष्टोद्धननेनापूर्वं भावयेदिति तदर्थः । अत्र वैशिष्ट्यं साध्यसाधनभावरूपम् । तथा च स्फ्यसाध्योद्धननेनापूर्वं भावयेदिति फलितत्वात्तत्साध्यमेवोद्धननम् । न च स्फ्यपदस्य यज्ञसाधनलक्षणायां तात्पर्यग्राहकं यज्ञायुधानीति वाक्यम् । तस्य यज्ञायुधानि संभरन्तीतिविधिशेषत्वात् ॥ १० ॥

आरुण्यादिगुणानामसङ्कीर्णत्वम् । अधि० ६ ।

## अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ ११ ॥

ज्योतिष्टोमे क्रयसंनिधौ श्रूयते अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति । अत्रैकहायनीपिङ्गाक्षीपदे द्रव्यवाचके । वार्तिके बहुव्रीहावन्यपदार्थे शक्तिरिति व्यवस्थापितत्वात्* । तन्मूलयुक्तयः ततोऽवगन्तव्या विस्तरभयान्न लिख्यन्ते । अतः तयोः करणत्वेन क्रये ऽन्वये न किं चिद्बाधकम् । अतः तावपहायारुणास्थले विचारः । अत्रारुणयेति पदं क्रयेण संबध्यतउत वाक्याद्विच्छिद्य प्राकरणिकद्रव्यसामान्येन संबध्यतइति संशये अरुणापदं रूपविशेषे गुणे शक्तं रूपविशेषे क्रयरूपक्रियाकरणत्वं बाधितम् अतो वाक्याद्विच्छिद्य ज्योतिष्टोमापूर्वसाधनद्रव्यं भावयेदित्यध्याहृत्यारुणया द्रव्यं भावयेदिति बोधान्तरमिदमिति बहिः पूर्वपक्षे सिद्धान्तमाह । अर्थैकत्वइति । यस्मिन्वाक्ये द्रव्यगुणयोरेकक्रियान्वयित्वरूपार्थैकत्वं संभवति तस्मिन् सति नियमः परिच्छेद्यपरिच्छे-

* सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते । न हि संबन्धवाचित्वं संभवत्यतिगौरवादित्यादिनेति शेषः ।

दकभावनियमः श्रूयमाणयोः तयोः स्यात् । ऐककर्म्याद् एकार्थप्रतिपादकत्वरूपैकवाक्यतासत्त्वात् । अयं भावः । उदाहृतवाक्येन भावार्थाधिकरणन्यायेन क्रयो विधीयते । तस्मिन् क्रयरूपैककरणावरुद्धभावनायां करणान्तरसंबन्धस्यानाकाङ्क्षितत्वादगत्या धात्वर्थं सोमेन यजेतेतिवन्मत्वर्थलक्षणामङ्गीकृत्यान्वयः त्रयाणाम्*। एवं त्रितयविशिष्टक्रये विहिते सति आक्षिप्तविशेषणविधयः त्रयः । अरुणया क्रयं भावयेत् । एकहायन्या क्रयं भावयेत् । पिङ्गाक्ष्या क्रयं भावयेद् इति । तत्रैकहायनपिङ्गनेत्रयोः परस्परसामानाधिकरण्यमङ्गीकृत्यैकद्रव्यपरिच्छेदकत्वं तथा ऽरुणारूपगुणस्यापि तत्र समावेशे बाधकाभावात्त्रयाणामेकार्थत्वेनैकवाक्यत्वे संभवति सति दुर्बलेन प्रकरणेन अध्याहारेण च भिन्नवाक्यत्वकल्पनमनुचितम् । न चैकार्थेषु विकल्पप्रसक्तिः । विरोधे सत्येव विकल्पात् । प्रकृते ऽविरोधेनान्वयस्य दर्शितत्वात् । न चारुण्यस्य द्रव्येणान्वयः क्रियतइति शङ्क्यम् । अमूर्तस्य साक्षात्क्रियाकरणत्वासंभवेन पदानामर्थं वदतां शक्तिः सहकारिणीति न्यायेन द्रव्यपरिच्छेदद्वारा क्रियान्वये बाधकाभावादिति । इतो ऽधिकविचारो भाष्यादावाकरे द्रष्टव्यः ॥ ११ ॥

उद्देश्यगतसंख्याऽविवक्षा । अधि० ७ ।

## एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १२ ॥

ज्योतिष्टोमे श्रुतं दशापवित्रेण ग्रहं संमार्ष्टीति । दशापवित्रं खण्डपटः । ग्रहाः दशैन्द्रवायवादयः । अत्र ग्रहपदोत्तरैकवचनार्थो विवक्षितो न वेति संशये पूर्वपक्षमाह । एकत्वेति । एकत्वयुक्तं ग्रहादिद्रव्यं संमार्गस्योद्देश्यं श्रुतिसंयोगाद् एकत्ववाचकपदघटितत्वादतः एकस्य एकत्वविशिष्टग्रहस्यैव संमार्गः न तु दशानामिति भावः ॥ १२ ॥

## सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥ १३ ॥

सिद्धान्तमाह । सर्वेषामिति । सर्वेषां संमार्गः कार्यः लक्षण-

* शास्त्रदीपिकादिग्रन्थे तु लक्षणां विनैव क्रये साक्षादन्वयः स्वीकृतः । तस्य चामूर्तस्य साक्षात्करणत्वं न संभवतीति द्रव्यपरिच्छेदद्वारा तदुपपादनीयमिति च विस्तरेण निरूपितं तत्तत एवावगन्तव्यम् ।

त्वात् । ग्रहत्वात् । ग्रहत्वजातिरूपं यद्ग्रहलक्षणं तस्य सर्वेषु सत्त्वात् । लक्षणं लक्षणा शक्यसंबन्धः । ग्रहत्वजातिप्रतियोगिकः । अविशिष्टमविलक्षणम् । अयं भावः । आकृत्यधिकरणन्यायेन ग्रहपदस्य ग्रहत्वमर्थः । तस्य संमार्गेणान्वयासंभवाल्लक्षणावृत्त्या व्यक्त्युपस्थितिमङ्गीकृत्य तेनैव साकं संमार्गस्यान्वयो वाच्यः । तत्र लक्षितदशग्रहाणां मध्ये अमुकमेव ग्राह्यमित्यत्र नियामकाभावात्सर्वेषां ग्रहणमिति ॥ १३ ॥

## चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ॥ १४ ॥

ननु पशुना यजेतेत्यत्रापि पुंस्त्वमेकत्वं चाविवक्षितं स्यादुक्तयुक्तेरत आह । चोदितइति । चोदिते विहिते उपादेये पश्वादौ यथाश्रुति श्रुत्यनतिक्रमेण एकत्वादिविशिष्टः पशुः प्रतीयेत अवेयात् । परार्थत्वात् । यागार्थत्वात् । अयं भावः आकृत्यधिकरणन्यायेन ग्रहपदस्य ग्रहत्वमर्थः तस्य संमार्गासंभवात्तदाश्रयो लक्ष्यते । तस्य द्वितीयाश्रुत्या प्राधान्यात् प्रतिप्रधानमङ्गावृत्तिरिति न्यायेन दशस्वप्यङ्गावृत्तिः प्राप्ता । सर्वेषु ग्रहेषु संमार्गप्राप्तौ संमार्गः कियत्सु कार्य इत्याकाङ्क्षैव नोदेति अतो ऽविवक्षा । एवमपि एकत्वविवक्षायां संमार्गेणान्वितेषु ग्रहेषु एकवचनेनेतरग्रहेषु नित्यं प्राप्तसंमार्गस्य परिसंख्या कार्या । सा विधिमन्तरा न संभवतीति विध्यावृत्तौ वाक्यभेदः ग्रहं संमृज्यात् तं चैकमिति । पशोस्तु क्रियां प्रत्यङ्गत्वात्प्रत्यङ्गं क्रियाप्राप्त्यभावात्कियद्भिः पशुभिः कार्यमित्याकाङ्क्षोदयाच्छ्रूयमाणा संख्या विवक्षिता । तथा ऽपि अनेकगुणविशिष्टैकक्रियाविधानान्न विध्यावृत्तिप्रयुक्तो वाक्यभेदश्चेति* ॥ १४ ॥

चमसादौ संमार्गाननुष्ठानम् । अधि॰ ८ ।

## संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १५ ॥

पूर्वोदाहृतवाक्यएव शक्त्या ग्रहत्वमर्थः उत सोमलिप्तपात्रमात्रं लक्षणया ऽर्थ इति संशये पूर्वपक्षमाह । संस्कारादिति । गुणानां संमा-

* अथैकत्वविशिष्टस्य ग्रहस्य संमार्ग एको ऽर्थो विधीयते तेन न कश्चित्पूर्वोक्तो दोषः स्यादिति मतम् । कस्तदा भवति वाक्यार्थः । यद् ग्रहजातीयमेकसंख्यं च द्रव्यं तस्य संमार्ग इति, एवमपि सर्वेषां प्रत्येकमेकत्वाद् ग्रहत्वाच्च संमार्गस्य च तद्गुणत्वात्सर्वत्र प्राप्तिः स्यादिति शास्त्रदीपिकायां विस्तरः ।

ग्रहादीनामव्यवस्था चमसेष्वेव कार्यमिति नियमाभावः स्यात् । संस्कारात् संमार्गस्य संस्काररूपत्वात् । संस्कारोद्देश्यतावच्छेदकस्य अपूर्वसाधनत्वरूपस्य व्रीहीन्प्रोक्षतीत्यादौ व्यवस्थापितत्वात्तस्य चमसादावपि सत्त्वादिति भावः ॥ १५ ॥

## व्यवस्था वा ऽर्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वात् ॥ १६ ॥

सिद्धान्तमाह । व्यवस्थेति । व्यवस्था ग्रहेष्वेवेति नियमः । अर्थस्य ग्रहरूपार्थस्य श्रुतिसंयोगाच्छक्त्येन मुख्यवृत्तिसंबन्धात् । लक्षणायामपि ग्रहजन्यापूर्वलक्षणाया एव युक्तत्वादाग्नेयाद्यपूर्ववदिति* भावः । ननु ग्रहापूर्वमेव लक्षयेत्र परमापूर्वमित्यत्र किं नियामकमत आह । तस्येति । तस्य अपूर्वसाधनस्य शब्दप्रमाणत्वाच्छास्त्रैकगम्यत्वात् । ग्रहपदश्रवणाद्ग्रहापूर्वमेव लक्षयेदिति भावः ॥ १६ ॥

सप्तदशारत्नित्वस्य पशुधर्मत्वम् । अधि० ८ ।

## आनर्थक्यात्तदङ्गेषु ॥ १७ ॥

सप्तदशारत्निर्वाजपेयस्य यूपो भवतीति श्रुतम् । अत्र यूपपदं ग्रहविशेषलक्षकमुत शक्यार्थ एवेति संशये वाजपेयस्य सोमविकारत्वेन यूपाप्रसक्तेः खादिरत्वादिना सदृशवाजपेयसंबन्धिषोडशिग्रहलक्षको यूपशब्द इति बहिः पूर्वपक्षे सिद्धान्तमाह । आनर्थक्यादिति । वाजपेये प्रधाने यूपाभावेनानर्थक्याद्यूपपदानर्थक्यात्तदङ्गेषु प्राजापत्यादिपशुषु निविशतइदं वाक्यम् । लक्षणां विना ऽपि संभवे लक्षणा ऽनुचिता । श्रूयमाणपक्षाः संबन्धमात्रे शक्तत्वेन परम्परासंबन्धस्यापि शक्यार्थत्वादिति भावः ॥ १७ ॥

अभिक्रमणादीनां प्रयाजमात्राङ्गत्वम् । अधि० १० ।

## कर्तृगुणे तु कर्मासमवायित्वाद्वाक्यभेदः स्यात् ॥ १८ ॥

* सोमयागस्यैकत्वे ऽपि अभ्यासानां भेदात्तेषां च विलक्षणानामपूर्वमन्तरा परमापूर्वसाधनत्वायोगादवान्तरापूर्वकल्पनायां सन्निहितत्वाद् ग्रहजन्यापूर्वमेव लक्षयितुं युज्यतइति भावः ।

दर्शपूर्णमासे प्रयाजसन्निधौ अभिक्रामं जुहोतीति श्रुतम्। इदमभिक्रमणं सर्वहोमाङ्गमुत प्रयाजमात्राङ्गमिति संशये पूर्वपक्षमाह। कर्तृगुणइति। अभिक्रमणस्य धात्वर्थेन कर्मणा साकमसमवायित्वादन्वयायोग्यत्वात्। कारकस्यैव क्रियान्वयित्वेन क्रियायाः क्रियाकारकत्वेनान्वयासंभवात्प्रकरणेन परिगृहीतप्रयोगकर्त्रन्वितं कर्तृगुणतया ऽन्वितं सत्तत्संस्काररूपम्। इत्थं चाभिक्रमणे कर्तृगुणे सति श्रूयमाणवाक्याद्विच्छिद्यान्यत्रान्वये निखिलदर्शपूर्णमासप्रयोगकर्तारमभिक्रमणक्रियया संस्कुर्यादिति वाक्यं श्रूयमाणवाक्याद्भिन्नमेव अन्यदेव भवेत्। जुहोतीति अवयुत्यानुवादः ॥ १८ ॥

## साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ १९ ॥

सिद्धान्तमाह। साकाङ्क्षमिति। अभिक्रामिति णमुलन्तं जुहोतीतिक्रियापदसाकाङ्क्षम्, अत एकवाक्यं स्यान्न वाक्यभेदः। हि यतः पूर्वेण णमुलन्तेन असमाप्तमपरिपूर्णम्। तथा च परिपूर्त्यर्थं क्रियान्तरमध्याहार्यं ततो वरं सन्निहितयोजनम्। सन्निहितं प्रयाजानुवादकं जुहोतीति। अतः प्रयाजस्यैवाङ्गमिति भावः* ॥ १९ ॥

उपवीतस्य प्राकरणिकाङ्गत्वम्। अधि० ११।

## सन्दिग्धेषु व्यवायाद्वाक्यभेदः स्यात् ॥ २० ॥

विश्वरूपो वै त्वाष्ट्र इत्यध्याये सप्तमाष्टमानुवाकयोः सामिधेनीब्राह्मणमाम्नातम्। नवमे निवित्सञ्ज्ञकमन्त्रब्राह्मणं दशमे काम्यसामिधेनी-

* अत्र वार्तिककारो ऽन्यथा अधिकरणं वर्णयांचकार। तथा हि। "यदा त्वतिस्थूलत्वाचैवाभिक्राममित्येतत्पदमात्रविच्छेदेन पूर्वपक्षः क्रियते, कथं तर्हि यज्जुहोतीति समस्तप्रकरणजुहोत्यनुवादेन अभिक्रमणविधानाद् अवान्तरप्रकरणस्य चाभावाद् महाप्रकरणविनियोगाश्रयेण पूर्वपक्षाश्रयणं. तदा कर्तृगुणे त्वभिक्रमणे अवान्तरप्रकरणापर्युपस्थापितप्रयाजकर्मासमवायात् तत्प्रकरणैकवाक्यत्वाभावमात्रमेव वाक्यभेदः स्यादित्युक्त्वा साकाङ्क्षं त्विति अवान्तरप्रकरणमेव प्रयाजचोदनाप्रसृतकथंभावाकाङ्क्षासंबन्धद्वारा तदेकवाक्यत्वेन सिद्धान्तो ऽभिधीयते। यदप्यसमाप्तं हि पूर्वेणेति, तत्र वाक्यासमाप्त्यभिप्रायेण। किं तर्हि असमाप्तं ह्यवान्तरप्रकरणं पूर्वेण प्रयाजस्वरूपगुणविधिनेत्यर्थः। येनाभिक्रमणादूर्ध्वं प्रयाजानां गुणो ऽपरः। विधास्यते प्रयाजानां तस्मात्प्रकरणास्तिता"। इदं सर्वं तन्त्रवार्तिके। इतो ऽधिकविचारः शास्त्रदीपिकायां द्रष्टव्यः।

श्वोक्त्वैकादशे उपव्ययनदत्युपवीतविधिः श्रूयते । अये ऽपि तिष्ठन्वाहेति के चन सामिधेनीधर्माः पठिताः । एवं सति उपवीतं सामिधेन्यङ्गं सर्वाङ्गं वेति संशये पूर्वाधिकरणन्यायेन सन्निहितपरित्यागे मानाभावात्सामिधेन्यङ्गमिति बहिः पूर्वपक्षे सिद्धान्तमाह । सन्दिग्धेष्विति । सन्दिग्धेषु अवान्तरप्रकरणसंदेहविषयेषु वाक्येषु सत्सु निर्विद्भिर्व्यवधानाद्वाक्यभेदः स्यात् । सामिधेनीवाक्यैकवाक्यतापत्तं न, किं तु महाप्रकरणेन सर्वाङ्गम् ॥ २० ॥

वैकङ्कतादिपात्राणां कृत्स्नयागगुणत्वम् । अधि० १२ ।

## गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात् ॥ २१ ॥

अग्न्याधानसन्निधौ पठितं वारणो यज्ञावचरः वैकङ्कतो यज्ञावचर इति । यज्ञावचरो यज्ञसाधनम् । इदं पवमाने ऽप्यङ्गमथ वा यज्ञसाधनमात्राङ्गमिति संशये आधानसन्निधौ पवमानेष्टीनां पाठेनाधानाङ्गत्वादाधाने यागाभावेन यज्ञसाधनपात्राणामप्रसक्तेस्तत्सन्निधौ पाठवैयर्थ्याद्वाजपेयस्य यूप इतिवत्तदङ्गे पवमानेष्टौ निविशतइति बहिः पूर्वपक्षे सिद्धान्तमाह । गुणानामिति । गुणानां वारणवैकङ्कतादिगुणानां परार्थत्वाद् यज्ञसाधनपात्रार्थत्वाद् आधाने यागाभावात्पवमानेष्टिसन्निधावस्य वाक्यस्य पाठाभावेनासन्निधिपाठस्य समत्वाद् यज्ञान्तरैः पवमानेष्ट्या साकमसंबन्धः अङ्गाङ्गिभावो न । नापि वाजपेयस्य यूप इतिन्यायप्रवृत्तिः । आधानपवमानेष्ट्योः अङ्गाङ्गिभावनिराकरणस्याये वक्ष्यमाणत्वात् । अतः सर्वयज्ञाङ्गम्* ॥ २१ ॥

* वार्तिककारस्तु भाष्यकारोक्ताश्रुतवाक्यकल्पनामनभ्युपगमात् पवमानेष्टीनामाधानाङ्गत्वे ऽपि वैकङ्कतादिपात्राणां न पवमानेष्टिषु निवेशः । वाजपेयस्य यूप इत्यत्र व्यवहितसंबन्धे ऽपि षष्ठ्यपपत्तेस्तथा कल्पने ऽपि अत्र तथा कल्पने मानाभावात् । यज्ञावचर इति हि पूषानुमन्त्रणन्यायेन उत्कृष्टं सद् अनारभ्यवादरूपेण सर्वत्र पात्राणि विदधातीति नार्थो ऽधिकरणेन । गुणानां चेति सूत्रं तु, ननु निविदां सामिधेन्यङ्गत्वाद् व्यवधायकत्वं न स्यादिति पूर्वाधिकरणसिद्धान्ताशङ्काया निवृत्त्यर्थम् । लिङ्गेन निविदां सामिधेनीनां च अग्निसमिन्धनगुणत्वाच्च तासां मिथः संबन्ध इत्याह । अङ्गीकृतं चैतत् पार्थसारथिमिश्रादिभिरिति ।

वार्त्रघ्न्याद्यनुवाक्यानामाज्यभागाङ्गत्वम् । अधि० १३ ।

## मिथश्चानर्थसंबन्धात् ॥ २२ ॥

दर्शपूर्णमासप्रकरणे श्रुतम् । वार्त्रघ्नी* पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामिति । अत्र वार्त्रघ्नीवृधन्वत्यौ प्रधानयागाङ्गं यद्वा ऽऽज्यभागाङ्गमिति संशये प्रधानयागवाचकयोरमावास्यापौर्णमासीपदयोः श्रवणात्प्रधानेनैव संबन्ध इति बहिः पूर्वपक्षे सिद्धान्तमाह । मिथ इति । मिथः युगलीभूतयोः द्वित्वविशिष्टयाज्यापुरोनुवाक्ययोः प्रधानेनानर्थः निरर्थः निष्प्रयोजनः संबन्धः । अयं भावः । दर्शे पौर्णमासे च प्रत्येकं प्रधानत्रयम् । तैः प्रत्येकं संबन्धो ऽपि निष्प्रयोजनः । एकस्यैकेन युगलेन चरितार्थत्वात् । न समूहे एकेन न्यूनत्वाद् । अतः आज्यभागयोर्द्वित्वात्तयोर्युगलं तत्र सफलम् अतस्ताभ्यामन्वितपूर्णमासरूपे काले तयोर्वार्त्रघ्नी अमावास्याकाले वृधन्वतीति नियामकं वाक्यम्* ॥ २२ ॥

हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गत्वम् । अधि० १४ ।

## आनन्तर्यमचोदना ॥ २३ ॥

दर्शपूर्णमासयोः श्रूयते हस्ताववनिक्ते, उलपराजिं स्तृणातीति । अवनेनिक्ते प्रक्षालयति । अत्र हस्तप्रक्षालनमुलपराजिस्तरणार्थं तैतदुत्तरं क्रियमाणसर्वकर्मार्थमिति संशये हस्तप्रक्षालनस्य फलाकाङ्क्षायामुलपराजिस्तरणार्थत्वेन वाक्ययोरेकवाक्यत्वसम्भवात्तदर्थमेवेति बहिः पूर्वपक्षे सिद्धान्तमाह । आनन्तर्यमिति । आनन्तर्यं सांनिध्यम् । अचोदना एकवाक्यतासाधकं न । तथा सति घटमाहरति गां नयतीत्यनयोरप्येकवाक्यतापत्तिरिति भावः ॥ २३ ॥

## वाक्यानां च समाप्तत्वात् ॥ २४ ॥

एकवाक्यताया लक्षणमपि नास्तीत्याह । वाक्यानामिति । स्पष्टं विभागे परस्परं साकाङ्क्षत्वाभावादिति भावः ॥ २४ ॥

* वा छन्दसीति पूर्वसवर्णदीर्घः । एवमेव वृधन्वती इत्यत्रापि बोध्यम् ।

चतुर्धाकरणस्याग्नेयमात्राङ्गत्वम् । अधि० १५ ।

## शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसंबन्धात् ॥ २५ ॥

दर्शपूर्णमासे श्रूयते आग्नेयं चतुर्धा करोतीति । अत्र चतुर्धाकरणं पुरोडाशमात्राङ्गमुत केवलाग्नेयपुरोडाशाङ्गमिति संशये पूर्वपक्षमाह । शेष इति । शेषः चतुर्धाकरणरूपसंस्काररूपो गुणः गुणसंयुक्तः अग्निरूपगुणसंबन्धविशिष्टो ऽपि गुणसंबन्धविशिष्टोद्देश्यवाचकपदघटितो ऽपीति फलितम् । साधारणः अग्नीषोमैन्द्राग्नसाधारणः । तेषां चतुर्धाकरणव्यक्तीनामग्नेश्च शास्त्रान्तरे असंबन्धादुद्देश्यतावच्छेदकत्वेन अग्नेरश्रवणात् । अयं भावः । शतपथे पुरोडाशं प्रकृत्य तं चतुर्धा करोतीति श्रुतम् । तत्र तच्छब्दस्य प्रकृतपुरोडाशमात्रपरत्वादत्राप्याग्नेयपदं पुरोडाशमात्रपरमिति २५ ॥

## व्यवस्था वा ऽर्थसंयोगाल्लिङ्गस्यार्थेन संबन्धाल्लक्षणार्था गुणश्रुतिः ॥ २६ ॥

सिद्धान्तमाह । व्यवस्थेति । व्यवस्था आग्नेयस्यैव चतुर्धाकरणनियमः । अर्थेन देवतारूपतद्धितार्थेन पुरोडाशस्य सम्बन्धात् । सूक्तहविषोः त्वनुशासनेन देवतातद्धितत्वात्र सम्बन्धसामान्यवाची अग्नीषोमस्थले अग्नौ देवतात्वं न पर्याप्तमिति भावं दर्शयति । लिङ्गस्य देवतात्वपर्याप्तिप्रकाशकलिङ्गस्य द्वन्द्वनिरपेक्षत्वरूपसामर्थ्यरूपार्थेन सम्बन्धात् । अग्नीषोमीयघटकाग्नेः सोमसापेक्षत्वात्र तच्छोक्तसामर्थ्यमिति भावः । ननु आग्नेयस्य मस्तकं विरूज्य प्राशित्रमवद्यतीति श्रुतत्वात्कथं सर्वपुरोडाशेभ्यः प्राशित्रावदानमत आह । लक्षणेति । आग्नेयमस्तकोपलक्षणार्था गुणश्रुतिः अग्निदेवतासम्बन्धश्रुतिः । आग्नेयपदस्य अवद्यतीत्यनेन न सम्बन्धः किन्तु मस्तकेन । तथा चाग्नेयस्यैव शिरोभेदनं नेतरस्य । यत्तु शाखान्तरे पुरोडाशं चतुर्धा करोतीति तस्याप्यत्रैवोपसंहारः । यत्र

सामान्यवाचकस्य प्रमाणान्तरेण विशेषोपसंहारस्तत्र विशेषपरत्वमेव । यथा घटमानयेत्युक्ते गेहस्थघटे तात्पर्यग्रहे सति तत्परत्वमेव नान्यपरत्वमिति सर्वानुभवः, एवमिहापि आग्नेयं चतुर्धा करोतीति वाक्यैकवाक्यतायामुपसंहारस्योपपत्तेर्न किञ्चिद्बाधकम् ॥ २६ ॥

इति जैमिनिसूत्रवृत्त्यां तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

लवनप्रकाशकमन्त्राणां मुख्ये बर्हिषि विनियोगः । अधि० १ ।

## अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥

पूर्वपादे श्रुत्या विनियोगश्चिन्तितः । अस्मिन्पादे लिङ्गेन विनियोगश्चिन्त्यते । मन्त्राधिकरणे मन्त्राणां कर्मसमवेतार्थस्मारकतया क्रत्वङ्गत्वमिति स्थितम् । तत्र पदानामर्थस्मारकत्वं द्विधा शक्त्या लक्षणया च । एवं सति बर्हिर्देवसदनं दामीति मन्त्रे बर्हिश्शब्देन शक्त्या कुशाः लक्षणया तत्सदृशाः तृणविशेषाः । उभयोः खण्डने अयं मन्त्रः उत कुशखण्डनएवेति संशये ऽर्थस्मारकत्वस्य तुल्यत्वादुभयत्र विनियोग इति बहिः पूर्वपक्षे सिद्धान्तमाह । अर्थेति । उत्पत्त्या औत्पत्तिकेन स्वाभाविकेन मुख्येनैव अर्थेन मन्त्रघटकपदानां संबन्धः स्यात् । कुतः नित्यसंयोगात् । पदपदार्थयोः संबन्धो नित्य इति प्रथमाध्याये व्यवस्थापितत्वात् । यस्माच्छक्तिसंबन्धो नित्यः तयोस्तस्मादर्थस्य *मुख्यार्थस्याभिधानं कथनं तद्द्वारा संयोगात् क्रतुसंबन्धान्मन्त्रेषु शेषभावः क्रत्वङ्गत्वं स्यात् । नामुख्यार्थस्मरणद्वारा । मुख्यार्थेनैव मन्त्रस्य निराकाङ्क्षत्वादमुख्ये न प्रवृत्तिरिति भावः ॥ १ ॥

## संस्कारकत्वादचोदिते न स्यात् ॥ २ ॥

नन्वेवं सति पूषानुमन्त्रणमन्त्रस्य प्रकरणविच्छेदापत्तिरित्यत्रेष्टापत्तिमाह । संस्कारेति । संस्कारकत्वात्पूषानुमन्त्रणमन्त्रस्य देवतास्मार-

* मुखमिव प्रधानत्वान्मुख्यः प्रथमः इत्यर्थः । गुणैरपेक्ष्येण यः शब्दात्प्रथमं प्रतीयते स इति यावत् । यथा अग्निशब्दस्य ज्वलनः । शक्यार्थगुणसंबन्धात्प्रतीयमानोऽर्थो गौणः । यथा अग्निशब्दस्य माणवक इति तयोर्विशेषः ।

क्रत्वङ्गरूपसंस्कारजनकत्वात् । अचोदिते अविहितपूर्वदेवताके यागे न स्यात् मन्त्रस्याङ्गत्वं न स्यात् । यत्र संस्कारसंभवः तत्रैवाङ्गमिति भावः ॥ २ ॥

इन्द्रप्रकाशकमन्त्राणां श्रुत्या गार्हपत्ये विनियोगः । अधि· ३ ।

## वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥

महाग्निचयने श्रूयते ऐन्द्र्या गार्हपत्यमुपतिष्ठतइति । ऐन्द्र्यर्चा किमिन्द्रस्योपस्थानमुत गार्हपत्यस्येति संशये इन्द्रोपस्थानएव पूर्वाधिकरणन्यायेन मन्त्रस्य समर्थत्वादिन्द्रस्यैव उपस्थानमिति बहिः पूर्वपक्षे सिद्धान्तमाह । वचनादिति । वचनाद् गार्हपत्यमितिद्वितीयाश्रुतिवचनाद् । ऐन्द्री इन्द्रदेवताप्रकाशिका ऋग् । अयथार्थम् इदं क्रियाविशेषणम् । पुरुहूतप्रकाशकं यथा तथा न स्यात् । इदि परमैश्वर्यइति योगेन तद्वित्श्रुतेरर्थस्य देवतारूपस्य गार्हपत्ये ऽप्यबाधाद् द्वितीयाश्रुत्यनुसारेणैन्द्रीपदघटकमन्त्रस्येन्द्रपदस्य अन्यथा नयनं किमिति वचनं न कुर्यात् । न हि वचनस्य अतिभार इति न्यायेनेति ध्येयम् ॥ ३ ॥

## गुणाद्वा ऽप्यभिधानं स्यात्संबन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥

ननु लिङ्गेन कल्प्यमानं शास्त्रमिन्द्रपदघटितया ऋचा गार्हपत्यं प्रकाशयेदिति भवेत् । इदं जलेन दहेदितिवदशक्यार्थं वचनसहस्रेणापीन्द्रपदेन गार्हपत्यप्रकाशासम्भवादत्राह । गुणादिति । यदुक्तमिन्द्रपदगार्हपत्यार्थयोः शक्तिरूपः संबन्धः शास्त्रसहस्रेणापि न सिध्यति तस्य नित्यत्वादिति, तदस्माकमप्यनुमतमित्याह । संबन्धस्य शक्तिरूपसंबन्धस्य । अशास्त्रहेतुत्वात् । शास्त्रानधीनत्वात् । ननु कथं तर्हि इन्द्रशब्देन गार्हपत्यप्रकाशनमत्राह । गुणात् शक्यसंबन्धरूपगौणवृत्त्यन्तरेण अभिधानं प्रकाशनं स्यात् । सिंहो देवदत्त इतिवत्* ॥ ४ ॥

---

* ननु ब्राह्मणस्यगार्हपत्यपदस्यैव इन्द्रे गौणी वृत्तिरस्तु मन्त्रानुसारादिति चेन्न । विहितार्थत्वेन मन्त्रे एव तादृशकल्पनाया युक्तत्वात् । न विधौ परः शब्दार्थ इति न्यायेन अज्ञातार्थज्ञापके ब्राह्मणे तथाविधकल्पनाया अनुचितत्वाच्चेति भावः ।

आह्वानप्रकाशकमन्त्राणामाह्वाने विनियोगः । अधि० ३ ।

## तथा ऽऽह्वानमपीति चेत् ॥ ५ ॥

दर्शपूर्णमासयोः श्रूयते हविष्कृदेहीति त्रिरवघ्नन्नाह्वयतीति । अत्र हविष्कृदेहीति मन्त्रः अवहननाङ्गमुत लिङ्गेन आह्वानाङ्गमिति संशये पूर्वपक्षमाह । तथेति । यथेन्द्रशब्दस्य गौणवृत्त्या गार्हपत्यप्रकाशकत्वं तथा हविष्कृदेहीति मन्त्रे आह्वानम् आह्वानवाचकम् एहीति अवहननलक्षकम्* । हविष्कृदेहीत्यवघ्नन्निति पदयोजना । आह्वयतीति मन्त्रे एहीत्यर्थानुवादः ॥ ५ ॥

## न कालविधिश्चोदितत्वात् ॥ ६ ॥

सिद्धान्तमाह । नेति । नावहननार्थो मन्त्रः । [illegible] आवृत्त्या अवघ्नन्निति अनेन अवहननकालं लक्षयित्वा कालसंबन्धविधिरपि न । कालसंबन्धस्य त्रिरभ्यासस्य च विधाने वाक्यभेदात् । हविष्कर्तुरवहननकालाह्वानस्य लोकतः चोदितत्वात्प्राप्तत्वाच्च त्रिरभ्यासमात्रविधिः ॥ ६ ॥

## गुणाभावात् ॥ ७ ॥

मन्त्रस्थस्य एहीत्यस्य अवहननलक्षणायां सदृशस्यैव उपस्थितिर्भवेत् । यथा सिंहो माणवक इत्यत्रायमसाधारणोऽस्यापकं क्रूरत्वं तथा मुख्यार्थसदृशं झटिति प्रतीयमानं रूपं नेत्याह† । गुणेति ॥ ७ ॥

## इतश्च तथा लिङ्गात् ॥ ८ ॥

इतः अर्थवादरूपाल्लिङ्गात् न हविष्कृदित्यस्य अवहननतात्पर्यकत्वम् । अर्थवादस्तु वाग्वै हविष्कृदिति । वाक्सादृश्यं स्त्रीत्वेन प्रतीयते । अवहननं न स्त्रीसदृशमिति भावः ॥ ८ ॥

---

* इत उत्तरं "हविष्कृत्पदं वा हविरुत्पत्तिजनकत्वेन अवहननपरं पलीसा स्यात् । हे हविष्कृद् अवहनन एहि सिद्धो भवेति मन्त्रार्थः" इति अधिकः पाठः गो० दा० पु० ।

† "हविष्कृत्पदस्यावहननपरत्वे तस्यां क्रियायामाहूतोऽस्मीतिज्ञानरूपगुणाभावाददृष्टार्थता मन्त्रस्य स्यादित्याहेति" मन्त्रस्थस्येत्यारभ्य रूपं नेत्याहेत्यन्तस्य स्थाने पाठः गो० दा० पु० ।

## विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥

विधेः अव रक्षो दिवः सपत्नं वध्यासमित्यवहन्तीति अवहनना-ङ्गत्वेन उक्तमन्त्रविधेः कोपः निर्विषयता स्यात् । हविष्कृदेहीति मन्त्रस्या-वहननाङ्गत्वोपदेशे । न चाष्टदोषग्रस्तो विकल्पो युक्त इति भावः ॥ ९ ॥

अग्निविहरणादिप्रकाशकमन्त्राणां तत्रैव विनियोगः । अधि· ४ ।

## तथोत्थानविसर्जने ॥ १० ॥

ज्योतिष्टोमे श्रूयते, तिष्ठन्नन्वाह, आग्नीध्रग्नीन्विहरेति । तथा व्रतं कृणुतेति वाचं विसृजतीति । किमुत्थानवाग्विसर्जने उद्दिश्य उक्तौ द्वौ मन्त्रौ विनियुज्येते उत पूर्ववत् काललक्षकत्वमिति संशये पूर्ववद्वाक्य-भेदाभावाद् ब्राह्मणवाक्यस्य प्रबलत्वेन लक्षणायां मानाभावादनुवाद-कमन्त्रवाक्ये एव लक्षणोचिता । तथा चाग्नीत्पदव्रतपदयोर्मन्त्रघटकयोः उत्थानवाग्विसर्गयोरर्थयोर्लक्षणामङ्गीकृत्य तत्रैव विनियोग इति बहिः पूर्वपक्षे सिद्धान्तमाह । तथेति । यथा ऽवघ्नेति काललक्षकं तथोत्था-नविसर्जने काललक्षके । ब्राह्मणवाक्येन विनियोगे ऽपि गार्हपत्यशब्दवद् न द्वितीयाश्रुतिरस्त्यतः प्रबलेन लिङ्गेनैव विनियोग इति भावः ॥ १० ॥

सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वम् । अधि· ५ ।

## सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥

सूक्तवाकेन प्रस्तरं प्रहरतीति दर्शपूर्णमासे श्रुतम् । अत्र सूक्तवा-कशब्दः तत्काललक्षकः अथ वा सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वं प्रतिपा-दयतीति संशये पूर्वपक्षमाह । सूक्तेति । सूक्तवाके तदुदितोदाहृतवाक्ये तृतीयान्तेन तत्कालो लक्ष्यते । सूक्तवाकप्रस्तरयोः परार्थत्वात् । सूक्तवा-कस्य देवतास्तुतिः प्रस्तरस्य स्रुग्धारणमिति उभयोरन्यत्र विनियुक्तत्वेन तयोः परस्परमङ्गाङ्गिभावो न संभवतीति भावः ॥ ११ ॥

## उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥

सिद्धान्तमाह । उपेति । उपदेशः प्रस्तरप्रहरणं प्रति अङ्गत्वेन विधिः । अन्यथा अकस्माद् होमानङ्गभूतस्य सूक्तवाकस्य याज्याशब्दः

याज्यात्वेन स्तुतिः तदर्थवादे सूक्तवाको हि याज्या प्रस्तरो हविरितीत्यत्र न युज्यते । होमसाधनएव याज्यापदप्रवृत्तेरिति भावः ॥ १२ ॥

## स देवतार्थस्तत्संयोगात् ॥ १३ ॥

ननु प्रपूर्वकहरतिधातोः अग्निप्रक्षेपो ऽर्थः न याग इति कथं यागप्रकाशने समर्थस्तत्राह । स इति । सः सूक्तवाकः देवतार्थः देवताद्रव्यसंबन्धरूपो यागः अर्थः प्रपूर्वकहरतिधातोर्यस्मादिति समासेन यागार्थकल्पकः । सूक्तवाकेनेतितृतीयासंयोगात् । अयं भावः । तृतीयाश्रुत्या सूक्तवाकस्य प्रहरणाङ्गत्वे सिद्धे सूक्तवाकस्थस्य अग्निरिदं हविरजुषत, अग्निः इदं प्रस्तररूपं हविः अजुषत स्वीकृतवानिति लिङ्गस्यान्यथा ऽनुपपत्त्या धातोर्यागार्थकत्वं सिध्यतीति ॥ १३ ॥

## प्रतिपत्तिरिति चेन्न स्विष्टकृद्वदुभयसंस्कारः स्यात् ॥ १४ ॥

ननु प्रस्तरस्य स्रुग्धारणे विनियुक्तस्य प्रक्षेपेण प्रस्तरं संस्कुर्यादिति प्रतिपत्तिरेव, नोद्दिश्य त्यागरूपयागाङ्गत्वमपि । अपूर्वद्वयकल्पनापत्तेरिति शङ्कते । प्रतिपत्तिरिति । अपूर्वद्वयकल्पने इष्टापत्तिमाह । नेति । वक्ष्यमाणस्विष्टकृन्न्यायेन उभयसंस्कारः । प्रक्षेपः प्रस्तरं संस्कुर्वन् सन्निपत्योपकारकः तृतीयाश्रुत्या प्रस्तरकरणकः त्यागः प्रयाजादिवदाराढुपकारकश्चेति भावः ॥ १४ ॥

सूक्तवाकानामर्थानुसारेण विनियोगः । अधि· ६ ।

## कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १५ ॥

अयं सूक्तवाकः कृत्स्नः प्रत्येकं दर्शे पूर्णमासे चाङ्गमुत विभज्याङ्गमिति संशये पूर्वपक्षमाह । कृत्स्नोपदेशादिति । सूक्तवाकेनेति कृत्स्नस्याङ्गत्वेन उपदेशाद् उभयत्र सर्ववचनं कृत्स्नपाठः ॥ १५ ॥

## यथार्थं वा शेषभूतसंस्कारत्वात् ॥ १६ ॥

सिद्धान्तमाह । यथेति । यथार्थं यथालिङ्गं विभज्य विनियोगः । शेषभूतानां दर्शे पूर्णमासे च प्रत्येकमङ्गभूतदेवतासंस्काररूपत्वात् । अनङ्गभूतानां संस्काराकाङ्क्षाविरहादिति भावः ॥ १६ ॥

## वचनादिति चेत् ॥ १७ ॥

ननु सूक्तवाकेनेति तृतीयान्तेन वचनेन निखिलसूक्तवाकस्य विनियोगे क्रियमाणे तत्र न युक्त्यपेक्षा । न हि वचनस्यातिभारो ऽस्तीति शङ्कते । वचनादिति ॥ १७ ॥

## प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥ १८ ॥

समाधत्ते । प्रकरणेति । प्रकरणस्य महाप्रकरणस्य अविभागात् कृत्स्नशो विनियोग उभे प्रति उभयोर्मिलित्वा । तथा च तृतीयाश्रुत्या विनियोगो ऽपि अबाधित इति भावः ॥ १८ ॥

काम्ययाज्यानुवाक्यानां काम्यमात्राङ्गत्वम् । अधि० ७ ।

## लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम् ॥ १९ ॥

उभा वामिन्द्राग्नी इत्यनुवाके इन्द्राग्निलिङ्गका अष्टौ ऋच आम्नाताः । ता ऋचः केवलेन लिङ्गेन यत्र क्व चन विनियोक्तव्या इति बहिः पूर्वपक्षे सिद्धान्तमाह । लिङ्गेति । न केवलं लिङ्गेन विनियोगः, किं तु लिङ्गक्रमसमाख्याभिर्मिलित्वा । काम्ययाज्यानुवाक्याकाण्डमिति समाख्यया काम्येष्टिषु ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इत्यादौ । तत्रापि क्रमप्रमाणेन प्रथमेष्टेः प्रथमयाज्यानुवाक्यायुगलमिति रीत्या समानपठितं काम्ययुक्तं काम्येष्टिसंबद्धं स्यान्न केवलेन लिङ्गेनेति भावः ॥१९॥

आग्नीध्रोपस्थाने प्राकृतानां मन्त्राणां विनियोगः । अधि० ८ ।

## अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥ २० ॥

ज्योतिष्टोमे आग्नेय्या ऽऽग्नीध्रमुपतिष्ठतइति श्रुतम् । अत्राग्नेयीपदं प्रकृताप्रकृतसाधारणपरमुत प्रकृतमात्रपरमिति संशये पूर्वपक्षमाह । अधीति । अधिकारे यत्किञ्चित्क्रतुसंनिधौ यो मन्त्रविधिः सः अतदाख्येषु अप्रकृतमन्त्रेषु चकारात् प्रकृतेषु च स्यात् । अविशेषेण अङ्गत्वेन विहितत्वात् ॥ २० ॥

## तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ २१ ॥

सिद्धान्तमाह । तदिति । तस्मिन्प्रकरणे आख्या पाठो यस्य मन्त्रस्य स एवोपस्थाने योज्यः । प्रकरणेन संनिधिपाठेन उपपत्त्या युक्त्या च ॥ २१ ॥

## अनर्थकश्चोपदेशः स्यादसंबन्धात्फलवता न ह्युपस्थानं फलवत् ॥ २२ ॥

युक्तिमेव प्रकटयति । अनर्थेति । उपदेशः मन्त्रस्योपस्थानं प्रति साधनत्वोपदेशः अनर्थकः व्यर्थः स्यात् । त्वया प्रकरणस्यानादरात् फलवता क्रतुना संबन्धबोधकप्रमाणाभावेन असंबन्धात् । उपस्थानं न स्वतः फलवत् । अयं भावः । प्रकरणाङ्गीकारे प्रकरणे सामान्यरूपेण अयं मन्त्रः क्रतुना संबद्धः तत्प्रकरणपाठादिति निश्चये केन साकं संबन्ध इति विशेषजिज्ञासायाम् इदं वाक्यमुपस्थानेन फलवत्क्रतुसंबद्धेन संबद्धं करोतीति परम्परया फलवत्त्वादुपपन्ना प्रवृत्तिः । अन्यथा उपस्थानस्य फलकल्पनापत्तेरिति ॥ २२ ॥

## सर्वेषां चोपदिष्टत्वात् ॥ २३ ॥

नन्वेवं सति अप्रकृतपठितानां मन्त्राणां विनियोगः कुत्रापि न स्यादित्यत आह । सर्वेषामिति । सर्वेषामप्रकृतपठितानां वाचःस्तोमक्रतुसंबन्धस्य, अविनियुक्ता वाचःस्तोमे संपद्यन्त इति वचनेन फलसंबन्धस्य उपदिष्टत्वान्न काऽप्यनुपपत्तिः ॥ २३ ॥

भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगः । अधि० ६ ।

## लिङ्गसमाख्याभ्यां भक्षार्थता ऽनुवाकस्य ॥ २४ ॥

अग्निष्टोमप्रकरणे भक्षेहीत्यनुवाकः भक्षानुवाक इतिसमाख्याविशिष्टः पठितः । सो ऽनुवाकः सर्वः भक्षणाङ्गमुत अनुवाकमध्यपठितवाक्यानि कानि चिल्लिङ्गेन केवलेन क्रियान्तरे ऽपि विनियुज्यन्तइति संशये पूर्वपक्षमाह । लिङ्गेति । यथा काम्ययाज्याकाण्डमितिसमाख्यासहितेन लिङ्गेन मन्त्राणां काम्येष्टिष्वेव विनियोगः तथा भक्षानुवाकसमाख्यासहितेन भक्षयामीति लिङ्गेन भक्षार्थता ऽनुवाकस्य । एतदनुसारेण मध्यवर्तिलिङ्गान्तराण्यमुख्यवृत्त्या भक्षपराणि ॥ २४ ॥

## तस्य रूपोपदेशाभ्यामपकर्षो ऽर्थस्य चोदितत्वात् ॥ २५ ॥

सिद्धान्तमाह । तस्येति । तस्य भक्षेहीति सध्यासमित्यादिमन्त्रकलापस्य अपकर्षः भक्षवाक्याद्विच्छेदः रूपोपदेशाभ्याम् । रूपं ग्रहणप्रकाशनसामर्थ्यम् आश्विनोऽस्त्वा बाहुभ्यां सध्यासमित्यंशनिष्ठम्

उपदेशः सदसि भक्षयन्तीति भक्षणविधिः । ताभ्याम् । ननु भक्षणविधिवद् ग्रहणविध्यभावाद् ग्रहणलिङ्गमविहितमर्थं कथं प्रकाशयेदत आह । अर्थस्य ग्रहणरूपार्थस्य चोदितत्वाद् भक्षणविधिनैव तस्य विहितत्वात् । ग्रहणेन विना भक्षणानुपपत्तेरिति । तथा च भक्षेहीति सध्यासमित्यन्तो ग्रहणे । वसुमद्गणस्येत्यादिभक्षयामीत्यन्तो भक्षणे एवेति विभज्यैव विनियोगः । समाख्यया लिङ्गबाधासंभवादिति भावः ॥ २५ ॥

मन्द्राभिभूतिरित्यादेर्भक्षयामीत्यन्तस्यैकमन्त्रत्वम् । अधि॰ १० ।

## गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ २६ ॥

तत्रैव मन्द्राभिभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यत्विति अथ वसुमद्गणस्येति भक्षयाम्यन्तः भक्षमन्त्रः । तत्र प्रथममन्त्रः भक्षणमन्त्रात् पृथक् सन् वाचः तृप्तिं प्रकाशयति उत भक्षणमन्त्रशेष इति संशये पूर्ववत्तृप्तिलिङ्गाद् भिन्नं वाक्यमिति बहिः पूर्वपक्षे सिद्धान्तमाह । गुणेति । मन्द्रादिः मन्द्रशब्दप्रथमो मन्त्रः भक्षयामीत्यन्तेन अग्रिमेण सहैकमन्त्रः एकं वाक्यं स्यात् । गुणस्य भक्षणफलस्य वाचः तृप्तेः तेनाभिधानात् । ननु द्वयोर्विभागे साकाङ्क्षत्वाभावात् कथमैक्यमत्राह, तयोः वाक्ययोः एकेन अर्थेन एकशब्दबोधेन संयोगात् । अयं भावः । तृप्तेर्न विधिसंभवः । तस्याः पुरुषकृत्यसाध्यत्वात् स्वर्गवत् । किं तु भक्षणे कृते स्वाभाविकी सा । अतस्तस्या मन्त्रानपेक्षत्वाद् भक्षणेन किं भवतीत्याकाङ्क्षां संपाद्य भक्षयामि तृप्तिर्भवतु, प्राप्तकाले लोटं कृत्वा कथंचिदेकवाक्यता संपादनीयेति ॥ २६ ॥

इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषु ऊहेन विनियोगः । अधि॰ ११ ।

## लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥ २७ ॥

तत्रैवेन्द्रपीतस्येतिपदघटितभक्षमन्त्रस्य अनिन्द्रे मैत्रावरुणादिग्रहभक्षणे पाठोऽस्ति न वेति संशये पूर्वपक्षमाह । लिङ्गेति । समानविधाने प्रकृतिविकृतिभावशून्यस्थले अनैन्द्राणां मैत्रावरुणादिग्रहाणां भक्षणे

अमन्त्रत्वं मन्त्ररहितत्वम् । लिङ्गविशेषस्य इन्द्रपीतस्येति लिङ्गस्य निर्देशात् । अयं भावः । ऐन्द्रानैन्द्रग्रहाणामेकक्रतौ तुल्यतया पाठेन प्रकृतिविकृतिभावाभावेन अनैन्द्रभक्षे इन्द्रपीतस्येतिमन्त्रप्राप्त्यभावेन लिङ्गाभावादूहासंभवादमन्त्रभक्षणमिति ॥ २७ ॥

## यथादैवतं वा तत्प्रकृतित्वं हि दर्शयति ॥ २८ ॥

पूर्वपक्षान्तरमाह । हि यतः तत्प्रकृतित्वम् ऐन्द्रप्रकृतित्वं सर्वग्रहाणां दर्शयति सोमग्रहणमन्त्रः । इन्द्राय त्वा वसुमते जुष्टं गृह्णामीति इन्द्रोद्देशेनैव सोमग्रहणं निखिलसोमधर्मा इन्द्रयागमुद्दिश्येति तस्यैव प्रकृतित्वमिति भावः । इत्थं चानैन्द्राणां विकृतित्वाद्यथादैवतं यद्दैवताको यागः तत्तद्देवताया ऊहेन तत्र तत्र भक्षमन्त्रपाठः ॥ २८ ॥

अभ्युन्नीतसोमभक्षणे इन्द्रस्याप्युपलक्षणम् । अधि० १२ ।

## पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ २९ ॥

एवमपर्यवसिते ऽधिकरणे अत्रैव विचारान्तरमारभ्यते । सवनसंबन्धिचमसगणेषु प्रथमं हूयमाना नव ग्रहाः सवनमुखीयाः । ते नवापि प्रथममिन्द्राय हूयन्ते । तत्रैव ये मैत्रावरुणब्राह्मणाच्छंसिनेष्टृपोत्राग्नीध्रीयचमसाः तेषु प्रथममिन्द्राय हुत्वा भक्षितेषु सशेषेष्वेव पुनर्द्रोणकलशादभ्युन्नीय मित्रावरुणादिदेवताभ्यो हुत्वा तत्र शेषभक्षणं क्रियते । तत्रोहपक्षे इन्द्रपीतस्य मित्रावरुणाभ्यां पीतस्येत्याद्युभयोरुच्चारणमुत केवलं मित्रावरुणाभ्यां पीतस्येत्यूह इति संशये सिद्धान्तेनोपक्रमते । पुनरिति । पुनरभ्युन्नीतेषु पूर्वदर्शितस्थलेषु सर्वेषाम् इन्द्रसहितमित्रावरुणादीनाम् उपलक्षणं भक्षमन्त्रे योजनं कर्तव्यम् । द्विशेषत्वात् । इन्द्रः प्रथमहवनोद्देश्यः तच्छेषवत्येव पात्रे पुनर्गृहीत्वा मित्रावरुणोद्देशेन हुतत्वादिन्द्रमित्रावरुणात्मकोभयपीतशेषत्वाद्भक्ष्यद्रव्यस्य ॥ २९ ॥

## अपनयाद्वा पूर्वस्य अनुपलक्षणम् ॥ ३० ॥

पूर्वपक्षी स्वमतमाह । अपनयादिति । पूर्वस्य प्रथमं यदुद्देशेन होमः तस्येन्द्रस्य अनुपलक्षणं मन्त्रे योजनं न कर्तव्यम् । इन्द्रपीतशेषे

पुनः मैत्रावरुणाद्युद्देशेन गृहीते पूर्वसहिते पुनर्गृहीते मित्रावरुणादिदेवतान्तरसंबन्धे इन्द्रसंबन्धस्य अपनयाद्विच्छेदात् ॥ ३० ॥

## अग्रहणाद्वा ऽनपायः स्यात् ॥ ३१ ॥

एतदुत्तरमाह । अग्रहणादिति । अनपायः मन्त्रे इन्द्रस्य विच्छेदो न । अग्रहणात् । द्रोणकलशान्मित्रावरुणाद्युद्देशेन गृहीतद्रव्यभिन्नत्वात्पूर्वशेषस्य । अयं भावः । पूर्वशेषे गृह्णातीत्येव विधिः । तथा च मित्रावरुणादिसंबन्धिसोमरसस्य पूर्वशेषेण संबन्धरूपः संस्कारो विधीयते । एतावन्मात्रेण इन्द्रसंबन्धापनयो न भविष्यति । तस्मात्सर्वेषामुपलक्षणम् ॥ ३१ ॥

पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणम् । अधि० १३ ।

## पात्नीवते तु पूर्ववत्त्वात् ॥ ३२ ॥

प्रातःसवने ऐन्द्रवायवमैत्रावरुणाश्विनग्रहाः द्विदेवत्याः । तेषां होमशेषः वचनादादित्यस्थालीं प्राप्य पश्चात्तृतीयसवने आग्रयणस्थालीं प्राप्नोति पश्चादेवं परम्परया द्विदेवत्यशेषआग्रयणस्थाल्यां स्थिते उपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णातीति वचनेनाग्रयणस्थालीस्थद्विदेवत्यशेषसहिताग्रयणस्थालीस्थसोमरसस्य पात्नीवते ग्रहणं विहितम् । तत्र होमशेषभक्षणे भक्षणमन्त्रे द्विदेवत्यानाम् ऊहो ऽस्ति न वेति संशये पूर्वपक्षमाह । पात्नीवतइति । पत्नीवते पात्नीवतशेषभक्षणमन्त्रे द्विदेवत्या अप्यूह्याः पूर्ववत्त्वात् पूर्वं हुतद्विदेवत्यशेषवत्त्वात् पूर्वाधिकरणसिद्धान्तवत् ॥ ३२ ॥

## ग्रहणाद्वा ऽपनीतः स्यात् ॥ ३३ ॥

सिद्धान्तमाह । ग्रहणादिति । ग्रहणात् पात्नीवतमाग्रयणाद्गृह्णातीति विधानात् । अपनीतः पूर्वदेवतासंबन्धविभेदवान् पत्नीवदर्थं गृहीतसोमः स्यात् । अयं भावः । पूर्वोदाहृतस्थले ऐन्द्रे समाश्लेषयेदिति तत्संयोगमात्रविधिः इह तु पात्नीवतमाग्रयणाद्गृह्णातीत्यनेन आग्रयणाद्गृहीतद्रव्यसामान्ये पत्नीवद्देवतासंबन्धसिद्धौ द्विदेवत्यशेषे ऽपि पत्नी-



वत्संबन्धसिद्धौ द्विदेवत्यसंबन्धनिवृत्तिस्त्वर्थसिद्धा । अतो द्विदेवत्या मन्त्रे नोपलक्षणीया इति ॥ ३३ ॥

पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणम् । अधि· १४ ।

## त्वष्टारं तूपलक्षयेत्पानात् ॥ ३४ ॥

तत्रैव होमशेषभक्षे त्वष्ट्रा पीतस्येति ऊहो न वेति संशये पूर्वपक्षमाह । त्वष्टारमिति । पानात् पात्नीवतहोममन्त्रे *अग्नाइ३ पत्नीवः३† सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्यत्र त्वष्ट्रा सह पानलिङ्गात् ॥ ३४ ॥

## अतुल्यत्वात्तु नैवं स्यात् ॥ ३५ ॥

सिद्धान्तमाह । अतुल्यत्वादिति । मन्त्रलिङ्गकल्पितस्य तस्य त्वष्टुर्देवतात्वविधेः पात्नीवतमाग्रयणाद्गृह्णातीति पत्नीवतः देवतात्वबोधकश्रुतेश्चातुल्यत्वात्तुल्यबलत्वाभावात् । एवमुक्तरीत्या ऊहः न स्यात् । त्वष्टुः साहित्यं समीपवृत्तित्वमात्रं‡ लिङ्गेन बोध्यतइति भावः ॥ ३५ ॥

पात्नीवतशेषभक्षणे त्रिंशतो ऽनुपलक्षणम् । अधि· । १५ ।

## त्रिंशच्च परार्थत्वात् ॥ ३६ ॥

तत्रैव पात्नीवतयागे, एभिरग्ने रथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः, पत्नीवतः त्रिंशतं त्रींश्च देवाननुष्वधमादयस्वेति याज्या । अस्या अर्थः । हे अग्ने एभिरुत्तरार्धे वक्ष्यमाणैर्देवैः सह रथं रथान् वा ऽऽवह्न याहि, ततः पत्नीवतः त्रिंशतं त्रीन् त्रयस्त्रिंशद्देवान् पत्नीवन्तं

---

* एचो ऽप्रगृह्यस्यादूराद्धूते पूर्वार्धस्यादुत्तरस्येदुतौ इति सूत्रस्थेन आमन्त्रिते छन्दसि प्लुतविकारो ऽयं वक्तव्य इति वार्तिकेन एकारपूर्वभागस्य आकारः प्लुतः उत्तरभागस्य इकारः । अग्ने इत्यर्थः ।

† पत्नीवच्छब्दस्य संबुद्धौ मतुवसो रु संबुद्धौ छन्दसीति सूत्रेण रुः ।

‡ सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यत्र सहभावे ऽपि वोढृत्वादर्शनात्तकृते ऽपि त्वष्टुः पातृत्वं नास्तीति कल्प्यते । किं च सत्यपि पातृत्वे देवतात्वं तस्य न संभवति । पात्नीवतमाग्रयणाद्गृह्णातीति विधौ तद्धितेन निरपेक्षस्य त्वष्टुः देवतात्वप्रतीत्या मन्त्रलिङ्गेन कल्पितदेवताया बाधविकल्पसमुच्चयानामशक्यकल्पनत्वात् । देवताया विग्रहवत्त्वस्य देवताधिकरणे निरसिष्यमाणत्वेन तस्याः पातृत्वाभावेन तेन देवतात्वस्य कल्पयितुमशक्यत्वाच्चेति ज्ञेयम् ।

च सोमरसेन मादयेति । अत्र मादनस्य पानं विना ऽसंभवात्तेषां पानं सिद्धम् । अतः मन्त्रे ते ऽप्युपलक्षणीया इति बहिः पूर्वपक्षे सिद्धान्तमाह । त्रिंशदिति । त्रिंशत् त्रयस्त्रिंशच्च नोपलक्ष्याः परार्थत्वात् मन्त्रस्य उत्पत्तिविध्यधीनत्वात् । तत्रोक्तत्रयस्त्रिंशदश्रवणादिति भावः । पत्नीवदुद्देशेन द्रव्ये दत्ते तेन स्वभागमध्ये अन्येभ्यो ऽपि दत्त इति स्तुतिसंभवात्तथा लिङ्गं नेयम् ॥ ३६ ॥

भक्षणे ऽनुवषट्कारदेवताया अनुपलक्षणम् । अधि॰ १६ ।

## वषट्कारश्च कर्तृवत् ॥ ३७ ॥

सोमयागे सर्वत्र सोमस्याग्ने वीहीत्यनुवषट्कृते जुहोतीति । नात्र पूर्ववत्परार्थत्वमतः अग्निना पीतत्वात्सो ऽपि भक्षमन्त्रे उपलक्षणीय इति बहिः पूर्वपक्षे सिद्धान्तमाह । वषडिति । वषट्कारः अनुवषट्कारदेवता ऽग्निः नोपलक्षणीयः मन्त्रे कर्तृवत् । यथा प्रकृतिभूते इन्द्रयागे प्रथमं होत्रा पीतस्य पश्चादध्वर्युपानार्थं पठिते ऽस्मिन् मन्त्रे होतृपीतस्येति न पठितं तथा ऽनुवषट्कारदेवतापाठो ऽपि नास्ति । अयं भावः । प्रकृताविन्द्रग्रहवेलायामिन्द्रोद्देशेनैव गृहीतो नाग्न्युद्देशेन न वा होत्रुद्देशेन । अतः मन्त्रे केवलमिन्द्रपीतस्येत्येव पाठः । तथैव विकृतावपीति ॥ ३७ ॥

अनैन्द्राणाममन्त्रकभक्षणम् । अधि॰ १७ ।

## छन्दोनिषेधस्तु सर्वगामित्वात् ॥ ३८ ॥

प्रथमपूर्वपक्षी द्वितीयपूर्वपक्षं दूषयति । छन्द इति । सूत्रे प्रकृतिविकृतिभावो नेति पूरणीयम् । सोमधर्माणामभिषवादीनां सर्वगामित्वात् । सर्वयागोद्देशेन समानविधानात् । ननु तृतीयसवने षोडशिग्रहे तृतीयस्य सवनस्य जगतीच्छन्दस इति मन्त्रे अनुष्टुप्छन्दस इति मन्त्रं सन्नमतीति सन्नमति ऊहं कुर्यादित्यूहविधानं प्रकृतिविकृतिभावे लिङ्गमित्यत्राह । छन्दोनिषेधस्तु जगतीच्छन्दोनिषेधस्तु वाचनिकः तावन्मात्रपर इति भावः । तस्मादनैन्द्रेषु विकृतित्वाभावाद् ऊहासंभवेन अमन्त्रभक्षणम् ॥ ३८ ॥

ऐन्द्राग्नभक्षस्यामन्त्रकत्वम् । अधि· १८ ।

## ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥ ३९ ॥

एवं स्थिते ऐन्द्राग्नमृतुपात्रेण गृह्णातीति स्थितम् ऐन्द्राग्नशेषभक्षणममन्त्रं समन्त्रं वेति संशये पूर्वपक्षमाह । ऐन्द्रेति । ऐन्द्राग्ने तच्छेषभक्षणे इन्द्ररूपलिङ्गस्य भावात् सत्त्वात् समन्त्रं स्यात् * ॥ ३९ ॥

## एकस्मिन्वा देवतान्तराद्विभागवत् ॥ ४० ॥

सिद्धान्तमाह । एकस्मिन्निति । एकस्मिन् एकदेवताकहविःशेषभक्षणे मन्त्रः ऐन्द्राग्नस्य देवतान्तराद् एकदेवतातो विलक्षणत्वात् । विभागवत् । आग्नेयं चतुर्धा करोतीतिवत् † ॥ ४० ॥

गायत्रच्छन्दस इत्यादिमन्त्राणामनेकच्छन्दस्के विनियोगः । अधि· १९ ।

## छन्दश्च देवतावत् ॥ ४१ ॥

तस्मिन्नेव भक्षमन्त्रे गायत्रच्छन्दस इति लिङ्गाद् यत्र स्तोत्रशस्त्रादौ गायत्रीच्छन्दस्कैव ऋक् तत्रैवायं मन्त्रः । यथा केवलेन्द्रशेषएवायं मन्त्रः न देवतान्तरसहिते तद्वदित्यभिप्रायवतः पूर्वपक्षे सूत्रमाह । छन्दश्चेति । छन्दश्च गायत्रादिच्छन्दः केवलं यत्र तत्रैव भक्षमन्त्रः पूर्वाधिकरणसिद्धदेवतावत् ॥ ४१ ॥

## सर्वेषु वा अभावादेकच्छन्दसः ॥ ४२ ॥

सिद्धान्तमाह । सर्वेष्विति । सर्वेषु नानाच्छन्दस्केषु सर्वेषु क्रतुषु भक्षमन्त्रः स्यात् । केवलेन्द्रयागप्रसिद्धिवत्केवलगायत्रच्छन्दस्कयागस्याभावात् । तथा च मन्त्रस्य कुत्रापि विनियोगो न स्यादिति भावः ॥ ४२ ॥

एकादशाधिकरणोक्तस्योपसंहारः ।

## सर्वेषां त्वेकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् ॥ ४३ ॥

द्वितीयपूर्वपक्षस्य पूर्वमेव दूषितत्वात् प्रथमपूर्वपक्षं दूषयन् इन्द्र-

---

* इन्द्राग्निभ्यां पीतो ऽपि इन्द्रपीत इति व्यपदेष्टुं शक्यते, यथा डित्थडवित्थयोर्माता डित्थमातेति । तथा चोहाभावे ऽपि समन्त्रकं भक्षणम् इति भावः ।

† देवतायाः पानाभावेन पाधातोर्दाने लाक्षणिकत्वेन समुदायपर्याप्तोद्देश्यताकदानस्यान्यतरेण व्यपदेशानर्हत्वाच्चतुर्धाकरणवदैन्द्राग्नादिष्वमन्त्रकं भक्षणमिति भावः ।

पीताधिकरणसिद्धान्तमाह । सर्वेषामिति । सर्वेषामैन्द्राणामनैन्द्राणां च एकमन्त्रत्वम् एकरूपे युक्तमन्त्रत्वम् अविकृतमिति यावत् । भक्तिपानत्वात् । भक्तिः लक्षणारूपा वृत्तिः पाने पिबतिधातौ यस्मिन्वाक्ये तस्वात् । अयं भावः इन्द्रपीतस्येति सोमविशेषणं सवनविशेषणं वा । सोमविशेषणत्वे तृतीयातत्पुरुषः सवनविशेषणत्वे इन्द्रेण पीतं यस्मिन् सवनइति बहुव्रीहिः । यद्यपि बहुव्रीहौ उभयपदलक्षणापत्त्या तत्पुरुषाल्लघ्यतया तत्पुरुषसमासमाश्रित्य सोमविशेषणत्वमेवोचितम् । तथा ऽपि प्रकृते इन्द्रस्य पानकर्तृत्वस्य नवमे निरस्यमानत्वात् पाधातोरगत्या त्यागार्थे लक्षणा इन्द्रपदस्येन्द्रोद्देश्यके लक्षणा इन्द्रोद्देश्यकत्यागकर्मीभूतः सोम इति वाच्यम् । तथा च तत्पुरुषे ऽपि लक्षणायाम् उभयत्र तुल्यत्वाद् गायत्रच्छन्दस इत्यस्य सवनविशेषणत्वात् तत्समीपवर्तिन इन्द्रपीतस्येत्यस्यापि सवनविशेषणत्वमुचितमिति * ॥ ४३ ॥

इति तृतीयस्याध्यायस्य द्वितीयः पादः ॥

उच्चैस्त्वादीनां वेदधर्मत्वम् । अधि० १ ।

## श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥

ज्योतिष्टोमे श्रूयते, उच्चैः ऋचा क्रियते उच्चैस्साम्ना उपांशु यजुषेति । उच्चैस्त्वादिधर्माः ऋगादिजातिमधिकृत्य प्रवृत्ताः किं वा ऋग्वेदादीन् अधिकृत्य प्रवृत्ता इति संशये पूर्वपक्षमाह । श्रुतेरिति । जाते ऋक्त्वादिजातौ अधिकारः स्यात् । उच्चैस्त्वादिधर्माः ऋक्त्वादिजात्यवच्छिन्ना इत्यर्थः । ऋचेति श्रुतेः । ऋगादिशब्दानाम् ऋक्त्वादिजातौ शक्तत्वादिति भावः ॥ १ ॥

## वेदो वा प्रायदर्शनात् ॥ २ ॥

सिद्धान्तमाह । वेद इति । वेदः उक्तविध्युद्देशः मन्त्रब्राह्मणसमुदायरूपवेदधर्मः ऋग्वेदेन यद्विहितं तत्सर्वमुच्चैरित्यर्थः । प्राये वाक्यो-

* तत्पुरुषे समासान्तोदात्तत्वापत्त्या श्रूयमाणस्य आद्युदात्तस्वरस्यासिद्धिप्रसङ्गः । बहुव्रीहौ तु इन्द्रशब्दस्याद्युदात्तत्वाद् बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरं निरुक्तस्वरसिद्धिः । अतो ऽपि बहुव्रीहिसमास इति निर्णेतुं शक्यतइति बोध्यम् ।

पक्रमे वेदशब्ददर्शनात् । प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत तस्मात्तेपानात्त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यस्ते तपोऽतप्यन्त तेभ्यस्तेपानेभ्यः* त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेदः वायोर्यजुर्वेदः आदित्यात्सामवेद इति उपक्रम्य तस्मादुच्चैर्ऋचा क्रियतइत्युपसंहारादसंजातविरोधित्वेन प्रबलत्वेन उपक्रमानुसारेण उपसंहारनयनमिति भावः ॥ २ ॥

## लिङ्गाच्च ॥ ३ ॥

ऋग्वेदेन वेदबोधो ऽपि अन्यत्र दृश्यतइत्याह । लिङ्गादिति । ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य इत्यत्र प्रथमचरणे ऋग्भिरित्यत्र ऋग्वेदे ऋग्व्यवहार इत्यत्र चतुर्थचरणे वेदैरिति बहुवचनं लिङ्गम् । अन्यथा वेदाभ्यामित्येव वदेत् ॥ ३ ॥

## धर्मोपदेशाच्च न हि द्रव्येण संबन्धः ॥ ४ ॥

इतश्च वेदधर्म इत्याह । धर्मेति । उच्चैः साम्नेति साम्नः पृथग् धर्मोपदेशात् । ऋच्यध्यूढं साम गायतीति ऋच्येव गेयत्वाद् उच्चैस्त्वसिद्धेः पुनर्विधानं व्यर्थं स्यादिति भावः । उक्तार्थमेवाह । न हीति । द्रव्येण साम्ना संबन्धः वक्तव्यो न हि ॥ ४ ॥

## त्रयीविद्याख्या च तद्विदि ॥ ५ ॥

हेत्वन्तरमाह । त्रयीति । त्रयी विद्या यस्य स त्रयीविद्यः । त्रयीति ऋक्सामयजुःषु प्रसिद्धः तथा ऽपि त्रयीत्यनेन न ऋक्सामयजुषो गृह्यन्ते किं तु त्रयीपदस्य वेदत्रये लक्षणां कल्पयित्वा तद्विदि त्रयीविद्य इत्याख्या भवति तथा प्रकृते ऽपि उपसंहारवाक्ये लक्षणया एकवाक्यत्वसंपादनमिति भावः ॥ ५ ॥

## व्यतिक्रमे यथाश्रुतीति चेत् ॥ ६ ॥

ननु एकमेव कर्म ऋग्वेदे यजुर्वेदे च विहितं तदङ्गमन्त्रो वेदध-

* कानजन्तमेतत् ।

संपत्ते उच्चैस्त्वोपांशुत्वयोरेकत्र प्राप्तौ विकल्पापत्तिः । मन्त्रो यदि ऋक्छन्दः तर्हि उच्चैस्त्वम् । यदि यजुः तर्हि उपांशुत्वमित्यविकल्प इत्यभिप्रायेण शङ्कते । व्यतीति । व्यतिक्रमे ऋचां यजुर्वेदे यजुषाम् ऋग्वेदे पाठे ऽपि यथाश्रुति ऋचि उच्चैस्त्वं यजुःषु उपांशुत्वं यथाश्रुतं तथैव पाठः । ऋक्त्वादिधर्मानपायात् ॥ ६ ॥

## न सर्वस्मिन्निवेशात् ॥ ७ ॥

आशङ्कां परिहरति । नेति । सर्वस्मिन् यजुर्वेदत्वावच्छिन्ने उपांशुत्वनिवेशात् । एवमितरत्र । अयं भावः । याजुर्वेदिकायामृच्यपि उपांशुत्वं वेदधर्मत्वात् । वेदद्वये कर्मविधाने ऽपि भूयस्त्वेन स्वरनिर्णय इति व्यवहिताग्रिमाधिकरणे वक्ष्यमाणत्वान्न विकल्पावकाश इति ॥ ७ ॥

## संयोगान्न प्रकरणेन बाध्यते ॥ ८ ॥

ननूपांशुत्वस्य यदि यजुर्वेदत्वमुद्देश्यतावच्छेदकं तर्हि तावद्वर्णसमुदायपर्याप्तत्वाद्वेदत्वस्य निखिलक्रतुषु उपांशुत्वं स्यात् । इत्थं च ज्योतिष्टोमसन्निधौ पाठात्प्रकरणबाधः । यजुर्धर्मत्वे यजुष्ट्वस्य प्रत्येकं विश्रान्तत्वादाग्नेय्या ऽऽग्नीध्रमितिवत्प्रकृतयजुषां ग्रहणसम्भव इत्यत्राह । वेदेति । तत्तद्वेदविहितक्रियात्वावच्छेदेन तत्तत्स्वरसंबन्धः प्राप्यमानः प्रकरणेन बाध्यतइति न, किं तु प्रकरणमेव बाधितं भवति वाक्येन । वेदसंयोगाद् उपक्रमे वेदसंबन्धात् । तथा चोक्ताशङ्कायामिष्टापत्तिरेवेति भावः ॥ ८ ॥

आधाने गानस्योपांशुत्वम् । अधि २ ।

## गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ९ ॥

यजुर्वेदे वसन्ते ब्राह्मणो ऽग्निमादधीतेति आधानं विहितं तत्रैव रथन्तरमभिगायते गार्हपत्यआधीयमानइति साम्नामङ्गत्वं श्रूयते । आधानाङ्गत्वेन पठ्यमानसाम्नि उच्चैस्त्वमुतोपांशुत्वमिति संशये सामवेदत्वावच्छिन्ने उच्चैस्त्वस्य क्लृप्तत्वादुक्तसाम्नां सामवेदपठितत्वादुच्चैस्त्वमिति बहिः पूर्वपक्षे सिद्धान्तमाह । गुणेति । गुणः अङ्गभूतं साम मुख्यं प्रधानमाधानं तयोर्धर्मयोः उच्चैस्त्वोपांशुत्वयोः व्यतिक्रमे विरोधे

वेदेन संबन्धः प्रतिपाद्यत्वरूपो यत्र सः । मुख्येन मुख्यानुसारेण नेयः । तदर्थत्वाद् अङ्गानां प्रधानार्थत्वात् ॥ ९ ॥

ज्योतिष्टोमस्य याजुर्वेदिकत्वम् । अधि॰ ३ ।

## भूयस्त्वेनोभयश्रुति ॥ १० ॥

ज्योतिष्टोमेन स्वर्गकामो यजेतेति यजुर्वेदे सामवेदे च श्रूयते । अत्र वेदद्वये प्रधानविधेः तुल्यत्वाद् द्वयोस्स्वरयोः विकल्प इति बहिः पूर्वपक्षे सिद्धान्तमाह । भूय इति । उभयत्र वेदद्वये श्रुतिर्यस्य कर्मणः तद् भूयस्त्वेन अङ्गभूयस्त्वेन प्रधानविधिरिति निर्णयम् । यथा सचिवो ऽल्पपरिवारेणैकत्र तिष्ठति, राजा ऽधिकपरिवारेण, तादृशे परिवाराधिक्येनायं राजेति निर्णयो भवति, तथा ऽत्रापीति भावः ॥ १० ॥

प्रकरणस्य विनियोजकत्वम् । अधि॰ ४ ।

## असंयुक्तं प्रकरणादितिकर्तव्यतार्थत्वात् ॥ ११ ॥

किमेतानि श्रुत्यादीनि त्रीण्येव विनियोजकानि उत अन्यान्यपि सन्तीति प्रश्ने आह । असंयुक्तमिति । श्रुत्यादित्रिभिरसंयुक्तं प्रकरणादुभयाकाङ्क्षारूपाद् विनियुज्यते । यथा दर्शपूर्णमाससंनिधौ समिधो यजति तनूनपातं यजतीत्यादिवाक्यानि फलरहितानि फलमाकाङ्क्षन्ति । दर्शपूर्णमासाभ्यामिति श्रुतकरणीभूतो यागः स्वव्यापारमाकाङ्क्षति । आकाङ्क्षाद्वयेन प्रयाजादिव्यापारसहितेन दर्शपूर्णमासरूपयागद्वयेन स्वर्गमुत्पादयेदिति वाक्यैकवाक्यतां कल्पयित्वा ऽङ्गाङ्गिभावः सिध्यति * । उक्तार्थएव हेतुमाह । इतिकर्तव्यतार्थत्वात् । प्रधानस्येतिकर्तव्यताकाङ्क्षासत्त्वात् । अयमङ्गानां फलाकाङ्क्षासत्त्वाच्चेत्यस्योपलक्षकः ॥ ११ ॥

स्थानस्य विनियोजकत्वम् । अधि॰ ५ ।

## क्रमश्च देशसाम्यात् ॥ १२ ॥

दर्शपूर्णमासे याजमानकाण्डे अनुमन्त्रणमन्त्रमध्ये द्वितीयस्थाने †दब्धिरस्यदब्धो भूयासमिति मन्त्रः पठितः । अस्य विनियोजकं प्रमाणं

* तदुक्तं भट्टपादैः । "स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायतइति ।

† दब्धिर्घातुकमायुधमिति माधवः ।

न पश्याम इति बहिराक्षेपे सिद्धान्तमाह । क्रम इति । क्रमः स्थानं मन्त्रस्य विनियोजकम् । देशसाम्यात् । स्थानैक्यात् । प्रथमः अग्नियागः द्वितीय उपांशुयागः । मन्त्रेष्वपि प्रथमः अग्नेरहं देवयेति द्वितीयो दब्धिरसीति द्वितीयस्थानैक्यम् । प्रकरणपठितस्य मन्त्रस्य विनियोगाकाङ्क्षासत्त्वात्तया ऽऽकाङ्क्षया अनेन मन्त्रेण उपांशुयागापूर्वमनुमन्त्रणद्वारा भावयेदिति वाक्यं कल्पयित्वा विनियोगः सिध्यतीति भावः * ॥ १२ ॥

समाख्याया विनियोजकत्वम् । अधि· ६ ।

## समाख्या चैवं तदर्थत्वात् ॥ १३ ॥

समाख्या च एवं विनियोजिका । तस्यास्तदर्थत्वात् । तत् क्रियाकर्तृसंबन्धकल्पनम् अर्थः यस्याः तत्त्वात् । यथा ऽऽध्वर्यवमिति समाख्या, अध्वर्युकर्तृकक्रियाप्रतिपादकमाध्वर्यवमिति तत्प्रतिपाद्यक्रियायामध्वर्युकर्तृकत्वं ज्ञापयति । अतः सा ऽपि विनियोजिका ॥ १३ ॥

श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वम् । अधि· ७ ।

## श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ १४ ॥

एवं षट् प्रमाणानि विनियोजकानि निरूप्य तेषां मध्ये द्वयोर्विरुद्धयोस्संनिपाते उत्तरोत्तरं दुर्बलमिति दर्शयति । श्रुतीति । षण्णां मध्ये द्वयोर्विरुद्धयोः समवाये एकत्र सन्निपाते पारदौर्बल्यमुत्तरोत्तरं पूर्वपूर्वाद् दुर्बलं पूर्वेणोत्तरस्य बाधः । अर्थविप्रकर्षाद् उत्तरप्रमाणस्य पूर्वप्रमाणकल्पकत्वादर्थस्य विनियोगस्य † विप्रकर्षाद्विलम्बात् । यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठतइत्यत्र इन्द्रलिङ्गेन इन्द्रोपस्थाने गार्हपत्यमिति द्विती-

* स्थानं द्विविधम् । पाठकृतमर्थकृतं च । पाठकृतमपि द्विविधम् । यथासंख्यपाठः सन्निधिपाठश्च । यथासंख्यपाठस्योदाहरणं दब्धिमन्त्रः । शुन्धध्वं दैव्याय कर्मणे इत्ययं मन्त्रः शोधनीयेषु वस्तुषु साधारणो भासते । तत्र सान्नाय्यपात्राणि कुम्भीशाखापवित्रादीन्यनन्तरेषु मातरिश्वन इत्यादिमन्त्रेष्ववभासन्ते इति सन्निधिना तत्पात्रप्रोक्षणे शुन्धध्वमिति मन्त्रो विनियुज्यते । अनुष्ठानसादेश्यात् पशुधर्माणामग्नीषोमीयाङ्गत्वम् । तदेवं क्रमस्य वैविध्यं द्रष्टव्यमिति माधवः ।

† अङ्गाङ्गित्वनिर्णयस्येति यावदित्यधिकः पाठः गो· दा· पु· ।

याश्रुत्या गार्हपत्योपस्थाने एवमुभयत्र द्वाभ्यां प्रमाणाभ्यां मन्त्रस्य विनियोगे प्राप्ते, मन्त्रे इन्द्रलिङ्गेन अनेनेन्द्रमुपतिष्ठतेति श्रुतिं कल्पयित्वेन्द्रोपस्थानाङ्गत्वं वाच्यम्। ततः पूर्वमेव गार्हपत्यमिति प्रत्यक्षश्रुत्या झटिति गार्हपत्योपस्थाने विनियुज्यतइति लिङ्गात्प्रबला । अवशिष्टानामपि सर्वाणेवम् ऊह्या * । विस्तरभयान्न लिख्यते ॥ १४ ॥

द्वादशोपसत्ताया अहीनाङ्गत्वम् । अधि॰ ८ ।

## अहीनो वा प्रकरणाद्गौणः ॥ १५ ॥

ज्योतिष्टोमे श्रुतम् । तिस्र एव साह्नस्य उपसदो द्वादशाहीनस्येति । अत्राहीनशब्दो योगरूढ्या ऽर्थस्मारकः उत केवलयोगेनेति संशये पूर्वपक्षमाह । अहीन इति । अहीनः वाक्यघटकतच्छब्दः गौणः केवलयौगिकः न हीनः अहीनः इति व्युत्पत्त्या सर्वक्रतुश्रेष्ठ इत्यर्थको ज्योतिष्टोमएव । प्रकरणात् । ज्योतिष्टोमप्रकरणात् । अहर्गणसाध्यक्रतुपरत्वे प्रकरणबाधात् । उक्तार्थतामादृत्य ज्योतिष्टोमएवोपसत्सु त्रित्वद्वादशत्वयोः विकल्पेन प्रयोगभेदेन समावेश इति भावः ॥ १५ ॥

---

* सा चेत्थम् । स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इत्यत्र समभिव्याहाररूपाद्वाक्यात्पूर्वोत्तरार्धयोरेकवाक्यत्वे सदनकरणस्थापनयोरुभयत्रायं कृत्स्नो मन्त्रो विनियोक्तव्य इति पूर्वपक्षः । शक्तिमकल्पयित्वा वाक्येन विनियोगासंभवाद् यावद् वाक्यं शक्तिं कल्पयित्वा श्रुतिं कल्पयति तावल्लिङ्गं श्रुतिं कल्पयित्वा विनियोजकं भवतीति वाक्यस्य शक्तिकल्पनाव्यवधानेन विप्रकर्षात्सन्निकृष्टेन लिङ्गेन सदनस्थापनयोः पूर्वोत्तरार्धयोर्विभज्यैव विनियोग इति सिद्धान्तः ॥ एवं वाक्यप्रकरणयोर्विरोधे प्रकरणस्य वाक्यकल्पनाधिक्येन विप्रकर्षात्सन्निकृष्टेन वाक्येन विनियोगः । तथा च अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायो ऽक्रातामित्यत्र अग्नीषोमावित्यस्य पूर्वपादोक्तरीत्या लिङ्गात्पौर्णमास्यङ्गत्वे सिद्धे इदं हविरित्यादेरपि तदङ्गत्वं, न तु दर्शपूर्णमाससाधारणात्प्रकरणाद्दर्शाङ्गत्वमपीति ज्ञेयम् । एवमिन्द्राग्नी इदं हविरजुषेतामित्यादावपि द्रष्टव्यम् ॥ प्रकरणस्थानयोर्विरोधे उदाहरणम् अभिषेचनीयाख्यराजसूयान्तर्गतसोमयागसन्निधौ पठिताः, अक्षैर्दीव्यति, राजन्यं जिनाति, शौनः शेपमाख्यापयतीत्यादिविहिता विदेवनादयः । तेषां सन्निधिपाठादभिषेचनीयाङ्गत्वे प्राप्ते प्रकरणाद्राजसूयाङ्गत्वम् । स्थानस्य प्रकरणकल्पनाधिक्येन विनियोजकत्वे प्रकरणापेक्षया विप्रकृष्टत्वात् । अतस्तदन्तर्गतसर्वयागाङ्गत्वं विदेवनादीनाम् ॥ शुन्धध्वं दैव्याय कर्मणे इत्ययं मन्त्रः पौरोडाशिकमिति समाख्यया पुरोडाशकाण्डोक्तानामुलूखलादीनां शोधने न विनियुज्यते । किं तु स्थानात्सान्नाय्यपात्रशोधने एव । पूर्वोक्तरीत्या समाख्यापेक्षया स्थानस्य सन्निकृष्टत्वादित्यन्यत्र विस्तरः ॥

## असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ॥ १६ ॥

सिद्धान्तमाह। असंयोगादिति। मुख्यस्य रूढ्यर्थस्य अहःसमूहसाध्यक्रतुत्वस्य ज्योतिष्टोमे असंयोगाद् बाधात्। तस्माज् ज्योतिष्टोमप्रकरणादपकृष्येत विच्छिद्येत। अह्नः खः क्रतौ, अहर्गणसाध्ये क्रतौ वाच्ये खप्रत्ययः स्यादिति खप्रत्ययान्तस्य उक्तार्थे शक्तिप्रतिपादनात् तद्बाधादुत्कर्ष इति भावः ॥ १६ ॥

कुलायादौ प्रतिपदोरुत्कर्षः। अधि० ६।

## द्वित्वबहुत्वयुक्तं वा ऽचोदनात्तस्य ॥ १७ ॥

ज्योतिष्टोमे श्रूयते, युवं हि स्थः स्वर्पती इति द्वयोः प्रतिपदं कुर्यादेते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः प्रतिपदं कुर्यादिति। युवं युवां स्वर्पती स्वर्गाधिपती स्थ इति प्रथममन्त्रार्थः। एते यजमानाः स्वर्गप्सवः चन्द्रतुल्या इत्यपरार्थः। युवमितिद्विवचनान्तघटितो मन्त्रः यजमानद्वयकर्तृकप्रयोगे स्तोत्रशस्त्रादौ प्रथमं पठेदिति वाक्यार्थः। तथैवापरो वाक्यार्थः। इमौ प्रकरणे निविशेते किं वा विच्छिद्येते इति संशये सिद्धान्तेनोपक्रमते। द्वित्वेति। द्वित्वबहुत्वयुक्तं द्विवचनबहुवचनयुक्तं मन्त्रद्वयम्। तस्मादपकृष्यतइति पूर्वसूत्रस्यमनुषज्यते। ज्योतिष्टोमाद्विच्छिद्य, एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति विहितद्विकर्तृके सत्रे बहुकर्तृके च निविशतइत्यर्थः। ज्योतिष्टोमे तस्य द्विकर्तृकत्वस्य बहुकर्तृकत्वस्य च अचोदनादविधानात् ॥ १७ ॥

## पक्षेणार्थकृतस्येति चेत् ॥ १८ ॥

पूर्वपक्षमाह। पक्षेणेति। पक्षेण असामर्थ्येन हेतुना अर्थकृतस्य आर्थिकयजमानद्वयस्य संभव इति शेषः। ज्योतिष्टोमस्यावश्यकर्तव्यत्वाद् एकस्य असामर्थ्येन अर्थादेव यजमानद्वयं त्रयं वा सिध्यतीति तत्र मन्त्रद्वयं निविशतामिति भावः ॥ १८ ॥

## न प्रकृतेरेकसंयोगात् ॥ १९ ॥

ज्योतिष्टोमेन स्वर्गकामो यजेतेत्याख्यातैकवचनेनैकत्वस्य विहितत्वादित्यभिप्रायेण दूषयति। नेति। प्रकृतेः ज्योतिष्टोमस्य एकेन एककर्तृ-

संयोगात् परिच्छेदात् । विहितैकत्वस्यार्थिकद्वित्वेन न बाध इति भावः ॥ १९ ॥

जाघन्याः प्रकरणादनुत्कर्षः । अधि० १० ।

## जाघनी चैकदेशत्वात् ॥ २० ॥

जाघन्या पत्नीः* संयाजयन्तीति दर्शपूर्णमासयोः श्रुतम् । जाघनी पशुपुच्छम् । अस्य प्रकृतिभूतदर्शपूर्णमासयोर्निवेश उताग्नीषोमीयपशाविति संशये पूर्वपक्षमाह । जाघनीति । जाघनी जाघनीविधिः पशावपकृष्येत । एकदेशत्वात् । पश्ववयवत्वात् । अयं भावः । यथोत्तरार्धात्स्विष्टकृते ऽवद्यतीत्यत्र उत्तरार्धस्य अवयवस्य अवयविसापेक्षत्वेन प्रकृताग्नेयादिपुरोडाशा गृहीतास्तथा जाघन्याः पशुरूपावयविसापेक्षत्वाद् दर्शपूर्णमासे पशोरभावाद् उत्तत्रोत्कर्ष इति ॥ २० ॥

## चोदना वा अपूर्वत्वात् ॥ २१ ॥

सिद्धान्तमाह । चोदनेति । चोदना जाघन्याः पत्नीसंयाजाङ्गत्वेन चोदना, विधिरयम् । अपूर्वत्वात् । अप्राप्तत्वात् ॥ २१ ॥

## एकदेश इति चेत् ॥ २२ ॥

नन्ववयवः अवयविनं विना न सम्भवतीति तमवश्यमाक्षिपेदिति शङ्कते । एकेति । एकदेशः अवयवः अवयविसापेक्ष इति पूरणीयम् ॥ २२ ॥

## न प्रकृतेरशास्त्रनिष्पत्तेः ॥ २३ ॥

परिहरति । नेति । नावयव्यपेक्षा । प्रकृतेर्दर्शपूर्णमासस्य तत्संबन्धिजाघन्याः अशास्त्रनिष्पत्तेः असंस्कृतस्यापि क्रयादिना तावन्मात्रस्य निष्पत्तेः । अयं भावः । उत्तरार्धात्स्विष्टकृते इत्यत्र उत्तरार्धशब्दः कस्येत्यवयविनं नित्यमाकाङ्क्षति । तथा न जाघनीशब्दश्रवणानन्तरं कस्येत्याकाङ्क्षा ऽस्ति । तस्य पशुपुच्छे रूढत्वादिति ॥ २३ ॥

* पत्नीशब्दो ऽत्र आहुतिचतुष्टयात्मकस्य कर्मणो नामधेयैकदेशः । अत एव श्रूयते, पञ्च प्रयाजा इज्यन्ते, चत्वारः पत्नीसंयाजा इति । तत्र तृतीयाहुतौ देवपत्नीनां देवतात्वात्तद्द्वारा कर्मनाम्नः पत्नीसंयाजशब्दस्य प्रवृत्तिरिति माधवीये जै० न्या० वि० ।

संतर्दनस्य संख्यानिवेशः । अधि० ११ ।

## संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ २४ ॥

ज्योतिष्टोमे अभिषवणफलके प्रकृत्य श्रूयते, न संतृणत्त्यसंतृण्णे हि हनू अथो खलु दीर्घसोमे संतृद्याद्धृत्यादिति । न संतृणत्ति फलकयोर्मेलनं न कुर्यादित्यर्थः । दीर्घसोमे इति वाक्यस्य प्रकरणे निवेश उतान्यत्रेति संशये पूर्वपक्षमाह । सम्मिति । संतर्दनं तयोः परस्परसंयोगः प्रकृतौ निविशते । दीर्घस्य यजमानस्य सोम इतिषष्ठीतत्पुरुषसंभवादनर्थलोपाद् उक्तार्थस्याबाधात् । नन्वसंतर्दनमपि प्रकृतौ श्रूयते कथं द्वयोर्निवेश इत्यत आह । क्रयणवदिति । यथा गवा ते क्रीणातीति क्रयस्य गवैव सिद्धौ पुनर्वाससा क्रीणातीत्यादिभिः सह गौर्विकल्प्यते तथाऽत्रापि । न च दशद्रव्याणां समुच्चयस्य द्वादशे सिद्धान्तात् कथं विकल्पः कथं वा क्रयवदिति दृष्टान्त इति वाच्यम् । द्वादशे विकल्प इति पूर्वपक्षमतं गृहीत्वैव दृष्टान्तसंकीर्तनात् ॥ २४ ॥

## उत्कर्षो वा ग्रहणाद्विशेषस्य ॥ २५ ॥

सिद्धान्तमाह । उत्कर्ष इति । प्रकरणादुत्कर्षः दीर्घसोमइति विशेषस्य ग्रहणात् ॥ २५ ॥

## कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥ २६ ॥

असंतर्दनं नित्यम् । पञ्चदशसामिधेनीवत् । वैश्यकर्तृकत्वे निमित्ते तत्रैव साप्तदश्यं तथा असंतर्दनं नित्यं संतर्दनं कर्तृविशेषे निमित्तइत्यभिप्रायेण शङ्कते । कर्त्रिति । कर्तृतो विशेषस्य यजमाने दीर्घत्वस्य तन्निमित्तत्वात् संतर्दननिमित्तत्वात् ॥ २६ ॥

## क्रतुतो वाऽर्थवादानुपपत्तेः स्यात् ॥ २७ ॥

सिद्धान्ती पूर्वपक्षं निराह । क्रतुत इति । क्रतुतः विशेषस्य दीर्घकालसाध्यत्वस्य संतर्दननिमित्तत्वं, न कर्तृतः । अर्थवादानुपपत्तेः । धृत्याइत्यर्थवादस्य कर्तृविशेषपक्षे ऽसंभवः । तथा हि । चिरकालसाध्यक्रतौ पुनः पुनः ग्रावभिः हन्यमाने फलकयोः विश्लिष्टयोः दारणशङ्का

भवति । परस्परं संयोगे परस्पराश्रयेण शिथिलं न भवेत् । अतः तत्र संतर्दनं कार्यमित्यर्थवादः संगतः । न हि यजमानदैर्घ्यं धारणे निमित्तमिति ॥ २७ ॥

## संस्थाश्च कर्तृवद्धारणाविशेषात् ॥ २८ ॥

संस्थासु संतर्दनं निविशनइति सिद्धान्त्यभिप्रायं ज्ञात्वा तमाक्षिपति । संस्था इति । संस्था अग्निष्टोमादिसंस्थाः न संतर्दनाश्रयाः प्रकृतौ कर्तृवत् । यथा कर्तुर्दैर्घ्यं धारणे अप्रयोजकं तथा प्रकृतौ यावान् सोमः तावानेव संस्थास्वपीति अर्थवादप्रतिपाद्यधारणार्थस्य संस्थायामप्यविशेषात् । तथा चार्थवादप्रतिपाद्यार्थे न स्वरस इति भावः ॥ २८ ॥

## उक्थ्यादिषु वा ऽर्थस्य विद्यमानत्वात् ॥ २९ ॥

सिद्धान्त्याह । उक्थ्यादीति । उक्थ्यादिसंस्थासूत्कर्षः संभवति तास्वर्थस्य संतर्दनफलस्य दृढधारणस्य विद्यमानत्वात् । उक्थ्यादिषु यागाभ्यासवृद्धिरस्ति । तच्च द्रव्याधिक्यमन्तरा न संभवति । सोमाधिक्ये अभिषवाधिक्यात्संतर्दनं सफलमिति भावः ॥ २९ ॥

## अविशेषात् स्तुतिर्व्यर्थेति चेत् ॥ ३० ॥

ज्योतिष्टोमे दशमुष्टिपरिमितः सोम उक्थ्यादिष्वपि तावानेव अतिदेशेनायाति कुतो ऽधिकः सोमः । सोमयागाभ्यासवृद्धिस्त्वल्पं गृहीत्वैव पूरणीयेति नाभिषवाधिक्यम् । धृत्यादीति स्तुतिर्व्यर्थेवेति शङ्कते । अविशेषादिति । अविशेषात् । सोममानाविशेषात् । अधिकद्रव्यापादकशास्त्राभावादिति भावः ॥ ३० ॥

## स्यादनित्यत्वात् ॥ ३१ ॥

उक्थ्यादावर्थवादसाफल्यं द्रढयति । स्यादिति । सोमस्याधिक्यमुक्थ्यादिषु शास्त्रीयं स्यात् । दशमुष्टिपरिमाणस्यानित्यत्वात् । प्रजाभ्यस्त्वेत्युपसमूहतीत्यधिकसोमस्यापि विधानादिति अवदानवृद्धावभिषवस्यापि वृद्धेर्धृत्यादृत्यर्थवादः सफल इति भावः ॥ ३१ ॥

प्रवर्ग्यनिषेधस्य प्रथमप्रयोगविषयत्वम् । अधि० १२ ।

## संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ ३२ ॥

ज्योतिष्टोमे श्रुतं, न प्रथमयज्ञे प्रवृञ्ज्यादिति । न प्रवृञ्ज्यात् प्रवर्ग्याख्यं कर्म न कुर्यात् । ज्योतिष्टोमस्य यावत्प्रयोगेषु निषेधः उत प्रथमप्रयोगइति संशये पूर्वपक्षमाह । संख्येति । संख्यायुक्तं प्रथमपदयुक्तं क्रतोः संबन्धित्वेन विधायकं प्रकरणात् । नानृतं वदेदितिवत् । एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इत्यनेन ज्योतिष्टोमवाचकत्वे सिद्धे प्रथमयज्ञमात्रे निवेशादिति भावः ॥ ३२ ॥

## नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥ ३३ ॥

सिद्धान्तमाह । नैमित्तिकमिति । चतुर्षु वेदेषु न प्रथमसंज्ञकः क्रतुरस्ति । किं तु कर्तृसंबन्धाद् आद्यप्रयत्नसंबन्धात् प्राथम्यं वस्तुनिष्ठं नैमित्तिकं द्वितीयकृत्यादिसापेक्षम् । कथं ज्ञातं तत्राह । लिङ्गस्य अर्थनिर्णायकव्यवहारस्य तन्निमित्तत्वाद् द्वितीयकृत्यादिसापेक्षत्वस्य लोके दृष्टत्वात् । प्रथमशब्दस्य आद्यकृत्यधीनप्रथमप्रयोगे रूढत्वात्प्रथमप्रयोगेणैव संबध्यते निषेध इति भावः * ॥ ३३ ॥

पौष्णपेषणस्य विकृतौ निवेशः । अधि० १३ ।

## पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥ ३४॥

दर्शपूर्णमासयोः श्रूयते, तस्मात्पूषा प्रपिष्टभाग इति । पूषोद्देश्यकं द्रव्यं पेषणं कृत्वा देयमित्यर्थः । इदं दर्शपूर्णमासादुत्कृष्यते न वेति संशये सिद्धान्तमेवाह । पौष्णमिति । पौष्णं पूषोद्देश्यकद्रव्यसंबन्धि यत्पेषणं तद्विकृतौ पौष्णं चरुमित्यादौ प्रतीयेत । प्रकृतौ अचोदनात् पूष्णः अङ्गत्वेनाविधानात् ॥ ३४ ॥

---

* ननु सप्तसंस्थायुक्तस्य ज्योतिष्टोमस्य प्रथमसंस्थारूपे ऽग्निष्टोमे ऽयं निषेधः पर्यवस्यति । तथा च अग्निष्टोमे प्रवृणक्तीतिविधिव्याकोप इति चेत् । मैवम् । कामं तु यो ऽनूचानः स्यात्तत्र प्रवृञ्ज्यादिति श्रवणाद् विधेरनूचानकर्तृके ऽग्निष्टोमे प्रवृत्तिः तदितरकर्तृके च निषेधस्येति कल्पनात् ।

पौष्णपेषणस्य चरावेव निवेशः । अधि॰ १४

## तत्सर्वार्थमविशेषात् ॥ ३५ ॥

पौष्णं चरुम् । पौष्णं श्याममालभेत । पौष्णं द्वादशकपालमिति चरुपशुपुरोडाशा विहिताः । सर्वत्र पेषणमुत चरावेवेति संशये पूर्वपक्षमाह । तदिति । तत् पेषणं सर्वार्थम् अविशेषात् । विशेषाश्रवणात् ॥ ३५ ॥

## चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रति-षेधात्पशौ न स्यात् ॥ ३६ ॥

सिद्धान्तमाह । चराविति । चरौ पेषणमनेन विधीयते । पुरोडाशे तु अर्थेन पुरोडाशसिद्धिरूपकार्येणैव पेषणमुक्तम् । पशावर्थविप्रतिषेधाद् हृदयावदानादिरूपक्रियाकलापलोपापत्तेः । पशोः पेषणे सर्वमेकं पिण्डं भवेत् । ततः किम् । हृदयं जिह्वा इत्यादि भेदाभावेन पृथक् पृथग् अवयवावदानादि लुप्येत । तस्माच्चरावेव पेषणम् ॥ ३६ ॥

## चरावपीति चेत् ॥ ३७ ॥

ननु चरावपि विप्रतिषेधः विशदसिद्धौदने चरुशब्दप्रयोगात् । पेषणानन्तरं अपशो यवागूः स्याद् न चरुरिति शङ्कते । चरावपीति । विप्रतिषेधोऽस्तीति पूरणीयम् ॥ ३७ ॥

## न पक्तिनामत्वात् ॥ ३८ ॥

नेति । चरौ न विरोधः । चरुपदस्य पक्तिनामत्वात् । स्थाल्यधिकरणकपाकविशेषनामत्वात्तस्याः पिष्टपाकेऽपि सत्त्वादितिभावः ॥ ३८ ॥

पौष्णपेषणस्यैकदेवत्ये निवेशः । अधि॰ १५ ।

## एकस्मिन्नेकसंयोगात् ॥ ३९ ॥

सोमापौष्णं चरुं निर्वपतीत्यत्रापि पेषणं स्याद् न वेति संशये सिद्धान्तेनोपक्रमते । एकस्मिन्निति । एकस्मिन्नेकपूषदेवताके चरौ पेषणम् । पूषा प्रपिष्टभाग इत्येकेन पूष्णा संयोगात् ॥ ३९ ॥

## धर्मविप्रतिषेधाच्च ॥ ४० ॥

धर्मयोः सोमस्यापेषणं पूष्णश्च पेषणमिति तयोर्विप्रतिषेधाद् विरोधात् ॥ ४० ॥

## अपि वा सद्वितीये स्याद् देवतानिमित्तत्वात् ॥ ४१ ॥

पूर्वपक्षमाह । अपि वेति । अपि वेति पक्षान्तरद्योतकम् । सद्वितीये सोमापौष्णे ऽपि पेषणं स्यात् । पेषणस्य देवतानिमित्तत्वात् पूषदेवतासद्भावमात्रस्य निमित्तत्वात् । अयं भावः । आग्नेयं चतुर्धा करोतीत्यत्र इतरसापेक्षत्वे तद्धितोत्पत्तिर्न स्यादिति स्थितम् । इन्द्रपीतस्येत्यत्र इतरसापेक्षत्वे समासो न स्यादिति स्थितम् । इह तु तयोर्दोषयोरभावात्केवलं पूष्णः सत्तामात्रस्य पेषणे कारणत्वात् तस्य सत्त्वाद् द्विदेवत्ये पेषणमिति ॥ ४१ ॥

## लिङ्गदर्शनाच्च ॥ ४२ ॥

द्विदेवत्ये पेषणमित्यत्र लिङ्गं दर्शयति । लिङ्गेति । सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकाम इति वाक्ये, नेमपिष्टम् अर्धपिष्टम्, अत्र पूष्णो ऽर्धभागसत्त्वात्तत्पेषणकथनं लिङ्गं द्विदेवत्ये ऽपि पेषणे ॥ ४२ ॥

## वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद् द्वि-चरावपेषणं भवति ॥ ४३ ॥

नन्विदं विधिवाक्यं लिङ्गं कथं भवेदत्राह । वचनादिति । यद्यीदं वचनं भवेत् तदा वचनाद् एतद्वचनात् सर्वेषु सोमापौष्णसंबन्धि पशुपुरोडाशचरुषु पेषणं भवेत् । कुतः । तं प्रति सर्वोद्देशेन शास्त्रवत्त्वात् । उक्तवचनतात्पर्यात् । ननु चरुशब्दस्य श्रूयमाणत्वात् कथं सर्वेषु पेषणं तत्राह । अर्थाभावाच्चरुपदार्थविवक्षाया अभावाच्चरौ चरुमात्रे अपेषणं पेषणाभावः किं तु पशावपि स्यात् । अतो न पेषणविधिः किं तु लिङ्गमिति । अयं भावः । पेषणविधिपक्षे चरुमुद्दिश्य विधीयते उत सोमापौष्णमुद्दिश्य उत विशिष्टमुद्दिश्य । नाद्यः । ऐन्द्रं चरुम् आदित्यं चरुमित्यत्रापि तदापत्तेः । न द्वितीयः । ऐन्द्रापौष्णे तदभावप्रसङ्गात् । सोमापौष्णपशावपि पेषणप्रसङ्गाच्च । न तृतीयः । विशिष्टोद्देशे वाक्यभेदप्रसङ्गात् । तस्मान्नेदं पेषणविधायकं वाक्यं किं तु पशुफलमुद्दिश्य यागमात्रविधानम् । अर्धपेषणं तु पूषसंबन्धेन प्राप्तमनूद्यते । अत एव लिङ्गमपि ॥ ४३ ॥

## एकस्मिन्वा ऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥ ४४ ॥

सिद्धान्तमाह । एकस्मिन्निति । एकस्मिन् एकदेवताकएव पेषणम् अर्थस्य यागस्य धर्मत्वाद् अङ्गत्वात् । उभयोः सोमापूष्णोः यागाङ्गत्वेनाचोदितत्वात् तद्यागे पेषणं न स्याद् ऐन्द्राग्नवद् ऐन्द्राग्ने चतुर्धाकरणाभाववत् । अयं भावः देवताया हविर्भक्षणादीनां निराकरिष्यमाणत्वाद्देवतार्थत्वाभावादगत्या यागार्थत्वं वाच्यम् । तथा च केवलपूषदेवताकएव वाक्येन विधानात्तत्रैवेति सिद्धम् ॥ ४४ ॥

## हेतुमात्रमदन्तत्वम् ॥ ४५ ॥

नन्वदन्तको हीति देवतार्थत्वं दर्शयत्यत्राह । हेत्विति । अदन्तत्वं हेतुमात्रं केवलमर्थवादः । तेन ह्यन्नमितिवत् ॥ ४५ ॥

## वचनं परम् ॥ ४६ ॥

ननु नेमपिष्टमिति लिङ्गस्य का गतिस्तत्राह । वचनमिति । परम् उक्तं वाक्यं वचनं तावद्गुणविशिष्टकर्मणः अपूर्वस्य पशुफलहेतोर्विधायकम् ॥ ४६ ॥

इति जैमिनिसूत्रवृत्तौ तृतीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

निवीतस्यार्थवादत्वम् । अधि० १ ।

## निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥

दर्शपूर्णमासयोः श्रुतं, निवीतं मनुष्याणां प्राचीनावीतं पितृणाम् उपवीतं देवानाम् उपव्ययतइति । अत्र निवीतं मनुष्याणामित्यर्थवादो विधिर्वा । विधित्वे ऽपि अयं पुरुषार्थ उत क्रत्वर्थ इति संशये पूर्वपक्षमाह । निवीतमिति । निवीतमिति विधिः मनुष्यधर्मः मनुष्याङ्गम् । शब्दस्य मनुष्याणामिति षष्ठ्यन्तशब्दस्य तत्प्रधानत्वात् मनुष्यप्राधान्यगमकत्वात् । दध्नेन्द्रियकामस्य जुहुयादित्यत्र षष्ठ्यन्तस्य प्राधान्यगमकत्वस्य क्लृप्तत्वादिति भावः ॥ १ ॥

## अपदेशो वा ऽर्थस्य विद्यमानत्वात् ॥ २ ॥

सिद्धान्ती शङ्कते । अपदेश इति । अप पश्चाद्दिश्यते ज्ञाप्यत इत्यपदेशः अनुवादः । अर्थस्य निवीतरूपस्य विद्यमानत्वात् । प्रमाणान्तरेण प्राप्तत्वात् । कार्यानुष्ठानवेलायां सौकर्यार्थं निवीतं लोकसिद्धमिति भावः ॥ २ ॥

## विधिस्त्वपूर्वत्वात्स्यात् ॥ ३ ॥

पूर्वपक्षी पुनराक्षिपति । विधिरिति । विधिरेवायं कुतः अपूर्वत्वात् । लोकसिद्धं निवीतमिति पूर्वोक्तं न, तथा लोके नियमाभावादिति भावः ॥ ३ ॥

## स प्रायात्कर्मधर्मः स्यात् ॥ ४ ॥

यच्चोक्तं विधिरिति तावन्मात्रमङ्गीकृत्य पुरुषार्थत्वमसहमानो ऽपरः शङ्कते । स प्रेति । स निवीतमिति विधीयमानो ऽर्थः कर्मधर्मो दर्शपूर्णमासाङ्गं स्यात् प्रायात्प्रकरणेन तदङ्गत्वप्रतिपादनात् ॥ ४ ॥

## वाक्यस्य शेषवत्त्वात् ॥ ५ ॥

यच्चोक्तं प्रकरणात्क्रत्वङ्गमिति तदस्तु तथा ऽपि प्रयाजादिवत्, किन्तु क्रतुकर्तुः अध्वर्योरयं धर्म इत्यपरः शङ्कते । वाक्यस्येति । वाक्यस्य निवीतमिति वाक्यस्य शेषवत्त्वाद् अध्वर्युकाण्डमितिसमाख्यावत्त्वात् । निवीतानुष्ठानमध्वर्योरेवेति शेषः । तथा च प्रकरणवत्समाख्या ऽप्यबाधिता भवतीति भावः ॥ ५ ॥

## तत्प्रकरणे यत्तत्संयुक्तमविप्रतिषेधात् ॥ ६ ॥

निवीतमिति वाक्येन पुरुषाङ्गत्वं प्राप्तं तद् बाधित्वा दुर्बलाभ्यां प्रकरणसमाख्याभ्यां न क्रत्वर्थत्वं संभवति । किन्तु क्रतावेव मानुषं कर्मास्ति तत्र मनुष्याणामित्यस्य लक्षणा । तदङ्गमिदं निवीतमित्यपरः शङ्कते । तदिति । तत्प्रकरणे दर्शपूर्णमासप्रकरणे यदन्वाहार्यदक्षिणादानादि संयुक्तं पठितं तत्संयुक्तं तदङ्गमिति अविप्रतिषेधाद् वाक्यप्रकरणयोस्त-

न्नाविरोधाद् उभयमप्यनुगृहीतं भवति । तत्राध्वर्युणा कृते समाख्या ऽप्यनुगृहीता भवतीति भावः ॥ ६ ॥

## तत्प्रधाने वा तुल्यवत्प्रसंख्यानादितरस्य तदर्थत्वात् ॥ ७ ॥

मनुष्याणामित्यस्य मनुष्यप्रधाने कर्मणि लक्षणामभ्युपेत्य क्रतुसम्बन्धमसहमानः परः शङ्कते । तदिति । तत्प्रधाने क्रत्वसम्बन्धे केवलमनुष्यप्रधाने आतिथ्यादौ अङ्गं प्रकरणस्यात्यन्तं बाध एव । कुतः तुल्यवत्प्रसंख्यानात् । यथा उपवीतं देवानामित्यत्र देवकर्मणि दर्शपूर्णमासे उपवीतस्याङ्गत्वं तथैव निवीतं मनुष्याणामित्यनेन मनुष्यप्रधानकर्मण्यङ्गत्वबोधनात् । इतरस्य मनुष्याणामिति षष्ठ्यन्तस्य तदर्थत्वात् प्रकरणादिनिरपेक्षमानुषकर्मणः प्रधानार्थत्वात् ॥ ७ ॥

## अर्थवादो वा ऽप्रकरणात् ॥ ८ ॥

सिद्धान्तमाह । अर्थवादो वेति । अर्थवादः उपव्ययतइतिविधिशेषः अर्थवादः अप्रकरणाद् आतिथ्यस्याप्रकृतत्वात् । अयं भावः मनुष्याणामित्येव श्रूयते, न तु मनुष्यकर्मणामिति लक्षणायां मानाभाव इति ॥ ८ ॥

## विधिना चैकवाक्यत्वात् ॥ ६ ॥

उक्तार्थे साधकान्तरमाह । विधिनेति । विधिना उपवीतविधिना एकवाक्यत्वं संपद्यते अर्थवादपक्षे । अन्यथा निवीतं मनुष्याणामिति उपव्ययतइति भिन्नविषयत्वाद् वाक्यं भिद्येत । नन्वर्थवादरूपत्वे उपवीतस्तावकत्वं निवीतवाक्यस्य वक्तव्यं, तन्न संभवतीति चेदुच्यते । यतः निवीतधर्मो मनुष्याणामतो ऽयं जघन्यः उपवीतं देवधर्मः श्रेष्ठः अत उपव्ययतइति स्तुतिसंभवात् ॥ ९ ॥ इत उर्ध्वं षट् सूत्राणि पार्थसारथिमिश्रप्रभृतिभिः आदृतानि भाष्ये अनुपलब्धानि* त्यक्तानि ।

दिग्विभागस्यानुवादत्वम् । अधि॰ २ ।

## दिग्विभागश्च तद्वत्संबन्धस्यार्थहेतुत्वात् ॥ १० ॥

ज्योतिष्टोमे श्रूयते, प्राचीनवंशं करोति देवमनुष्या दिशो

* अत्र वार्त्तिककाराः । "अतः परं षट् सूत्राणि भाष्यकारेण न लिखितानि तत्र व्याख्यातारो विवदन्ते । केचिदाहुर्विस्मृतानीति । लिखितो ग्रन्थः प्रलीन इत्य-

व्यभजन्त प्राचीं देवा दक्षिणां पितरः प्रतीचीं मनुष्या इति । अत्र प्रतीचीं मनुष्या व्यभजन्तेति पूर्ववृत्तान्तकथनेन मनुष्यैः प्रतीचीदिग्विभागः कार्य इति विधिः कल्प्य इति पूर्वपक्षे निवीताधिकरणपक्षः सर्वोऽप्यत्रोह्य इत्याह । दिगिति । तद्वत् । निवीताधिकरणवत् । अस्य पृथक्सूत्रकरणे बीजमाह । संबन्धस्यार्थेति । संबन्धस्य मनुष्याणां प्रतीचीदिक्संबन्धस्य अर्थहेतुत्वात् सुखसाधन-

---

परे । फल्गुत्वादुपेक्षितानीत्यपरे । अनार्षत्वादित्यन्ये । तथा च दिग्विभागश्च तद्वदिति निवीताधिकरणातिदेशस्तदानन्तर्यादुपपद्यते इति । वृत्त्यन्तरकारैस्तु सर्वं व्याख्यातानि । सन्ति च जैमिनेरेवंप्रकाराण्यपि अनत्यन्तसारभूतानि सूत्राणि । व्यवहितातिदेशाश्च पानव्यापच्च तद्वदित्यादिष्वाश्रिताः । तस्मात् सूत्रमात्रं व्याख्येयम् । तत्र कैश्चित् त्रीणि अधिकरणानि कल्पितानि । अपरैश्चत्वारि" इति । तानि च सूत्राणि वार्तिकमनुसृत्य संक्षेपेण व्याख्यायन्ते । उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥ १ ॥ शास्त्रदीपिकाकारादिभिः अधिकरणचतुष्टयं कल्पयित्वैव व्याख्यातत्वात्तथैव व्याख्यायते । पूर्वाधिकरणे दर्शपूर्णमासयोर्विधीयमानत्वेनोदाहृतमुपवीतं दर्शपूर्णमासयोरेवावतिष्ठते उत सर्वकर्मार्थमिति संशये पूर्वपक्षमाह । उपवीतमिति । उपवीतं पूर्वोक्तं सर्वधर्मः स्यात् । लिङ्गदर्शनात् । लिङ्गं तावन्मृताग्निहोत्रे पितृदेवत्ये श्रूयते, प्राचीनावीती दोहयेद् यज्ञोपवीती हि देवेभ्यो दोहयतीति । अत्र दैवाग्निहोत्रे यज्ञोपवीतानुवादेन सर्वकर्मार्थत्वमवगम्यते । दर्शपूर्णमासयोर्विप्रकृष्टत्वात्तत्र देवताबहुत्वाभावेन बहुवचनानुपपत्तेश्च न तस्योपवीतानुवादः संभवति । तस्मात् सर्वार्थमिति ॥ १ ॥ न वा प्रकरणात्तस्य दर्शनम् ॥ २ ॥ सिद्धान्तमाह । न वेति । न वा सर्वधर्मः प्रकरणाद् दर्शपूर्णमासप्रकरणात् । ननूक्तलिङ्गस्य का गतिस्तत्राह । तस्येति । तस्य दर्शपूर्णमासस्थस्यैव अग्निहोत्रे दर्शनमनुवाद इत्यर्थः । अनुवादस्य यथाप्राप्त्यपेक्षत्वाद्विप्रकृष्टस्यैव तस्यात्राश्रयणम् । बहुवचनं तु अविवक्षितम् । प्रकृतिविकृतिदेवतालोचनेनोपपत्स्यते वा । तस्माद्दर्शपूर्णमासार्थमेवेति सिद्धम् ॥ २ ॥ विधिर्वा स्यादपूर्वत्वात् ॥ ३ ॥ तस्मिन्नेवोपवीते संदेहः किमसौ विधिरनुवादो वेति । तत्र नित्योदको नित्ययज्ञोपवीतीति स्मृतिप्राप्तत्वादनुवाद इति अस्मिन् पूर्वपक्षे सिद्धान्तमाह । विधिरिति । विधिरयमपूर्वत्वात् । स्मृत्या पुरुषार्थतया प्राप्तावपि क्रत्वर्थतया विधानस्यावश्यकत्वात् । न च वर्तमानापदेशाद्विधायकत्वानुपपत्तिः । पञ्चमलकाराश्रयणात् । अत एवेदं सार्थकम् । अनुवादमात्रत्वे तु कस्य विद्विषेः शेषत्वाभावादानर्थक्यं स्यादिति भावः ॥ ३ ॥ उदक्त्वं चापूर्वत्वात् ॥ ४ ॥ मृताग्निहोत्रे श्रूयते, ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयादिति । तत्र ये पुरोदञ्च इति विधिरनुवादो वेति संशये पूर्वपक्षमाह । उदक्त्वमिति । चशब्दात्पूर्वसूत्रस्थं विधिरित्यनुकृष्यते । उदक्त्वमुदक्पदघटितवाक्यं विधिः । अपूर्वत्वात् अप्राप्तार्थत्वात् । न च प्राप्तिमन्तरा ऽनुवादः संभवति । हिशब्दाद्यप्रयोगात्स्तुत्यर्थता ऽपि न युज्यते । अतो विधिरिति भावः ॥ ४ ॥ सतो वा लिङ्गदर्शनम् ॥ ५ ॥ सिद्धान्तमाह । सत इति । सतः आचार-

स्यात् । अयं भावः । निवीतकरणस्य दृष्टफलाभावेनानुवादासंभवे ऽपि मनुष्याणां पूर्वाह्णे संचरतां प्रतीचीं दिशं प्रति गमने आदित्यः पृष्ठभाग इति आदित्यजनितपीडाऽभावस्य क्लृप्तत्वाद् लोके अनुवादः संभवतीति ॥ १० ॥

परुषिदितादीनामनुवादत्वम् । अधि· ३ ।

## परुषिदितपूर्णघृतविदग्धं च तद्वत् ॥ ११ ॥

महापितृयज्ञे श्रूयते । यत्परुषि दितं तद्देवानां यदन्तरा तन्मनुष्याणां यत्समूलं तत्पितृणामिति । परुषि दितं पर्वणि छिन्नमित्यर्थः । तत्रैव यत्पूर्णं तन्मनुष्याणाम् उपर्यर्धो देवानाम् अर्धः पितृणाम् अर्धउप मन्यतीति । ज्योतिष्टोमे घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणामिति । तदुत्तरं नवनीतेनाभ्यङ्क्त इति विधिः । मस्तु दधिभवं मण्डम् । निष्पक्वमीषल्लीनं नवनीतम् । दर्शपूर्णमासयोः यो विदग्धः स नैर्ऋतः यो ऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतं कृत्य इति । अत्र सर्वत्र तद्वद् निवीतवत् । पृथक्कथनफलं विस्तरभयान्न लिख्यते ॥ ११ ॥

अनृतवदननिषेधस्य क्रतुधर्मत्वम् । अधि· ४ ।

## अकर्म क्रतुसंयुक्तं संयोगाद् नित्यानुवादः स्यात् ॥ १२ ॥

दर्शपूर्णमासप्रकरणे नानृतं वदेदिति श्रुतम् । अयं नित्यानुवादरूपः उतापूर्वविधिर्वेति संशये पूर्वपक्षमाह । अकर्मेति । क्रतुसंयुक्तं क्रतु-

---

प्राप्तस्य उदगयत्वस्य द्योतकमात्रं ये पुरोदञ्च इति लिङ्गदर्शनं न विधिः । अयं भावः । पञ्चम्यघटितत्वाद्विधिप्रत्ययायोगाद् "अयवन्त्युदगयाणी" तिस्मृतिप्राप्तत्वाच्च नास्य विधित्वसंभवः । न चास्य स्मृतिमूलत्वं संभवति । स्मृतेः सर्वविषयत्वात् । अस्य चाग्निहोत्रमात्रविषयत्वात् । तस्मादस्यैव स्मृत्यनुवादकत्वमिति ॥ ५ ॥ विधिस्तु धारणे ऽपूर्वत्वात् ॥ ६ ॥ मृताग्निहोत्रे एव श्रूयते, अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीति । जीवदग्निहोत्रे उपरि समिद्धारणं विधिः अथ वा ऽनुवाद इति संशये पूर्ववदनुवाद इति पूर्वपक्षे सिद्धान्तमाह । विधिरिति । तुरेवार्थे । धारणे विधिरेव अपूर्वत्वाद् अप्राप्तत्वात् । न च अभ्यर्हितद्रव्यस्य प्रच्छादनावश्यकत्वादाचाराद्धारणप्राप्तिः संभवति । हस्तादेरेव प्रच्छादने योग्यत्वेन समिधो ऽयोग्यत्वेन च तदनुपपत्तेः । तस्मादगत्या पञ्चमलकारमाश्रित्य विधित्वमङ्गीकार्यम् । विस्तरस्तु वार्तिके द्रष्टव्यः ॥ ६ ॥

प्रकरणे पठितम् अकर्मे नानृतं वदेदिति निषेधवाक्यं नित्यानुवादरूपं स्यात् । कुतः संयोगाद् उपनयनसमयएव सत्यं वद धर्मं चरेत्युपदेशेन नित्यमनृतनिषेधस्य प्राप्तत्वात् ॥ १२ ॥

## विधिर्वा संयोगान्तरात् ॥ १३ ॥

सिद्धान्तमाह । विधिरिति । विधिरेवायं संयोगान्तरात् । उद्दे- श्यभेदात् । उपनयनकालिको विधिः पुरुषमुद्दिश्य अयं क्रतुमुद्दिश्येति भावः ॥ १३ ॥

जञ्जभ्यमानधर्माणां प्रकरणे निवेशः । अधि० ५ ।

## अहीनवत्पुरुषधर्मस्तदर्थत्वात् १४ ॥

दर्शपूर्णमासयोः श्रुतं, जञ्जभ्यमानोऽनुब्रूयात् मयि दक्षक्रतू इति प्राणापानावेवात्मन्धत्तइति । किमयं मन्त्रपाठः पुरुषमुद्दिश्य विधीयते उत क्रतुमुद्दिश्येति संशये पूर्वपक्षमाह । अहीनेति । पुरुषधर्मः केवलपुरु- षार्थः तदर्थत्वात् । वाक्येन पुरुषार्थत्वावगमात् । तथा चाहीनवत् । यथा ऽहीनशब्दश्रवणाद् द्वादशोपसदां प्रकरणविच्छेदः तथा जञ्जभ्यमानो ऽनुब्रूयादिति पुरुषप्राधान्यश्रवणात् प्रकरणाद्विच्छिद्य वाक्येन पुरुषार्थ- त्वमिति भावः ॥ १४ ॥

## प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवत् ॥ १५ ॥

सिद्धान्तमाह । प्रकरणेति । प्रयाजादिवत् प्रकरणविनियोगस्य अविशेषात् विशेषाभावात् क्रत्वङ्गम् । ननु जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू इति वाक्येन पुरुषप्राधान्यं बुध्यते तत्राह । तद्युक्तस्य क्रतुसंब- द्धस्य पुरुषस्य संस्कारः दर्शपूर्णमासकर्तृपुरुषसंस्कारः । द्रव्यवत् । व्रीहीन् प्रोक्षतीत्यत्र व्रीहिवत् । इत्थं च वाक्येन श्रूयमाणपुरुषप्राधान्यं प्रकरणं चानुगृहीतं भवतीति भावः ॥ १५ ॥

## व्यपदेशादपकृष्यते ॥ १६ ॥

नन्वहीने द्वादशोपसद इत्यत्रापि प्रकरणबाधो न स्यादत आह । व्यपेति । द्वादशाहीनस्येत्यत्रापकृष्यते । व्यपदेशात् । तिस्र एव साह्न-

स्योपसद इति ज्योतिष्टोमे त्रित्वविशिष्टोपसद उपदिश्य द्वादशाहीनस्येत्यत्राहीनशब्दस्य पृथग् निर्देशात् । तत्रोत्कर्षाभावे अहीनस्येति व्यर्थमेव स्यादिति भावः ॥ १६ ॥

अवगोरणादीनां पुमर्थत्वम् । अधि० ६ ।

## शय्यौ च सर्वपरिदानात् ॥ १७ ॥

दर्शपूर्णमासयोः श्रुतं, शंयुं बार्हस्पत्यमन्ववृणीत्युपक्रम्य यो ऽपगुरते शतेन यातयाद्यो निहनत् सहस्रेण यातयात्तस्माद्ब्राह्मणाय नापगुरेत न निहन्यादिति । अयं निषेधः क्रत्वर्थः किं वा पुरुषार्थः इति संशये प्रकरणपाठात्क्रत्वर्थ इति बहिः पूर्वपक्षे सिद्धान्तमाह । शंय्वाविति । शंय्वौ शंय्यूपक्रमवाक्यस्यनिषेधस्य प्रकरणादुत्कर्षः स्यात् सर्वपरिदानाद् ब्राह्मणाय नापगुरेतेति क्रतुसंबन्धिताद्वितरसर्वब्राह्मणपरिग्रहात् । पूर्वाधिकरणे प्राणापानावेवात्मन् धत्तइति लटः श्रवणात् प्रकरणविच्छेदे फलकल्पनाप्रसङ्गः । इह तु यः अपगुरते इति अपगोरणस्य कारणत्वं शतसंवत्सरपर्यन्तं नरकयातनायाः कार्यत्वं प्रतीयते । हेतुहेतुमतोर्लिङिति विहितलिङः श्रवणात् । तथा चापगोरणाभावप्रयोज्यः यातनाभाव इत्यपि सिद्धौ यातनाभावः फलं क्लृप्तमतः प्रकरणादुत्कर्षे ऽपि किं बाधकमिति भावः ॥ १७ ॥

मलवद्वाससा संवादनिषेधस्य पुमर्थत्वम् । अधि० ७ ।

## प्रागपरोधान्मलवद्वाससः ॥ १८ ॥

दर्शपूर्णमासयोः श्रूयते, तस्मान्म*लवद्वाससा न संवदेतेति । अयं प्रतिषेधः क्रत्वर्थः दर्शपूर्णमासाधिकृतएव प्रकरणे पाठादिति बहिः पूर्वपक्षे सिद्धान्तमाह । प्रागिति । मलवद्वाससः रजस्वलायाः प्राक् प्रारम्भात्प्रागेव अवरोधाद् शालातो बहिः करणात् । अयं भावः । कर्ममध्ये अध्वर्योः पत्न्या सह संवादः पत्नि पत्न्येष ते लोक इति कर्माङ्गत्वेन विहितस्तस्य प्रतिषेधो वाच्यः । स न संभवति । यस्य व्रत्ये ऽहनि पत्न्यनालम्भुका भवति तामपरुध्य यजेतेति, तस्या आरम्भात् पूर्वमेव निरासेन कर्माङ्ग-

* मलवद्वासाः रजस्वला ।

संवादप्राप्त्यभावादतो ऽत्र संवादो रागप्राप्तः पुरुषार्थतया निषिध्यत इति ॥ १८ ॥

## अन्नप्रतिषेधात् ॥ १९ ॥

उक्तार्थे हेत्वन्तरमाह । अन्नेति । नास्या अन्नमद्यादित्यत्र प्रतिषेधात् । अन्नं मैथुनं तस्य प्रतिषेधात् । क्रतौ तस्याप्रसक्तेः रागप्राप्तप्रतिषेध एव स वाच्यः । सहचरितत्वात् अयमपि तथेति भावः । अभि आभिमुख्येन अञ्जनं मेलनमिति व्युत्पत्त्या अभ्यञ्जनं मैथुनम् । अभ्यञ्जनं वा स्त्रिया अन्नमिति अन्नशब्दव्याख्यानादुक्तार्थलाभः ॥ १९ ॥

सुवर्णधारणादीनां पुमर्थत्वम् । अधि० ८ ।

## अप्रकरणे तु तद्धर्मः ततो विशेषात् ॥ २० ॥

अनारभ्य श्रूयते, तस्मात्सुवर्णं हिरण्यं भार्यं सुवर्ण एव भवतीति । अयं पुरुषार्थः क्रत्वर्थो वेति विचारे सिद्धान्तेनोपक्रमते । अप्रेति । अप्रकरणे पठितं सुवर्णधारणं तद्धर्मः पुरुषार्थः । ततः प्रकरणपठितेभ्यः विशेषाद् विलक्षणत्वात् ॥ २० ॥

## अद्रव्यत्वात्तु शेषः स्यात् ॥ २१ ॥

पूर्वपक्षमाह । अद्रव्येति । शेषः स्यात् क्रतुशेषः स्यात् । अद्रव्यत्वात् । द्रव्यदेवतावाचकपदाभावात् । अयं भावः । यागस्यैव साक्षात्फलजनकत्वम् अत्र द्रव्यदेवताऽश्रवणेन फलसंबन्धासंभवादगत्या क्रत्वङ्गत्वमिति ॥ २१ ॥

## वेदसंयोगात् ॥ २२ ॥

क्रत्वर्थत्वं गुणकर्मत्वेन न प्रधानकर्मत्वेनेत्याह । वेदेति । आध्वर्यवमितिसमाख्यायुक्तयजुर्वेदसंयोगात् । अध्वर्युः सुवर्णधारणेन संस्कुर्यादिति तदर्थः ॥ २२ ॥

## द्रव्यपरत्वाच्च ॥ २३ ॥

पक्षान्तरमाह । द्रव्येति । द्रव्यं क्रतुसंबद्धमात्रेयाय हिरण्यं ददातीति हिरण्यं तत्परत्वाच्च श्रूयमाणहिरण्यपदस्य । तथा च क्रतौ उपयोक्ष्यमाणसुवर्णं धारणेन संस्कुर्यादिति तदर्थ इति भावः ॥ २३ ॥

## स्याद्वा संयोगवत्फलेन संबन्धः तस्मात्कर्मैतिशायनः ॥२४ ॥

पूर्वपक्षान् दूषयन् सिद्धान्तमुपसंहरति । स्यादिति । फलेनैव साक्षात्संबध इत्यैतिशायनाचार्यो मनुते । तस्मात् प्रकरणपाठाभावेन कर्तुर्वा द्रव्यस्य वा संस्कारद्वारा ऽसंभवेन संस्कृतस्य विनियोगाश्रवणात् पर्णमयीत्वे जुहूशब्दश्रवदव्यभिचरितक्रतुस्मारकपदाभावाच्च । संयोगवत् । प्राजापत्यव्रतानामेतावता हैनसा ऽयुक्तो भवतीति फलसंयोगवत् । कर्म स्यात् । पुरुषार्थरूपं कर्म*स्यात् ॥ २४ ॥

जयादीनां वैदिककर्माङ्गत्वम् । अधि० ९ ।

## शेषो ऽप्रकरणे ऽविशेषात्सर्वकर्मणाम् ॥ २५ ॥

अनारभ्य श्रूयते, येन कर्मणोत्सेत्तत्र जयाञ्जुहुयादाभ्यातानान् राष्ट्रभृतो जुहोतीति । ईर्त्सेद् वृद्धिमिच्छेत् । जयादिसंज्ञका होमविशेषाः । इमे होमा लौकिके कृष्यादावपि उत वैदिकएवेति संशये पूर्वपक्षमाह । शेष इति । यः अप्रकरणे अधीतः कर्मणः शेषः सः अविशेषाद् लौकिकानां वैदिकानां च सर्वकर्मणां शेषः स्यात् ॥ २५ ॥

## होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात् ॥ २६ ॥

सिद्धान्तमाह । होमा इति । होमाः उक्तहोमाः श्रौतएव व्यवतिष्ठेरन् आहवनीयसंयोगाद् होमत्वावच्छेदेन आहवनीयविधानात् । लौकिके तदभावादिति भावः । अङ्गविध्यनुसारेण प्रधानविधिसंकोचस्य तिर्यगधिकरणे षष्ठे वक्ष्यमाणत्वादिति भावः ॥ २६ ॥

## शेषश्च समाख्यानात् ॥ २७ ॥

हेत्वन्तरमाह । शेष इति । शेषः अध्वर्युकर्तृककर्मशेषः । समाख्यानात् । उक्तवाक्यस्य आध्वर्यवमिति समाख्यानात् । यदि कृष्यादिशेषः र्हि तत्राध्वर्योरभावात् समाख्या बाध्येतेति भावः ॥ २७ ॥

वैदिकाश्वप्रतिग्रहे इष्टेः कर्तव्यत्वम् । अधि० १० ।

## दोषात्त्विष्टिर्लौकिके स्याच् शास्त्राद्धि वैदिके न दोषः स्यात् ॥ २८ ॥

* दुर्वर्णा ऽस्य भातृव्यो भवतीत्यार्थवादिकं वा फलमिति माधवः ।

यावतो ऽश्वान् प्रतिगृह्णीयात् तावतो वारुणां चतुष्कपालान्नि-र्वपेदिति विहितम् । अत्र प्रतिग्रहो दानमित्यर्थमे अधिकरणे सेत्स्यति । इयमिष्टिर्लौकिकदाने उत वैदिकदानइति संशये पूर्वपक्षमाह । दोषा-दिति । इयमिष्टिर्लौकिके स्वेच्छानिमित्तकदाने स्यात् । दोषात् । दानेन दोषश्रवणात्, स एवैन वरुणपाशान्मुञ्चतीति । वरुणपाशाज्ज-लोदररोगात् । हि यतो वैदिके वारुणं यवमयं चरुमश्वो दक्षिणेति शास्त्रात्प्राप्तदाने न दोषः स्याद्दोषप्रसक्तिर्न स्याच्च शास्त्राच्च शास्त्रप्रति-पादितत्वात् ॥ २८ ॥

## *अर्थवादानुपपातात् तस्माद्यज्ञे प्रतीयेत ॥ २९ ॥

सिद्धान्तमाह । अर्थेति । वरुणो वा एतं गृह्णाति यो ऽश्वं प्रतिगृह्णा-तीतिवाक्यरूपार्थवादस्य अनुपपातात् । सादृश्याद् वरुणपाशेन गृहीतस्य पुरुषस्य मोचने यावच्छ्रेयः तावच्छ्रेयः अनेन कर्मणेति सादृश्यादर्थवान्सा-र्थकः । तस्माद्यज्ञे यज्ञसंबन्धिदानाङ्गं प्रतीयेत । यज्ञसंबन्धिदानाङ्गत्वकल्पने परम्परया क्रत्वपूर्वप्रयोजकतया फलकल्पनाभाव इति लाघवमिति भावः ॥ २९ ॥

दातुर्वारुणेष्टिः । अधि० ११ ।

## अचोदितं च कर्मभेदात् ॥ ३० ॥

इयमिष्टिः दातुः प्रतिग्रहीतुर्वेति संशये पूर्वपक्षमाह । अचोदित-मिति । कर्मणोः ददातिप्रतिगृह्णात्यर्थयोर्भेदात् प्रकृते प्रतिगृह्णीयादिति श्रवणेन दाने निमित्ते अचोदितमविहितमिदं कर्म अतः प्रतिग्रहीतुरि-ष्टिरिति भावः ॥ ३० ॥

## सा लिङ्गादार्त्विजे स्यात् ॥ ३१ ॥

सिद्धान्तमाह । सेति । सा इष्ट्यधिकृतिः आर्त्विजे ऋत्विक्प्रेरके यजमाने दातरीति फलितं स्यात् । लिङ्गात् प्रजापतिर्वरुणायाश्वमनय-

* अर्थवादो वा ऽनुपपातादिति शाबरभाष्ये तन्त्रवार्त्तिके च पाठो युक्ततरः ।

दित्युपक्रमे दातुः पीडाश्रवणलिङ्गात् । उपक्रमानुसारेण यावतो ऽश्वान् प्रतिगृह्णीयादित्यस्य प्रतिग्राहयेदित्यर्थकरणमावश्यकमिति भावः* ॥ ३१ ॥

वैदिकपानव्यापदि सौमेन्द्रचरुविधानम् । अधि० १२ ।

## पानव्यापच्च तद्वत् ॥ ३२ ॥

यः सोमं वमति यः सोमवामी स्यात् तस्मा एतं सौमेन्द्रं श्यामाकं चरुं निर्वपेदिति । इयमिष्टिः वैदिकसोमपानोत्तरवमने उत लौकिकोत्तरइति संशये पूर्वपक्षमाह । पानेति । पानस्य सोमपानस्य व्यापद् वमनम् । तद्वत् । अश्वप्रतिग्रहेष्टिपूर्वपक्षवत् । लौकिकपानवमनमित्यर्थः । तस्माद्विशेषस्तु तत्र दानं लौकिकं वैदिकं च संभवति अत्र वमनं लौकिकमेव न वैदिकमिति ॥ ३२ ॥

## दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात् ॥ ३३ ॥

सिद्धान्तमाह । दोषादिति । वैदिके वमने दोषाद्दोषश्रवणात् । विवा एष इन्द्रियेण वीर्येण व्यृध्यते यः सोमं वमतीति । अर्थाद्वमने धातुसाम्यमिति वैद्यशास्त्रप्रसिद्धफलाद्धि यतः लौकिके न दोषः स्यादतः इयमिष्टिर्वैदिकसोमपानएव ॥ ३३ ॥

सौमेन्द्रचरोर्यजमानपानव्यापद्विषयत्वम् । अधि० १३ ।

## तत्सर्वत्राविशेषात् ॥ ३४ ॥

पूर्वोदाहृतवाक्ये वमनकर्तृविशेषाश्रवणाद् ऋत्विजां वमने ऽपि इयमिष्टिरिति पूर्वपक्षसूत्रमाह । तदिति । तद् वमनं सर्वेषामृत्विजां यजमानस्य च इष्टिनिमित्तमविशेषात् ॥ ३४ ॥

## स्वामिनो वा तदर्थत्वात् ॥ ३५ ॥

सिद्धान्तमाह । स्वामिन इति । स्वामिनो वमने इयमिष्टिः क्रतोः तदर्थत्वात् क्रतुजन्यफलभोक्तृत्वस्य यजमानएव सत्त्वात् । वमने क्रतु-

* ननु वेदो वा प्रायदर्शनादिति तृतीयाध्यायस्य तृतीयपादे प्रथमाधिकरणे उपक्रमस्य प्राबल्यं प्रदर्श्य ऋगादिशब्दानां वेदपरत्वं साधितं तत एवात्रापि प्रतिग्रहणातेर्दानपरत्वं सिध्येदेवेति पुनरत्र तत्कथनमनुचितमिति चेन्न । तत्र ऋगादिशब्दानाम् ऋग्भिः प्रातरित्यादौ बहुत्र वेदपरत्वस्य दृष्टत्वेन उपक्रमस्योपसंहारात्प्राबल्यमित्यस्यासाधारणोदाहरणत्वाभावेन तदसाधारणोदाहरणप्रदर्शनार्थं पुनरुक्तत्वात् ।

वैगुण्यमिष्ट्वा तत्परिहार एव फलम्। यः वमति स स्वक्रतुवैगुण्यदोषपरिहारार्थं निर्वपेदिति वमनकर्तुः निर्वापकर्तुश्च ऐक्यं श्रूयते। अतो यष्टुरेवेति ॥ ३५ ॥

## लिङ्गदर्शनाच्च ॥ ३६ ॥

सोमपानेनात्मनः संस्कारो भवति। स च यजमानस्यैव न त्वृत्विजाम्। क्रयक्रीतत्वात्तेषां संस्कारो वमने जाते न भवतीति कथ्यते, सोमपीथेन व्यृध्यते यः सोमं वमतीति वाक्येन। इदं लिङ्गं यजमानवमनएवेत्याह। लिङ्गेति ॥ ३६ ॥

आग्नेयाष्टाकपालचरोर्द्व्यवदानमात्रस्य होमव्यत्वम्। अधि. १४।

## सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ३७ ॥

यदाग्नेय इत्यनेन विहितः पुरोडाशः कृत्स्नः अग्नये देय उतैकदेश इति संशये पूर्वपक्षमाह। सर्वेति। सर्वस्य पुरोडाशस्य प्रदानम् अग्नये जुष्टं निर्वपामीति ग्रहणेन निखिलस्य तदर्थत्वात् ॥ ३७ ॥

## निरवदानात्तु शेषः स्यात् ॥ ३८ ॥

सिद्धान्तमाह। निरिति। निष्कृष्य अवदानं निरवदानम्। द्विर्हविषो ऽवद्यतीति विधानाद् न सर्वहोमः किं तु शेषः स्यात् ॥ ३८ ॥

## उपायो वा तदर्थत्वात् ॥ ३९ ॥

पूर्वपक्ष्याशङ्कते। उपाय इति। द्विरवदानमुपायः हविषः संस्कारः कल्प्यते। तथा च कृत्स्नहोमः कृत्स्नस्य तदर्थत्वात्। अन्यथैन्द्रात्। अयं भावः अनेकवारं द्विर्द्विरवदाय होतव्यं कृत्स्नं, तावता न कस्यापि वाक्यस्य विरोध इति ॥ ३९ ॥

## कृतत्वात्तु कर्मणः सकृत्स्याद् द्रव्यस्य गुणभूतत्वात् ॥ ४० ॥

सिद्धान्ती स्वमतं व्यवस्थापयति। कृतत्वादिति। कर्मणः होमस्य सकृत् कृतत्वाद् नावृत्तिः स्यात्। ननु द्रव्यस्य शिष्टत्वात् तदनुसारेण

यागाभ्यास इत्याह । द्रव्यस्य यागं प्रति गुणभूतत्वाद् न गुणानुसारेण प्रधानावृत्तिरिति भावः* ॥ ४० ॥

शेषदर्शनाच्च ॥ ४१ ॥

साधकान्तरमाह । शेषदर्शनादिति । शेषकार्यस्य शेषात्स्विष्टकृते ऽवद्यतीति विधिदर्शनाच्छेष आवश्यकः ॥ ४१ ॥

सर्वशेषेण स्विष्टकृदनुष्ठानम् । अधि० १५ ।

अप्रयोजकत्वादेकस्मात् क्रियेरञ् शेषस्य गुणभूतत्वात् ॥४२॥

दर्शपूर्णमासे शेषकार्याणि स्विष्टकृदिडाप्राशित्रावदानरूपाणि । तानि यावद्धविषः कार्याणि किं वैकस्मादिति संशये पूर्वपक्षमाह । अप्रयोजकत्वादिति । अप्रयोजकत्वाच्च शेषकार्यं प्रति हविषो ऽप्रयोजकत्वात् । प्रधानयागप्रयुक्तत्वाद्धविषः शेषात्स्विष्टकृते ऽवद्यतीति शास्त्रमेकस्मादवदाने ऽपि चरितार्थमत एकस्मादवदानम् । यदि शेषकार्याणां हविः प्रधानं स्यात् तदा प्रतिप्रधानमिति न्यायप्राप्तिः । तदेव न । शेषकार्यं प्रत्यङ्गं हविः । अतः एकस्मादवदाने ऽपि कृतार्थमित्याह । शेषस्य गुणभूतत्वात् ॥ ४२ ॥

---

* ननु द्विरवत्तमात्रस्य प्रदाने आग्नेयो ऽष्टाकपालो भवतीत्युत्पत्तिशिष्टं सर्वस्य हविष आग्नेयत्वं नोपपद्यतेति चेत्र । अग्निदेवताकयागसाधनत्वस्यैव आग्नेयत्वेन तस्य च व्रीहीणामिव पुरोडाशद्वारा प्रदेयप्रकृतितया ऽप्युपपत्तेः । वार्तिककारस्तु पुरोडाशस्योत्पत्तिशिष्टयागसाधनत्वादगत्या तत्र व्रीहीणां पुरोडाशद्वारा यागसाधनत्वोपगमे ऽपि अत्र परम्परया यागसाधनत्वोपगमे प्रमाणाभावादन्यथा अधिकरणमारचयति स्म । तथा हि । यागस्य सकलपुरोडाशद्रव्यकत्वे सिद्धे होमः सकलस्य पुरोडाशस्य कर्तव्य उत कस्यचिदंशस्येति संशयः । प्रायेण हविषां होमदर्शनादग्निमुखा वै देवा इत्यर्थवादाच्च सकलस्य होम इति पूर्वपक्ष । चतुरवत्तं जुहोतीति वचनात्तावन्मात्रस्य होमः । सकलस्य देवतासंबन्धस्तु त्यागमात्रादेवोपपन्नः । एवं च शेषात्स्विष्टकृते इत्यादि आञ्जस्येनोपपद्यते । अन्यथा तैर्हविरन्तराशेषेण तत्साकल्यसिद्धावपि तेषां तत्प्रयोजकत्वात्कदाचिच्चष्टे हविषि हविरन्तरोत्पादापत्तिः । प्रतिपत्तिकर्मत्वाभावादेकेनैव हविषा तत्सिद्धौ सर्वेभ्यो हविर्भ्यस्तदनुष्ठानानापत्तिश्च । न च अत्रये दत्तस्य पुनः स्विष्टकृते दाने शिष्टाचारविरोधः त्यक्तस्य पुनः स्वीकारादिति वाच्यम् । प्रत्यक्षश्रुत्या आचारबाधे दृष्टापत्तेरिति शास्त्रदीपिकादौ विस्तरः ।

संस्कृतत्वाच्च ॥ ४३ ॥

सकृत्सकृज्जातीयकेन शेषकार्येण संस्कृतं प्रधानमिति नापरस्मादपि कर्तव्यमित्याह । समिति ॥ ४३ ॥

सर्वेभ्यो वा कारणाविशेषात्संस्कारस्य तदर्थत्वात् ॥ ४४ ॥

स्विष्टकृदाद्यवदानं हविषः प्रतिपत्तिसंस्कार इति चतुर्थे वक्ष्यमाणमर्थं सिद्धवत्कृत्य सिद्धान्तमाह । सर्वेभ्य इति । संस्कारस्य संस्काररूपस्य स्विष्टकृदवदानस्य तदर्थत्वाद् हविरर्थत्वात् । तथा च हविषः प्रधानत्वेन संस्काररूपकारणस्य अविशेषात्सर्वेभ्यो ऽवदानं प्रतिप्रधानमङ्गावृत्तिरिति न्यायात्* ॥ ४४ ॥

लिङ्गदर्शनाच्च ॥ ४५ ॥

सकृत्सकृदवद्यतीति वीप्सा सर्वेभ्यः अवदाने लिङ्गमित्याह । लिङ्गेति ॥ ४५ ॥

प्राथमिकशेषात्स्विष्टकृदाद्यनुष्ठानम् । अधि· १६ ।

एकस्माच्चेद् याथाकाम्यविशेषात् ॥ ४६ ॥

एकस्मादवदानमिति कृत्वाचिन्तयेदमधिकरणम् । एकस्मादवदानपक्षे इच्छैव नियामिका उत अन्यत्किं चन नियामकमस्तीति संशये पूर्वपक्षमाह । एकस्मादिति । स्पष्टम् ॥ ४६ ॥

मुख्याद्वा पूर्वकालत्वात् ॥ ४७ ॥

सिद्धान्तमाह । मुख्यादिति । मुख्यात्प्रथमाद् अवदानं प्रथमोपस्थितेः सर्वपूर्वकालत्वात् । प्रथमोपस्थितपरित्यागे मानाभावादिति भावः ॥ ४७ ॥

पुरोडाशविभागस्य भक्षार्थत्वम् । अधि· १७ ।

भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ ४८ ॥

---

* चतुर्थे एतेषां प्रतिपत्तिकर्मत्वस्य व्यवस्थापयिष्यमाणत्वात्तेनैव सर्वेभ्यः शेषकार्यसिद्धौ नेदमधिकरणान्तरं किं तु पूर्वाधिकरणसिद्धान्तप्रयोजनप्रतिपादकानीमानि सूत्राणीति वार्तिककारः ।

दर्शपूर्णमासयोः श्रूयते चतुर्धाकरणे, इदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध इति । इदं दानमृत्विक्परिक्रयार्थमुत भक्षार्थमिति संशये पूर्वपक्षमाह । भक्षेति । वाक्ये भक्षपदाश्रवणाद्दानशब्दः चतुर्थ्यन्तदानशब्देन निर्देशः परिक्रयार्थः ॥ ४८ ॥

## तत्संस्तवाच्च ॥ ४९ ॥

उक्तार्थे साधकान्तरमाह । तदिति । तस्य चतुर्थीनिर्देशस्य संस्तवात् । यथा वै दर्शपूर्णमासस्य दक्षिणेति दक्षिणात्वेन स्तुतेः दक्षिणायाः परिक्रयार्थत्वं सिद्धं तथा ऽस्यापीति भावः ॥ ४९ ॥

## भक्षार्थो वा द्रव्ये समत्वात् ॥ ५० ॥

सिद्धान्तमाह । भक्षेति । भक्षार्थ एव विभागः । द्रव्ये इत्यनन्तरं स्वत्वाभावस्य द्वयोरिति शेषः । समत्वात् तुल्यत्वात् । अयं भावः देवतार्थं परिगृहीतद्रव्यस्य देवतायै निवेदितत्वेन स्वत्वाभावस्य द्रव्ये ऋत्विग्यजमानयोः तुल्यत्वात् । न च स्वत्वाभावे निर्देशो ऽपि न संभवतीति शक्यते वक्तुम् । तुलापुरुषदानादौ त्यक्तस्यापि द्रव्यस्य परस्परं कलहनिवृत्त्यर्थं यजमानकर्तृकविभागस्य दृष्टत्वेन तथा ऽत्रापि संभवादिति ॥ ५० ॥

## व्यादेशाद्दानसंस्तुतिः ॥ ५१ ॥

दक्षिणात्वेन संस्तवादिति हेतुं निरस्यति । व्यादेशादिति । व्यादेशाच्चतुर्थ्या संप्रदाननिर्देशसाम्याद् निर्देशस्य दक्षिणात्वेन स्तुतिः । एष वै दर्शपूर्णमासयोरवभृथ इतिवत् । नैतावता परिक्रयः सिध्यतीति भावः ॥ ५१ ॥

इति जैमिनिसूत्रवृत्तौ तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

ध्रुवाज्यादिभिः शेषकार्याननुष्ठानम् । अधि० १ ।

## आज्याच्च सर्वसंयोगात् ॥ १ ॥

स्विष्टकृदवदानं सर्वेभ्यो हविर्भ्य इति पूर्वं सिद्धत्वाद् आज्य-

स्यापि सर्वहविरन्तःपातित्वादुपांशुयागशेषाद् ध्रुवाज्यादप्यवदेयमित्याह पूर्वपक्षम् । आज्यादिति । स्पष्टो ऽर्थः ॥ १ ॥

## कारणाच्च ॥ २ ॥

हेत्वन्तरमाह । कारणादिति । देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वह सो ऽब्रवीद् वरं वृणै भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन् सो ऽब्रवीद् उत्तरार्धादेव मह्यं सकृद् अवद्यादिति । यद्देवतासंबन्धिहविःशेषे वृतः उपांशुयागहविरपि वहतीति कारणात् तस्याप्यवदानम् ॥ २ ॥

## एकस्मिन् समवत्तशब्दात् ॥ ३ ॥

हेत्वन्तरमाह । एकस्मिन्निति । प्रायणीयेष्ट्या एकस्मिन् आदित्यचरुरूपैकहविषि समवत्तशब्दात् समवत्तशब्दश्रवणात् । अय भावः एकस्मिन् हविषि केवलमवद्यतीति प्रयोगः । अनेकेभ्यो ऽवदाने समवद्यतीति प्रयोगः । प्रायणीये यद्येकस्यैव हविषः अवदानं तदा प्रायणीयेष्टिसमीपे अग्नये स्विष्टकृते समवद्यतीति न स्यात् । केवलमवद्यतीत्येव स्यात् । समवद्यतीति श्रवणाद् ध्रुवाज्यस्यापि अवदानं सिध्यतीति ॥ ३ ॥

## आज्ये च दर्शनात्स्विष्टकृदर्थवादस्य ॥ ४ ॥

साधकान्तरमाह । आज्यइति । आज्ये ध्रुवाज्ये च स्विष्टकृदवदानं कार्यमर्थवादस्य दर्शनात् । अय भावः । अवदायावदाय ध्रुवां प्रत्यभिघारयति स्विष्टकृते ऽवदाय न ध्रुवां प्रत्यभिघारयति न हि ततः परामाहुतिं यक्ष्यन् भवतीति अर्थवादेन ध्रुवायां स्विष्टकृदवदानात् प्राक् प्रत्यभिघारणानि स्विष्टकृदर्थानीति ज्ञायते । अतो ऽवदानं ध्रुवाज्यस्य ॥ ४ ॥

## अशेषत्वात्तु नैवं स्यात् सर्वदानादशेषता ॥ ५ ॥

सिद्धान्तमाह । अशेषत्वादिति । नैवं स्याद् उपांशुयागशेषस्यावदानं न स्यात् । अशेषत्वाद् उपांशुयागशेषस्याभावात् । ननु ध्रुवा-

याभाज्यशेषो ऽस्त्यत आह । सर्वदानाद् उपांशुयागार्थं चतुरवत्तं जुहोतीत्यनेन प्राप्तचतुरवत्तस्य सर्वस्य हवनादशेषता सिद्धा । ध्रुवायां शेषस्तु अन्ययागार्थ इति भावः ॥ ५ ॥

## साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥

अशेषत्वमेव पुनरुपपादयति । साधारण्यादिति । यथा ऽऽग्नेयपुरोडाशो ऽग्नेरेव नान्यस्य तथा ध्रुवायामाज्यं विष्णोरेव न स्यात् । सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमिति सर्वसाधारण्यात् । यथा यत्रैकस्यां स्थाल्यां बहूनामोदनः अतः तत्रैकस्मिन् भुक्ते अन्येष्वभुक्तेषु स्थालीस्थशेषं न स्वदासाय दातुमर्हति तथेति भावः ॥ ६ ॥

## अवत्तत्वाच्च जुह्वां तस्य च होमसंयोगात् ॥ ७ ॥

ननु जुह्वामस्तु शेषः तत्राह । अवत्तत्वादिति । देवतोद्देशेन जुह्वामवत्तत्वात् तस्य सर्वस्य चतुरवत्तं जुहोतीति होमसंयोगात् तत्रापि न शेषसंभवः ॥ ७ ॥

## चमसवदिति चेत् ॥ ८ ॥

ननु ऐन्द्रवायवं गृह्णातीत्यादिविधिना चमसादौ एकदेवतोद्देशेन ग्रहणे ऽपि चमसस्थद्रव्येण अनुवषट्कारः अग्नये हूयते तद्वद्विष्णवाद्यर्थमवत्तेन जुहूस्थेन स्विष्टकृद्धोमो ऽस्त्विति शङ्कते । चमसवदिति ॥ ८ ॥

## न चोदनाविरोधाद्धविःप्रकल्पनत्वाच्च ॥ ९ ॥

चमसदृष्टान्तं परिहरति । नेति । चमसे चोदनाविरोधात् सोमस्याग्ने वीहीत्यनुवषट्करोतीतिचोदनाविरोधादन्योद्देशेनावत्तद्रव्येणान्यस्य होमः । उपांशुयागे तथा न वचनम् । अपि च ऐन्द्रवायवं गृह्णातीति, आग्नेयः पुरोडाश इतिवत्केवलहविःप्रकल्पनमात्रपरः । न ह्यखिलद्रव्यं होमसंयुक्तम् । अल्पं जुहोतीति वचनेन शेषसद्भावात् । उपांशुयाजे च चतुरवत्तं जुहोतीति होमसंयुक्तमतो ऽपि वैषम्यम् ॥ ९ ॥

उत्पन्नाधिकारात्सति सर्ववचनम् ॥ १० ॥

ननु सर्वेषां हविषां स्विष्टकृदवदानमिति सर्वपदस्य का गतिरत्राह । उत्पन्नेति । उत्पन्नं शेषमधिकृत्य पाठात् सति शेषवति सर्ववचनम् । सशेषेभ्यः सर्वेभ्यो हविर्भ्य इत्यर्थः ॥ १० ॥

जातिविशेषात्परम् ॥ ११ ॥

अथ प्रायणीये चरौ समवत्तशब्दप्रयोगो हेतुरुक्तः तदुपपत्तिं दर्शयति । परमिति । परमुक्तलिङ्गम् । आज्यशेषाच्छेषकार्ये सिद्धे जातिविशेषाद् ओदनजातिमाज्यजातिं च अपेक्ष्य प्रकृतिस्थशब्देन अनुवादः । प्रकृतौ प्रयुक्तशब्द एवात्र प्रयुक्त इति भावः ॥ ११ ॥

अन्त्यमरेकार्थे ॥ १२ ॥

अन्त्यं हेतुं निरस्यति । अन्त्यमिति । अन्त्यमुक्तार्थवादरूपं लिङ्गमरेकार्थं ध्रुवायाः अरिक्तत्वार्थम् । अयं भावः स्विष्टकृदुपस्तरणाभिघारणपर्यन्तं ध्रुवाज्यस्य कार्यमस्ति । यदि ध्रुवायाः प्रत्यभिघारणं न कुर्यात्तर्हि ध्रुवा आज्यहीना स्याद् उत्तरकार्यं न भवेत् । स्विष्टकृदवदानोत्तरमग्रे कार्यं नास्त्यतो न पूरणमित्यर्थवादतात्पर्यमिति ॥ १२ ॥

साकंप्रस्थायीये स्विष्टकृदननुष्ठानम् । अधि० २ ।

साकंप्रस्थायीये स्विष्टकृदिडं च तद्वत् ॥ १३ ॥

साकंप्रस्थायीययागे स्विष्टकृदिडावदानं तद्वत् । उपांशुयागवच्छेषाभावाद् लुप्यते इति सिद्धान्तसूत्रम् ॥ १३ ॥

सौत्रामण्यां शेषाननुष्ठानम् । अधि० ३ ।

सौत्रामण्यां च ग्रहेषु ॥ १४ ॥

सौत्रामण्यामुत्तरेऽग्नौ पयोग्रहाञ् जुहोति दक्षिणेऽग्नौ सुराग्रहानिति । अत्र निखिलस्य होमसंयोगात् स्विष्टकृदिडे नेति सिद्धान्तमाह । सौत्रामण्यामिति । स्पष्टम् ॥ १४ ॥

तद्वच्च शेषवचनम् ॥ १५ ॥

उद्भिनष्टि न सर्वं जुहोतीति निषेधपूर्वकशेषवचनं तद्वत् कुम्भीवत् सर्वहोमं गमयति । सर्वहोमप्राप्तावेव शेषवचनस्य सार्थक्यात् । शेष-

वचनमपि न स्विष्टकृदाद्यर्थं, ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारमिति कार्यान्तरश्रवणादिति भावः ॥ १५ ॥

सर्वपृष्ठेष्टौ स्विष्टकृदादीनां सकृदनुष्ठानम् । अधि॰ ४ ।

## द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ १६ ॥

इन्द्राय राथन्तरायेन्द्राय वैरूपायेत्यादिषड्देवताका सर्वपृष्ठेष्टिराम्नाता । तस्या निर्वापकाले षण्णां पृथग् निर्वापं कृत्वा श्रपणं कृत्वा द्वादशकपालमेकपुरोडाशं कृत्वा होमसमये समं तं पृथक् पृथग् अवदाय प्रधानयागाः षट् क्रियन्ते । ततः स्विष्टकृदवदानं षड्वारमुत सकृदिति संशये देशभेदात् षड्वारमिति पूर्वपक्षमाह । द्रव्येति । द्रव्यस्य पुरोडाशस्य एकत्वे ऽपि कर्मभेदात् प्रधानयागभेदात् प्रतिकर्म प्रतिप्रधानकर्म स्विष्टकृदवदानं क्रियेरन् ॥ १६ ॥

## अविभागात्तु शेषस्य सर्वान्प्रत्यविशिष्टत्वात् ॥ १७ ॥

सिद्धान्तमाह । अवीति । अविभागाच्च शेषस्य पुरोडाशस्यैक्यात् । सर्वान् प्रति सर्वप्रधानानि प्रति अविशिष्टत्वाद् एकत्वात् । अयं भावः प्रकृतौ हविषः उत्तरार्धः स्विष्टकृदवदानदेशः क्लृप्तः इहापि हविष ऐक्याद् अवदानं सकृदिति ॥ १७ ॥

ऐन्द्रवायवग्रहे द्विः शेषभक्षणम् । अधि॰ ५ ।

## ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षः स्यात् ॥ १८ ॥

ज्योतिष्टोमे ऐन्द्रवायवग्रहहोमोत्तरं सोमरसस्य एकत्वात् सकृदेव भक्षणमिति बहिः पूर्वपक्षे सिद्धान्तमाह । ऐन्द्रेति । ऐन्द्रवायवे प्रतिकर्म प्रतिवषट्कारं भक्षः वचनाद् द्विः ऐन्द्रवायवं भक्षयतीति वचनात् ॥ १८ ॥

सोमे शेषभक्षास्तित्वम् । अधि॰ ६ ।

## सोमे अवचनाद्भक्षो न विद्यते ॥ १९ ॥

पुरोडाशवत् सोमद्रव्यस्य भक्षणमस्ति न वेति *संशये पूर्वपक्षमाह । सोमइति । सोमे भक्षो न विद्यते अवचनात् ॥ १९ ॥

* "सोमे च बहवो ग्रहाश्चमसाश्च पुरुषाश्च । तत्रसंशयः किं न कु चित्कस्य चिद् भक्षणमुत सर्वत्र सर्वेषामविशेषेण भक्ष उत यस्य यत्र प्रत्यक्षवचनं तस्य तत्र भक्षणम् अथ वा समाख्यावषट्कारहोमाभिषवप्रत्यक्षवचनैर्भक्ष इति । वार्तिके तु

## स्याद्वा ऽन्यार्थदर्शनात् ॥ २० ॥

सिद्धान्तमाह । स्याद्वेति । भक्षणं स्याद् अन्यार्थस्य भक्षणार्थस्य भक्षाङ्गस्येति यावत् । दर्शनात् । विधानात् । अयं भावः आश्विनग्रहभक्षमनूद्य सर्वतः परिहारमाश्विनमिति भ्रमणं विधीयते । यदि भक्षणं न स्यात् तर्हि भ्रमणविधानमनर्थकं स्यात् ॥ २० ॥

## वचनानि त्वपूर्वत्वात् तस्माद्यथोपदेशं स्युः ॥ २१ ॥

ननु गुणविधानानुमेयो विधिर्न प्रत्यक्षो भक्षणविधिरित्यत्राह । वचनानीति । पुरस्तादैन्द्रवायवं भक्षयति पुरस्तान्मैत्रावरुणं सर्वतः परिहारमाश्विनमिति वचनानि तत्तद्गुणविशिष्टभक्षविधायकानि । अपूर्वत्वाद् भक्षणस्य त्वपूर्वत्वात् । अप्राप्तत्वात् । तस्माद्यतो विशिष्टभक्षणं विहितमतः यथोपदेशं यथा विहितं भक्षणं तथा विधेयम् ॥ २१ ॥

चमसिनां शेषभक्षणम् । अधि० ७ ।

## चमसेषु समाख्यानात् संयोगस्य तन्निमित्तत्वात् ॥ २२ ॥

ज्योतिष्टोमे होतृचमसादिसंज्ञका दश चमसाः सन्ति । तेषु चमसिनां भक्षणं नास्ति प्रमाणाभावादिति बहिः पूर्वपक्षे सिद्धान्तमाह । चमसेष्विति । चमसेषु भक्षणमस्ति होतृचमस इति समाख्यानात् संज्ञावत्त्वात् । संयोगस्य होतृचमस इतिसंज्ञासंबन्धस्य निमित्तत्वात् । चमसभक्षणनिमित्तत्वात् । होत्रा अनेन पात्रेण चम्यते भक्ष्यतइति होतृचमस इति योगात् । भक्षणे ऽसति उक्तयोगानुपपत्तेरिति भावः ॥ २२ ॥

## तस्माच्चाब्राह्मणस्य सोमं प्रतिषेधति ॥ २३ ॥

साधकान्तरमाह । तस्मादिति । तस्मात् समाख्यया भक्षणस्य सिद्धत्वादेव अब्राह्मणस्य क्षत्रियादेः सोमं सोमभक्षं प्रतिषेधति निषेधति । अयं भावः यजमानचमस इति समाख्यया यजमानस्य क्षत्रियादेः सोमभक्षणप्राप्तौ, यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेद् न्यग्रोधस्तिमिनीराहृत्य ताः संपिष्य दधन्युपमृज्य तमस्मै

सर्वत्र सर्वेषां भक्ष इति पक्षमतिमन्दत्वादनुपन्यस्य त्रयः पक्षा इत्युक्तम् । तदिदमतः प्रभृति होमाभिषवाभ्यां चेत्येतदन्तमेकमधिकरणम् ” इति शास्त्रदीपिकायां स्थितम् ॥

भक्षं प्रयच्छेद् न सोममिति सोमभक्षणनिषेधः संगच्छते । निषेधस्य प्राप्तिपूर्वकत्वादिति ॥ २३ ॥

उद्गातॄणां सुब्रह्मण्येन सह भक्षणम् । अधि० ८ ।

## उद्गातृचमसमेकः श्रुतिसंयोगात् ॥ २४ ॥

ज्योतिष्टोमे प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणामिति मन्त्रे उद्गातॄणां चमस इतिसमाख्यासिद्धम् उद्गातृचमसपानमेकस्य बहूनां वेति संशये पूर्वपक्षमाह । उद्गात्रिति । उद्गातृचमसमेकः उद्गातैव भक्षयेत् । श्रुतिसंयोगात् । उद्गातृशब्दस्य उद्गातृव्यक्त्यैव शक्तिसंयोगात् । बहुवचनं तु प्रयोगभेदेन उद्गातृभेदाद् उद्गातृव्यक्तिबहुत्वपरतया नेयमिति भावः ॥ २४ ॥

## सर्वे वा सर्वसंयोगात् ॥ २५ ॥

व्यक्तिबहुत्वमादाय बहुवचनस्य अप्रयोजकत्वाद् बहुवचनश्रुतेः उद्गातृशब्दस्य तत्प्रभृतिषु लक्षणां स्वीकृत्य सर्वेषामृत्विजां पानमिति पक्षान्तरमाह । सर्वइति । सर्वसंयोगात् । सर्वान्वययोग्यबहुवचनसंबन्धाद्वाक्यस्य ॥ २५ ॥

## स्तोत्रकारिणो वा तत्संयोगाद् बहुत्वश्रुतेः ॥ २६ ॥

उत्पूर्वकगायतिधातोः स्तोत्रसंबन्धिगानकर्तार इति क्रियानिमित्तं त्रिषु संभवति । त्रयश्च उद्गाता प्रस्तोता प्रतिहर्तेति त्रयाणां ग्रहणे प्रातिपदिकार्थः प्रत्ययार्थश्चेति शक्त्यैव संभवतीति पक्षान्तरमाह । स्तोत्रकारिण इति । तत्संयोगाद् उक्तत्रितयसंयोगात् ॥ २६ ॥

## सर्वे तु वेदसंयोगात् कारणादेकदेशे स्यात् ॥ २७ ॥

सिद्धान्तमाह । सर्वइति । सर्वे तु सुब्रह्मण्येन सह चत्वारः भक्षयेयुः । वेदसंयोगात् सामवेदप्रतिपादितकर्मणा साकं संबन्धात् । अयं भावः उत्पूर्वकगायतिधातोर्न स्तोत्रगाने शक्तिः किं तु साम्नो द्वितीयभक्तिगाने तत्रैवोद्गीथशब्दव्यवहारात् । तत्कर्ता त्वेक एव तत्र बहुत्वान्वयानुपपत्तेर्न योगो रूढिर्वा प्रकृतार्थे संभवति । अतो ऽगत्या

लक्षणैव योज्या । तस्यां योज्यायां वेदोक्तकर्मकर्तृत्वरूपशक्यसम्बन्धस्य कर्मकर्तृत्वापेक्षया ऽन्तरङ्गत्वात् तेनैव संबद्धाश्चत्वारः* पूर्वोक्ता इति । उद्गातृशब्दस्य केवलोद्गातरि प्रयोगस्तु योगेनेत्याह । एकदेशे केवलोद्गातरि कारणाद् उद्गीथरूपभक्तिगानकर्तृत्वाद् व्यवहारः स्यात् ॥ २७ ॥

ग्रावस्तुतो ऽपि सोमभक्षणम् । अधि॰ ६ ।

## ग्रावस्तुतो भक्षो न विद्यते अनाम्नानात् ॥ २८ ॥

होतृगणमध्ये चतुर्थस्य ग्रावस्तुतः भक्षणं नास्तीति पूर्वपक्षमाह । ग्रावस्तुत इति । स्पष्टम् ॥ २८ ॥

## हारियोजने वा सर्वसंयोगात् ॥ २९ ॥

सिद्धान्तमाह । हारीति । †हारियोजनग्रहे भक्षो ऽस्ति चमसाञ् चमसिनो भक्षयन्ति यथैतस्य हारियोजनस्य सर्वएव लिप्सन्तीति वाक्ये सर्वशब्दसंयोगात् ॥ २९ ॥

## चमसिनां वा सन्निधानात् ॥ ३० ॥

सिद्धान्तमाक्षिपति । चमसिनामिति । सर्वपदेन चमसिनामेव ग्रहणम् उक्तवाक्ये चमसपदसन्निधानात् ॥ ३० ॥

## सर्वेषां तु विधित्वात् तदर्था चमसश्रुतिः ॥ ३१ ॥

इमं पक्षं दूषयति । सर्वेषां त्विति । सर्वेषां प्रकृतयागसंबन्ध्यृत्विङ्मात्रस्य सर्वशब्देन ग्रहणम् । विधित्वात् सर्वकर्तृकभक्षणस्य विधित्वात् । अयं भावः । भक्षणमपूर्वं विधीयते तत्र कर्त्राकाङ्क्षायां प्रकरणाद्दरे प्रकृतपुरुषेणैव निराकाङ्क्षत्वे ऽप्रकृतचमसिपुरुषांशविधिकल्पने वाक्यं भिद्येत प्रकृतपुरुषाः पानं कुर्युः ते चमसिन इति । अतो भक्षणं प्रकृतसर्वर्त्विक्कर्तृकमिति । ननु चमसाञ् चमसिनो भक्षयन्तीति तत्स-

---

* इदं भाष्यकारमतम् । "वार्तिककारस्तु सदसो भक्षणस्यानत्वात्सुब्रह्मण्यस्य सदस्यप्रवेशात्तेन विरहिता अवशिष्टाः सामगा भक्षयन्तीत्यमुमेव तृतीयं पक्षमङ्गीचकार" इति माधवः ।

† हरिरसि हारियोजन इति मन्त्रेण गृह्यमाणो ग्रहो हारियोजन इति माधवः ।

विधौ पाठः किमर्थमत्राह । तदर्थो हारियोजनभक्षस्तुत्यर्थो चमसश्रुतिः चमसघटितवाक्यश्रुतिः । स्तुतिरित्थं चमसांश्चमसिन एव भक्षयन्ति हारियोजनं सर्वे भक्षयन्त्यतः श्रेष्ठमिति ॥ ३१ ॥

वषट्कारस्य भक्षनिमित्तत्वम् । अधि॰ १० ।

## वषट्काराच्च भक्षयेत् ॥ ३२ ॥

समाख्यैव भक्षणे निमित्तं न, किं तु वषट्कारकर्तृत्वमपीति सिद्धान्तमाह । वषडिति । वषट्कर्तुः प्रथमभक्ष इति वाक्येन वषट्कारकर्तारमुद्दिश्य प्रथमत्वविशिष्टभक्षणविधानादिति भावः* ॥ ३२ ॥

होमाभिषवयोरपि तन्निमित्तत्वम् । अधि॰ ११ ।

## होमाभिषवाभ्यां च ॥ ३३ ॥

समाख्यावाक्यवषट्कारेभ्यो ऽन्यद्भक्षकारणं दर्शयति । होमेति । होमाभिषवाभ्याम् । पञ्चमी हेतौ । उभयहेतुकमपि भक्षणम् । अयं भावः ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीति । अत्राभिषवहोमयोः वचनान्तरेण प्राप्तत्वान्निमित्तत्वेन अनूद्य यः अभिषवहोमकर्ता स भक्षयेदित्यपूर्वं भक्षणमात्रं विधीयतइति ॥ ३३ ॥

वषट्कर्त्रादीनां चमसे सोमभक्षः । अधि॰ १२ ।

## प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे ॥ ३४ ॥

चमसेषु चमसिनामेव भक्ष उत होमाभिषवकर्तुरपीति संशये पूर्वपक्षमाह । प्रतीति । चमसानां भक्षस्य चमसाञ् चमसिनो भक्षयन्तीति प्रत्यक्षोपदेशाद्भक्षणकर्तुः, शेषे ग्रहादौ अव्यक्तः भक्षयन्तीति सामान्यतो यत्र कर्ता तत्राभिषवादिकर्ता योज्यः ॥ ३४ ॥

## स्याद्वा कारणभावाद् अनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात् ॥ ३५ ॥

* न च भक्षणमुद्दिश्य प्राथम्यं विधीयते लाघवात्, तथा च न वषट्कारस्य भक्षनिमित्तत्वं संभवतीति वाच्यम् । एकप्रसरताभङ्गापत्त्या समस्तपदे उद्देश्यविधेयभावाप्रतीतेरिति वार्तिके विस्तरः ।

सिद्धान्तमाह । स्याद्वेति । चमसेष्वितरेषां भक्षः स्यात् । कारणस्य भक्षकारणस्य समवधानात् । प्राप्तत्वात् । ननूक्तं सामान्यबाधकं विशेषशास्त्रमत्राह । अनिर्देश इति । समाख्याकल्पितचमसिकर्तृकभक्षणशास्त्रेण कर्तुश्चमसिनः अनिर्देशः प्रापणमात्रम् अयोगव्यवच्छेदमात्रमिति फलितम् । तद्वचनत्वात् तावन्मात्रबोधकत्वाच्च चमसिनां विधिमात्रं न त्वन्येषां निवर्तकमिति भावः ॥ ३५ ॥

## चमसे चान्यदर्शनात् ॥ ३६ ॥

हेत्वन्तरमाह । चमसइति । चमसे अध्वर्युचमसे अन्यस्य वषट्कर्तुः दानदर्शनात् । चमसांश्चमसाध्वर्यवे प्रयच्छति तान् स वषट्कर्त्रे प्रयच्छतीति दानश्रवणात् । दानस्य भक्षार्थत्वात् ॥ ३६ ॥

एकपात्रे होतुः प्रथमभक्षः । अधि० १३ ।

## एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ ३७ ॥

एकस्मिन्पात्रे बहवो भक्षयन्ति कस्तत्र क्रम इति विचारे पूर्वपक्षमाह । एकपात्रइति । एकपात्रे बहूनां पानप्रसक्तौ अध्वर्युः पूर्वं भक्षयेत् । क्रमात् होमद्रव्यस्य अध्वर्युसन्निधानात् । सन्निधिस्थानक्रमाणां पर्यायत्वात् ॥ ३७ ॥

## होता वा मन्त्रवर्णात् ॥ ३८ ॥

सिद्धान्तमाह । होतेति । मन्त्रवर्णाद् होतुश्चित्पूर्वे हविरद्यमाशत इति मन्त्रलिङ्गात् ॥ ३८ ॥

## वचनाच्च ॥ ३९ ॥

वचनाद् वषट्कर्तुः प्रथमभक्ष इति वचनाच्च होतुः प्राथम्यम् ॥ ३९ ॥

## कारणानुपूर्व्याच्च ॥ ४० ॥

हेत्वन्तरमाह । कारणेति । प्रथमं वषट्कारः पश्चाद्धोम इति कारणक्रमः । यथा कारणक्रमः तथैव भक्षणक्रम इति भावः ॥ ४० ॥

भक्षणस्यानुज्ञापूर्वकत्वम् । अधि० १४ ।

*वचनादनुज्ञातभक्षणम् ॥ ४१ ॥

नानुपहूतेन सोमः पातव्य इति वचनादनुज्ञातस्यैव भक्षणमिति सिद्धान्तमाह । वचनादिति । स्पष्टम् ॥ ४१ ॥

वैदिकवचनेनानुज्ञापनम् । अधि० १५ ।

†तदुपहूत उपह्वयस्वेत्यनुज्ञापयेल्लिङ्गात् ॥ ४२ ॥

उपहूत उपह्वयस्वेतितत्तल्लिङ्गकमन्त्रसत्त्वान्न लौकिकवाक्येनेति सिद्धान्तमाह । तदिति ॥ ४२ ॥

वैदिकवचनेन आर्थक्रमानुसारेण प्रतिवचनम् । अधि० १६ ।

तत्रार्थात्प्रतिवचनम् ॥ ४३ ॥

उपहूत उपह्वयस्वेत्यत्रोत्तररूपस्य पूर्वपाठे ऽपि अग्निहोत्रं जुहोति यवागूं पचतीत्यत्रेव अर्थक्रमेण उत्तरपठितं प्रश्नवाक्यं, पूर्वमुत्तरवाक्यमिति सिद्धान्तमाह । तत्रेति ॥ ४३ ॥

एकपात्राणामेवानुज्ञापनम् । अधि० १७ ।

तदेकपात्राणां समवायात् ॥ ४४ ॥

सा ऽनुज्ञा एकपात्राणामेव नान्येषां तेषामेव परस्परं कलहप्रसक्तौ तत्परिहारार्थत्वादस्या इति सिद्धान्तमाह । तदिति । तद् अभ्यनुज्ञानं समवायाद् एकत्र भक्षस्य प्राप्तत्वात् । अभ्यनुज्ञया सर्वेषामैकमत्ये न्यूनाधिकलाभप्रयुक्तो न कलह इति भावः ॥ ४४ ॥

याज्यापनये भक्षस्याप्यपनयः । अधि० १८ ।

याज्यापनये न अपनीतो भक्षः प्रवरवत् ॥ ४५ ॥

ज्योतिष्टोमे ऋतुग्रहप्रचारे यजमानस्य याज्या सो ऽभिप्रेष्यति होतरेतद् यजेति स्वयं वा निषद्य यजतीति । अत्र होतुर्याज्यापनये यदा स्वयं यजति तदा यजमानस्य भक्षो ऽस्ति न वेति तत्र पूर्वपक्षमाह ।

* "तस्मात्सोमेः नानुपहूतेनेत्येतस्यार्थकथनार्थमुत्तरविवक्षार्थं चैतत्सूत्रम्" इति वार्त्तिककारः ।

† वार्त्तिके तच्छब्दरहितः पाठः । अस्य सूत्रस्य उत्तराधिकरणशेषत्वमेव वार्त्तिककारो स्वीचकार ।

याज्येति । वचनेन होतुः याज्यापनये ऽपि भक्षो नापनीतः प्रवरवत् । यथा होतारं त्वा वृणे इति क्रतुयाजार्थवरणं याज्यापनये ऽपि नापैति तद्वत् ॥ ४५ ॥

## यष्टुर्वा कारणागमात् ॥ ४६ ॥

सिद्धान्तमाह । यष्टुरिति । यष्टुर्वा कारणस्य वषट्कारकर्तृत्वरूपस्यागमात्* ॥ ४६ ॥

## प्रवृत्तत्वात्प्रवरस्यानपायः ॥ ४७ ।

प्रवरदृष्टान्तो विषम इत्याह । प्रवृत्तत्वादिति । प्रवरस्य वरणस्य प्रवृत्तत्वात् पूर्वमेव कृतत्वात् तस्यापायो न संभवति । अयं भावः । सर्वयाज्यार्थं होतुः तन्त्रेण वरणं तन्मध्ये एकयाज्यापनये ऽपि याज्यान्तरार्थं वरणस्य पूर्वमावश्यकत्वादिति ॥ ४७ ॥

फलचमसस्येज्याविकारत्वम् । अधि॰ १९ ।

## फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४८ ॥

ज्योतिष्टोमे राजन्यवैश्यकर्तृके कश्चिद्विशेषः श्रूयते, यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेद् न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत्र सोममिति । अनेन प्राप्यमाणद्रव्यं भक्षविकार इज्याविकारो वेति संशये पूर्वपक्षमाह । फलेति । फलचमसः उक्तप्रकारः नैमित्तिकराजन्यादिकर्तृकत्वरूपनिमित्तप्राप्तः भक्षविकारः श्रुतिसंयोगात् । बिभक्षयिषेदिति तमस्मै भक्षं प्रयच्छेदिति श्रवणात् ॥ ४८ ॥

## इज्याविकारो वा संस्कारस्य तदर्थत्वात् ॥ ४९ ॥

सिद्धान्तमाह । इज्येति । इज्याविकारः होमद्रव्यविकारः संस्कारस्य होमशेषप्रतिपत्तिसंस्कारस्य तदर्थत्वाद्धोमशेषार्थत्वात् । होमं विना

* भक्षकारणस्य वषट्कारकर्तृत्वस्य यजमाने एव प्रतीतेस्तस्यैव भक्ष इत्यर्थः । न च याज्यापनये वषट्कारकर्तृत्वं होतुः संभवति । अनवानं यजतीत्यनेन याज्यावषट्कारयोर्मध्ये श्वासनिषेधेन तयोरेककर्तृकत्वावगमात् । इत्थं च भक्षो ऽपि यजमानस्यैवेति सिद्धम् ।

होमशेषत्वासंभवात् पुरुषार्थभक्षणस्य विध्यभावाद् विभक्षयिषेदित्यस्य होमशेषं विभक्षयिषेदित्यर्थकतया होमार्थमेवेदं द्रव्यमिति भावः ॥ ४९ ॥

## होमात् ॥ ५० ॥

किं च, अन्यांश्चमसाञ् जुहोत्यथैतस्य दर्भतरुणकेन उपहत्य जुहोतीति फलचमसहोममुद्दिश्य दर्भतरुणस्य गुणत्वेन विधानादपि होमसिद्धिरित्याह । होमादिति । होमानुवादादित्यर्थः ॥ ५० ॥

## चमसैश्च तुल्यकालत्वात् ॥ ५१ ॥

अपि च, यदा ऽन्यांश्चमसानुन्नयन्त्यथैनं चमसमप्युन्नयन्तीति होमसाधनचमसैः सहोन्नयनकथनमपि होमसत्त्वे गमकमित्याह । चमसैरिति । तुल्यकालत्वाद् उभयोरुन्नयनस्य एककालत्वात् ॥ ५१ ॥

## लिङ्गदर्शनाच्च ॥ ५२ ॥

लिङ्गस्य तमस्मै भक्षं प्रयच्छेन्न सोममिति सोमनिषेधरूपस्य दर्शनाद् सोमनिषेधपूर्वकोक्तद्रव्यविधानेन सोमस्थानीयत्वं गम्यते । सोमस्य तु हुतशेषस्यैव भक्षणादस्यापि तथात्वं सिद्धमिति भावः ॥ ५२ ॥

ब्राह्मणानामेव राजन्यचमसानुसर्पणम् । अधि० २० ।

## अनुप्रसर्पिषु सामान्यात् ॥ ५३ ॥

राजसूये दशपेयनामकः सोमविकारः यागः । तत्र शतं ब्राह्मणाः सोमान् भक्षयन्ति दश दशैकैकं चमसमनुसर्पन्तीति । तत्र क्षत्रियस्यैव अधिकाराद् राजन्यचमसे दश राजन्या ब्राह्मणा वेति संशये पूर्वपक्षमाह । अन्विति । अनुप्रसर्पिषु राजन्यचमसानुसर्पिषु दश राजन्याः । सामान्यात् । एकजातीयत्वलाभात् । अयं भावः । प्रकृतितः चमसभक्षणे भक्षणे च एकजातीयकर्तृकत्वं प्राप्तं संख्याविशेषश्च प्राप्तः । तत्र दश दशेत्यनेन प्राकृतसंख्याबाधे ऽपि एकजातीयकर्तृकत्वबाधकं न किं चिद्वचनमस्ति । न च शतं ब्राह्मणा इति वचनं बाधकमिति शङ्क्यम् । दशचमसेषु दशविधौ शतमित्यनुवादवाक्यम् अत एव ब्राह्मणानां बहुत्वात् *छत्रिन्यायेन ब्राह्मणशब्द उभयपर इति ॥ ५३ ॥

---

* प्रथमाध्यायचतुर्थपादस्य षोडशाधिकरणोक्तेन न्यायेनेत्यर्थः ।

## ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५४ ॥

सिद्धान्तमाह । ब्राह्मणा इति । राजन्यचमसे ऽपि दश ब्राह्मणा एव तुल्यशब्दत्वाद् दशस्वपि चमसेषु ब्राह्मणा इत्येकजातीयशब्दवत्त्वात् । अयं भावः उभयोर्वाक्ययोः विधायकत्वे संभवति एकस्यानुवादत्वकल्पनमन्याय्यम् । शतं ब्राह्मणा इति शतमनूद्य ब्राह्मणा इति विधिः । ब्राह्मणविधाने ऽपि चमसेषु न्यूनाधिकसंख्यया ऽपि शतसंख्यापूरणं माभूदित्येतदर्थं दश दशेति नियमविधिसंभवादेकजातीया एव शतम् । अतो राजन्यचमसे ऽपि दश ब्राह्मणा इति सिद्धमिति ॥ ५४ ॥

इति जैमिनिसूत्रवृत्तौ तृतीयस्याध्यायस्य पञ्चमः पादः ॥ ५ ॥

अनारभ्य विहितानां पर्णतादीनां प्रकृतिगामित्वम् । अधि० १ ।

## सर्वार्थमप्रकरणात् ॥ १ ॥

यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीति अनारभ्य श्रुता पर्णता प्रकृतौ निविशतउत विकृतौ चेति संशये पूर्वपक्षमाह । सर्वार्थमिति । स्पष्टम् ॥ १ ॥

## *प्रकृतौ वा ऽद्विरुक्तत्वात्[†] ॥ २ ॥

सिद्धान्तमाह । प्रकृताविति । प्रकृतौ दर्शपूर्णमासएवाद्विरुक्तत्वात् । विकृतावतिदेशशास्त्रेण एकदा उक्तवचनेन चैकदेति सर्वार्थत्वे द्विरुक्तता स्यादिति भावः ॥ २ ॥

## तद्वर्जं तु प्रवचनं प्राप्ते ॥ ३ ॥

अनारभ्य वचनेन विकृतौ पर्णमयीत्वप्राप्तौ अतिदेशवचनं तद्वि-

* अत्र प्रकृतिशब्देन, विकृतिर्यतो ऽङ्गानि गृह्णाति सा प्रकृतिरिति लक्षिता न विवक्षिता । गृहमेधीये पर्णताया अप्राप्तिप्रसङ्गात् । तत्र पठितानामङ्गानां कुत्राप्यनतिदेशात् । किं तु अतिदेशेन यत्राङ्गप्राप्तिस्तत्कर्म विवक्षितम् । तथा च गृहमेधीये कृप्तोपकारैराज्यभागादिभिस्तत्र पठितैरेव अङ्गैर्नैराकाङ्क्ष्यादतिदेशाप्रवृत्त्या प्रकृतिशब्दग्राह्यत्वात्तत्रापि पर्णता सिध्यति । एतादृशविवक्षायाः स्वीकारे बीजं तु अद्विरुक्तत्वादिति हेतुरेवेति बोध्यम् ।

† द्विरुक्तत्वादिति पाठे विकृताविति पदमध्याहृत्य तत्र द्विरुक्तत्वात्प्रकृतावेवानारभ्याधीतानां निवेश इत्यर्थो बोध्यः । पाठद्वयं वार्त्तिककारेण प्रदर्शितम् ।

त्प्राकृतधर्मान् प्रापयतीति न द्विरुक्तिरित्याह । तदिति । प्राप्ते उक्तवचनेन विकृतावपि प्राप्ते ॥ ३ ॥

## दर्शनादिति चेत् ॥ ४ ॥

नन्वेवं चोदकशास्त्रादनारभ्यशास्त्रं यदि बलवत् तदा तेन शास्त्रेण पर्णमयीत्वरूपवैकृतधर्मप्राप्तौ गृहमेधीयवच् चोदकशास्त्रं सर्वमनाकाङ्क्षं स्यात् । न चेष्टापत्तिः । प्रयाजे प्रयाजे कृष्णलं जुहोतीति प्राकृतप्रयाजदर्शनादिति सिद्धान्ती शङ्कते । दर्शनादिति । विकृतौ प्रयाजादिदर्शनात् ॥ ४ ॥

## न चोदनैकार्थ्यात् ॥ ५ ॥

उक्ताशङ्कां निवारयति पूर्वपक्षी । नेति । अनारभ्यशास्त्रेण चोदकशास्त्रमनाकाङ्क्षं न । यस्य पर्णमयी जुहूर्भवतीति चोदनाया ऐकार्थ्यात् । एकस्य पर्णमयीत्वमात्रस्य विधानात् । यदि पर्णमयीत्वं जुहूं चेदं वाक्यं विदध्यात्तदा चोदकशास्त्रं निराकाङ्क्षं भवेत् । तदेव न । लाघवात् पर्णमयीत्वमात्रविधिरयं चोदकशास्त्रेण प्राप्तजुहूमुद्दिश्य। तथा च जुहूप्राप्त्यर्थं चोदकशास्त्रं साकाङ्क्षमिति भावः ॥ ५ ॥

## उत्पत्तिरिति चेत् ॥ ६ ॥

पुनः सिद्धान्त्याशङ्कते । उत्पत्तिरिति । उत्पत्तिः जुहूत्पत्तिरपि अनारभ्याधीतेति शेषः । यस्यैवंरूपाः स्रुचो भवन्तीति स्रुचां प्राप्तौ पर्णमयी जुहूरिति विशेषविधिः । तथा च जुहूप्राप्त्यर्थं न चोदकाकाङ्क्षेति भावः ॥ ६ ॥

## न तुल्यत्वात् ॥ ७ ॥

न, चोदकापेक्षा नास्तीति न । तुल्यत्वात्तुल्यत्ववाचकपदघटितत्वात् । अयं भावः । यस्यैवंरूपाः स्रुचो भवन्तीति प्रथमं स्रुक्प्राप्तिर्वाच्या । सा न संभवति । एवंरूपा इति पूर्वस्रुङ्निर्देशात् । अतः चोदकशास्त्रादेव जुहूप्राप्तिरिति ॥ ७ ॥

## चोदनार्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थः ॥ ८ ॥

चरमसिद्धान्तमाह । चोदनेति । प्रकृत्यर्थः प्रकृतिमात्रार्थः अयं विधिः । विकृतौ चोदनार्थकार्त्स्न्यात् कृत्स्नधर्माणामेव चोदकेन प्राप्तेः पर्णताया अपि प्राप्तत्वेन मुख्यस्यानारभ्यपठितशास्त्रस्य विप्रतिषेधादाकाङ्क्षाऽभावात् । यद्यपि अनारभ्यशास्त्रं प्रत्यक्षं चोदकमानुमानिकं विलम्बेन प्रवर्तते तथा ऽपि उक्तयुक्त्या जुहूप्राप्त्यर्थं प्रत्यक्षशास्त्रात् पूर्वमेव प्रवृत्तिरङ्गीकार्या । जुहूप्राप्तिवेलायामेव पर्णताया अपि प्राप्तौ प्रत्यक्षशास्त्रमेव निराकाङ्क्षमिति भावः ॥ ८ ॥

सामिधेनीनां सप्तदशसंख्याया विकृतिगामित्वम् । अधि॰ २ ।

## प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ ९ ॥

अनारभ्य श्रुतं, सप्तदश सामिधेनीरन्वाहेति । इदं पूर्वन्यायेन प्रकृतौ पाञ्चदश्येन सह विकल्पेन निविशतइति बहिः पूर्वपक्षे सिद्धान्तमाह । प्रकरणेति । प्रकरणे दर्शपूर्णमासप्रकरणे विशेषात् पञ्चदश सामिधेनीरन्वाहेति विशेषाद् विरोधि पाञ्चदश्यविरोधि साप्तदश्यं विकृतौ* स्यात् । प्रकरणसहकृतपाञ्चदश्यस्य पक्षे ऽपि प्रकृतौ बाधासंभवादिति भावः ॥ ९ ॥

गोदोहनादीनां प्रकृतिगामित्वम् । अधि॰ ३ ।

## नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥ १० ॥

दर्शपूर्णमाससन्निधावेव श्रूयते, गोदोहनेन पशुकामः प्रणयेदिति । प्रकृतौ चमसेन प्रणयनस्य अवरुद्धत्वात् पूर्वन्यायेन विकृताविति पूर्वपक्षे सिद्धान्तमाह । नैमित्तिकमिति । नैमित्तिकं गोदोहनं प्रकृतौ निविशते तद्विकारः सञ्चमसबाधकः सन् संयोगस्य पशुकाम इतिपदसंबन्धरूपस्य विशेषात् पूर्वोक्तसाप्तदश्यापेक्षया विशेषात् । अयं भावः । चमसः गोदोहनं चेत्युभयं दर्शपूर्णमाससन्निधौ पठितं तुल्यं, तथा ऽपि चमसशास्त्रं सामान्यं पशुकामेतरप्रयोगे सावकाशमिदं विशेषं निरवकाशं

* विकृतावपि न सर्वत्र किं तु मित्रविन्दादिष्वेवेति दशमे वक्ष्यते ।

सत् प्रबलमतः चमसस्य गोदोहनेन बाधसंभवात्प्रकृतावेव निविशत इति ॥ १० ॥

आधानस्य पवमानेष्ट्यङ्गत्वम् । अधि॰ ४ ।

## इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ११ ॥

अग्नये पवमानाय अग्नये पावकायेत्यादिवाक्यैः पवमानेष्टिर्विहिता । तत्सन्निधौ, वसन्ते ब्राह्मणो ऽग्निमादधीतेति श्रुतमाधानं पवमानेष्ट्यङ्गं सन्निधिपाठादिति पूर्वपक्षमाह । इष्टीति ॥ ११ ॥

## न वा तासां तदर्थत्वात् ॥ १२ ॥

सिद्धान्तमाह । न वेति । तासां पवमानेष्टीनां तदर्थत्वाद् अग्निसंस्कारार्थत्वाद् नाधानमिष्ट्यङ्गम् । अयं भावः अग्नीनामिष्ट्यर्थत्वे आधानं पवमानेष्ट्यङ्गं भवेत् । तदेव न, इष्टीनां फलाश्रवणेन फलवत्सन्निधावफलं तदङ्गमितिन्यायाप्रसरात् । किं तु आधानपवमानेष्ट्योरन्यार्थत्वम् अग्नीनां च निखिलक्रत्वर्थत्वमिति ॥ १२ ॥

## लिङ्गदर्शनाच्च ॥ १३ ॥

जीर्यति वा एष आहिताग्निः संवत्सरस्य परस्तादेतानि हवींषि संवत्सरे निर्वपेत् तेनैव न जीर्यतीतीष्टीनामन्यार्थत्वे लिङ्गमाह । लिङ्गेति ॥ १३ ॥

आधानस्य सर्वार्थत्वम् । अधि॰ ५ ।

## तत्प्रकृत्यर्थं यथा ऽन्ये ऽनारभ्यवादाः ॥ १४ ॥

आधानं प्रकृत्यर्थं पर्णमयीत्वन्यायादिति पूर्वपक्षमाह । तदिति । तद् आधानं शेषं स्पष्टम् ॥ १४ ॥

## सर्वार्थं वा ऽऽधानस्य स्वकालत्वात् ॥ १५ ॥

सिद्धान्तमाह । सर्वेति । सर्वार्थम् अग्निद्वारा सर्वक्रत्वर्थं स्वकालत्वाद् वसन्तऋतुरूपस्वकालस्य स्वातन्त्र्येण विधानात् । अयं भावः । दर्शपूर्णमासाङ्गत्वे प्रधानस्य यः कालो दर्शः पूर्णिमा च, स एव तदङ्गानां कालः न स्वतन्त्रः कालो ऽङ्गानाम् । इह तु स्वतन्त्रः कालः श्रूयते । अत

आधानं केवलाग्न्यर्थं तेनोत्पन्नाग्नीनां सर्वक्रत्वर्थत्वं यदाहवनीये जुहोतीति वाक्येनेति * ॥ १५ ॥

पवमानेष्टीनामसंस्कृते ऽग्नौ कर्तव्यत्वम् । अधि० ६ ।

**तासामग्निः प्रकृतितः प्रयाजवत् ॥ १६ ॥**

पवमानेष्टिषु पवमानेष्टिसंस्कृता अग्नयः अपेक्षिताः इति पूर्वपक्षमाह । तासामिति । तासां पवमानेष्टीनामग्निहोमार्थमग्निः प्रकृतितो दर्शपूर्णमासादतिदिश्यते प्रयाजातिदेशवत् । प्रकृतौ संस्कृताग्निसत्त्वाद् अत्रापि तथेति भावः ॥ १६ ॥

**न वा तासां तदर्थत्वात् ॥ १७ ॥**

सिद्धान्तमाह । न वेति । न तत्र पवमानेष्टिसंस्कृतो ऽग्निः इष्टीनां तदर्थत्वाद् अग्न्यर्थत्वात् । यदि पवमानेष्टौ तत्संस्कृताग्न्यपेक्षा पूर्वं पवमानेष्टिः कार्या तत्राप्यग्न्यपेक्षायां तत्पूर्वमिष्टिरित्यनवस्थाभयेन यत्र क्व चिदसंस्कृताग्नौ विश्रामः कार्यः अथ क्रियमाणः प्रथमत एव क्रियतइति भावः ॥ १७ ॥

उपाकरणादीनामग्नीषोमीयपशुधर्मत्वम् । अधि० ७ ।

**तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १८ ॥**

ज्योतिष्टोमे अग्नीषोमीयः सवनीयः अनूबन्ध्यश्चेति पशुत्रयम् । तत्सन्निधावेव पशुधर्मा आम्नाताः । अतः ज्योतिष्टोमप्रकरणाविशेषात् त्रयाणां पशुधर्मा इति पूर्वपक्षमाह । तुल्य इति । पशुविधिः पश्वङ्गविधिः । शेषं स्पष्टम् ॥ १८ ॥

**स्थानाच्च पूर्वस्य ॥ १९ ॥**

---

* स्यादेतत् । यथा अनारभ्याधीतमपि पर्णमयीत्वं जुहूस्वरूपपरत्वे आनर्थक्यात्क्रतुसाधनांशे लक्षणया विधीयमानं वाक्यादेव क्रत्वर्थं भवति एवमाधानमपीति। मैवम् । जुह्वादयो ह्याकृतिविशेषाः विना ऽपि पर्णमयीत्वेन तदाकारसंभवात् तत्स्वरूपार्थत्वे विध्यानर्थक्याद् युक्ता तत्र साधनांशलक्षणा, इह तु आहवनीयादिस्वरूपस्यादृष्टत्वाच् श्रुत्यवगततत्स्वरूपार्थत्वे ऽपि विध्यानर्थक्याभावाद् न साधनांशलक्षणया क्रत्वर्थत्वं युक्तमिति विशेष, इति शा० दी० ।

ननु न सर्वपश्वर्थाः पशुधर्माः किं तु सवनीयपश्वर्थाः चतुर्थे ऽह्नि आग्नेयः पशुरग्निष्टोमआलभ्यते इति सवनीयपशूत्पत्तिः । अग्नीषोमीयपशूत्पत्तिवाक्यं सोमक्रयसन्निधौ यदग्नीषोमीयं पशुमालभतइति । अवभृथोत्तरं मैत्रावरुणीं गां वशामनूबन्ध्यामालभतइति । तेषां मध्ये आग्नेयपशूत्पत्तिवाक्यसमीपे पशुधर्माम्नानात्तस्यैवावान्तरप्रकरणं युक्तम् । अवान्तरप्रकरणेन महाप्रकरणबाधादभिक्रमणस्य प्रयाजार्थत्ववत्सवनीयार्थत्वमेवेत्याशङ्कायामिमं पक्षं निरस्यति । स्थानादिति । स्थानाद् अग्नीषोमीययागस्थानात् पूर्वस्य च अग्नीषोमीयस्यापि । अयं भावः । यथा ऽवान्तरप्रकरणात् सवनीयाङ्गत्वं तथा स एव उपवसथीये ऽहन् द्विदेवत्यः पशुरालभ्यतइति वचनेन चतुर्थदिने अग्नीषोमीययागः तत्सन्निधौ पशुधर्मपाठात् स्थानक्रमेण तदङ्गत्वमपीत्युभयार्थाः पशुधर्मा इति ॥ १९ ॥

## श्वस्त्वेकेषां तत्र प्राक् श्रुतिर्गुणार्था ॥ २० ॥

सिद्धान्तमारभते । श्व इति । तु इति सिद्धान्तज्ञापकम् । एकेषां शाखिनां शाखायां श्वः सुत्याहे आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोतीति श्रुतम् । इदं सवनीयपशूत्पत्तिवाक्यम् । ननु तस्यामेव शाखायां चतुर्थदिवसे आग्नेयं पशुमालभतइति श्रूयते तस्य का गतिरत्राह।तस्यां शाखायां प्राक् चतुर्थदिवसे श्रुतिः उक्तवाक्यश्रवणं गुणार्था अङ्गविधानार्था । कीदृशाङ्गविधानार्थमिति चेदित्थम् । आग्नेयः पशुरग्निष्टोमआलभ्यते ऐन्द्राग्नः पशुरुक्थ्यऐन्द्रो वृष्णिः षोडशिन्यां सारस्वती मेष्यतिरात्रे इति उत्तरसंस्थासाधारणपशूञ्चतुर्थदिने प्रतिपाद्य, तत्रैव, यथा वै मत्स्यो ऽविदितः जनमवधूनुते एवं वा एते ऽप्रज्ञायमाना जनमवमानत इति । अस्यार्थः । यथा जलचरो मत्स्यः अविदितः स्वविरोधिजनोऽस्यतिज्ञानशून्यः स्वप्रेक्षकजनमवधूनुते इतो गतो न वेतिसंशयोत्पत्तिपूर्वकं तिरस्करोति, एवम् एते पशवः अप्रज्ञायमानाः स्वविनियोगस्थानमजानन्तः जनं स्वविनियोजनकर्तारम् ऋत्विजम् अवमानतः तिरस्कुर्वन्तीति स्थलाज्ञाने दोषमभिधाय एभिः सवनानि कथं पशुमन्तीति

तत्रैव प्रश्नवाक्यम् । एकेन पशुना सर्वाणि सवनानि कथं पशुयुक्तानि भवेयुरिति प्रश्नार्थः । तदुत्तरं वपया प्रातःसवने प्रचरति, पुरोडाशेन माध्यन्दिने सवने, अङ्गैः तृतीयसवनइति प्रचारविप्रकर्षविधिः । तदित्यमाश्विनं ग्रहं गृहीत्वेति पञ्चमदिने श्रुतेन वाक्येन उत्पन्नकर्मण आग्नेयः पशुरालभ्यतइत्यनुवादो निन्दार्थः, निन्दया प्रश्नवाक्योपस्थितिः ततः प्रचारविप्रकर्षविधिः इति साकाङ्क्षं सत्तावत्पर्यन्तमेकं वाक्यमिति भावः ॥ २० ॥

## तेनोत्कृष्टस्य कालविधिरिति चेत् ॥ २१ ॥

पुनः पूर्वपक्षी स्वकोटिं चालयति । तेनेति । तेन वपाप्रचारोत्कर्षेण उत्कृष्टस्य कालविधिः आश्विनं ग्रहं गृहीत्वेति वाक्यम् । अयं भावः प्रधानस्योत्कर्षे प्रातःसवने अङ्गानामुपाकरणादीनामप्युत्कर्षे प्रातःसवने कुत्र कर्तव्यमिति विशेषजिज्ञासायाम् आश्विनग्रहग्रहणोत्तरमिति विशेषकालविध्यर्थमुत्पत्तिवाक्यमाग्नेयः पशुरित्येवेति पुनरवान्तरप्रकरणं सिद्धमिति सवनीयार्था एते धर्मा इति ॥ २१ ॥

## नैकदेशत्वात् ॥ २२ ॥

इमं पक्षं सिद्धान्ती दूषयति । नैकेति । न कालविधिसंभवः । उत्कर्षस्यैकदेशत्वाद् वपाप्रचारमात्रोत्कर्षात् । अयं भावः । यदि चतुर्थदिनवाक्यमुत्पत्तिवाक्यं तर्हि अङ्गान्यपि चतुर्थदिनपठितानि उपाकरणादीनि पुनः कालाकाङ्क्षाशून्यानि । न च वपाप्रचारोत्कर्षादुपाकरणोत्कर्षः । तदादि वा ऽभिसंबन्धात्तदन्तमपकर्षं स्यादिति पञ्चमे वक्ष्यमाणत्वेन वपाप्रचारस्योत्कर्षं एव भवेन्न तत्पूर्वतनानामुत्कर्षः संभवति येन तेषां कालाकाङ्क्षा स्यादिति ॥ २२ ॥

## अर्थेनेति चेत् ॥ २३ ॥

ननु मुष्टिना पिधाय वपोद्धरणमासीतावपाहोमादिति श्रवणात् । न हि पूर्वदिने वपोद्धरणं मुष्टिना पिधायासीन उत्तरदिने तावत्कालपर्यन्तं स्थातुं शक्नोत्याहारविहारादिरहितः । अतो ऽर्थसिद्धः पूर्वाङ्गोत्कर्ष इति पूर्वपक्ष्याशङ्कते । अर्थेनेति । उत्कर्षः पूर्वाङ्गानामिति पूरणीयम् ॥ २३ ॥

## नाश्रुतिविप्रतिषेधात् ॥ २४ ॥

सिद्धान्ती समाधत्ते । नेति । नोक्तयुक्त्या ऽङ्गानामार्थिक उत्कर्षः । अश्रुतिविप्रतिषेधात् । तृणमुष्टिना पर्णमुष्टिना वा पिधाने ऽपि उक्तश्रुत्यविरोधात् । तस्मादाश्विनं ग्रहं गृहीत्वेति सवनीयोत्पत्तिविधिः तत्सन्निधावङ्गपाठाभावेन न सवनीयावान्तरप्रकरणं सम्भवतीति भावः ॥ २४ ॥

## स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २५ ॥

एवं चतुर्थदिने श्रूयमाणवाक्यं पूर्वोक्तगुणविधानार्थम् । आश्विनं ग्रहं गृहीत्वेति पञ्चमदिनश्रुतं सवनीयोत्पत्तिवाक्यमिति पूर्वोक्तयुक्तिभिः सिद्धौ उत्पत्तिवाक्यसमीपे ऽङ्गकलापाभावात्सवनीयस्य अवान्तरप्रकरणं नास्तीति सिद्धम् । अत एव द्वितीयतृतीयपूर्वपक्षौ निरस्ताविति सिद्धान्तमुपसंहरति । स्थानादिति । स्थानात् पूर्वोक्तवचनेन उत्कृष्टाग्नीषोमप्रचारस्थानादङ्गकलापपाठस्य पूर्वस्याग्नीषोमीयस्य धर्माः । ननु अवान्तरप्रकरणासिद्धावपि महाप्रकरणस्य जागरूकत्वाद् दुर्बलसन्निधिप्रमाणेन च प्रकरणस्य कथं बाधः तत्राह । संस्कारस्य पशुधर्मकलापस्य तदर्थत्वाद् अग्नीषोमीयपश्वर्थत्वात् । अयं भावः आकाङ्क्षारूपं यत्प्रकरणं तत्साक्षात् प्रधानार्थत्वेन पशुधर्मान् ग्रहीतुं न शक्नोति, पशुधर्माणां सोमयागे आकाङ्क्षाविरहात् । अतः तद्विषये पराङ्मुखं प्रकरणं पुनश्च धर्म्माम्नानानर्थक्यभिया सप्तदशारत्निन्यायेन* तदङ्गेषु पशुषु परम्परया सन्मुखम् । तत्रापि स्थानसहितस्य प्रकरणस्य बलवत्त्वादग्नीषोमीयपश्वर्थत्वमेवेति ॥ २५ ॥

## लिङ्गदर्शनाच्च ॥ २६ ॥

उक्तार्थे लिङ्गमप्यस्तीत्याह । लिङ्गेति । लिङ्गदर्शनात्पूर्वोक्तवचने पुरोडाशेन माध्यन्दिने सवनइति लिङ्गम् । तथा हि यदि त्रयाणां महाप्रकरणेन पशुधर्माः तर्हि अग्नीषोमीयवपया प्रचर्य अग्नीषोमीयेन पुरोडाशेन प्रचरतीति श्रुतत्वात् पुरोडाशः सवनीस्य नास्त्येव पुरोडाशेन माध्यन्दिने सवने इत्युक्तम् । अग्नीषोमीयमात्रधर्मत्वे पुरोडाशयागस्य पशु-

* तृतीयाध्यायस्य प्रथमपादे नवमाधिकरणे उक्तेन न्यायेनेत्यर्थः ।

यागाङ्गत्वाद् अतिदेशेन प्राप्तौ तस्य माध्यंदिनसवनकालविधानं संगच्छतइति लिङ्गम् ॥ २६ ॥

## अचोदना गुणार्थेन ॥ २७ ॥

ननु अथो पशोरेवच्छिद्रमपिदधातीति श्रुत्या पशोर्वपोद्धरणे यच्छिद्रं तत्पिधानार्थतया सवनीयपशावपि पुरोडाशो ऽतिदेशं विना प्राप्नोतीति न पूर्वोक्तलिङ्गं स्वसमीहितसाधकमत्राह । अचोदनेति । गुणार्थेन छिद्रपिधानार्थेन अचोदना विधिर्न, किं त्वर्थवादः पुरोडाशस्तावकः ॥ २७ ॥

शाखाहरणादीनामुभयदोहधर्मत्वम् । अधि० ८ ।

## दोहयोः कालभेदाद् असंयुक्तं श्रुतं स्यात् ॥ २८ ॥

दर्शपूर्णमासे सायंदोहः प्रातर्दोह इति द्वयमस्ति तत्र दोहधर्माः* सायंदोहार्थाः उतोभयार्था इति संशये पूर्वपक्षमाह । दोहेति । श्रुतप्रातर्दोहः असंयुक्तं दोहधर्मणासंयुक्तं द्वयोः कालभेदात् । पूर्वन्यायेन सायंदोहस्य धर्मसन्निधानादिति भावः ॥ २८ ॥

## प्रकरणाविभागाद्वा संयुक्तस्य कालमात्रम् ॥ २९ ॥

सिद्धान्तमाह । प्रकरणेति । प्रकरणस्य महाप्रकरणस्य अविभागाद् उभयोरभेदाद् उभयोरङ्गम् । कालशास्त्रमैन्द्रं दध्यमावास्यायाम् ऐन्द्रं पयो ऽमावास्यायामिति कालशास्त्रं संयुक्तस्यैव अङ्गसंयुक्तस्य प्रधानस्यैव । अयं भावः । न सायंदोहस्य पूर्वद्युराम्नानं, किं तु उत्तरस्मिन्नेव ऐन्द्रं दधीत्यादिवाक्येन प्रधानसिद्धौ अङ्गानामपि स एव कालः । दधि सद्यो न भवतीति पूर्वद्युरनुष्ठानमर्थापत्त्या न वचनेनेति पूर्वस्माद्वैषम्यमिति ॥ २९ ॥

संमार्गादीनां ग्रहधर्माणां सवनत्रयार्थत्वम् । अधि० ९ ।

## तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ ३० ॥

ऐन्द्रवायवादयो दश ग्रहाः प्रातःसवने श्रुताः । तेषां धर्मा अपि दशापवित्रेण ग्रहं संमार्ष्टीत्यादयः । ते ऽग्नीषोमीयपशुधर्मवत्प्रातःसव-

* पलाशशाखाच्छेदनवत्सापाकरणादयो दोहधर्माः ।

र्थाः सन्निधेरिति चेत्। पूर्वपक्षे सिद्धान्तमाह । तद्वदिति । दोहधर्मवत् सवनान्तरे ऽपि ग्रहाम्नानं ग्रहधर्माम्नानं सोमयागस्य अभ्यासरूपत्वेन यागपृथक्त्वाभावात्सर्वार्थमिति ॥ ३० ॥

रशनात्रिवृत्त्वादीनां सर्वपशुधर्मत्वम् । अधि० १० ।

## रशना च लिङ्गदर्शनात् ॥ ३१ ॥

अग्नीषोमीयपशौ यूपं परिव्ययतीति श्रुतम् । यूपं रशनया वेष्टयतीत्यर्थः । तत्रैव रशनाधर्मा अप्याम्नाताः । दर्भमयी भवति त्रिवृद्भवतीत्यादयः । एवं सवनीयपशावपि त्रिवृता यूपं परिवीयेति परिव्याणान्तरमाम्नातम् । रशनाधर्मा उभयार्था उताग्नीषोमीयार्था एवेति संशये सन्निधानादग्नीषोमीयरशनार्था इति चेत्। पूर्वपक्षे सिद्धान्तमाह । रशनेति । रशना धर्मसहिता रशना उभयार्था । लिङ्गदर्शनात् । सवनीयपरिव्याणे त्रिवृत्त्वगुणविशिष्टरशनानुवादात् । अन्यथा यूपं परिवीयेत्येतावतैव चारितार्थ्ये रशनाया अतिदेशेन धर्मविशिष्टस्य प्राप्तौ त्रिवृतेति विशेषणं व्यर्थं स्यादिति भावः ॥ ३१ ॥

अंश्वदाभ्ययोरपि सादनादिधर्मवत्त्वम् । अधि० ११ ।

## आराच्छिष्टमसंयुक्तमितरैरसन्निधानात् ॥ ३२ ॥

ज्योतिष्टोमसन्निधौ पठिता ऐन्द्रवायवादिग्रहाः । अनारभ्य पठिता अदाभ्यादिग्रहाः । एवं सति संमार्गाद्यो ये ग्रहधर्माः ते सर्वार्था उत प्रकरणपठितग्रहार्था इति संशये पूर्वपक्षमाह । आरादिति । आरात्प्रकरणपठितग्रहसमीपे शिष्टं यत् संमार्गादि इतरैः अनारभ्य पठितग्रहैः असंयुक्तमसन्निधानाद्दूरस्थत्वात् ॥ ३२ ॥

## संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ ३३ ॥

सिद्धान्तमाह । समिति । ग्रहमात्रेण संयुक्तं दूरपठितानामपि तदर्थत्वाज्ज्योतिष्टोमापूर्वार्थत्वात् । शेषस्य ग्रहधर्मस्यापि ग्रहद्वारा तन्निमित्तत्वाज्ज्योतिष्टोमापूर्वकारणत्वात् । संमार्गाद्युद्देश्यतावच्छेदकं न ग्रहत्वम् आनर्थक्यात् किं तु प्रकृतापूर्वसाधनत्वं तच्च दूरस्थे ऽपि तुल्यमिति भावः ॥ ३३ ॥

## निर्देशाद्व्यवतिष्ठेत ॥ ३४ ॥

ननु मैत्रावरुणं पयसा वृणातीत्यत्रापि पयसा योगः तुल्ययुक्त्या सर्वत्र स्यादत्राह । निर्देशादिति । निर्देशाद् मैत्रावरुणमिति उद्देश्यनिर्देशाद् व्यवतिष्ठेत तत्रैव ॥ ३४ ॥

चित्रिण्यादीष्टकानामग्न्यङ्गत्वम् । अधि० १२ ।

## अग्न्यङ्गमप्रकरणे तद्वत् ॥ ३५ ॥

महाग्निचयने अखण्डा अकृष्णा इष्टका इति इष्टकाधर्माः अनारभ्य पठितचित्रिण्यादीष्टकाङ्गानि न, असन्निधानादिति बहिः पूर्वपक्षे सिद्धान्तमाह । अग्नीति । अप्रकरणे श्रुतम् अग्न्यङ्गं चित्रिण्यादयः तद्वद् अदाभ्यादिग्रहवद्धर्मान् लभते । हेतुः पूर्व एव तद्वदित्यनेन दर्शितः । ननु पूर्वन्यायेनैव गतार्थत्वात् पृथगधिकरणं व्यर्थमिति चेत् । उच्यते । क्व चिच्छाखान्तरे ज्योतिष्टोमप्रकरणे अदाभ्यग्रहपाठः, यस्यैवं विदुषोऽदाभ्यो गृह्यतइति, इह तु तदपि नास्तीति विशेषः पूर्वपक्षः । निराकरणं तस्यापि पूर्ववदेव बोध्यम् ॥ ३५ ॥

क्रयाभिषवादीनां सोममात्रधर्मत्वम् । अधि० १३ ।

## नैमित्तिकमतुल्यत्वाद् असमानविधानं स्यात् ॥ ३६ ॥

पूर्वोक्तफलचमस इज्याविकार इति साधितत्वादिज्याविकारसोमधर्माः क्रयादयः फलचमसार्था इति बहिः पूर्वपक्षे सिद्धान्तमाह । नैमित्तिकमिति । नैमित्तिकं *फलचमसद्रव्यम् असमानविधानं सोमतुल्यविधानं न स्यात् । अतुल्यत्वात् सोमस्य नित्यत्वेन फलचमसस्य राजन्यादिकर्तृकत्वनिमित्तकत्वेन अतुल्यत्वात् । यदि फलचमसार्थमपि क्रयादिधर्माः तर्हि नित्यत्वेन श्रुतिर्विरुध्येत । †तस्मादतिदेशेनैव धर्मप्राप्तिस्तत्रेति भावः ॥ ३६ ॥

---

* न्यग्रोधमुकुलरूपस्य फलस्य पिष्टं चम्यते यत्र स फलचमस इति माधवः ।

† नित्या अभिषवादिसंस्कारा नित्यं सोमं संस्कार्यं लब्ध्वा चरितार्थाः सन्तो नान्यं संस्कार्यमपेक्षन्ते । फलचमसस्तु सोमविकारत्वात्पश्चाद्भावी । ततो निरपेक्षाः संस्कारविधयो न तत्र प्रवर्तन्त इति माधवः ।

प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानम् । अधि० १४ ।

## प्रतिनिधिश्च तद्वत् ॥ ३७ ॥

व्रीह्यभावे नित्यं प्रतिनिधिना ऽनुष्ठेयमिति षष्ठे वक्ष्यति । तथा च मुख्यप्रतिनिध्युभयसाधारणाः प्रोक्षणादयः उत मुख्यार्था एवेति संशये पूर्वपक्षमाह । प्रतीति । तद्वत् सोमधर्मवत् प्रतिनिधेरनित्यत्वादिति भावः ॥ ३७ ॥

## न तद्वत्प्रयोजनैकत्वात् ॥ ३८ ॥

सिद्धान्तमाह । नेति । न तद्वत्, सोमधर्मवन्न प्रयोजनैकत्वात् पुरोडाशनिष्पत्तिरूपप्रयोजनैकत्वात् । अयं भावः । व्रीहिभिर्यजेतेत्यत्र शब्दार्थस्य व्रीहित्वजातेः होमकरणत्वं न संभवति अमूर्तत्वात् । नापि व्रीहीणाम् अवहननपेषणादिना तन्नाशात्, किं तु व्रीह्यवयवे लक्षणा वाच्या । मुख्याभावे क्रियमाणः प्रतिनिधिः सदृशतम इत्यपि षष्ठे वक्ष्यति । व्रीहीणामुत्पादकाः नीवाराणां च परमाणव एकजातयः । तैरेव परमाणुभिः संयोगविशेषेण कदा चिद् व्रीहयः कदा चिन्नीवाराः । यदा व्रीहिसंबन्धिनस्तदा मुख्या यदा व्रीह्यसंबन्धिनस्तदा अमुख्याः प्रतिनिधिरूपा इति व्रीहिपदतात्पर्यविषयत्वमुभयोरित्युभयार्था धर्माः ॥ ३८ ॥

## अशास्त्रलक्षणत्वात् ॥ ३९ ॥

व्रीहिनीवारयोः प्रकृतिविकृतिभावो नास्तीत्यत्र हेत्वन्तरमाह । अशास्त्रेति । व्रीहिभिरिति श्रवणाद् व्रीहिरूपफलोपधायकाः परमाणवो हि परम्परया व्रीहित्वसंबद्धाः शास्त्रीयाः यागाङ्गभूताः । ये स्वरूपयोग्याः तत्त्वशास्त्रीयाः । अतो न तयोः प्रकृतिविकृतिभाव इति भावः ॥ ३९ ॥

श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानम् । अधि० १५ ।

## नियमार्था गुणश्रुतिः ॥ ४० ॥

सोमाभावे पूतीकानभिषुणोतीति पूतीकानां शास्त्रविहितत्वात् तत्र प्रकृतिविकृतिभावः संभवतीति बहिः पूर्वपक्षे सिद्धान्तमाह । नियमेति । गुणश्रुतिः पूतीकश्रवणं पूर्वन्यायेन प्रधानसोमसादृश्येन अन्यद्रव्य-

स्यापि प्राप्तौ पूतीकानिति नियमविधिः । तथा च अशास्त्रीयत्वं तुल्यमिति भावः ॥ ४० ॥

दीक्षणीयादिधर्माणामग्निष्टोमाङ्गत्वम् । अधि० १६ ।

## संस्थास्तु समानविधानाः प्रकरणाविभागात् ॥ ४१ ॥

ज्योतिष्टोमस्य संस्थाश्चतस्रः अग्निष्टोम उक्थ्यः षोडश्यतिरात्र इति । संस्था समाप्तिः । येन साम्ना क्रतुः समाप्यते तन्नाम्ना क्रतुव्यवहारः । अत्यग्निष्टोमाप्तोर्यामवाजपेयानां चतुर्ष्वेवान्तर्भावः तथा व्यक्तमाकरे । ज्योतिष्टोमेन स्वर्गकामो यजेतेति क्रतुफलं श्रूयते । तथा तत्तत्साम्ना क्रतुसमाप्तिरूपगुणफलान्यपि ज्योतिष्टोमाश्रयाणि श्रूयन्ते, पशुकाम उक्थ्यं गृह्णीयात्, षोडशिना वीर्यकामः स्तुवीत, अतिरात्रेण प्रजाकामं याजयेदिति । एवं सति दीक्षणीयादिधर्माः संस्थासाधारणाः उत ज्योतिष्टोमस्यैवेति संशये पूर्वपक्षमाह । संस्था इति । संस्था उक्ता ज्योतिष्टोमेन समानविधानाः प्रकृतिविकृतिभावशून्या इति यावत् । प्रकरणस्य ज्योतिष्टोमप्रकरणस्य अविच्छेदात् ॥ ४१ ॥

## व्यपदेशश्च तुल्यवत् ॥ ४२ ॥

इतो ऽपि समानविधाना इत्याह । व्यपदेशेति । आज्यशेषप्रतिपत्तिं वदति शास्त्रम् । यद्यग्निष्टोमो जुहोति, यद्युक्थ्यः परिधौ निमार्ष्टि, यद्यतिरात्रो यजुर्वदन् प्रपद्यते यज्ञक्रतूनां व्यावृत्त्या इति । व्यपदेशः अङ्गवैलक्षण्यं तुल्यवदङ्गानि दर्शयति। यथा यदि रथन्तरसामा सोमः स्याद् ऐन्द्रवायवाग्रान् गृह्णीयादितिवत् । अपि च आग्नेयमजमग्निष्टोमआलभते, ऐन्द्राग्नं द्वितीयमुक्थ्ये, ऐन्द्रं वृष्णिं तृतीयं षोडशिनि। द्वितीयस्य तृतीयस्य च दर्शनं सामानविध्ये घटते । उक्थ्ये हि द्वे निमित्ते स्तः अग्निष्टोमस्तोत्रमुक्थ्यस्तोत्रं चेति । तत्र द्वौ नैमित्तिकावाग्नेय ऐन्द्राग्नश्च । तेन द्वितीयदर्शनं नोपपद्येत, भवति तु तस्मात्सर्वावस्थस्य ज्योतिष्टोमस्य दीक्षणीयादिधर्माः ॥ ४२ ॥

## विकारास्तु कामसंयोगे सति नित्यस्य समत्वात् ॥ ४३ ॥

सिद्धान्तमाह । विकारा इति । संस्था ज्योतिष्टोमस्य विकाराः । कामसंयोगे सति पशुकामादिसंयोगे सति नित्यसमत्वात् । पूर्वं फलचमसस्थले दर्शितनित्यचमसानित्यगोदोहनतुल्यत्वात् । दीक्षणीयादयस्तु नित्यवक्तृतामग्निष्टोमसंस्थां गृह्णीयुः । स्वस्य नित्यवक्तृत्वात् । नोक्थ्यादिकं तस्य कामनायां सत्यामेव प्रवृत्तेरनित्यत्वेन नित्यानित्यसङ्गविरोधस्य तुल्यत्वादिति भावः ॥ ४३ ॥

## वचनात्तु समुच्चयः ॥ ४४ ॥

ननु पूर्वोक्तं द्वितीयतृतीयवचनं समानविधावकल्पतइति तदुत्तरं किमत्राह । वचनादिति । इदं समुच्चयविधायकं वचनमपूर्वं न ज्ञापकमिति भावः ॥ ४४ ॥

## प्रतिषेधाच्च पूर्वेषाम् ॥ ४५ ॥

इतो ऽपि ज्योतिष्टोमविकारा उक्थ्यादय इत्याह । प्रतिषेधादिति । पूर्वलिङ्गानां होमानां प्रतिषेधाद् होमनिषेधपूर्वकापूर्वगुणविधानात् । ज्योतिष्टोमस्यायं विकारः इति सिध्यतीति । अयं भावः । उक्थ्ये आज्यशेषेण होमो न कार्यः किं तु परिधौ मार्जनं कार्यमिति प्रतीयते । यदि प्रकृतिविकृतिभावो न स्यात् तदा होमस्यात्यन्तमप्राप्तत्वान्निषेधपूर्वकगुणविधानं न स्यादिति ॥ ४५ ॥

## गुणविशेषादेकस्य व्यपदेशः ॥ ४६ ॥

ननु यद्यङ्गजातं ज्योतिष्टोममनुसरेत् तर्हि यदग्निष्टोमो जुहोतीत्यत्राग्निष्टोमशब्देन विशेषतया व्यपदेशः किमर्थः प्रकरणेन नित्ये ज्योतिष्टोमे होमस्य निवेशादत्राह । गुणेति । एकस्य ज्योतिष्टोमाधिकृतस्य गुणविशेषात् । अग्निष्टोमसाम्ना समाप्तेः फलाभावेन फलविशेषानधिकृतादग्निष्टोमसाम्ना समाप्तिरूपगुणविशेषाद् व्यपदेशः अनुवाद इति शेषः । पूर्वोक्तनित्यानित्यविरोधरूपदोषाद् नित्यस्वरूपाग्निष्टोमार्थत्वे सिद्धे ऽग्निष्टोमशब्दो ऽनुवाद इति भावः ॥ ४६ ॥

इति जैमिनिसूत्रवृत्तौ तृतीयस्याध्यायस्य षष्ठः पादः ॥ ६ ॥

बर्हिरादीनां दर्शपौर्णमासतदङ्गोभयाङ्गत्वम् । अधि॰ १ ।

## प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ १ ॥

दर्शपूर्णमासयोः बर्हिः तद्धर्माः वेदिः तद्धर्माश्च श्रूयन्ते । एते केवलं प्रधानार्था उताङ्गप्रधानार्था इति संशये पूर्वपक्षमाह । प्रकरणेति । असंयुक्तम् अयुङ्गायुङ्गान् मुष्टीन् लुनातीति बर्हिरुत्पत्तिवाक्ये उद्देश्येन असंबद्धम् अतः अङ्गाकाङ्क्षारूपप्रकरणविशेषात् प्रधानस्य धर्मा इमे बर्हिरादयः, अङ्गानामनवस्थाभयेन अङ्गाकाङ्क्षाविरहादिति भावः ॥ १ ॥

## सर्वेषां वा शेषत्वं स्यात्तत्र युक्तत्वात् ॥ २ ॥

सिद्धान्तमाह । सर्वेषामङ्गप्रधानानां शेषत्वं बर्हिर्वेद्यादीनां स्यात् । वेद्यां हवींषि आसादयतीति अङ्गप्रधानसाधारणं यद्धविः तत्प्रयुक्तत्वात् हविर्मात्रप्रयोजकत्वश्रवणात् । प्रकरणाद्वाक्यस्य बलवत्त्वादिति भावः ॥ २ ॥

## आरादपीति चेत् ॥ ३ ॥

पूर्वपक्षी शङ्कते । आरादिति । आरात्समीपे शिष्टपिण्डपितृयज्ञस्यापि बर्हिर्वेद्यादिश्चोपकारकं स्यात् । सर्वशेषत्वादिति ॥ ३ ॥

## न तद्वाक्यं हि तदर्थत्वात् ॥ ४ ॥

उक्तातिप्रसङ्गं परिहरति । वाक्यमिति । वाक्यं बर्हिर्वेद्यादिवाक्यं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यनेन एकवाक्यतामापन्नमिति पूरणीयम् । तत्प्रकरणपाठेन तदर्थत्वात् ॥ ४ ॥

## लिङ्गदर्शनाच्च ॥ ५ ॥

उक्तार्थे लिङ्गमप्याह । लिङ्गमिति । ध्रुवामेवाग्रे ऽभिघारयति ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवतीति अभिघारणस्याज्यभागार्थतां दर्शयति । यथा ऽभिघारणस्य उभयार्थत्वं तथैवेतरेषामङ्गानामिति भावः ॥ ५ ॥

स्वामिसंस्काराणां प्रधानार्थत्वम् । अधि॰ २ ।

## फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥ ६ ॥

ज्योतिष्टोमे केशश्मश्रु वपते इत्यादयः पूर्ववदुभयार्था इति बहिः पूर्वपक्षे सिद्धान्तमाह । फलेति । स्वामिना यजमानेन संयुक्तं यजमानसंस्काररूपं कर्म प्रधानस्याङ्गं फलसंयोगात् फलभोक्तृत्वादित्यर्थः । यजमानस्य द्वे रूपे कर्तृत्वं भोक्तृत्वं चेति । तत्र कर्तृत्वसिद्धौ न शास्त्रापेक्षा किं तूक्तसंस्कारसाध्यत्वाद्भोक्तृत्वस्य शास्त्रैकसमधिगम्यत्वमतः फलिसंस्कारा भोक्तृत्वेनैव साकमन्वयमर्हन्ति तत्रान्वये फलस्य तत्रैव संबन्धात्फलसन्निकर्षात्प्रधानार्थत्वमिति भावः ॥ ६ ॥

सौमिकवेद्यादीनामुभयार्थत्वम् । अधि॰ ३ ।

## चिकीर्षया च संयोगात् ॥ ७ ॥

सौमिकी वेदिः उभयार्था उत प्रधानार्थेति संशये पूर्वपक्षमाह । चिकीर्षेति । इयं प्रधानार्था चिकीर्षया इयति शक्ष्यामीति सौमिकवेदिसन्निधौ चिकीर्षाघटितवाक्यश्रवणात् । पुरुषस्य चिकीर्षितं प्रधानं फलवत्त्वात् । अङ्गानि न तथेति भावः ॥ ७ ॥

अभिमर्शनस्याङ्गप्रधानोभयाङ्गत्वम् । अधि॰ ४ ।

## तथा ऽभिधानेन ॥ ८ ॥

एतदधिकरणमसमाप्यैव अधिकरणान्तरारम्भः । *चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रा† ऽमावास्यायाम् इति । तथा आभ्यां मन्त्राभ्यामभिमर्शनं प्रधानहविषामभिधानेन पौर्णमासीमित्यादिनाम्ना प्रधानवाचकेन संयोगात् । पौर्णमास्यमावास्याशब्दौ प्रधानवाचकाविति ‡विद्वदधिकरणे व्यवस्थापितत्वादिति भावः । इदमपि पूर्वपक्षसूत्रम् ॥ ८ ॥

## तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ॥ ९ ॥

प्रथमाधिकरणपूर्वपक्षं निरस्यति । तद्युक्ते इति । तद्युक्ते अङ्गयुक्ते प्रधाने फलश्रुतिः फलसाधनत्वश्रुतिः तस्मात्सर्वस्य साङ्गप्रधानस्य चिकीर्षा स्यादतः सर्वार्था वेदिरिति भावः ॥ ९ ॥

---

* पृथिवी होतेत्यादिको मन्त्रश्चतुर्होता, तस्मिन् मन्त्रे यज्ञाङ्गानां चतुर्णां श्रुतत्वाद् इति माधवः । प्रकारान्तरमपि तेनोक्तं जै॰ न्या॰ वि॰ ।

† अग्निर्होतेत्यादिको मन्त्रः पञ्चहोतेति माधवः ।

‡ द्वि॰ अ॰ द्वि॰ पा॰ नु॰ अ॰ ।

## गुणाभिधानात्सर्वार्थमभिधानम् ॥ १० ॥

द्वितीयाधिकरणसिद्धान्तमाह । गुणेति । पूर्वोक्तवाक्ये अमावास्यापौर्णमासीशब्दाभ्यां गुणस्य अङ्गस्य कालस्याभिधानात्सर्वार्थं साङ्गप्रधानार्थमभिमर्शनम् । अयं भावः अमावास्यापौर्णमासीशब्दौ यदि प्रधानवाचकौ गृह्येते तस्य क्रियारूपत्वेन अभिमर्शो न सम्भवति तस्य हविषि लक्षणाकल्पनापेक्षया प्रत्ययस्यैव सप्तम्यर्थे लक्षणा युक्तेति ॥ १० ॥

दीक्षादक्षिणयोः प्रधानार्थत्वम् । अधि० ५ ।

## दीक्षादक्षिणं तु वचनात्प्रधानस्य ॥ ११ ॥

दीक्षादक्षिणयोः योग्यत्वेन उभयार्थत्वे प्राप्ते सिद्धान्तमाह । दीक्षेति । वचनात्सोमस्य दीक्षा सोमस्य दक्षिणेति वचनात् । शेषं स्पष्टम् ॥ ११ ॥

## निवृत्तिदर्शनाच्च ॥ १२ ॥

उक्तार्थे साधकान्तरमाह । निवृत्तीति । अग्नीषोमीयविकृतौ निरूढपशौ षड्ढोतारं मनसा ऽनुद्रुत्य जुहोति सैवास्य दीक्षेति स्तुत्या दीक्षानिवृत्तिदर्शनान्नोभयार्था, अङ्गार्थत्वे अग्नीषोमार्थत्वेन विकृतौ अतिदेशेन प्राप्तौ निवृत्त्ययोगादिति भावः ॥ १२ ॥

अन्तर्वेदेर्यूपानङ्गत्वम् । अधि० ६ ।

## तथा यूपस्य वेदिः ॥ १३ ॥

अग्नीषोमीयपशौ यूपावटं प्रकृत्य श्रूयते, अर्धमन्तर्वेद्यर्धं बहिर्वेदीति । अनेन अवटमुद्दिश्य संस्कृतान्तर्वेद्यर्धदेशो विधीयतउतासंस्कृतः अर्धो देशो ऽन्तर्वेद्याः अर्धः बहिश्च यथा स्यात् तादृशदेशं लक्षयित्वा स विधीयतइति संशये पूर्वपक्षमाह । तथेति । यथा दीक्षादक्षिणं वचनात्प्रधानार्थं तथोक्तवचनाद्यूपस्य यूपावटस्य वेदिः अर्धान्तर्वेदिः अङ्गम् ॥ १३ ॥

## देशमात्रं वा शिष्टेनैकवाक्यत्वात् ॥ १४ ॥

सिद्धान्तमाह । देशमात्रमिति । देशमात्रमसंस्कृततावन्मात्रं लक्षयित्वा विधीयते । शिष्टेन अर्धं बहिर्वेदीति शिष्टेन एकवाक्यत्वात् ,

अर्थान्तर्वेदिविधाने अर्थे बहिर्वेदीति बहिर्वेद्यर्थमपि विधेयम्। उभयविधौ वाक्यभेदस्तत्परिहारार्थः। देशविशेषे लक्षणायां तादृशो देशविशेष एक एव विधीयतइति न वाक्यभेद इति भावः ॥ १४ ॥

हविर्धानस्य सामिधेन्यनङ्गत्वम्। अधि० ७।

## सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम् ॥ १५ ॥

ज्योतिष्टोमे श्रूयते, उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरिति। सामिधेनीहविर्धानयोर्मध्ये यस्मिन् हविर्धाने सुन्वन्ति तत्सामिधेनीभिः संबन्धयेदित्यर्थः*। अत्र हविर्धानं सामिधेन्यङ्गमुत तल्लक्षितो देश इति संशये पूर्वपक्षमाह। अत्र इत्यन्तं विषयवाक्यं तस्य वचनादित्यनेनान्वयः। हविर्धानयोर्मध्ये यस्मिन् सुन्वन्ति तत्सामिधेनीनामङ्गम्। यस्मिन् सुन्वन्ति तदन्वाहुरिति वचनात् ॥ १५ ॥

## देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य ॥ १६ ॥

सिद्धान्तमाह। देशेति। देशविशेषः दक्षिणहविर्धानदेशमात्रं नियम्यते। कुतः, सोमस्य अर्थकर्म अकारकं हविर्धानमुपकारकं प्रत्यक्षम्। तथा च सोमाङ्गत्वेन अङ्गान्तरं नाकाङ्क्षति दर्शपूर्णमासादाहवनीयप्रत्यग्देशोऽतिदेशशास्त्रेण प्राप्तः स एव हविर्धानदेशः। तत्र हविर्धानशकटौ द्वौ दक्षिणोत्तरौ तयोर्द्वयोरप्यतिदेशेन पक्षे प्राप्तौ यस्मिन् सुन्वन्तीति वचनेन दक्षिणहविर्धानदेशनियममात्रमनेन क्रियतइति भावः† ॥ १६ ॥

## समाख्यानं च तद्वत् ॥ १७ ॥

समाख्यानं सोमस्य हविर्धानमिति तद्वद् अस्माभिर्यदुक्तं सोमाङ्गमिति तमेवार्थं द्रढयति ॥ १७ ॥

* "हविर्धानमण्डपगतयोर्दक्षिणोत्तरभागयोरवस्थितयोर्हविर्धाननामकयोः शकटयोर्मध्ये दक्षिणं शकटमत्र यत्तच्छब्दाभ्यामभिधीयते। तस्य समीपे सोमस्याभिषवः। उतेत्ययं शब्दो ऽयशब्दस्यार्थे वर्तते। अथ यस्मिन् हविर्धाने सोममभिषुण्वन्ति तस्मिन् सामिधेनीरनुब्रूयुरित्यर्थः" इति माधवः।

† अङ्गत्वपक्षे तु अभिषवोपलक्षितस्य दक्षिणस्य हविर्धानस्यात्यन्तमप्राप्तस्याङ्गत्वस्य विधानाद्गौरवमिति भावः।

उत्सर्गातिरिक्तस्यान्यद्वारा ऽनुष्ठानम् । अधि॰ ८ ।

## शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात् ॥ १८ ॥

दर्शपूर्णमासज्योतिष्टोमादिकर्माणि स्वेनैव अनुष्ठेयान्युत स्वेनान्येन वा उतोत्सर्गमात्रं स्वयं कुर्याच्छेषमन्येन इति संशये प्रथमपक्षं व्यवस्थापयति । शास्त्रेति । शास्त्रफलं प्रयोक्तरीति न्यायसिद्धं तल्लक्षणत्वाद् भोक्तृत्वलक्षणत्वाद् यजमानस्य प्रयोगे अनुष्ठाने स्वयमेव स्यात् । कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्यसिद्ध्यर्थमिति भावः ॥ १८ ॥

## उत्सर्गे तु प्रधानत्वाच् शेषकारी प्रधानस्य तस्मादन्यः स्वयं वा स्यात् ॥ १९ ॥

द्वितीयपक्षमाह । उत्सर्गइति । उत्सर्गे ऋत्विजां दक्षिणात्यागे प्रधानत्वान्मुख्यत्वात्प्रधानस्य यजमानस्य सिद्धौ शेषकारी उत्सर्गादन्यकर्मणां कर्ता स्वयमन्य ऋत्विग्वेति । द्रव्येण परिक्रीतैः कृते स्वयमेव कृतं भवतीति भावः ॥ १९ ॥

## अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि ॥ २० ॥

सिद्धान्तमाह । अन्य इति । द्रव्योत्सर्गादन्यत्रान्य एव परिक्रयाम्नानात् । ननु स्वस्यैव परिक्रयो ऽस्त्वत आह । प्रत्यगात्मनि स्वस्मिन् परिक्रयस्य प्रतिषेधाद् असंभवात् * ॥ २० ॥

परिक्रीतानामृत्विजां संख्याविशेषनियमः । अधि॰ ९ ।

## तत्रार्थात्कर्तृपरिमाणं स्यादनियमाविशेषात् ॥ २१ ॥

परिक्रीतेषु संख्यानियमो ऽस्ति न वेति संशये पूर्वपक्षमाह । तत्रेति । तत्र ऋत्विग्विषये अनियमः संख्याया अनियमः । अविशेषाद्

---

* ननु कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्यनियमो विरुध्येत ऋत्विजां कर्तृत्वे इति चेन्न । षड्भिर्हलैः कर्षतीत्यादौ स्वामिनः प्रयोजकत्वेन कर्मकरद्वारा कर्तृत्ववदत्रापि यजमानस्य प्रयोजकतया ऋत्विग्द्वारा सर्वकर्तृत्वोपपत्तेः । अत एव परिक्रयाम्नानं सार्थकमिति भावः ।

विशेषवचनाभावात् । कर्तृपरिमाणं कर्तृसंख्या अर्थात्कर्मानुरूपम् । यथा लोके गृहादिनिर्माणे भृत्यान् योजयति, कार्यं दृष्ट्वैव तदनुसारेण योजयति तथैव श्रौते ऽपि कर्मणीत्यर्थसिद्धा संख्येति भावः ॥ २१ ॥

**अपि वा श्रुतिभेदात् प्रतिनामधेयं स्युः ॥ २२ ॥**

सिद्धान्तमाह । अपि वेति । श्रुतिभेदाद् अध्वर्युः ब्रह्मा होतेति-नामभेदात् । प्रतिनामधेयं यावन्ति नामानि तावत्संख्याकाः स्युः * ॥ २२ ॥

**एकस्य कर्मभेदात् ॥ २३ ॥**

एकस्यैव तत्र क्रियानिमित्तं नामद्वयं त्रयं वा किं न स्यादिति शङ्कते । एकस्येति ॥ २३ ॥

**नोत्पत्तौ हि ॥ २४ ॥**

अध्वर्युं वृणीते ब्रह्माणं वृणीतइत्यादिषोडशनामभिः उत्पत्तौ प्रथममेव वरणविधानाद् नैकस्य नामद्वयसंबन्ध इति समाधत्ते । नेति ॥ २४ ॥

चमसाध्वर्यूणां पृथक्त्वम् । अधि० १० ।

**चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २५ ॥**

चमसाध्वर्यूणामेष्वेवान्तर्भाव उतान्यइति संशये एष्वेवान्तर्भाव इति पूर्वपक्षे सिद्धान्तमाह । चमसेति । चमसाध्वर्यवो ऽन्ये तैरुक्तनामभिः चमसाध्वर्यून् वृणीतइति व्यपदेशाद् निर्देशात् ॥ २५ ॥

चमसाध्वर्यूणां बहुत्वम् । अधि० ११ ।

**†उत्पत्तौ बहुश्रुतेः ॥ २६ ॥**

---

* "यद्यपि संख्याविशेषो न श्रुतस्तथा ऽपि कार्यानुसारेण सो ऽवगन्तव्यः । ते च कार्यविशेषाः कर्तृसंयुक्ता एवं श्रूयन्ते । पुरो ऽध्वर्युर्विभजति । प्रतिप्रस्थाता मन्थिनं जुहोति । नेष्टा पत्नीमुदानयति । उन्नेता चमसाननुनयति । प्रस्तोता प्रस्तौति । उद्गातोद्गायति । प्रतिहर्ता प्रतिहरति । सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति । होता प्रातरनुवाकमनुब्रूते । मैत्रावरुणः प्रेष्यति । अच्छावाको यजति । ग्रावस्तुद् ग्रावस्तोत्रीयामन्वाहेति । एवं ब्रह्मब्राह्मणाच्छंस्याग्नीध्रपोतॄणां छन्दांसि कर्माण्युदाहार्याणि । तस्माद् यावन्ति कार्याणि तावन्त ऋत्विजो वरीतव्याः" इति माधवः ।

† अस्योत्तराधिकरणशेषत्वं वार्त्तिककारो ऽङ्गीचकार ।

ते चमसाध्वर्यवो बहव इति सिद्धान्तमाह । उत्पत्ताविति । उत्पत्तौ वरणवाक्ये शेषं स्पष्टम् ॥ २६ ॥

चमसाध्वर्यूणां दशसंख्यानियमः । अधि० १२ ।

### दशत्वं लिङ्गदर्शनात् ॥ २७ ॥

ते चमसाध्वर्यवो दशेति सिद्धान्तमाह । दशेति । तेषु दशत्वं दशपेयनामके यागे एकैकं चमसं दश दशोपसर्पन्ति शतं ब्राह्मणा इति लिङ्गात् । न्यूने अधिके वा शतत्वं विरुध्येतेति भावः ॥ २७ ॥

शमितुरपृथक्त्वम् । अधि० १३ ।

### शमिता च शब्दभेदात् ॥ २८ ॥

शमिता ऽप्यतिरिक्त इति पूर्वपक्षसूत्रम् । शमितेति । शब्दभेदाद् नामभेदात् ॥ २८ ॥

### प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २९ ॥

सिद्धान्तमाह । प्रकरणेति । उत्पत्तेः वरणवाक्यस्य असंयोगाद् अभावात् । प्रकरणात् प्रकरणकल्पकाध्वर्यवसमाख्यावति संज्ञया ऽनादिपाठात् । *अध्वर्युगणप्रतिप्रस्थात्रेति भावः ॥ २९ ॥

उपगानामपृथक्त्वम् । अधि० १४ ।

### उपगाश्च लिङ्गदर्शनात् ॥ ३० ॥

उपगातारो ऽन्यइति बहिः पूर्वपक्षे सिद्धान्तमाह । उपेति । उपगातारस्तु क्लृप्ता एवर्त्विजः नान्ये लिङ्गदर्शनाद् नाध्वर्युरुपगायेदिति लिङ्गदर्शनात् । यद्यन्ये तर्हि अध्वर्यावत्यन्ताप्राप्त्या निषेधो व्यर्थः स्याद् इति भावः ॥ ३० ॥

सोमविक्रेतुः पृथक्त्वम् । अधि० १५ ।

### विक्रयी त्वन्यः कर्मणो ऽचोदितत्वात् ॥ ३१ ॥

सोमविक्रयी त्वन्य इति सिद्धान्तमाह । विक्रयीति । अचोदितत्वाद् विक्रयस्याविहितत्वात् । क्रय एव विहितः गवा क्रीणातीति,

---

* यद्यपि शमितार इत्यादिमन्त्रस्याध्वर्युकाण्डे पाठात्तस्यैव शामित्रमुचितं तथा ऽपि "परावर्तते ऽध्वर्युः संज्ञप्यमानाद्" इति तस्य परावृत्तिश्रवणात् तत्पुरुषाणां प्रतिप्रस्थात्रादीनां तद्भवतीति भावः । परं तु कलौ अन्य एव शमिता । शामित्रं चैव विप्राणामिति कलिवर्ज्यप्रकरणे पाठात् ।

तदन्यथाऽनुपपत्त्या सिद्धो विक्रयः। ऋत्विजां विहितकर्मकर्तृत्वादन्य एव स इति भावः ॥ ३१ ॥

ऋत्विक्पदस्य योगरूढ्या सप्तदशमात्रगामित्वम्। अधि० १६।

## कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ ३२ ॥

ज्योतिष्टोमे चमसाध्वर्युषु ऋत्विक्त्वमस्ति न वेति संशये पूर्वपक्षमाह। कर्मेति। सर्वेषामृत्विक्त्वं कर्मणः विहितकर्मणः कार्याद् अनुष्ठानाद् हेतोः अविशेषाद् इमे ऋत्विजो नेमइति व्यावर्तयितुमशक्यत्वात् ॥ ३२ ॥

## न वा परिसंख्यानात् ॥ ३३ ॥

सिद्धान्तमाह। नेति। न चमसाध्वर्यव ऋत्विजः तस्मात्सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विज इति परिसंख्यानात् सप्तदशाधिके ऋत्विक्त्वं नास्तीति परिसंख्यानात् ॥ ३३ ॥

## पक्षेणेति चेत् ॥ ३४ ॥

परिसंख्यायां दोषत्रयात् पक्षे ऽनुवाद इति शङ्कते। पक्षेणेति। पक्षेण पाक्षिकतया प्राप्तम् ऋत्विजो वृणीतइति बहुवचनेन सप्तविंशतित्वं चमसाध्वर्युभिः प्राप्तमवयुत्यानूद्यते ॥ ३४ ॥

## न सर्वेषामनधिकारात् ॥ ३५ ॥

इमं पक्षं दूषयति। नेति। सर्वेषां सप्तविंशानामनधिकाराद् अश्रवणात्। यथा वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते इति अवधिभूतद्वादशसंख्यायाः श्रुतत्वादष्टाकपालो भवतीत्यादिरवयुत्यानुवादः नेह तथेति भावः ॥ ३५ ॥

दीक्षादक्षिणावाक्योक्तानां ब्रह्मादीनामेव सप्तदशऋत्विक्त्वम्। अधि० १७।

## नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३६ ॥

एवमृत्विजः सप्तदशेति सिद्धे कइत्याकाङ्क्षायां सिद्धान्तमाह। नियम इति। नियमः आग्नीध्रादिष्वेवर्त्विक्त्वमिति नियमः। दक्षिणाभिः सह तत्तन्नामश्रुतिसंयोगात्। ऋत्विग्भ्यो दक्षिणां ददातीति

उक्त्वा अग्नीधे प्रथमं ददाति ततो ब्रह्मण इत्यादिलक्षणयोगात् । येषां नाम ते ऋत्विज इति भावः ॥ ३६ ॥

## उक्त्वा यजमानत्वं तेषां दीक्षाविधानात् ॥ ३७ ॥

उक्तनियमे साधकान्तरमाह । उक्त्वेति । सत्रे ये ऋत्विजः ते यजमाना इति वचनेन ऋत्विक्षु यजमानत्वमुक्त्वा अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीति तेषां षोडशानामेव दीक्षाविधानात् । यदि चमसाध्वर्युषु ऋत्विक्त्वं तर्हि तत्रापि यजमानधर्मस्य दीक्षाया अतिदेशः स्यादिति भावः ॥ ३७ ॥

ऋत्विजां स्वामिसप्तदशत्वम् । अधि० १८ ।

## स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३८ ॥

*ज्योतिष्टोमे साप्तदश्यं स्वामिना पूरणीयं न सदस्येनेति सिद्धान्तमाह । स्वामीति । कर्मसामान्यात् कर्मकरत्वेन सादृश्यात् । उभयोरपि विहितकर्मकर्तृत्वादिति भावः† ॥ ३८ ॥

आध्वर्यवादिषु अध्वर्य्वादीनां कर्तृत्वनियमः । अधि० १९ ।

## ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ ३९ ॥

ये ऋत्विक्पदवाच्याः ते सर्वार्थाः स्वस्वेच्छया सर्वक्रियाकर्तारः प्रयुक्तत्वाद् भृत्या नियोजितत्वात् । एवमग्नयः गार्हपत्यादयः सर्वक्रत्वर्थाः स्वकालत्वात् स्वतन्त्रत्वाद् अनारभ्याधीतत्वादिति यावत् । एवं पूर्वः पक्षः‡ ॥ ३९ ॥

---

* कस्यां चिच्छाखायां सदस्यवरणस्याम्नानात्सैव सप्तदशर्त्विक्त्वमिति पूर्वपक्षो ऽत्रानुसंधेयः ।

† क्रियां विना क्रतुयजननिमित्त ऋत्विक्शब्दस्सदस्ये न प्रवर्तते । क्रियानुष्ठानं तु विध्यभावात्तस्य नास्तीति भावः ।

‡ "अग्निषु चिन्ता, ते ह्यनारभ्यवादेन यदाहवनीये जुहुतीत्यादिना होमार्थतया विहितास्ते किं प्रकृत्यर्था उत विकृतानामप्याम्नहोमादीनां साधारणा इति । पर्णतादिवत् प्रकृत्यर्थत्वं मन्यमानस्योत्तरम्, अग्नयश्च । सर्वार्था इत्यनुवर्तते । तदनुवृत्त्यर्थं चान्तरा सूत्रकरणम् । स्वकालत्वात् स्वतन्त्राम्नानादप्रकरणाधीतत्वादित्यर्थः । न चात्र द्विरुक्तिदोषः । प्रकृतिसमकालमेव विकृतावप्युपदिष्टत्वाद्धोमस्य । यत्र तु यागमात्रे चोदिते प्रकृतित एव चतुरवत्तं जुहोतीत्येतदतिदेशात्प्राप्यमाणं प्रतीक्षितव्यं तत्र पर्णमयीन्यायः । उपदिष्टे तु वैकृतेष्वपि होमेषु समानमेवाग्निविधानम्" इति शास्त्रदीपिकायां स्थितम् । इतो ऽधिकविचारो वार्त्तिके द्रष्टव्यः ।

## तत्संयोगात् कर्मणो व्यवस्था स्यात् ॥ ४० ॥

अग्नीनां सर्वार्थत्वं स्वीकृत्य कर्मकर्तृनियममाह सिद्धान्ती। तदिति। तत्संयोगाद् आध्वर्यवं हौत्रमितिसमाख्यासंयोगात् कर्मणः कर्तृत्वे व्यवस्था स्यात्। न स्वेच्छया ॥ ४० ॥

## *संयोगस्यार्थवत्त्वात् ॥ ४१ ॥

ननु प्रकरणेनर्त्विजो गृहीताः समाख्यया दुर्बलया कथं बाधस्तत्राह। समिति। संयोगस्य समाख्यानयोगस्यार्थवत्त्वात् फलवत्त्वादन्यथा समाख्या व्यर्थैव स्यात्। आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति भावः ॥ ४१ ॥

समाख्यायाः प्रकर्तृत्वस्य क्व चिद्बाधः। अधि॰ २०।

## तस्योपदेशसमाख्यानेन निर्देशः† ॥ ४२ ॥

मैत्रावरुणकर्तृकप्रैषादीनां हौत्रमिति समाख्यया होतृकर्तृकत्वमिति बहिः पूर्वपक्षे सिद्धान्तमाह। तस्येति। तस्य उक्तस्य उपदेशसहितेन मैत्रावरुणः प्रेष्यति चानु चाहेत्युपदेशसहितेन हौत्रमिति समाख्यानेन मैत्रावरुणकर्तृकत्वनिर्देशः व्यवस्था ॥ ४२ ॥

## तद्वच्च लिङ्गदर्शनम् ॥ ४३ ॥

ननु समाख्याया नियामकत्वमसिद्धं, हौत्रमित्यादिः समाख्या तस्मिन्कर्मणि पक्षे प्राप्तमनुवदतीत्याशङ्कायां समाख्याया नियामकत्वे लिङ्गं दर्शयति। तद्वदिति। तद्वत् प्रकरणादिवद् नियामकस्य लिङ्गस्य दर्शनं होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयादिति समाख्यया प्राप्तं प्रातरनुवाकपाठकर्तृत्वं नित्यतया ऽनुवदति ॥ ४३ ॥

समुच्चितयोरनुवचनप्रैषयोर्मैत्रावरुणकर्तृकत्वम्। अधि॰ २१।

## प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ४४ ॥

अनेन पूर्वोक्तवचनेन मैत्रावरुणः प्रेष्यतीत्यनेन सर्वानुवचनेषु

* पूर्वसूत्रशेषतयैवास्य भाष्ये वार्तिके च पाठः।

† "तदिदं समाख्याविनियोगस्यैवातिप्रसङ्गनिवारणेन शेषीभूतं सूत्रं नाधिकरणान्तरम्। अत एव तस्यैव लिङ्गं पश्चादुच्यते प्रातरनुवाके होतृदर्शनादिकम्" इति शा॰ दी॰।

सर्वप्रैषेषु तत्कर्तृत्वं विधीयतउत यत्रानुवचनएव प्रैषस्तत्कर्तृत्वमिति संशये पूर्वपक्षमाह । प्रैषेति । प्रैषानुवचनमात्रं मैत्रावरुणस्य उपदेशादुक्तवचनात् ॥ ४४ ॥

## पुरोनुवाक्याधिकारो वा प्रैषसन्निधानात् ॥ ४५ ॥

सिद्धान्तमाह । पुरो इति । पुरोनुवाक्यायां प्रैषरूपायां च अधिकारो मैत्रावरुणस्य प्रैषसन्निधानात् । अनु चाहेत्यस्य प्रैषसन्निधानात् । अयं भावः । प्रेष्यति चानु चाहेति चकारसहितेनाख्यातान्तद्वयेन प्रैषसहितानुवचनं लक्षयित्वा तत्र मैत्रावरुणकर्तृकत्वं विधीयते, केवलं प्रैषे केवलानुवचने न। तथा सति विधेयभेदे वाक्यभेदप्रसङ्गादिति भावः ॥ ४५ ॥

## प्रातरनुवाके होतृदर्शनात् ॥ ४६ ॥

साधकान्तरमाह । प्रातरिति । अनुवचनरूपे प्रातरनुवाके होतृकर्तृकत्वस्य सिद्धतया कथनस्य पूर्वाधिकरणे दर्शितत्वात् ॥ ४६ ॥

चमसहोमे ऽध्वर्योः कर्तृत्वम । अधि० २२ ।

## चमसांश्चमसाध्वर्यवः समाख्यानात् ॥ ४७ ॥

चमसान् चमसाध्वर्यवो जुहुयुरुताध्वर्युरिति संशये पूर्वपक्षमाह । चमसानिति । चमसान् चमसाध्वर्यवो जुहुयुः । कुतः, चमसाध्वर्यव इति तेषां समाख्यानात् ॥ ४७ ॥

## अध्वर्युर्वा तन्न्यायत्वात् ॥ ४८ ॥

सिद्धान्तमाह । अध्वर्युरिति । अध्वर्युरेव जुहुयात् । अध्वर्योः आध्वर्यवसमाख्यया इतरकर्मप्राप्तिः येन तन्न्यायत्वाच्च चमसाध्वर्युसमाख्या ऽध्वर्युसमाख्यामुपजीव्य प्रवर्तते अतः तस्य बाधने असमर्थमिति भावः ॥ ४८ ॥

## चमसे चान्यदर्शनात् ॥ ४९ ॥

उक्तार्थे लिङ्गमप्याह । चमसइति । चमसे चमसहोमे अन्यस्य चमसाध्वर्योरन्यस्य दर्शनं लिङ्गम् । चमसांश्चमसाध्वर्यवे प्रयच्छति तान् स वषट्कर्त्रे हरतीति, यः प्रयच्छति स होमकर्तेति ज्ञायते ॥ ४९ ॥

## अशक्तौ ते प्रतीयेरन् ॥ ५० ॥

चमसाध्वर्योरपि होमकर्तृत्वं क्व चिदस्तीत्याह । अशक्ताविति । अशक्तौ शुक्रामन्थिग्रहप्रचारे व्यापृतत्वाच्चमसहोमे अशक्तौ ते चमसाध्वर्यवः होमे प्रतीयेरन् ॥ ५० ॥

श्येनवाजपेययोरध्वर्य्वादिसर्वगणकर्तृकत्वम् । अधि० २३ ।

## वेदोपदेशात् पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ ५१ ॥

श्येनयागः सामवेदे पठितोऽस्ति । तत्रोद्गातृगणस्य कर्तृत्वमुत षोडशानामपीति संशये पूर्वपक्षमाह । वेदेति । वेदे सामवेदे उपदेशात् पाठात् सामवेदस्यौद्गात्रमिति समाख्यानात् पूर्ववत् पूर्वाधिकरणे आध्वर्यवसमाख्यया चमसहोमादावध्वर्युकर्तृकत्ववद् वेदान्यत्वे अन्यवेदेऽपि यथोपदेशं यथा समाख्या तथैव स्युः । उद्गातृगणकर्तृक एव श्येनयाग इति पूर्वपक्षनिष्कर्षः ॥ ५१ ॥

## तद्ग्रहणाद्वा स्वधर्मा स्यादधिकारसामर्थ्यात्सहाङ्गैरव्यक्तः शेषे ॥ ५२ ॥

सिद्धान्तमाह । तदिति । अङ्गैः स्वाङ्गैः सह प्रकृतौ दीक्षणीयाद्यङ्गेषु अध्वर्य्वादिकर्तृकत्वादिरूपाणि यान्यङ्गानि तैः सह श्येने अङ्गानां दीक्षणीयादीनामनुष्ठानम् । अधिक्रियतेऽनेनेत्यधिकारः चोदकशास्त्रं तस्य सामर्थ्यात् । ननु चोदकशास्त्रस्य श्येने प्रवृत्तिर्मास्त्वत आह । तद्ग्रहणाद् दीक्षणीयातिथ्यादीनां ग्रहणात् तदर्थं चोदकशास्त्रस्य प्रवृत्तौ तेन प्रवृत्तौ दीक्षादिकर्मभिः सह तत्तत्कर्तृकत्वानामपि प्रवेशः । शेषे चोदकशास्त्रादप्राप्तकर्मणि यथा श्येने कण्टकैर्वितुदन्तीति, तत्र चोदकशास्त्राप्रवृत्तौ अव्यक्तः समाख्या प्रवर्तताम् ॥ ५२ ॥

इति जैमिनिसूत्रवृत्तौ तृतीयस्य सप्तमः पादः ।

परिक्रयस्य स्वामिकर्मत्वम् । अधि० १ ।

## स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥

ऋत्विग्भ्यो दक्षिणादानादिरूपः परिक्रयः अध्वर्युकर्तृकः यजुर्वेदपठितत्वाद् इति बहिः पूर्वपक्षे सिद्धान्तमाह । स्वामीति । परिक्रयः स्वा-

मिकर्म कर्मणः फलार्थत्वात् । अयं भावः । येन परिक्रीतो यत्कर्म करोति तत्फलं परिक्रेतुरिति लोके गृहनिर्माणादौ दृष्टं तद्वदिहापि फलप्राप्तये यजमानेनैव कर्तव्यमिति ॥ १ ॥

## वचनादितरेषां स्यात् ॥ २ ॥

अनड्वान् होत्रे देय इत्यत्र वचनादित्याह । वचनादिति । इतरेषामृत्विजाम् ॥ २ ॥

वपनादिसंस्काराणां याजमानत्वम् । अधि० २ ।

## संस्कारास्तु पुरुषसामर्थ्ये यथावेदं व्यवतिष्ठेरन् ॥ ३ ॥

केशश्मश्रुवपनम् अञ्जनाभ्यञ्जनादि अध्वर्योर्यजमानस्य वेति संशये पूर्वपक्षमाह । संस्कारा इति । संस्कारा दर्शिताः कर्मवत् स्तोत्रशस्त्रादिवत् । यथावेदं यस्मिन् वेदे या समाख्या तया व्यवतिष्ठेरन्नियम्येरन् । ननु ऋत्विक्तु संस्कारो निष्फलस्तत्राह । पुरुषसामर्थ्ये अनुष्ठानयोग्यताजनने उपयुज्यतइति शेषः ॥ ३ ॥

## याजमानास्तु तत्प्रधानत्वात् कर्मवत् ॥ ४ ॥

सिद्धान्तमाह । याजमाना इति । याजमानाः यजमानसंबन्धिनः ते संस्काराः तत्प्रधानत्वात् संस्काराणाम्भोक्तृत्वप्रधानत्वात् तज्जनकत्वादिति यावत् । कर्मवद् यथा प्रधानभूतस्यागः यजमाने तद्वत् । अयं भावः ऋत्विङ्निष्ठकर्मकर्तृत्वसंपादनस्य लोकसिद्धतया न कथम्भावाकाङ्क्षा, यजमाननिष्ठस्वर्गभोक्तृत्वं कथं संपादयेदित्यलौकिकत्वादस्त्याकाङ्क्षा ऽतस्तदर्था एते, संस्कारसंस्कृतआत्मनि सति भोक्तृत्वमिति ॥ ४ ॥

## व्यपदेशाच्च ॥ ५ ॥

तमभ्यनक्ति शरेषीकयेति परस्मैपदस्य व्यपदेशाद् निर्देशाद् अध्वर्युकर्तृकाञ्जनं यजमानकर्मकमिति स्पष्टम् ॥ ५ ॥

## गुणत्वे तस्य निर्देशः ॥ ६ ॥

कर्म द्विविधं प्रधानरूपं गुणरूपं च । तल्लक्षणानि द्वितीयाध्याये दर्शितानि । तयोर्मध्ये प्रधानकर्मण्येव समाख्यया व्यवस्था इह तु पुरुषं

प्रति गुणत्वेन निर्देशः । अतो ऽपि यजमानस्येत्याह । गुणेति । तस्य संस्कारस्य निर्देशः गुणत्वे पर्यवस्यति ॥ ६ ॥

## चोदनाप्रतिभावाच्च ॥ ७ ॥

चोदनायाः स्वर्गकामो यजेतेतिचोदनागम्यापूर्वस्य प्रतिभावाद् यजमानस्य सन्निकृष्टत्वाच्च । यत्रापूर्वं तत्र संस्कार इत्यपूर्वसन्निकर्षो यजमाने चेद्भवतीति भावः ॥ ७ ॥

## अतुल्यत्वादसमानविधानाः स्युः ॥ ८ ॥

ननूक्तयुक्त्या यजमानस्य, समाख्यया ऽध्वर्योरिति द्वयोः किं न स्यात्तत्राह । अतुल्यत्वादिति । संस्काराः ऋत्विग्यजमानयोः तुल्यविधाना न स्युः । अतुल्यत्वाद् ऋत्विक्तु भोक्तृत्वाभावेनातुल्यत्वात् ॥ ८ ॥

तपसो याजमानत्वम् । अधि० ३ ।

## तपश्च फलसिद्धत्वाद् लोकवत् ॥ ९ ॥

ज्योतिष्टोमे त्र्यहं नाश्नातीत्यनशनरूपं तपः श्रूयते । इदं तपो ऽपि यजमानपापक्षयद्वारा फलभोक्तृत्वसिद्धिर्यस्मात्तत्त्वाद् लोकवत् । लोके कृच्छ्राद्यनुष्ठाने प्रथमं दुःखं पश्चात्सुखं तद्वत् ॥ ९ ॥

## वाक्यशेषश्च तद्वत् ॥ १० ॥

उक्तार्थे संमतिमाह । वाक्येति । उक्तविधिरूपवाक्यशेषः अर्थवादः, यदा वै पुरुषे न किं चनान्नं भवति तदा ऽस्य चक्षुर्नश्यति अथ मेध्यतम इति । तद्वत् । उक्तमेवार्थमाह ॥ १० ॥

## वचनादितरेषां स्यात् ॥ ११ ॥

यत्र, ऋत्विजः एतां रात्रिमुपवसन्तीति वचनं तत्र ऋत्विजामित्याह । वचनादिति ॥ ११ ॥

लोहितोष्णीषतादीनां सर्वऋत्विग्धर्मत्वम् । अधि० ४ ।

## गुणत्वाच्च वेदे न व्यवस्था स्यात् ॥ १२ ॥

श्येने, लोहितोष्णीषा ऋत्विजः प्रचरन्तीति । इदं सामवेदे पठितत्वाद्

वेदे सामवेदे स्थितस्यापि व्यवस्था ऋत्विक्पदसंकोचो न स्यात् । प्रतिप्रधानमङ्गावृत्तिन्यायस्यैव प्रवृत्तिरितिभावः ॥ १२ ॥

वृष्टिकामनाया याजमानता । अधि० ५ ।

## तथा कामो ऽर्थसंयोगात् ॥ १३ ॥

यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयादिति श्रुता कामना ऽध्वर्योर्यजमानस्य वेति संशये समाख्यया ऽध्वर्योरिति वहिः पूर्वपक्षे सिद्धान्तमाह । तथेति । तथा तपोवत् । कामः यजमानस्य अर्थेन साङ्गयागफलेन संबन्धात् । सर्वं फलं यजमानस्यैव ॥ १३ ॥

## व्यपदेशादितरेषां स्यात् ॥ १४ ॥

यत्र क्व चिदुद्गाता ऽऽत्मने यजमानाय वा यं कामं कामयेत्तमागायतीति व्यपदेशः निर्देशः तत्रेतरेषामृत्विजाम् ॥ १४ ॥

आयुर्दादिमन्त्रपाठस्य याजमानत्वम् । अधि० ६ ।

## मन्त्राश्चाकर्मकरणास्तद्वत् ॥ १५ ॥

आयुर्दा अग्ने ऽस्यायुर्मे देहीत्यादयो ऽकर्मकरणाः क्रियाविशेषस्य अनुष्ठेयस्य अस्मारकाः ते तद्वत् । इच्छावद् याजमाना इति सिद्धान्तः* ॥ १५ ॥

## विप्रयोगे च दर्शनात् ॥ १६ ॥

साधकान्तरमाह । वीति । विप्रयोगे प्रवासे दर्शनात् । प्रवासे इहैव सन् तत्र सन्तं त्वा ऽग्ने इति प्रवासे लिङ्गेन विनियोगः श्रूयते । न हि प्रवासे ऽध्वर्युरस्ति । अतः यजमानस्यैवेति सिद्धान्तन्यायेन ईदृशा मन्त्राः सर्वे ऽपि यजमानेनैव पाठ्या नाध्वर्युणेति सिद्धम् ॥ १६ ॥

द्व्याम्नातस्योभयप्रयोज्यत्वम् । अधि० ७ ।

## द्व्याम्नातेषूभौ द्व्याम्नानस्य अर्थवत्त्वात् ॥ १७ ॥

दर्शपूर्णमासयोः स्रुग्व्यूहनमन्त्रः वाजस्य मा प्रसवेनेत्यादिः आध्वर्यवकाण्डे यजमानकाण्डे च द्विवारमाम्नातः । तत्राध्वर्युयजमा-

* समाख्यया ऽध्वर्योर्मन्त्रपाठो युक्त इति पूर्वपक्षो ऽत्रानुसंधेयः ।

नाभ्यां पठनीय इति सिद्धान्तमाह । आम्नातेष्विति । आम्नातेषु द्विवारमाम्नातेषु उभौ पाठकर्तारौ द्विवारमाम्नानस्य सार्थकत्वात्* ॥ १७ ॥

ज्ञातस्यैव वाचयितव्यत्वम् । अधि० ८ ।

## ज्ञाते च वाचनं न ह्यविद्वान् विहितो ऽस्ति ॥ १८ ॥

वाजपेये †क्लृप्तीर्यजमानं वाचयतीति । अत्राज्ञाने वाचनं सफलमतः एतदज्ञानी यजमानो ऽत्र वाच्य इति प्राप्ते पूर्वपक्षे सिद्धान्तमाह । ज्ञातइति । अविद्वान् यजमानः न विहितो ऽस्ति अतः ज्ञातस्याप्यदृष्टार्थं वाचनमिति भावः ॥ १८ ॥

द्वादशानां द्वन्द्वानामाध्वर्यवत्वम् । अधि० ६ ।

## यजमानसमाख्यानात् कर्माणि याजमानं स्युः ॥ १९ ॥

दर्शपूर्णमासे याजमानकाण्डे श्रूयते, वत्सं चोपावसृजत्युखां चाधिश्रयत्यव च हन्ति दृषदौ च समाहन्त्यधि च वपते कपालानि चोपदधाति पुरोडाशं चाधिश्रयत्याज्यं च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिं च परिगृह्णाति पत्नीं च सन्नह्यति प्रोक्षणीश्च आसादयत्याज्यं चैतानि वै द्वादश द्वन्द्वानीति । याजमानकाण्डे श्रुतत्वादिमानि यजमानकर्तृकाणीति पूर्वपक्षमाह । यजमानेति । सूत्रार्थः स्पष्टः ॥ १९ ॥

## अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ॥ २० ॥

सिद्धान्तमाह । अध्वर्युर्वेति । एतान्यध्वर्युः कुर्यात् । हि यतः तदर्थो उक्तपदार्थानुष्ठानार्थं, क्रीत इति शेषः । ननु अध्वर्युसमाख्या व्यापिका यजमानसमाख्या व्याप्या तया निरवकाशत्वाद् आध्वर्यवसमाख्याप्राप्तमेष्वध्वर्युकर्तृकत्वं बाध्यते इत्यत्राह । न्यायपूर्वं न्यायाविरुद्धं समाख्यानं वस्तूनि प्रापयति । इह तु ‡अङ्गुणविरोधे च तादर्थ्यादितिन्यायविरोधः । तथा हि एषां पदार्थानामाध्वर्यवकाण्डे पठितत्वात् पदा

* अध्वर्युयजमानयोः पाठस्याभिप्रायो भिन्नः । अनेन मन्त्रेण प्रकाशितमर्थमनुष्ठास्यामीत्यध्वर्योरभिप्रायः । अत्र न प्रमदिष्यामीति यजमानस्येति वार्त्तिके विस्तरः ।

† "आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः क्लृप्तयः" इति माधवः ।

‡ अयं न्यायः द्वादशाध्याये द्वितीयपादे नवमाधिकरणे उक्तः ।

र्थ्वध्वर्युकर्तृकत्वं प्राप्तम् । यजमानकाण्डे द्वादश द्वन्द्वानि य एवं संपाद्य यजतइति द्वन्द्वतासंपादनं तत्काण्डपाठाद् यजमानकर्तृकम् । द्वन्द्वतासंपादनं द्वयोर्द्वयोरव्यवहितत्वसंपादनम् । न हि एकेन क्रियाद्वयानुष्ठानमन्येनाव्यवधानसंपादनं संभवत्यतः उभयमप्येककर्तृकं संपाद्यम् । तत्र पदार्थाः प्रधानभूताः तत्कर्तृत्वं प्रधानधर्मः । अव्यवधानं पदार्थधर्मः तत्कर्तृत्वमङ्गधर्मः । अन्यतरकर्तृत्वबाधे प्राप्ते अङ्गगुणत्वाद्यजमानकर्तृत्वस्यैव बाधः स्यात् । यदि विपरीतं तदा न्यायविरोधः स्यादिति भावः ॥ २० ॥

होतुराध्वर्यवकरणमन्त्रानुष्ठातृत्वम् । अधि० १० ।

## विप्रतिषेधे करणं समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥ २१ ॥

कुण्डपायिनामयने यो होता सो ऽध्वर्युरिति होतर्येव अध्वर्युकार्यकारित्वं विहितम् । प्रकृतौ यूपपरिव्याणसमये युवा सुवासा इति होत्रा पठनीयो मन्त्रः परिवीरसीत्यध्वर्युणा पठ्यमानो मन्त्रः । उभौ चात्रातिदेशेन प्राप्तौ । अत्र कर्तुरशक्त्या युगपन्मन्त्रद्वयपाठासंभवाद्धोत्रा को वा मन्त्रः पठनीय इति संशये परिधौ पशुं नियुञ्जीतेत्यत्र परिधिधर्मान् स्वीयान् सत्वकृत्वादीन् रक्षितुमागन्तुकाष्टाश्रीकरणलोपन्यायेन होत्रा स्वीयमन्त्रः युवा सुवासा इत्येव पठितव्यो, नागन्तुकः परिवीरसीति बहिः पूर्वपक्षे सिद्धान्तमाह । विप्रतिषेधइति । विप्रतिषेधे उक्तरीत्या विरोधे करणमध्वर्युमन्त्रं ब्रूयात् । समवाये प्रत्यक्षेण यो होतेतिवचनविधेयत्वरूपसंबन्धे विशेषात् । आनुमानिकचोदकशास्त्रसंबन्धात्प्राबल्यरूपविशेषात् । तथा ऽपि आनुमानिकशास्त्रस्यापि नात्यन्तं बाध इत्याह । इतरं चोदकशास्त्रप्राप्तमन्यः होतृगणसंबन्धी मैत्रावरुण एव पठेत् । यतः होतुः मैत्रावरुणो अच्छावाकादिभ्यः विशेषः होतृसामीप्यं गणे द्वितीयत्वात्स्यादतः ॥ २१ ॥

प्रैषप्रैषार्थयोः पृथक्कर्तृकत्वम् । अधि० ११ ।

## प्रैषे च पराधिकारात् ॥ २२ ॥

दर्शपूर्णमासे प्रोक्षणीरासादय इध्माबर्हिरुपसादय स्रुवं स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येनोदेहीति प्रैषस्य प्रैषार्थस्य च कर्ता एक एव

स्यात् । उभयोरेकसमाख्यापाठादिति बहिः पूर्वपक्षे सिद्धान्तमाह । प्रैष इति । प्रैषे कर्ता तदर्थकर्तुः अन्यः पराधिकारात् परविषयत्वस्य मध्यमपुरुषघटितत्वेन स्वभावसिद्धत्वात् * ॥ २२ ॥

प्रैषप्रैषार्थयोः यथाक्रममाध्वर्यवाग्नीध्रत्वम् । अधि० १२ ।

## अध्वर्युस्तथालिङ्गदर्शनात् ॥ २३ ॥

एवं प्रैषतदर्थयोः कर्तृभेदे सिद्धे अध्वर्युः प्रैषार्थकर्तेति पूर्वपक्षमाह । अध्वर्युरिति । अध्वर्युः प्रैषार्थकर्ता स्यात् । तथालिङ्गदर्शनात् प्रैषोच्चारणसमये, वज्रो वै स्फ्यः यदन्वञ्चं धारयेत् । वज्रेणाध्वर्युं क्षिणुयादिति शाखान्तरे यस्य हस्ते स्फ्यः स प्रैषकर्तेति ज्ञायते । इदं लिङ्गम् ॥ २३ ॥

## गौणो वा कर्मसामान्यात् ॥ २४ ॥

सिद्धान्तमाह । गौण इति । आग्नीध्रे प्रैषार्थकर्तरि अध्वर्युशब्दो गौणः । यजुर्वेदविहितप्रैषार्थकर्तृत्वेन अध्वर्योः साक्षात्परम्परासाधारणकर्तृत्वेन प्रैषे साक्षात् कर्तृत्वं प्रैषेण प्रेरिताग्नीध्रकृते प्रैषार्थे प्रयोजककर्तृत्वमिति आध्वर्यवमितिसमाख्याप्राप्तं कर्मसामान्यकर्तृत्वमबाधितमतः कर्मसामान्यात् कर्मसामान्यकर्तृत्वोपपत्तेः आग्नीध्रः प्रैषार्थकर्ता आग्नीध्रेणान्वञ्चधारणे अध्वर्युत्वयलिङ्गमध्वर्यु प्रैषे ऽपि न विरुध्यत इति भावः ॥ २४ ॥

करणमन्त्रेषु स्वामिफलस्याशासितव्यत्वम् । अधि० १३ ।

## ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥

†ममाग्ने वर्चो विहवेष्वस्त्वितिप्रभृतिभिः प्रार्थ्यमानं फलमध्वर्योरिति पूर्वपक्षमाह । ऋत्विगिति । ऋत्विजः अध्वर्योः फलं करणेषु मन्त्रेषु अर्थवत्त्वात् । ममेत्यस्य शक्त्या ऽर्थसंभवादन्यथा लक्षणा स्यादिति भावः ॥ २५ ॥

## स्वामिनो वा तदर्थत्वात् ॥ २६ ॥

सिद्धान्तमाह । स्वामिन इति । तदर्थत्वात् साङ्गफलस्य यजमानार्थत्वात्‡ ॥ २६ ॥

* "न च प्रोक्षणासादनादीनामध्वर्युकर्तृकत्वाभावे ऽपि समाख्याविरोधस्तदवस्थ एवेति वाच्यम् । प्रैषद्वारा प्रयोजककर्तृत्वे ऽपि तदविरोधाद्" इति शङ्कासमाधाने जैमिनीयन्यायमालायां स्थिते । विस्तरस्तु वार्त्तिके द्रष्टव्यः ।

† विशिष्टं हवनं येषां यज्ञानां ते विहवाः । तेषु वर्चस्तेजसोपलक्षितं यत्फलं तन्ममास्त्वित्यनेन लिङ्गेन मन्त्रमुच्चारयितुरध्वर्योस्तत्फलमिति माधवः ।

‡ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यात्मनेपदश्रुत्या साङ्गप्रधानफलस्य यजमानगामित्वप्रतीतेरिति भावः ।

## लिङ्गदर्शनाच्च ॥ २७ ॥

लिङ्गदर्शनादिति । यां कां चन यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैवेतिलिङ्गदर्शनात् ॥ २७ ॥

करणमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मत्वम् । अधि० १४ ।

## कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात् ॥ २८ ॥

क्व चिदृत्विजामपि फलं यजमान इच्छतीत्याह सिद्धान्तत्वेनैव । कर्मार्थमिति । *अग्नाविष्णू मावामवक्रमिषं विजिहाथां मा मा संताप्तमिति । अत्र संतापाभावरूपं तेषां फलं कर्मार्थं यजमानकर्मसिद्ध्यर्थमसंतप्तो ऽध्वर्युः कर्म कर्तुं योग्यो ऽतः स्वामिनं प्रत्यपि परम्परया ऽर्थवत्त्वात् । तस्मादृत्विजामपि क्व चित्फलम् ॥ २८ ॥

## व्यपदेशाच्च ॥ २९ ॥

क्व चिद्व्यपदेशाद् निर्देशाद् ऋत्विजां फलम् । यथा उपरवेषु यजमानाध्वर्व्योः बाहुप्रवेशवेलायां किमत्र भद्रं तन्नौ सहेति निर्देशादध्वर्योरपि फलम्† ॥ २९ ॥

द्रव्यसंस्कारस्याङ्गप्रधानार्थत्वम् । अधि० १५ ।

## द्रव्यसंस्कारः प्रकरणाविशेषात् सर्वकर्मणाम् ॥ ३० ॥

द्रव्येति । द्रव्यस्य बर्हिषश्च संस्काराः साङ्गप्रधानार्थाः प्रकरणाविशेषात् । इदं पूर्वं सिद्धमपि उत्तराधिकरणोत्थित्यर्थं पुनरुक्तम् ॥ ३० ॥

अपूर्वप्राकृतधर्माणां विकृतावसम्बन्धः । अधि० १६ ।

## निर्देशात्तु विकृतावपूर्वस्य अनधिकारः ॥ ३१ ॥

बर्हिषा यूपावटं स्तृणातीत्यत्र विकृतौ बर्हिर्धर्माः सन्ति न वेति संशये बर्हिःशब्देन निर्देशादस्ति धर्मप्राप्तिरिति बर्हिः पूर्वपक्षे सिद्धान्तमाह । निर्देशादिति । निर्देशात् प्रकृतौ बर्हिषः कार्यस्य बर्हिषा वेदिं स्तृणातीति स्तरणस्य निर्देशाद् विकृतावपूर्वस्य प्रकृति-

* भोः स्रुक्स्रुवरूपौ अग्नाविष्णू युवां नाभिदेशे धारयन्नहमध्वर्युः मा वामवक्रमिषं युवयोरतिक्रमं न कृतवान् । युवां च मत्तो वियुक्तौ भवतम् । ततो मां देहधारिणं मा संताप्तं मम देहे संतापं ज्वरादिरूपं मा कुरुतम्" इत्यर्थो माधवीये ।

† इदमधिकरणान्तरमङ्गीचकार माधवः ।

कार्यशून्यस्य यूपावटस्तरणसाधनस्य नाधिकारः नोद्देश्यत्वं प्रकृतितः धर्माणां स्वकार्यद्वारैव प्राप्तेरिति भावः ॥ ३१ ॥

विधृतिपवित्रयोः परिभोजनीयबर्हिषा कर्तव्यत्वम् । अधि० १७ ।

## विरोधे च श्रुतिविरोधादव्यक्तः शेषः ॥ ३२ ॥

समावनन्तर्गर्भौ दर्भौ विधृती कुरुतइति । ते असंस्कृते संस्कृते वेति संशये सिद्धान्तमाह । विरोधइति । विरोधे कुशसंस्कारसंस्कृतस्य स्तरणादन्यत्र नियोगे शेषः विधृत्यादिः अव्यक्तः धर्मरहितः संस्कृतस्य विधृत्यादौ विनियोगे बर्हिषा वेदिं स्तृणातीति स्तरणे विनियोगश्रुतिविरोधात् ॥ ३२ ॥

प्राकृतपुरोडाशादीनां निधानम् । अधि० १८ ।

## अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥

ज्योतिष्टोमे श्रूयते, पुरोडाशस्य शकलमैन्द्रवायवस्य पात्रे निदधातीति । अयं पुरोडाशः सवनीयः स्यादन्यो वेति संशये विधृतिवत्संस्कृतादन्य इति बर्हिः पूर्वपक्षे सिद्धान्तमाह । अपनय इति । सवनीयपुरोडाशस्य एकदेशस्य ऐन्द्रवायवे ऽपनयः विद्यमानस्य क्लृप्तस्य संयोगाद् विधिसंयोगात् । अयं भावः पुरोडाशशकलमिति द्वितीयाश्रुत्या शेषपुरोडाशसंस्कारप्रतीतेः क्लृप्तस्यैवेति ॥ ३३ ॥

काम्येष्टिषु उपांशुत्वस्य प्रधानार्थत्वम् । अधि० १९ ।

## विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३४ ॥

आथर्वणा वै काम्या इष्टयस्ता उपांशु यष्टव्या इति । अत्रोपांशुत्वं साङ्गप्रधानस्य उत प्रधानस्यैवेति संशये पूर्वपक्षमाह । विकृताविति । शेषः विकृतौ विहितो गुणः सर्वार्थः प्रकृतिवद् दर्शपूर्णमासे वेदित्वत् ॥ ३४ ॥

## मुख्यार्थो वा ऽङ्गस्याचोदितत्वात् ॥ ३५ ॥

सिद्धान्तमाह । मुख्येति । मुख्यार्थः केवलप्रधानार्थः अङ्गस्य विकृतावचोदितत्वात् । अयं भावः वेद्यां हवींषीति हविर्मात्रमाह । अत्र ता इति सर्वनाम्ना काम्येष्टयः परामृश्यन्ते तत्सन्निधौ नाङ्गपाठः अतो साङ्गपरामर्शः । अतो यस्य परामर्शः तत्रैवोपांशुत्वमिति ॥ ३५ ॥

पयोनाङ्गानां नवनीताज्यत्वम् । अधि० २० ।

## सन्निधानविशेषादसंभवे तदङ्गानाम् ॥ ३६ ॥

श्येने श्रूयते, दृतिनवनीतमाज्यं भवतीति । दृतौ चर्मपुटके निहितं नवनीतं यस्याज्यस्येति तदर्थः । अत्र प्रकरणेन प्रधानग्रहणादतिदेशेन प्राप्तं सोमद्रव्यं बाधित्वा दृतिनवनीतं विधीयतइति बाह्यः पूर्वपक्षे सिद्धान्तमाह । सन्निधानेति । असंभवे दृतिनवनीतत्वरूपगुणविशिष्टाज्यविधाने गौरवाद्दतिदेशप्राप्ताज्यानुवादेनोक्तगुणमात्रविधानस्य सिद्धौ प्रधाने आज्याभावेन गुणस्यासंभवादङ्गानामाज्ये स्यात् । आज्यपदसन्निधानविशेषात् ॥ ३६ ॥

## आधाने ऽपि तथेति चेत् ॥ ३७ ॥

आधाने ऽपि दृतिनवनीतं स्यादग्निद्वारा तदङ्गत्वादित्याशङ्कते । आधानइति ॥ ३७ ॥

## नाप्रकरणत्वादङ्गस्यातन्निमित्तत्वात् । ३८ ॥

दूषयति । नेति । आधाने पवमानेष्टौ वा नोक्तमाज्यम् । अप्रकरणत्वादसन्निहितत्वात् । अङ्गस्याधानपवमानयोः अतन्निमित्तत्वात् । श्येनोद्देश्यकत्वाभावात् ॥ ३८ ॥

सर्वेषामेव श्येनाङ्गानां नवनीताज्यत्वम् । अधि० २१ ।

## तत्काले लिङ्गदर्शनात् ॥ ३९ ॥

दृतिनवनीतं श्येनाङ्गेष्विति सिद्धं तत्रापि दीक्षणीयादियावदङ्गेषु सुत्यादिनएव वेति संशये पूर्वपक्षमाह । तत्कालइति । तत्काले सुत्याकाले । लिङ्गदर्शनात् । अनुमानसम्भवात् । तथा हि श्येनविकृतिधर्माः सुत्याकालसंबन्धिनः सोमविकृतिविशेषधर्मत्वात् साद्यस्के सह पशूनालम्भेतेतिवत् ॥ ३९ ॥

## सर्वेषां वा ऽविशेषात् ॥ ४० ॥

सिद्धान्तमाह । सर्वेषामिति । सर्वेषामविशेषाद् विशेषशास्त्राभावात् । आज्यपदस्य श्रूयमाणस्य सुत्याकालीनाज्यमिति संकोचे मानाभावादिति भावः ॥ ४० ॥

## न्यायोक्ते लिङ्गदर्शनम् ॥ ४१ ॥

ननु मानत्वेन अनुमानं दर्शितमत्राह । न्यायोक्तइति । न्यायेन वाक्येन उक्ते ऽर्थे तद्विरुद्धं लिङ्गदर्शनमप्रमाणमिति शेषः ॥ ४१ ॥

सवनीयानां मांसमयत्वम् । अधि० २२ ।

## मांसं तु सवनीयानां चोदनाविशेषात् ॥ ४२ ॥

शाक्यानामयनं षट्त्रिंशत्संवत्सरसाध्यं तत्र संस्थिते संस्थिते ऽहनि गृहपतिर्मृगयां याति स तत्र यान्मृगान्हन्ति तेषां तरसाः पुरोडाशाः सवनीया भवन्तीति । अत्र सवनीयाः पुरोडाशा इति विशेष्यविशेषणभावापन्नं पदद्वयमुद्देश्यवाचकम् । तयोर्विशेष्यविशेषणभावापन्नयोरुद्देश्यत्वे विशिष्टोद्देशे वाक्यभेदः स्यादतो ऽन्यतरस्य वक्तव्ये केवलं सवनीयानित्यस्योद्देश्यत्वे सवनीयाः कइत्याकाङ्क्षापरिपूर्त्या पुरोडाशपदमुद्देश्यसमर्पकं सवनीयपदमवयुत्यानुवादरूपम् । तथा च पुरोडाशसामान्यं मांसमयमिति बहिः पूर्वपक्षे सिद्धान्तमाह । मांसमिति । मांसमिति श्रुतिस्थतरसव्याख्यानम् । मांसं मृगयानीतमांसं, सवनीयानां सवनीयसंबन्धिधानाकरम्भादिसर्वेषाम् । सवनीयशब्दस्याक्लृप्तार्थत्वान्नोद्देश्यवाचकत्वं सम्भवतीति न शङ्क्यम् । प्रकृतौ प्रातर्यावभ्यो देवेभ्यो ऽनुब्रूहि ब्रह्मन्वाचं यच्छ प्रतिप्रस्थातः सवनीयान्निर्वपेत्यत्र सवनीयशब्दस्य निर्वापयोग्यवस्त्वभिधायकत्वस्य क्लृप्तत्वादित्याह । चोदनाविशेषात् । उक्ताद् अर्थक्लृप्तेः । तथा चोद्देश्यसमर्पकं सवनीयपदं विषयवाक्ये सन्निहितत्वाच्च पुरोडाश इत्येवावयुत्यानुवादः । धानादिस्थाने ऽपि मांसं सिद्धम्* ॥ ४२ ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां तृतीयस्याध्यायस्य अष्टमः पादः ॥ ८ ॥

'समाप्तश्च तृतीयो ऽध्यायः' ॥ ३ ॥

---

* इत उत्तरं, भक्तिरसन्निधावन्याय्येति चेत् । स्यात् प्रकृतिलिङ्गत्वाद् वैराजवत् । इति सूत्रद्वयमत्र न व्याख्यातम् । शाबरभाष्ये तन्त्रवार्तिके च व्याख्यातम् । अतस्तद्व्याख्यानं भाष्योक्तमुपन्यस्यते । भक्तिरसन्निधावन्याय्येति चेत् ॥ १ ॥ इति चेत् पश्यसि सवनीयेषु पुरोडाशशब्दो ऽनुवादो भविष्यतीति, धानादिषु पुरोडाशशब्दो न वर्तते । भक्तिश्चान्याय्या मुख्ये संभवति ॥ १ ॥ स्यात्प्रकृतिलिङ्गत्वाद्वैराजवत् ॥ २ ॥ प्रकृतौ ज्योतिष्टोमे धानादिषु अयं पुरोडाशशब्दो भाक्तः सन्निहिते प्रयुक्तः, इहापि भाक्त एव प्रयोक्ष्यते, अत्रापि हि सवनीयशब्देन ते सन्निहिताः । प्रकृतौ लिङ्गसमवायाच्छब्दप्रवृत्तिर्विकृतावपि तथैव. यथा छत्रिणो गच्छन्ति ध्वजिनो गच्छन्तीति । यथा उक्थ्यो वैरूपसामा एकविंशः षोडशी वैराजसामा इति प्रकृतिलिङ्गेन सामशब्देन वैरूपपृष्ठो वैराजपृष्ठः इति गम्यते, एवमिहापि सवनीयानां मांसमयतेति ॥ २ ॥

क्रत्वर्थपुरुषार्थविचारप्रतिज्ञा । अधि० १ ।

## अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥

हेतुहेतुमद्भावसंगतिं प्रदर्शयन्नध्यायप्रतिपाद्यार्थज्ञानाय प्रतिजानीते । अथात इति । अथ शेषशेषिभावनिरूपणानन्तरम् अतः शेषशेषिभावनिरूपणस्य वक्ष्यमाणार्थनिरूपणे कारणत्वं यतः अतः तृतीयनिरूपणानन्तरं क्रत्वर्थपुरुषार्थयोर्वक्ष्यमाणलक्षणयोः जिज्ञासा तद्विषयज्ञानेच्छा कर्तव्येति शेषः ॥ १ ॥

क्रत्वर्थपुरुषार्थलक्षणं वर्णकान्तरद्वयसहितम् । अधि० २ ।

## यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्सा ऽर्थलक्षणा ऽविभक्तत्वात् ॥ २ ॥

प्रथमसूत्रस्थक्रत्वर्थपुरुषार्थपदार्थज्ञानार्थं तयोर्लक्षणमाह । यस्मिन्निति । यस्मिन् स्वर्गादिसुखविशेषे पश्वादिसुखसाधने च लब्धे प्रीतिः कृतार्थो ऽस्मीति वृत्तिस्तत्साधनं पुरुषार्थः । यद्वा यस्मिन्ननुष्ठिते पुरुषस्य प्रीतिः सुखविशेषो भवति स पुरुषार्थः । यथा यागे अनुष्ठिते स्वर्गरूपसुखं भवति तत्त्वमिति लक्षणसमन्वयः । प्रयाजादौ क्रतूपकारकत्वेन फलसाधनत्वाभावान्नातिव्याप्तिः । तदन्यो विहितः क्रत्वर्थः । तस्य स्वर्गादेः लिप्सा इच्छा अर्थलक्षणा शास्त्रं विना अर्थतः स्वत एव लक्षणमुत्पत्तिर्यस्याः तादृशी तेन फलेन सह साध्यसाधनभावस्य अविभक्तत्वादव्यभिचारात् क्रत्विच्छेति । इत्थं च शास्त्रजन्यज्ञानाजन्येच्छाविषयसाधनत्वं पुमर्थत्वम् । स्वर्गेच्छायाः शास्त्रजन्यज्ञानाजन्यत्वेन तदिच्छाविषयस्वर्गसाधनत्वाद्यागे लक्षणसमन्वयः । एवं लक्षणपरत्वेन सूत्रं व्याख्यायाधिकरणपरतया ऽपि तापयति । एवमिति । *गोदोहनेन पशुकामः प्रणयेदित्यत्र गोदोहनं क्रत्वर्थं उत पुरुषार्थं इति संदेहे क्रतूपकारस्य प्रत्यक्षदृष्टत्वेन क्रत्वर्थत्वमित्युक्तसूत्रे पूर्वपक्षे सिद्धान्तमाह । यस्मिन्निति । यस्मिन्गोदोहनरूपवस्तुनि प्रणयनसाधने कृते पुरुषस्य प्रीतिः सुखं तत्साधनं भवति स पुरुषार्थ एवेति । शेषसूत्रार्थः पूर्ववत् । सूत्रस्यार्थो-

* द्वितीयवर्णकम् । गोदोहनस्य क्रत्वर्थत्वम् ।

न्तरंभाष्यकार आह । एवमिति । *लोके द्रव्यार्जनं क्रत्वर्थं पुरुषार्थं वेति विचारे ब्राह्मणेन याजनादिनैव द्रव्यमर्जयेद् इतिनियमवैयर्थ्यात् क्रत्वर्थं इति पूर्वपक्षे सिद्धान्तमाह । यस्मिन्निति । यस्मिन्नर्जिते द्रव्ये पुरुषस्य प्रीतिः सुखं स पुरुषार्थं एवेति योजना । शेषं पूर्ववत्। वर्णकमेवं वा एवं वा ॥ २ ॥

प्रजापतिव्रतानां पुरुषार्थत्वम् । अधि० ३ ।

## तदुत्सर्गे कर्मणि पुरुषार्थाय शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसंबन्धात् क्रियायां पुरुषश्रुतिः ॥ ३ ॥

अनारभ्य, तस्य व्रतमित्युपक्रम्य नेक्षेतोद्यन्तमादित्यमिति श्रुतं क्रत्वर्थमुत पुरुषार्थमिति, तत्र सिद्धान्तेनोपक्रमते । तदिति । कर्मणि एतद्वाक्यबोध्यकर्मणि तस्याः प्रीतेः उत्सर्गे ऽपि अनुपलम्भे ऽपि यथा द्रव्यार्जने अनुरागः स्वतः सिद्ध इति पुरुषार्थत्वं तथा ईक्षणनिषेधे स्वतः अनुरागाभावे ऽपीति फलितम्, पुरुषार्थाय, भवतीति शेषः । ननु प्रीत्यभावेन हेतुना पुरुषार्थत्वाभावः सिध्यति कथं वार्यतइत्यत्राह । शास्त्रस्य प्रकृतवाक्यस्य अनतिशङ्क्यत्वात् । तर्केण निराकर्तुमशक्यत्वात् प्रकृतवाक्यवैयर्थ्यापातादिति भावः । ननु प्रकृतवाक्यविहितकर्मणा ईक्षणविरोधिक्रियया क्रत्वङ्गभूतद्रव्यं संस्क्रियतां तावता शास्त्रस्य न वैयर्थ्यम् उक्तहेतुना क्रत्वर्थत्वमपि संस्कारद्वारेत्यत्राह । न चेति । द्रव्यं क्रत्वङ्गभूतद्रव्यं संस्कार्ययुक्तं न चिकीर्ष्यते। अनारभ्यपाठेन क्रत्वङ्गद्रव्यसंस्कारासंभवादिति भावः । तेन हेतुना अगतितः अर्थेन पुरुषार्थेन फलेनाभिसंबन्धात्†न ननु नेक्षेतेति वाक्येन पुरुषमुद्दिश्य ईक्षणविरोधिक्रिया विधीयते। न स्वर्गादिमुद्दिश्य यागवत्किं चित्फलमुद्दिश्येति कथं पुरुषार्थत्वस्येमत्यत आह । क्रियायामीक्षणविरोधिक्रियामुद्दिश्य पुरुषश्रुतिः आख्यातलभ्यपुरुषश्रुतिः । पुरुषस्य कर्तृत्वेन रूपेण प्रकृतक्रियाङ्गत्वमेव न प्रधानत्वमिति भावः ॥ ३ ॥

* तृतीयवर्णकम् । द्रव्यार्जनस्य पुरुषार्थत्वम् ।

† अत्र शास्त्रदीपिकादौ फलस्य विधेयाविधेयत्वविचारो ऽपि कृतः ।

## अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ॥ ४ ॥

एवमेव समिधो यजतीत्यादिप्रतिपाद्यानामपि पुरुषार्थतैव स्यादित्याशङ्क्ते । अविशेषात्त्विति । शास्त्रस्य समिधो यजतीति शास्त्रस्य नेष्टेतोद्धन्तमादित्यमित्यस्मादविशेषात् । कर्तृत्वेन कर्मण्यन्वयसंभवात् । यथाश्रुति तत्समीपे श्रूयमाणार्थवादप्रतिपाद्यानि फलानि स्युः ॥ ४ ॥

## अपि वा कारणाग्रहणे तदर्थमर्थस्यानभिसंबन्धात् ॥ ५ ॥

समिदादिवैषम्यं दर्शयति । अपि वेति । कारणाग्रहणे श्रुतिलिङ्गादिषट्प्रमाणानां मध्ये कस्याप्यनुपलब्धौ सत्यां तदर्थं पुरुषार्थं नेक्षेतेति विहितं कर्म अर्थस्य कस्यापि कर्मणः प्रजापतिव्रतैः अनभिसंबन्धात् । एकाधिकारपठितत्वरूपसंबन्धाभावात् । अनारभ्यपाठ एव समिदादिवैषम्यं दर्शयतीति भावः ॥ ५ ॥

## तथा च लोकभूतेषु ॥ ६ ॥

उक्तार्थे लोकानुभवमप्याह । तथा चेति । लोकभूतेषु जनरूपेषु मूर्खजनेष्वपीति फलितम् । अनुभवो दृश्यतइति शेषः । स्नानं कुरु पाकं कुर्वित्युक्ते स्नानं पाकार्थमिति जानाति । केवलं स्नानं कुर्वित्युक्ते स्वतन्त्रफलकमेव तज्जानातीति भावः ॥ ६ ॥

यज्ञायुधानामनुवादत्वम् । अधि० ४ ।

## द्रव्याणि त्वविशेषेणानर्थक्यात्प्रदीयेरन् ॥ ७ ॥

स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानीति श्रुतम् । अत्र किमेतानि द्रव्याणि होमसाधनानि उत स्वस्वकार्यसाधनानीति संशये पूर्वपक्षमाह । द्रव्याणीति । द्रव्याणि उदाहृतवाक्ये श्रुतस्फ्यादीनि प्रदीयेरन् देवतोद्देशेन दातव्यमानर्थक्याद् वाक्यवैयर्थ्यापातात् । यद्यपि प्रदेयत्वे, वाक्ये अश्रुतान्यविशेषेण अङ्गप्रधानार्थानि वेदिवत्, तथा ऽपि अविशेषेण, श्रुतान्यपि इति शेषः । प्रदीयेरन्नित्यन्वयः । यज्ञायुधानीत्यत्र यज्ञशब्दस्य प्रधाने रूढत्वात्तदङ्गत्वमेवेति भावः ॥ ७ ॥

स्वेन त्वर्थेन संबन्धो द्रव्याणां पृथगर्थत्वात्तस्माद्यथा-श्रुति स्युः ॥ ८ ॥

सिद्धान्तमाह । स्वेनेति । स्वेनार्थेन स्फ्येनोद्धन्ति, कपालेषु श्रपयति, अग्निहोत्रहवण्यां हवींषि निर्वपतीति श्रुतस्वस्वकार्यैः द्रव्याणां स्फ्यादीनां संबन्धः । पृथगर्थत्वात् पृथक्पृथक्प्रयोजनश्रुतेः । यथाश्रुति पृथग्वाक्यविहितेनार्थेन संबन्धः । यज्ञायुधवाक्यमनुवादकमेवेति भावः ॥ ८ ॥

चोद्यन्ते चार्थकर्मसु ॥ ९ ॥

साधकान्तरमाह । चोद्यन्तइति । अर्थकर्मसु पात्रप्रतिपत्तिकर्मसु चोद्यन्ते आहिताग्निमग्निभिः पात्रैश्च दहन्तीति विधीयन्ते । होमार्थत्वे प्रतिपत्तिरनुपपन्नेति भावः ॥ ९ ॥

लिङ्गदर्शनाच्च ॥ १० ॥

उक्तार्थे लिङ्गमप्याह । लिङ्गेति । चतुर्दश पौर्णमास्याम् अमावास्यायां त्रयोदशाहुतय इति संख्याश्रवणं लिङ्गं. दशद्रव्यैराहुतिवृद्धौ श्रूयमाणसंख्या विरुध्येतेति भावः ॥ १० ॥

पश्वेकत्वविवक्षा । अधि० ५ ।

तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ११ ॥

यदग्नीषोमीयं पशुमालभेतइति श्रुतं, तत्र पशुपदोत्तरप्रत्ययवाच्या संख्या विवक्षिता ऽविवक्षिता वेति संशये पूर्वपक्षमाह । तत्रेति । तत्र उदाहृतवाक्यादौ एकत्वं संख्यामात्रमयज्ञाङ्गं यागाङ्गं न भवति यागान्वितं न । अतो ऽविवक्षितमिति फलितो ऽर्थः । अर्थस्य स्वप्रकृत्यर्थपश्वादेः गुणभूतत्वाद्विशेषणत्वात् । अयं भावः । यज्ञाङ्गत्वे तदङ्गस्यैकत्वस्य वैकल्ये यज्ञः फलसाधनक्षमो न भवतीति तद्विवक्षणमावश्यकम् । पशुगतैकत्वविवक्षणे च न किं चिद्बाधकम् । अतो ऽविवक्षैव युक्तेति ॥ ११ ॥

एकश्रुतित्वाच्च ॥ १२ ॥

साधकान्तरमाह । एकेति । एकश्रुतित्वाद्, एकां गां दक्षिणां दद्यात्तेभ्य एवेति वचने एकपदश्रवणात् । अयं भावः । यदि पश्वादि

संख्या विवक्षिता तदा गां दद्यादित्यत्रैकवचनेनैवैकत्वप्राप्तावेकपदं व्यर्थं स्यात् । अतो ऽविवक्षितेति ॥ १२ ॥

## प्रतीयतइति चेत् ॥ १३ ॥

पूर्वपक्षमाक्षिपति । प्रेति । प्रतीयते गामानयेत्युक्ते शिष्यैरेकैव गौरानीयतइति एकत्वस्यापि शाब्दविषयतया प्रवेशो दृश्यतइति विवक्षा ऽऽवश्यकीति भावः ॥ १३ ॥

## नाशब्दं तत्प्रमाणत्वात्पूर्ववत् ॥ १४ ॥

इदमशाब्दमिति सदृष्टान्तमाह । नेति । पशुमालभेतेत्यादावेकत्वप्रतीतिः न, यत्प्रतीयते तदशाब्दं शब्दजन्यप्रतीतिविषयो न । तद् एकपदश्रुत्यात्मकं प्रमाणं यस्मिन्वाक्ये तत्त्वात् । अयं भावः । अयमाशैकत्वस्य स्वाश्रयकरणकत्वसंबन्धेन यागे धात्वर्थे ऽन्वये यागस्य पदान्तरोपात्तत्वेन वाक्येन विनियोगः, पशावन्वये एकपदश्रुत्या विनियोगः इति, वाक्याच्छ्रुतिर्बलीयसीति, यदि शाब्दं तदा श्रुत्यैव विनियोगो वाच्यः, स च निष्फल इत्युक्तं प्रागतो ऽशाब्दमिति । अत्र दृष्टान्तमाह । पूर्ववद् यथा पूर्वो धावतीति श्रवणे अपरं विना पूर्वासंभवाद् अपरो ऽप्यस्तीत्यशाब्दी प्रतीतिः तद्वत् ॥ १४ ॥

## शब्दवत्तूपलभ्यते तदागमे हि तद्दृश्यते तस्य ज्ञानं यथा ऽन्येषाम् ॥ १५ ॥

सिद्धान्तमाह । शब्देति । शब्दवद् एकत्वादिसंख्याविषयकं ज्ञानं जन्यतासंबन्धेन शब्दविशिष्टं प्रतीयते अनुभूयते संख्याविषयकः शाब्द एवेति भावः । कथमवगतमत्राह । तदागमे एकवचनश्रवणे तद् एकत्वविषयकं स्मरणं दृश्यते अनुभूयते लोकैः । तस्य तद्विषयकं ज्ञानं शाब्दं भवति । यत्पदश्रवणे यद्विषयकस्मरणं तद्विषयः शाब्दबोधः यथा अन्येषां गवादिविषयकशाब्दबोधानां शाब्दबोधत्वं तथैवात्रेति भावः । इत्थं च स्वाश्रयकरणकत्वसंबन्धेन यागे ऽन्वयः । तथा च यागाङ्गस्य सफलस्य विवक्षणमावश्यकम् । एकपदश्रुतिः एकत्वत्वेन रूपेण घटादेकत्वस्याप्युप-

स्थितौ स्वप्रकृत्यर्थं तद्वृत्त्येकत्वं व्यावर्तयत् चरितार्थो वाक्यविनियोगं न बाधतइति तत्परिहारो बोध्यः ॥ १५ ॥

तद्वच्च लिङ्गदर्शनम् ॥ १६ ॥

तद्वदुक्तार्थानुरूपमेव लिङ्गदर्शनम् । कर्णा याम्याः अवलिप्ता रौद्राः नभोरूपाः पार्जन्या ऐन्द्राग्नो दशम इति त्रित्वस्य विवक्षायामेवोपपद्यते । अतो ऽस्ति विवक्षा ॥ १६ ॥

लिङ्गस्य विवक्षा । अधि० ६ ।

तथा च लिङ्गम् ॥ १७ ॥

यथा संख्या तद्वदेव पुंस्त्वादिलिङ्गं विवक्षितम्* ॥ १७ ॥

आश्रयिणामदृष्टार्थता । अधि० ७ ।

आश्रयिष्वविशेषेण भावो ऽर्थः प्रतीयेत ॥ १८ ॥

उत्तमप्रयाजस्विष्टकृदादिभिर्देवतादिस्मरणप्रतिपत्त्यादिरूपसंस्कारो दृष्ट एवोतादृष्टमपि किं चिदंशेन भवतीति संशये सिद्धान्तेनोपक्रमते । आश्रयिष्विति । ये परकीयद्रव्यदेवतमंशेन संस्कारत्वेनाश्रयन्ति ते आश्रयिणः उत्तमप्रयाजस्विष्टकृदादयः । तेषु, भाव्यतइति भावो ऽर्थः अपूर्वं प्रतीयेत कल्प्येत । मन्त्रोच्चारणादग्न्यधिकरणकद्रव्यसंयोगपूर्वको देवतोद्देशेन द्रव्यत्यागो यज्यर्थः । तत्र मन्त्रोच्चारणस्य देवतास्मरणं हविष्प्रक्षेपस्य शिष्टविनियोग इति द्वयोः सफलत्वे ऽपि त्यागांशस्य न किमपि दृष्टं फलमतो ऽपूर्वं कल्प्यतइति भावः । कुतः, यजतिददातिजुहोत्यादिभिः अपूर्वप्रयोजनैः अविशेषेण वैलक्षण्याभावात् । यथा सोमेन यजेतेत्यादिवाक्यानामपूर्वकल्पकत्वं तथा स्वाहाकारं यजतीत्यादिवाक्यानामपि तथेति भावः ॥ १८ ॥

चोदनायां त्वनारम्भो ऽविभक्तत्वान्न ह्यन्येन विधीयते ॥१९ ॥

पूर्वपक्षमाह । चोदनायामिति । चोदनायां विधौ अंशानामनारम्भः अंशविध्यभावः अविभक्तत्वाद् विधितात्पर्यविषयीभूतस्य विशिष्टार्थत्वे-

* पूर्वाधिकरणांशो ऽधिकरणान्तरं वेति भाष्यकारः ।

नानंशत्वात् । अन्येन विशिष्टविधायकशब्दातिरिक्तेन अंशो न विधीयते । एकविधिप्रतिपाद्या भावना एकं फलमपेक्षते । तच्च देवतास्मरणादिना निराकाङ्क्षमतो नात्रापूर्वं विधिविषय इति भावः ॥ १९ ॥

## स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतताऽऽश्रयाद्धि गुणीभावः ॥ २० ॥

पूर्वपक्षयुक्तिं दूषयन् सिद्धान्तं व्यवस्थापयति । स्यादिति । चिकीर्षायां द्रव्यादिसंस्कारचिकीर्षायां सत्यामपि संस्कारे विधितात्पर्यसत्त्वेऽपीत्यर्थः । यागतः भावः अपूर्वं स्यात् । हि यस्माद् आश्रयात् स्वप्रधानात् स्वस्य गुणीभावः अङ्गत्वमतः यागांशभूतमन्त्रोच्चारणयोः अर्थे संस्काररूपार्थे गुणीभावः, त्यागांशस्य न तत्र गुणत्वं संभवतीत्यदृष्टं कल्प्यम् । यदुक्तमंशानां न विधितात्पर्यमिति तन्न । अंशांशिनोरभेदादिति भावः ॥ २० ॥

प्रयोज्यप्रयोजकभावनिरूपणप्रतिज्ञा । अधि० ८ ।

## अर्थेन समवैषम्यमतो द्रव्यकर्मणाम् ॥ २१ ॥

एतावत्पर्यन्तं शेषशेषिभावं निरूप्येतः परमेतदध्यायप्रतिपाद्यप्रयोज्यप्रयोजकभावो निरूप्यतइति प्रतिजानीते । अर्थेनेति । अर्थेन फलेन संबन्धवेलायां द्रव्यकर्मणां मैत्रावरुणदण्डदध्यानयनरूपाणां समवैषम्यं, प्रतिपाद्यते इति शेषः ॥ २१ ॥

दध्यानयनस्य आमिक्षाप्रयोज्यत्वम् । अधि० ९ ।

## एकनिष्पत्तेः सर्वं समं स्यात् ॥ २२ ॥

तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति । अत्र दध्यानयनम् आमिक्षा वाजिनमित्युभयार्थमुतामिक्षार्थमेवेति संशये पूर्वपक्षमाह । एकेति । एकनिष्पत्तेः एकदैव आमिक्षावाजिनयोरुत्पत्तेः सर्वं ताभ्यां दध्यानयनस्य संबन्धः समं स्यात् । युगपन्निष्पन्नत्वेनानेनैव संबध्यतइति नियन्तुमशक्यत्वादिति भावः ॥ २२ ॥

## संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ॥ २३ ॥

सिद्धान्तमाह । संसर्गेति । संसर्गेण दधिसंसर्गेण आमिक्षायां रसोत्पत्तेः विनिगमकत्वात् प्रधानं दध्यानयनप्रवृत्त्युद्देश्यमामिक्षा, वाजिनं तु न तथेति ॥ २३ ॥

## मुख्यशब्दसंस्तवाच्च ॥ २४ ॥

अर्थवादे आमिक्षास्तुतिः सा प्रधानमित्याह । मुख्येति । मिथुनं वै दधि च शृतं च यत्संसृष्टं वस्तु स गर्भ एवेति । यथा मिथुनीभावस्य मुख्यं कार्यं गर्भः तत्सादृश्यप्रतिपादनेन मुख्यशब्देन गर्भशब्देन संस्तवादपि सा मुख्या ॥ २४ ॥

गवानयनस्य पदकर्माप्रयोज्यत्वम् । अधि० १० ।

## पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २५ ॥

एकहायन्या सोमं क्रीणातीत्युक्त्वा षट् पदान्यनु निष्क्रामति सप्तमं पदमध्वर्युरञ्जलिना गृह्णातीत्यप्युक्त्वा तेनाक्षमुपाञ्ज्यादिति श्रुतम् । तेन सोमक्रयी सप्तमपदपांसुना अक्षं सोमस्य राज्ञः शकटावयवं योजयेदिति तदर्थः । अत्र एकहायन्याः पदन्यासः क्रयमात्रोद्देश्यकः उताक्षाञ्जनमप्युद्देश्यमिति संशये अविशेषादुभयार्थमिति पूर्वपक्षे सिद्धान्तमाह । पदेति । पदकर्म पांसुभिरक्षाञ्जनमप्रयोजकमनुद्देश्यं नयनस्य एकहायनीनयनस्य परार्थत्वात् सोमक्रयार्थत्वात् । अयं भावः एकहायन्या क्रीणातीति तृतीयाश्रुत्या क्रयाङ्गं सा तन्नयनमप्यत एव तदङ्गमतः क्रय एवोद्देश्य इति अक्षाञ्जनमानुषङ्गिकमिति ॥ २५ ॥

कपालानां तुषोपवापाप्रयोज्यत्वम् । अधि० ११ ।

## अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ २६ ॥

कपालेषु पुरोडाशं श्रपयतीति, तथा पुरोडाशकपालेन तुषानुपवपतीति । कपालसंपादनमुभयार्थमुत केवलं श्रपणार्थमिति संशये विनिगमनाविरहादुभयार्थमिति पूर्वपक्षे सिद्धान्तमाह । अर्थेति । अर्थेन पुरोडाशश्रपणात्मकफलेन सहाभिधानं यस्य कपालस्य तत्साध्यं कर्म तुषोपवापादि, अप्रयोजकमिति शेषः । एतत्सूचनार्थ एव पुरोडाशपदयुक्तकपालपदप्रयोग इति भावः । ननु तुषोपवापकाले पुरोडाशसंबन्धो नास्ति कथं पुरोडाशकपाल इति वाक्ये संगतं तत्राह । भविष्यता पुरोडाशेन यः संयोगः तस्यैव तन्निमित्तत्वात् पुरोडाशकपालेतिव्यवहारनिमित्तत्वात् । अतः भाविसंबन्धविशिष्ट एव तुषोपवापफलको विधीयते ॥ २६ ॥

शकल्लोहितयोः पशावप्रयोजकत्वम् । अधि० ११ ।

## पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २७ ॥

पशोः आलम्भनं, तत्समीपे हृदयस्याग्रे ऽवद्यत्यथ जिह्वाया इति, लोहितं निरस्यति शकृत्प्रविध्यतीति । आलम्भ उभयार्थ उत केवलं हृदयाद्यवदानार्थ इति संशये पूर्ववत्पूर्वपक्षे सिद्धान्तमाह । पशाविति । पशौ पशुयागे लोहितशकृन्निरासयोः अकर्मत्वमप्रयोजकत्वम् । तदुद्देशेनेति लोहितशकृन्निरासोद्देशेन अनालम्भात् संज्ञपनाभावात् । उत्पत्तिवाक्ये पशोर्यागार्थत्वेन विधानादिति भावः ॥ २७ ॥

पुरोडाशस्य स्विष्टकृदप्रयुक्तत्वम् । अधि० १२ ।

## एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ॥ २८ ॥

दर्शपूर्णमासयोः श्रूयते, उत्तरार्धात्स्विष्टकृते ऽवद्यतीति । तथा ऽग्न्याद्युद्देशेन प्रधानयागो ऽपि विहितः । एवं सति पुरोडाशनिर्माणमुभयार्थमुत प्रधानार्थमेवेति संशये उभयार्थमिति पूर्वपक्षे सिद्धान्तमाह । एकदेशेति । एकदेशः उत्तरार्धरूपं द्रव्यं यस्य स स्विष्टकृद्यागः अप्रयोजकः । यदाग्नेयो ऽष्टाकपाल इत्युत्पत्तौ उत्पत्तिवाक्ये विद्यमानसंयोगात् क्लृप्तसंबन्धात् ॥ २८ ॥

## निर्देशात्तस्यान्यदर्थादिति चेत् ॥ २९ ॥

उक्तयुक्तिमङ्गीकृत्य प्रकारान्तरेण शङ्कते । निर्देशादिति । तस्याग्नेयपुरोडाशस्य निर्देशाद् इदमग्नेरिति क्लृप्तत्वात्तस्य देवतान्तरोद्देशेन दानासंभवात् । अर्थात्स्विष्टकृद्विध्यन्यथानुपपत्त्या अन्यत्स्वतन्त्रं पुरोडाशनिर्माणमिति ॥ २९ ॥

## न शेषसन्निधानात् ॥ ३० ॥

निराकरोति । नेति । शेषस्य आग्नेयादिशेषस्य सन्निधानात् । स्विष्टकृदर्थे विद्यमानत्वान्न विध्यनुपपत्तिरिति भावः ॥ ३० ॥

## कर्मकार्यात् ॥ ३१ ॥

युक्त्यन्तरमाह । कर्मेति । कर्मणः स्वसेवायाः कार्यात् फलरूपत्वेन स्तुतेः । स्तुतिवाक्यं देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति

सो ऽब्रवीदुत्तरार्धान्मह्यं दीयतामिति । लोके स्वसेवकाय यद्दीयते तत्स्वभुक्तशेषमेव दीयते न तु तदर्थं पाकः क्रियते तथेति भावः ॥ ३१ ॥

## लिङ्गदर्शनाच्च ॥ ३२ ॥

लिङ्गेति । तद्यत्सर्वेभ्यो हविर्भ्यः स्विष्टकृते समवद्यतीत्यर्थवादे सर्वेभ्य इति दर्शनं लिङ्गम् ॥ ३२ ॥

अभिघारणे शेषधारणतत्पात्रयोरननुष्ठानम् । अधि० १३ ।

## अभिघारणे विप्रकर्षादनूयाजवत्पात्रभेदः स्यात् ॥ ३३ ॥

वाजपेये सप्तदशप्राजापत्यपशूनां पर्यग्निकरणं कृत्वा कालान्तरे ब्रह्मसाम्न्यालम्भनं विहितम् । तथा प्रयाजशेषेण हवींष्यभिघारयतीति श्रुतम् । ब्रह्मसाम्न्यालम्भोत्तरं वपाभिघारणपर्यन्तं जुह्वां प्रयाजशेषस्थापनं न संभवति । जुह्वाः कार्यान्तरसत्त्वात् । अतः प्रयाजशेषं पात्रान्तरे स्थाप्यमुत वपाभिघारो निवर्ततइति संशये पूर्वपक्षमाह । अभिघारेति । अभिघारणे कर्तव्ये सति कालान्तरहविषा विप्रकर्षाद्दूरवर्तित्वात्पात्रभेदः स्यात् । यथा तत्रैव अनूयाजसाधनपृषदाज्यधारणार्थं पात्रान्तरं तथा ॥ ३३ ॥

## न वा ऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात् ॥ ३४ ॥

समाधत्ते । नेति । न पात्रान्तरधारणमपात्रत्वाद् धारणपात्रस्याविहितत्वात् । ननु अभिघारणस्य कर्तव्यतया अर्थसिद्धं पात्रान्तरमत आह । एकदेशत्वात् प्रयाजार्थविनियुक्तशेषत्वादाज्यस्य । अयं भावः । शेषाभिघारणं प्रतिपत्तिसंस्कारः । न च तृतीयाश्रुत्या ऽङ्गत्वम् । सक्तुन्यायेन विभक्तिविपरिणामे शेषं हविःषु क्षारयेदित्यर्थात् । तथा च समये यावन्ति हवींषि तावदभिघारणैव चारितार्थ्यमिति । पृषदाज्यस्यानूयाजाङ्गत्वेन तद्धारणमावश्यकमिति ॥ ३४ ॥

## हेतुत्वाच्च सह प्रयोगस्य ॥ ३५ ॥

ननु श्रूयमाणविभक्तिविपरिणामे किं मानमित्यत्र प्रबलं लिङ्गमित्याह । हेतुत्वादिति । सह प्रयोगस्य क्रतुपशुप्राजापत्यपशूनां सहानु-

ष्ठानस्य हेतुत्वाद् हेतुत्वेनार्थवादे संस्तवात् । तीर्थे वै प्रातःसवनं यत्प्रातःसवने सह पशव आलभ्यन्ते तीर्थे एवैतानालभते ऽथो वपानामभिघृतत्वायेति । अनभिघृतासु वपासु उपायान्तरेणाभिघारलाभो लिङ्गमिति भावः ॥ ३५ ॥

## अभावदर्शनाच्च ॥ ३६ ॥

लिङ्गान्तरमाह । अभावेति । अभावस्य अभिघाराभावस्य दर्शनात् । क्व चिदर्थवादइति पूरणीयम् । सव्या वा एतर्हि वपा यर्ह्यनभिघारिताः ब्रह्म वै ब्रह्मसाम यद्ब्रह्मसाम्न्यालभते नासव्याः तेनाभिघृताः इति । सव्याः अनभिघारेण रूक्षाः स्नेहसंबन्धहीना इत्यर्थः । यद्यभिघारो ऽभिप्रेतः तर्हि सव्या इत्यनुपपन्नम् ॥ ३६ ॥

## सति सव्यवचनम् ॥ ३७ ॥

उक्तलिङ्गमनुपपन्नमित्याशङ्कते । सतीति । सति वपाया अभिघाराभावे रूक्षतासिद्धिरिति सव्यवचनं वास्तवार्थप्रतिपादकं सद् लिङ्गं भवेत् । तदेव न । पञ्चावत्तत्वसंपत्तये उपस्तरणाभिघारसत्त्वादतो ऽवास्तवार्थकं सत् स्तावकमात्रं न लिङ्गम् । इति चेद् इति अग्रिमसूत्रस्थमत्रान्वेति ॥ ३७ ॥

## न तस्येति चेत् ॥ ३८ ॥

उत्तरयति । नेति । तस्य चतुरवत्तावयवाभिघाराभावप्रतिपादकं सव्यवचनं न ॥ ३८ ॥

## स्यात्तस्य मुख्यत्वात् ॥ ३९ ॥

सव्यशब्देन द्योत्यमानाभावप्रतियोगि कीदृशं तत्राह । स्यादिति । तस्य यत्प्रयाजशेषाभिघारणं तस्याभावद्योतकं स्याद् मुख्यत्वात्प्राधान्यात् ॥ ३९ ॥

समानयनस्याज्यधर्मप्रयोजकत्वम् । अधि० १४ ।

## समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् ॥ ४० ॥

दर्शपूर्णमासयोः श्रूयते, आतिहायेडः समानयतउपभृत इति ।

इदमुपभृतः समानयनं प्रयाजार्थमुत अनूयाजाज्यसंस्कार इति संशये यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तद् यदुपभृति प्रयाजानूयाजेभ्यस्तदित्यनेन औपभृताज्यस्यापि यावत्प्रयाजार्थत्वेन प्रथमप्रयाजात्प्रागेव ग्रहणस्य प्राप्तत्वेनातिहायेति वाक्येनानूयाजद्रव्ये संस्कारार्थमेवानयनं विधीयत-इति बहिः पूर्वपक्षे सिद्धान्तमाह । समेति । समानयनमुपभृतः समानयनं मुख्यं प्रधानकर्म, न द्रव्यसंस्कारः लिङ्गदर्शनात् । लिङ्गं तु आतिथ्याप्रकरणे चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानूयाजान्यक्ष्यन् भवतीति । अयं भावः यद्यनूयाजाज्यसंस्कारः समानयनं तदा प्रयाजे जुह्वाज्यमुपभृदाज्यं वेति विकल्पः सिद्धः । आतिथ्यायामनूयाजाभावेन अनूयाजचतुर्गृहीतं निवृत्तं, प्रयाजार्थं जुह्वामेकं चतुर्गृहीतं ध्रुवायामेकमिति द्वे चतुर्गृहीते इति आज्यानीत्यनुपपन्नम् । जुह्वाज्यं प्रयाजत्रयार्थमुपभृदाज्यं प्रयाजद्वयार्थमिति प्रयाजे आज्ययोः समुच्चयपक्षे अनूयाजाभावेऽपि प्रयाजार्थमुपभृति चतुर्ग्रहणसत्वात्तेन सह बहुत्वमुपपन्नम् । अतः आनयनं प्रयाजार्थम् ॥ ४० ॥

## वचने हि हेत्वसामर्थ्यम् ॥ ४१ ॥

ननु उक्तवाक्यं नार्थवादः किं तु विधायकम् । इत्थं चानूयाजनिवृत्तावपि वचनादुपभृति अपूर्वार्थं चतुर्ग्रहणम् । इत्थं न लिङ्गं तदिति तद्विरोधो ऽपि नेत्यत आह । वचनइति । वचने विधौ सति हेतोः हेतुप्रतिपादकस्य न ह्यत्रानूयाजान् यक्ष्यन्भवतीत्यस्य असामर्थ्यं स्वारस्याभावः । मन्मते अष्टावुपभृति गृह्णन्ते प्रयाजानूयाजोभयार्थमन्यत्र । अत्र यतो ऽनूयाजाभावः अतः चतुर्गृहीतान्येव सर्वाणि न चित्वाष्टाविति स्वरसं हेतुकथनमिति भावः ॥ ४१ ॥

औपभृतजौहवयोः क्रमेणोभयानुभयार्थत्वम् । अधि० १५ ।

## तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥

चतुर्जुह्वां गृह्णाति अष्टावुपभृति इति । इदमाज्यं सर्वं सर्वार्थमुत विभज्य विनियोग इति संशये पूर्वपक्षमाह । तत्रेति । जौहवाद्याज्ये

उत्पत्तिः ग्रहणोत्पत्तिप्रतिपादकं वाक्यं कार्यविशेषासंयुक्ता । अतः अविभक्ता । सर्वं सर्वार्थं, यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदित्यादिवाक्यान्यवयुत्यानुवादकानीति भावः ॥ ४२ ॥

## तत्र जौहवमनूयाजप्रतिषेधार्थम् ॥ ४३ ॥

सिद्धान्तमाह । तत्र जौहवमिति । जौहवं यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति वाक्यम् अनूयाजप्रतिषेधार्थम् । चतुर्जुह्वां गृह्णातीत्युत्पन्नग्रहणस्य फलाकाङ्क्षायाः प्रयाजेभ्यस्तदित्यनेन प्रयाजार्थत्वे सिद्धे अनूयाजनिवृत्तिरार्थिकीति भावः ॥ ४३ ॥

## औपभृतं तथेति चेत् ॥ ४४ ॥

ननु शाखान्तरे यदुपभृति गृह्णाति अनूयाजेभ्यस्तदिति श्रुतं तेन अनूयाजार्थत्वे सिद्धे प्रयाजसंबन्ध औपभृताज्यस्य न स्यादिति शङ्कते । औपभृतं तथेति । व्याख्यातकल्पम् ॥ ४४ ॥

## स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥ ४५ ॥

यदुपभृति प्रयाजानूयाजेभ्यस्तदित्यनेन अनूयाजेभ्यः जुह्वाज्यप्रतिषेधे उभयार्थत्वव्यवस्थायाः सिद्धौ औपभृताज्यस्य अनूयाजसंबन्धस्य नित्यसिद्धस्यानुवादकमुक्तशाखान्तरवाक्यमित्याह । स्यादिति ॥ ४५ ॥

उपभृति द्विः चतुर्गृहीताचरणम् । अधि० १६ ।

## तदष्टसंख्यं श्रवणात् ॥ ४६ ॥

अष्टावुपभृतीति अष्टत्वसंख्याविशिष्टं विधत्ते उत चतुर्गृहीतद्वयमितिसंशये पूर्वपक्षमाह । तदिति । तद् उक्तवाक्यविधेयमष्टसंख्यं श्रवणादुक्तवाक्ये श्रवणात् ॥ ४६ ॥

## अनुग्रहाच्च जौहवस्य ॥ ४७ ॥

साधकान्तरमाह । अनुग्रहादिति । जौहवस्य जुहूसंबन्ध्याज्यस्य औपभृताज्येन मेलने श्रूयमाणार्थवादस्यानुग्रहात् । अर्थवादवाक्यं तु चतुर्गृहीतं वै यत्तदभूत्तस्याघारमाघार्य त्रिरितः प्राचीनं प्रयाजान्यजति समा-

नयतउपभृतः चतुर्गृहीतत्वायेति । अत्र चतुर्गृहीतपदमल्पपरम् । अल्पत्वं किंचिदवधिकम् । तच्च स्ववृत्तिपरिमाणादधिकपरिमाणमपेक्षते । तच्चाष्टत्वसंख्यायामुपभृत्यष्टौ जुह्वां चतुर्गृहीतमाघारप्रयाजोभयपर्याप्तये नालमतः औपभृताज्यग्रहणेन तत्पर्याप्तिः कार्येत्यर्थवादः संगच्छतइति भावः ॥ ४७ ॥

## द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ॥ ४८ ॥

सिद्धान्तमाह । द्वयोः चतुर्गृहीतयोः विधिः, न अष्टत्वावच्छिन्नस्य । यतः आतिथ्यायां चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानूयाजान्यक्ष्यन् भवतीति चतुर्गृहीताज्यबहुत्वे अनुयाजाभावस्य हेतुत्वकथनमतः । अयं भावः । द्वयोश्चतुर्गृहीतयोः विधौ एकचतुर्गृहीतस्यानूयाजनिवृत्त्या निवृत्तौ सर्वेषु चतुर्ग्रहणं तुल्यमिति बहुवचनमप्युपपन्नमिति । नन्वेवं सति द्वे चतुर्गृहीते इति पठेद् नाष्टाविति तत्राह । श्रवणमष्टत्वश्रवणं समानयने ग्रहणे, पात्रभेदाभावद्योतकमिति शेषः । एकस्मिन्नेव द्वयोर्ग्रहणमिति भावः ॥ ४८ ॥

इति श्रीजैमिनिसूत्रवृत्तौ चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥

स्वरोश्छेदनाद्यप्रयोजकत्वम् । अधि० १ ।

## स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥

यूपस्य स्वरुं करोतीति श्रुतम् । अत्र यूपक्रियातो भिन्नक्रियया स्वरुरुत्पाद्यः उत यूपक्रिययैव अनुनिष्पन्नः स्वरुरिति संशये पूर्वपक्षमाह । स्वरुरिति । स्वरुः काष्ठशकलम् । अनेकनिष्पत्तिः यूपक्रियातः स्वतन्त्रक्रियया निष्पत्तिः उत्पत्तिर्यस्य सः । स्वकर्मशब्दत्वात् स्वरुं करोतीति स्वतन्त्रवाक्येन तस्योत्पत्तिश्रवणात् ॥ १ ॥

## जात्यन्तराच्च शङ्कते ॥ २ ॥

साधकान्तरमाह । जात्यन्तरेति । स्वरुप्रकरणे तदीयो ऽर्थवादः जात्यन्तरं यूपप्रकृतिवृक्षभिन्नवृक्षप्रकृतिकत्वं शङ्कते, यद्यन्यस्य वृक्षस्य स्वरुं कुर्यादन्यस्य लोकमारोहेयुर्यूपस्य स्वरुं करोतीति । यदि यूपादनुनि-

यत्नः स्वरुः, अन्यस्य वृक्षस्येति शङ्का नोदेति । अतः स्वतन्त्रक्रियया निष्पाद्यः ॥ २ ॥

तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥

सिद्धान्तमाह । तदिति । तदेकदेशः यूपैकदेशः यूपक्रियया अनुनिष्पाद्य इति फलितम् । स एव स्वरुः स्वरुत्वस्य स्वरुपदवाच्यस्य तन्निमित्तत्वाद् यूपनिमित्तत्वात् । यूपशब्दार्थविध्यर्थमनुवाद्यत्वादिति निष्कर्षः । अयं भावः यूपस्य स्वरुं करोतीत्यत्र न धात्वर्थविधिः किं तु स्वरुणा पशुमनक्तीतिविध्यन्यथाऽनुपपत्त्यैव सिद्धस्वरुक्रियामनूद्य यूपशब्देन स्वप्रकृतिकत्वं विधीयते । अतः स्वकर्मशब्दत्वादिति हेतुः असिद्ध इति भावः ॥ ३ ॥

*शकलश्रुतेः ॥ ४ ॥

द्वितीयसूत्रं दूषयति । शकलेति । यः प्रथमः शकलः परापतेत्स स्वरुरिति श्रुतेः । यूपार्थं छिद्यमानकाष्ठाद्यः प्रथमः शकलः पतेत्स स्वरुरित्यनेन यूपानुनिष्पत्तिः स्पष्टा । तेनार्थवादो बाध्यतइति भावः ॥ ४ ॥

प्रतियूपं च दर्शनात् ॥ ५ ॥

यूपैकादशिन्यां प्रतियूपं स्वरुदर्शनादपि नेत्याह । प्रेति । स्पष्टम् । यथानुपूर्वं स्वरुभिः पशुमनक्तीति श्रुतिः ॥ ५ ॥

आदाने कर्मशब्दः ॥ ६ ॥

ननु स्वरुं करोतीति उत्पत्त्यर्थकः कृञ्धातुरनर्थकः स्याद् यूपच्छेदनेन स्वरोर्निष्पन्नत्वादत आह । आदानइति । आदाने स्वरुपसंग्रहे कर्मशब्दः कृञ्धातुः संग्रहस्यासिद्धत्वात्तदर्थधातोर्लक्षणेति भावः ॥ ६ ॥

शाखाया आहार्यत्वम् । अधि० २ ।

शाखायां तत्प्रधानत्वात् ॥ ७ ॥

दर्शपूर्णमासयोः प्राचीमाहरतीति । अत्र प्राचीशब्दः दिक्परः शाखापरो वेति संशये शक्यार्थोपपत्तये दिक्पर इति पूर्वपक्षे सिद्धान्तमाह । शाखायामिति । शाखायां प्राचीशब्दः । न च लक्षणादोषः, तस्याः

* शकलश्रुतेश्चेति भाष्ये पाठः ।

शाखायाः प्रधानत्वात् । प्रधानत्वे अनुवाद्यत्वेन तदंशे लक्षणाया अदोषत्वादिति भावः ॥ ७ ॥

छेदनस्य शाखाप्रयुक्तत्वम् । अधि॰ ३ ।

## शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यात् ॥ ८ ॥

मूलतः शाखां परिवास्योपवेषं करोतीति दर्शपूर्णमासे श्रुतम् । तत्र छेदने शाखा उपवेषश्चोभयं प्रयोजकं शाखैव वेति संशये विनिगमकाभावादुभयमिति पूर्वपक्षे सिद्धान्तमाह । शाखायामिति । शाखायां शाखाच्छेदनप्रतिपादके उदाहृतवाक्ये उपवेषेण छेदनस्य विभागः स्यात् साध्यसाधनभावसंबन्धो न । तस्याः शाखायाः द्वितीयाश्रुत्या प्राधान्यस्य गृहीतत्वात् । ननु उपवेषशब्दादपि द्वितीया ऽस्तीत्यत्राह । वैषम्यात् । उपवेषस्य न च्छेदनकर्मत्वं किं तु करोतिकर्मत्वमिति न छेदनं तदर्थमुक्तवैषम्यात् ॥ ८ ॥

## श्रुत्यपायाच्च ॥ ९ ॥

ननु मूलस्यापि शाखापदेन ग्रहीतुं शक्यत्वात्तस्यापि प्राधान्यमस्तीत्यत आह । श्रुतीति । श्रुतेः शक्यार्थस्य अपायात् । न हि शाखावयवरूपं मूलमुभयं शक्यार्थः शब्दस्येति भावः ॥ ९ ॥

शाखाप्रहरणस्य प्रतिपत्तिकर्मत्वम् । अधि॰ ४ ।

## हरणे जुहोतिः योगसामान्याद् द्रव्याणां चार्थशेषत्वात् ॥ १० ॥

दर्शपूर्णमासयोः श्रूयते, सह शाखया प्रस्तरं प्रहरतीति । अत्र शाखाप्रहरणमर्थकर्म उत प्रतिपत्तिकर्मेति संशये पूर्वपक्षमाह । हरणइति । हरणे जुहोतिः हरतिधातुः जुहोत्यर्थकः इति सूक्तवाकेन प्रस्तरं प्रहरतीत्यत्र तृतीये क्लृप्तः । योगसामान्यात् । यथा प्रस्तरे धात्वर्थयागसाधनत्वं तथा शाखायामपि साम्यात् । द्रव्याणां च अर्थे यागे शेषत्वात्त प्रहरणं प्रति शाखा प्रधानम् ॥ १० ॥

## प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥

सिद्धान्तमाह । प्रतीति । शाखाप्रहरणं प्रतिपत्तिः शब्दस्य शाखाशब्दस्य तत्प्रधानत्वात् । शाखाप्रधानत्वज्ञापकत्वाद्, द्वितीयाश्रुत्येति शेषः । यद्यपि शाखापदोत्तरं द्वितीया नास्ति तथाऽपि सहयोगे तृतीया । सहत्वं तुल्यवद्देकक्रियान्वयित्वम् । प्रस्तरस्य कर्मत्वे शाखाया अपि कर्मत्वं सिद्धमिति भावः ॥ ११ ॥

## अर्थेऽपीति चेत् ॥ १२ ॥

ननु फलवाचकादिव तद्गुणवाचकादपि द्वितीया श्रूयते यथा सक्तुषु । तथा च सक्तुवद्गुणत्वमिति शङ्कते । अर्थइति । अर्थे परार्थे गुणेऽपि द्वितीयेति शेषः ॥ १२ ॥

## न तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १३ ॥

न सक्तुवत् शाखा तस्य सक्त्वादेः अनधिकाराद् अविनियोगात् । शाखया ऽर्थस्य वत्सापाकरणादेः कृतत्वात् प्रतिपत्तिमात्रमपेक्षतइति भावः ॥ १३ ॥

प्रणीतानिनयनस्य प्रतिपत्तिकर्मत्वम् । अधि० ५ ।

## उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः स्यात् ॥ १४ ॥

दर्शपूर्णमासयोः श्रूयते, अपः प्रणयतीति । प्रणीताभिः संयौति पिष्टं पिण्डीकरोति, अन्तर्वेदि प्रणीतां विमुञ्चति इति प्रणीतानामपां कार्यद्वयं श्रूयते । उभयं तुल्यमुत प्रणीतानिनयनं प्रतिपत्तिः इति संशये पूर्वपक्षमाह । उत्पत्तीति । उत्पत्तौ अपः प्रणयतीत्युत्पत्तिवाक्ये असंयोगात् । कार्यस्याश्रवणाद् । आज्यवत्सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमितिवद् विभज्य समं विनियोगः ॥ १४ ॥

## संयवनार्थानां या प्रतिपत्तिरितरासां तत्प्रधानत्वात् ॥ १५ ॥

सिद्धान्तमाह । संयवनेति । संयवनार्थानां संयवनमुख्यकार्याणा-

मपां संयमनाङ्गत्वं तृतीयाश्रुत्या । इतरासां प्रतिपत्तिः । तासां शेषाणामपां तत्र निनयने प्रधानत्वाद् द्वितीयाश्रुत्या ॥ १५ ॥

दण्डदानस्यार्थकर्मत्वम् । अधि० ६ ।

## प्रासनवन्मैत्रावरुणस्य दण्डप्रदानं कृतार्थत्वात् ॥ १६ ॥

दण्डेन दीक्षयति । क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति । मैत्रावरुणाय दण्डदानं प्रतिपत्तिरर्थकर्म वेति संशये पूर्वपक्षमाह । प्रासनेति । प्रासनवच् चात्वाले कृष्णविषाणां प्रास्यतीतिवत् । दण्डप्रदानं प्रतिपत्तिकर्म कृतार्थत्वाद् दीक्षायां विनियुक्तत्वात् ॥ १६ ॥

## अर्थकर्म वा कर्तृसंयोगात्स्रग्वत् ॥ १७ ॥

सिद्धान्तमाह । अर्थेति । अर्थकर्म प्रधानकर्म कर्तुः पुरुषस्य मैत्रावरुणस्य संयोगाय् श्रवणात् । स्रग्वद् उद्गात्रे स्रजं प्रयच्छतीतिवत् । संप्रदाने चतुर्थी । संप्रदानत्वं क्रियोद्देश्यत्वम् । उद्देश्यत्वप्रधानत्वे समनियते । अतो मैत्रावरुणाङ्गं दण्डदानम् । द्वितीया, तथा युक्तं चानीप्सितमित्यनेनेति भावः ॥ १७ ॥

## कर्मयुक्ते च दर्शनात् ॥ १८ ॥

कर्मयुक्ते प्रैषादिरूपकर्मयुक्ते मैत्रावरुणे दण्डस्य दर्शनाद् दण्डी प्रैषानन्वाहेति । यदि प्रतिपत्तिः कर्मान्तरे अङ्गत्वेन श्रवणं न स्यादिति भावः ॥ १८ ॥

प्रासनस्य प्रतिपत्तिकर्मत्वम् । अधि० ७ ।

## उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यात् ॥ १९ ॥

कृष्णविषाणया कण्डूयते इति, तथा, नीतासु चात्वाले कृष्णविषाणां प्रास्यतीति च । अत्रापि कृष्णविषाणायाः क्रतुसमाप्तिपर्यन्तमपेक्षितत्वात्कण्डूयनार्थं द्वितीयां बाधित्वा विषाणस्याङ्गत्वं प्रासने कल्पनीयमिति पूर्वपक्षे सिद्धान्तमाह । उत्पत्ताविति । उत्पत्तौ उत्पत्तिवाक्ये यदङ्गं येन फलेन संयुक्तं तत् तत्फलार्थं तस्मिन्तत्कार्ये प्रत्यङ्गत्वबोधने श्रुतेः तृतीयाश्रुतेः कारणत्वात् तस्य पुनर्वाक्यान्तरेण पदार्थान्तरसंबन्धे अशेषत्वाद् द्वितीयाश्रुत्या अनङ्गत्वात्प्रतिपत्तिः ॥ १९ ॥

अवभृथगमनस्य प्रतिपत्तिकर्मत्वम् । अधि० ८ ।

## सौमिके च कृतार्थत्वात् ॥ २० ॥

ज्योतिष्टोमे यत्किं चित्सोमलिप्तं द्रव्यं तेनावभृथं यन्तीति । सोमलिप्तपात्राणामवभृथगमनं प्रतिपत्तिरर्थकर्म वेति संशये सिद्धान्तमाह । सौमिकइति । सौमिके अवभृथे सोमलिप्तपात्रयानं प्रतिपत्तिः कृतार्थत्वाज्ज्ञातकार्यत्वात् ॥ २० ॥

## अर्थकर्म वा ऽभिधानसंयोगात् ॥ २१ ॥

पूर्वपक्षमाह । अर्थेति । अभिधानेन अङ्गत्वबोधकतृतीयया युक्तत्वात् ॥ २१ ॥

## प्रतिपत्तिर्वा तन्न्यायत्वाद् देशार्था ऽवभृथश्रुतिः ॥ २२ ॥

दूषयति । प्रतिपत्तिरिति । पूर्वन्यायत्वाद् अवभृथश्रुतिः अवभृथशब्दः देशार्था देशलक्षकः । तृतीयाश्रुतिः सहयुक्तइति भावः ॥ २२ ॥

कर्तृदेशकालविधीनां नियमार्थत्वम् । अधि० ९ ।

## कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥ २३ ॥

कर्त्रादीनां विधिरस्ति न वेति संशये पूर्वपक्षमाह । कर्त्रिति । कर्तृणामृत्विजां, देशस्य समे यजेतेति, कालस्य वसन्ते यजेतेति, एषामचोदनं न विधिः । प्रयोगे अनुष्ठाने नित्यसमवायात् तैर्विना ऽसंभवेन नित्यक्लृप्तत्वात् ॥ २३ ॥

## नियमार्था वा पुनः श्रुतिः ॥ २४ ॥

सिद्धान्तमाह । नियमेति । विशेषतः नियमार्थं पुनर्विधौ श्रुतिः श्रवणम् ॥ २४ ॥

द्रव्ये गुणविधानस्य नियमार्थत्वम् । अधि० १० ।

## तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ॥ २५ ॥

इममेव न्यायमतिदिशति । तथेति । वायव्यं श्वेतमालभेतेत्यादौ द्रव्येषु पशुषु गुणश्रुतिः श्वेतादिश्रुतिः तथा नियमार्था । उत्पत्त्या क्रियोत्पादकद्रव्येण संबन्धात्तत्परिच्छेदनियमः ॥ २५ ॥

अवघातादिसंस्कारविधानस्य नियमार्थत्वम् । अधि० ११ ।

## संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥

अन्यत्राप्यतिदिशति । संस्कारइति । संस्कारे च अवहननादि-दृष्टफलसंस्कारे तथा । द्रव्यस्य तत्प्रधानत्वाद् नियमप्रधानविधिसंभवात् ॥ २६ ॥

यागपदार्थनिरूपणम् । अधि० १२ ।

## यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥

प्रसङ्गाद्यजत्यादीनां लक्षणान्याह । यजतीति । यजतिचोदना यजतिधात्वर्थः द्रव्यदेवतयोः क्रियायाश्च संबन्धः समुदाये उक्तसमुदाये कृतार्थत्वात् क्लृप्तशक्तिकत्वात् । देवतोद्देश्यकद्रव्यत्यागरूपा क्रिया तदर्थ इति फलितम् ॥ २७ ॥

होमपदार्थनिरूपणम् । अधि० १३ ।

## तदुक्ते श्रवणाज् जुहोतिरासेचनाधिकः स्यात् ॥ २८ ॥

जुहोतिः तदुक्ते यजतिधातूक्ते आसेचनं द्रवद्रव्यप्रतियोगिकाग्निसंयोगः अधिकं पूर्वस्मादधिकं शक्यतावच्छेदककोटावित्यर्थः । श्रवणात् तत्र व्यवहारात् । देवताद्रव्यसंबन्धविशिष्टद्रव्यप्रतियोगिकसंयोगरूपो व्यापारो जुहोत्यर्थः इति फलितम् ॥ २८ ॥

दानपदार्थनिरूपणम् । अधि० १४ ।

## *ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्धः ॥ २९ ॥

ददातिः ददात्यर्थः उत्सर्गपूर्वः स्वस्वत्वनिवृत्तिपूर्वः परस्वत्वेन संबन्धः ॥ २९ ॥

बर्हिषः आतिथ्यादिसाधारण्यम् । अधि० १५ ।

## विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ ३० ॥

आतिथ्यायामाश्ववालः प्रस्तरो विहितः । आश्ववालः तृणविशेषः । तथा यदातिथ्यायां बर्हिस्तदुपसदामिति । अत्र बर्हिःशब्दः

* इदं सूत्रं भाष्यादौ नास्ति ।

वाचकः तत्पदं तत्सदृशलक्षकमुत तदेवोभयार्थमिति संशये पूर्वपक्षमाह । विधेरिति । विधेः विधिविहितातिथ्याश्ववालसंबन्धस्य कर्मापवर्गित्वा-त्तत्कर्मसमाप्तिपर्यन्तत्वात् । अर्थान्तरे क्रियान्तरसंबन्धविधौ सति विधेः पूर्वविहिताश्ववालादेः प्रदेशः अतिदेशः स्यात् । तदुपसदामित्यत्र तत्सदृशे लक्षणेति भावः ॥ ३० ॥

## अपि वोत्पत्तिसंयोगादर्थसंबन्धो विशिष्टानां प्रयोगैकत्वे हेतुः स्यात् ॥ ३१ ॥

सिद्धान्तमाह । अपि वेति । उत्पत्तिसंयोगात् उत्पत्तिवाक्य-संबन्धात् । उत्पत्तिवाक्ये श्रुतस्यैवेत्यर्थः । अर्थेन तत्कर्ममात्रेण संबन्धः । विशिष्टानामुदासीनवाक्यानामर्थः प्रयोगैकत्वे हेतुः स्यात् । उभयार्थो बर्हिस्तरणं सकृदनुष्ठेयमित्यर्थः ॥ ३१ ॥

इति जैमिनिसूत्रवृत्त्यां चतुर्थस्य द्वितीयः पादः ॥ २ ॥

द्रव्यसंस्कारकर्मणां क्रत्वर्थत्वम् । अधि० १ ।

## द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् ॥ १ ॥

यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीति, यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इति, यत्प्रयाजा इज्यन्ते वर्मैव तद्यज्ञस्य क्रियत-इति । किमेते फलमुद्दिश्य विधीयन्तउतार्थवादा इति संशये सिद्धान्त-माह । द्रव्येति । द्रव्यसंस्कारप्रधानकर्मविधिषु क्रमेण उदाहृतवाक्येषु श्रुतिः फलश्रुतिः अर्थवादः परार्थत्वात्पर्णमयीत्वादीनां प्रकरणेन क्रत्वर्थत्वात् ॥ १ ॥

## उत्पत्तेश्चातत्प्रधानत्वात् ॥ २ ॥

ननु पुरुषमुद्दिश्य फलं श्रूयते, न स पापं श्लोकं शृणोतीति, विधीयेत कथमर्थवाद इत्यत आह । उत्पत्तेरिति । उत्पत्तेः उत्पत्तिवा-क्यस्य अतत्प्रधानत्वात्पुरुषप्रधानत्वाभावात् । अयं भावः यस्य पर्णमयी जुहूः तस्यापापश्लोकश्रवणमिति । अत्र जुह्वा अपि पुरुषमुद्दिश्य श्रवणं तुल्यं यस्येति पुरुषग्रहणादिति, जुह्वा एव फलत्वं किं न स्यादिति ।

अनुमानादिना तस्य फलत्वनिरासो भाष्यादितो ज्ञेयः विस्तरभयान्न लिख्यते* ॥ २ ॥

गोदोहनादीनामनित्यार्थत्वम् । अधि० २ ।

## नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यात् ॥ ३ ॥

गोदोहनेन पशुकामः प्रणयेदिति विहितं गोदोहनमेव क्रत्वर्थमुतान्यदिति संशये पूर्वपक्षस्यादृढतया सिद्धान्तमाह । नैमित्तिकइति । गोदोहनादौ नैमित्तिके अनित्यत्वेन विधीयमाने सति क्रतुः प्रधानं यस्येति व्युत्पत्त्या क्रत्वङ्गं नित्यमन्यच्च चमसादि स्यात् । गोदोहनादेर्विकारत्वादनित्यत्वात् ॥ ३ ॥

दध्यादेर्नित्यनैमित्तिकोभयार्थत्वम् । अधि० ३ ।

## एकस्यतूभयत्वे संयोगपृथक्त्वम् ॥ ४ ॥

दध्ना जुहोति, दध्नेन्द्रियकामस्य जुहुयादिति । उभाभ्यामेकं विधीयते उत प्रत्येकमिति संशये सिद्धान्तमाह । एकस्येति । एकस्य एकद्रव्यस्य उभयत्वे उभयार्थत्वे, संयुज्यते अनेनेति व्युत्पत्त्या संयोगस्य वाक्यस्य पृथक्त्वं वाक्यभेदः । वाक्यभेदादुद्देश्यपृथक्त्वमिति भावः ॥ ४ ॥

## शेष इति चेत् ॥ ५ ॥

ननूभयमेकशेषः कुतो नेति शङ्कते । शेष इति । शेषः एकं प्रति शेषः ॥ ५ ॥

## नार्थपृथक्त्वात् ॥ ६ ॥

नेति । अर्थपृथक्त्वात् फलभेदादुद्देश्यभेदे वाक्यं भिद्यते इति भावः ॥ ६ ॥

पयोव्रतादीनां क्रतुधर्मत्वम् । अधि० ४ ।

## द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मत्वात् ॥ ७ ॥

ज्योतिष्टोमे श्रूयते, पयोव्रतं ब्राह्मणस्येति । इदं व्रतं पुरुषार्थः क्रत्वर्थो वेति संशये षष्ठ्या पुरुषस्य प्राधान्यात् पुरुषार्थमिति पूर्वपक्षे

* इत उत्तरं, फलं तु तत्प्रधानायामिति सूत्रमत्र न व्याख्यातं, तद्व्याख्यानं भाष्यादितो ज्ञातव्यम् ।

सिद्धान्तमाह । द्रव्याणामिति । क्रियार्थानां ज्योतिष्टोमादिष्वधिकृतानां द्रव्याणां संस्कारः । क्रतुधर्मत्वात् । क्रतुसन्निधौ पाठेन प्रयोगविधिपरिगृहीतत्वात् ॥ ७ ॥

## पृथक्त्वाद् व्यवतिष्ठेत ॥ ८ ॥

ननु ब्राह्मणस्येति किमर्थमत आह । पृथक्त्वादिति । ब्राह्मणक्षत्रियादिप्रयोगाणां पृथक्त्वाद् व्यवतिष्ठते ब्राह्मणकर्तृके पय एवेति ॥ ८ ॥

विश्वजिदादीनां सफलत्वम् । अधि० ५ ।

## चोदनायां फलाश्रुतेः कर्ममात्रं विधीयते न ह्यशब्दं प्रतीयते ॥ ९ ॥

विश्वजिता यजेतेति श्रुतम् । इदमफलमुत फलवदिति संशये पूर्वपक्षमाह । चोदनेति । चोदनायां वाक्ये फलाश्रवणात्कर्मैव विधीयेत । यतः अशब्दं शब्दागम्यमेतच्छास्त्रे न विचार्यतइति भावः ॥ ९ ॥

## अपि वा ऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानामर्थवत्त्वेन वचनानि प्रतीयन्ते ऽर्थतो ऽसमर्थानामानन्तर्येण संबन्धः तस्माच्छ्रुत्येकदेशः सः ॥ १० ॥

सिद्धान्तमाह । अपि वेति । चोदनार्थेन आख्यातवाच्यभावनया पुरुषप्रवृत्त्या फलं गम्येत फलं कल्पनीयं यतः अर्थानां लिङ्वाच्यशब्दभावनानां पुरुषप्रवृत्तिरूपार्थवत्त्वेन इतरवचनानि प्रतीयन्ते तथा ऽत्रापि भवितव्यम् अतः, अर्थतः अतः कारणाद् असमर्थानां फलवाचकपदाभावात्तद्बोधाक्षमाणां वाक्यानामानन्तर्येण स्वसमीपवृत्तिवाक्यघटकफलवाचकपदेन वाक्यस्य संबन्धः कार्यः । अत एव श्रुत्येकदेशः वेदघटकपदस्यैव योजनात्र लौकिकवाक्यत्वशङ्केति भावः* ॥ १० ॥

विश्वजिदादीनामेकफलकत्वम् । अधि० ६ ।

## तत्सर्वार्थमनादेशात् ॥ ११ ॥

* इत उत्तरं वाक्यार्थश्च गुणार्थवद्, इति सूत्रमत्र न व्याख्यातं, तद्व्याख्यानं भाष्यादौ द्रष्टव्यम् ।

अयं विश्वजिद्यागः सर्वफलैः संबध्यतएकेन वेति संशये पूर्वपक्षमाह । तत्सर्वेति । अनादेशाद् विशेषाश्रवणात् ॥ ११ ॥

## एकं वा चोदनैकत्वात् ॥ १२ ॥

सिद्धान्तमाह । एकमिति । चोदनैकत्वाद् एको विधिरेकं फलमपेक्षतइति भावः ॥ १२ ॥

विश्वजिदादीनां स्वर्गफलकत्वम् । अधि० ७ ।

## सः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ १३ ॥

एको ऽपि स्वर्ग एव सर्वान्प्रति अविशिष्टत्वादवैलक्षण्यात् । सर्वाभिलषणीयत्वादिति भावः ॥ १३ ॥

## प्रत्ययाच्च ॥ १४ ॥

प्रत्ययात्स्वर्गस्य सर्वाभिलषणीयत्वेन लोकानुभवात् ॥ १४ ॥

रात्रिसत्रस्यार्थवादिकफलकत्वम् । अधि० ८ ।

## क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ १५ ॥

प्रतितिष्ठन्ति ह वा यएता रात्रीरुपयन्तीति । अत्र प्रतितिष्ठन्तीत्यंशः फलबोधकः अर्थवादो वेति संशये पूर्वपक्षमाह कार्ष्णाजिन्याचार्यमतेन । क्रताविति । क्रतौ रात्रिरूपक्रतुबोधकवाक्ये फलप्रतिपादकं वाक्यमर्थवादं मनुते आचार्यः । अङ्गवत् । न स पापं श्लोकं शृणोतीतिक्रत्वङ्गत्वबोधकवाक्यवत् ॥ १५ ॥

## फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥ १६ ॥

आत्रेयमतं सिद्धान्तमाह । फलं बोध्यते इत्यात्रेयः निर्देशात्फलत्वेन निर्देशयोग्यत्वात् । ननु विधिप्रत्ययो न श्रूयते तत्राह । अश्रुतौ अनुमानमध्याहारः कार्यः ॥ १६ ॥

## अङ्गेषु स्तुतिः परार्थत्वात् ॥ १७ ॥

ननु यस्य पर्णमयीत्यत्रापि फलश्रुतिः स्यादत्राह । अङ्गे जुह्वादौ स्तुतिरेव परार्थत्वात् । प्रकरणेन यागार्थत्वस्य क्लृप्तत्वात् ॥ १७ ॥

काम्यानां यथोक्तकाम्यफलकत्वम् । अधि. ९ ।

## काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ १८ ॥

कर्ममात्रे स्वर्गः फलं पशुब्रह्मवर्चसादीन्यानुषङ्गिकाण्युत श्रूयमाणमेव फलमिति संशये पूर्वपक्षमाह । काम्यइति । नित्यः मुख्यः । पश्वादिरानुषङ्गिकं, यथा यज्ञाङ्गे प्रस्तरप्रहरणे आयुराशास्ते इतिमन्त्रगम्यं फलं, यज्ञाङ्गे यज्ञोपकारके गोदोहनादौ अनुष्ठिते अङ्गफलं पश्वादिः क्रत्वर्थः स्वर्गादिश्च तथा ॥ १८ ॥

## वीते च कारणे नियमात् ॥ १९ ॥

साधकान्तरमाह । वीतइति । वीते गते कारणे पश्वादीच्छायां गतायामपि नियमाद् आरब्धस्य समाप्तिनियमाद् । अन्यथा समाप्तिर्व्यर्थेति भावः ॥ १९ ॥

## कामो वा तत्संयोगेन चोद्यते ॥ २० ॥

सिद्धान्तमाह । काम इति । कामः कामपदसमभिव्याहृतोऽर्थः पश्वादिरेव यतस्तत्संयोगेन पश्वादिसाधनत्वेन चोद्यते विधीयतेऽतः ॥ २० ॥

## अङ्गे गुणत्वात् ॥ २१ ॥

अङ्गे गोदोहनादौ गुणत्वात् पश्वादीन्यपि गोदोहनेन पशुकाम इति वाक्येन गोदोहनस्य गुणत्वेन विधानाद् वैषम्यं प्रस्तरप्रहरणादावपि मन्त्रलिङ्गेन क्लृप्तम् ॥ २१ ॥

## वीते नियमस्तदर्थम् ॥ २२ ॥

वीते इच्छानिवृत्तौ समाप्तिनियमः तदर्थं प्रत्यवायपरिहारार्थम् । यो यक्ष्यइत्युक्त्वा न यजतइति प्रायश्चित्तश्रवणात् ॥ २२ ॥

दर्शपूर्णमासादीनां सर्वार्थत्वम् । अधि० १० ।

## सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २३ ॥

सर्वफलार्थं दर्शपूर्णमासाविति श्रुतम् । अत्र सर्वशब्दः अङ्गफलानि गृहीत्वा संपाद्यः प्रधानफलैरेव वेति संशये पूर्वपक्षमाह । सार्वेति । सूत्रे संपादयेदिति शेषः । प्रकरणाद् उपस्थितत्वादिति शेषः ॥ २३ ॥

## फलोपदेशो वा प्रधानशब्दसंयोगात् ॥ २४ ॥

सिद्धान्तमाह । फलेति । फलोपदेशः प्रधानफलभावना स्यात् । प्रधानशब्देन दर्शपूर्णमासशब्देन संयोगान्नाङ्गफलमादाय सर्वशब्द इति निष्कर्षः ॥ २४ ॥

दर्शादीनां प्रतिफलं पृथगनुष्ठानम् । अधि० ११ ।

## *तत्र सर्वे ऽविशेषात् ॥ २५ ॥

सर्वेभ्यो दर्शपूर्णमासावित्यत्र एकेनैव प्रयोगेण सर्वफलप्राप्तिरुत पर्यायेणानुष्ठितस्येति संशये पूर्वपक्षमाह । तत्रेति । तत्र सकृत्प्रयोगे सर्वे अर्थाः संबध्यन्ते विशेषाश्रवणात् ॥ २५ ॥

## योगसिद्धिर्वा ऽर्थस्योत्पत्त्यसंयोगात् ॥ २६ ॥

सिद्धान्तमाह । योगेति । योगेन प्रत्येकप्रयोगसंबन्धेन सिद्धिः तत्तत्फलोत्पत्तिः क्रमेण । उत्पत्त्या फलोत्पत्त्या असंयोगित्वाद्विधेः । न ह्ययं यावत्फलसाहित्यविधायकः । यद्विषयणी या इच्छा तत्तद्विषय-साधनत्वप्रतिपादकम् । इच्छानां क्रमिकत्वात्साधनमपि क्रमिकमिति भावः ॥ २६ ॥

सौत्रामण्यादीनां चयनाद्यङ्गत्वम् । अधि० १२ ।

## समवाये चोदना संयोगस्यार्थवत्त्वात् ॥ २७ ॥

वाजपेयेन इष्ट्वा बृहस्पतिसवेन यजेतेति । अत्र बृहस्पतिसवस्य वाजपेयाङ्गभूतस्य अपूर्वकर्मणो विधिरुत बृहस्पतिसवस्य वाक्यान्तरोत्पन्नस्य वाजपेयोत्तरकालमात्रविधिरिति संशये सिद्धान्तमाह । समवायइति । समवाये अङ्गाङ्गिभावलक्षणसंबन्धविषयिणी चोदना उक्तविधिः स्यात् । संयोगस्य वाजपेयसंयोगस्य वाक्ये अर्थवत्त्वात् सफलत्वात् । अन्यथा व्यर्थमेवेति भावः ॥ २७ ॥

## कालश्रुतौ काल इति चेत् ॥ २८ ॥

शङ्कते । कालेति । कालस्य कालवाचकत्वात्प्रत्ययस्य श्रुतौ श्रवणे सति कालविधिरेवास्तां लाघवादिति भावः ॥ २८ ॥

---

* इतः प्रभृति सूत्रद्वयं भाष्यकारेण वर्णकान्तरत्वेनापि व्याख्यातम् ।

## नासमवायात्प्रयोजनेन ॥ २९ ॥

न, कालविधिर्न । प्रयोजनेन फलेन असमवायादसंबन्धादश्रवणादिति यावत् । फलवतो हि प्रधानत्वम् । इहाफलो बृहस्पतिसवो ऽङ्गमिति भावः ॥ २९ ॥

वैमृधादेः पौर्णमास्यङ्गत्वम् । अधि० १३ ।

## उभयार्थमिति चेत् ॥ ३० ॥

संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय निर्वपेदिति । वैमृधयागः प्रकरणाद्दर्शपूर्णमासोभयार्थः श्रुतवाक्येन कालविधिरुत वाक्येन केवलपौर्णमास्यङ्गमेवेति संशये पूर्वपक्षमाह । उभयेति । स्पष्टो ऽर्थः ॥ ३० ॥

## न शब्दैकत्वात् ॥ ३१ ॥

सिद्धान्तमाह । नेति । शब्दैकत्वाद् विधिप्रत्ययस्यैकत्वात् । एको विधिः उभयं संबन्धं कालं च विधातुमक्षम इति भावः ॥ ३१ ॥

## प्रकरणादिति चेत् ॥ ३२ ॥

प्रकरणादुभयसंबन्धो ऽस्त्वित्याशङ्कते । प्रकरणेति ॥ ३२ ॥

## नोत्पत्तिसंयोगात् ॥ ३३ ॥

दूषयति । नेति । उभयार्थो न । उत्पत्तिवाक्ये वैमृधोत्पत्तिवाक्ये पौर्णमासीशब्दसंबन्धात् । अस्य उभयार्थत्वं प्रकरणेनानुमितवाक्येन ततः प्रत्यक्षवाक्येन प्रकरणबाध इति ॥ ३३ ॥

अनुयाजादीनामाग्निमारुतोर्ध्वकालत्वम् । अधि० १४ ।

## अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन संबन्धात् ॥ ३४ ॥

प्रहृत्य परिधीन् हारियोजनं जुहोतीति किमङ्गविधिरुत कालविधिरिति संशये अङ्गविधिरिति पूर्वपक्षे सिद्धान्तमाह । अनुत्पत्ताविति । हारियोजनहोमोत्पत्तिवाक्यस्यान्यस्य सत्त्वेन अनुत्पत्तौ अस्योत्पत्तिवाक्यान्यत्वे सति प्रकरणेन ज्योतिष्टोमरूपप्रयोजनेन संबद्धत्वेन फलाकाङ्क्षाऽभावेन कालः कालमात्रविधिः स्यात् ॥ ३४ ॥

सोमादीनां दर्शपूर्णमासोत्तरकालत्वम् । अधि० १५ ।

## उत्पत्तिकालविशये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ ३५ ॥

दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्र पूर्वपक्षसंशये सिद्धान्तमाह । उत्पत्तीति । उत्पत्तिकालयोरङ्गत्वकालविध्योः विशये संशये कालः कालविधिः स्यात् । कुतः, वाक्यस्योदाहृतस्य कालप्राधान्यात् । कालस्यैव प्राधान्यात् । कालविधौ मुख्यतात्पर्यात् । अयं भावः । सोमस्य वाक्यान्तरेण फलसंबन्धादन्यप्रकरणाभावेन न तद्विधिः । नापि दर्शपूर्णमासविधिः । तत्समीपे विधिप्रत्ययाभावादगत्या कालविधिः । तत्रैव मुख्यं विधितात्पर्यमिति ॥ ३५ ॥

वैश्वानरेष्टेः पुत्रगतफलकत्वम् । अधि० १६ ।

## फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥ ३६ ॥

वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते इत्युक्त्वा यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवतीति । इदं फलं पितुः पुत्रस्य वेति संशये अग्नीनादधीतेत्यात्मनेपदविरोधात्पितुरेवेति पूर्वपक्षे सिद्धान्तमाह । फलेति । फलसंयोगः अचोदिते शास्त्रतात्पर्याविषये पितरि न स्यात् । पितुः अनङ्गत्वात् फलस्य । यस्मिञ्जाते निर्वपति स फलभाग्भवतीति यत्तदोर्नित्यसंबन्धेन पुत्रमुद्दिश्यैव फलश्रवणाद् इति भावः ॥ ३६ ॥

वैश्वानरेष्टेः जातकर्मोत्तरकालत्वम् । अधि० १७ ।

## अङ्गानां तूपघातसंयोगो निमित्तार्थः ॥ ३७ ॥

तत्रैव पुत्रे जातइति । पुत्रजननकाले इष्टिरिति यद्वा निमित्तार्थे सप्तमीति संशये पूर्वपक्षस्यादृढत्वात्सिद्धान्तमाह । अङ्गानामिति । अङ्गानां फलं प्रति अङ्गभूतानामुक्तेष्टीनामुपघाते पुत्रजन्मनि इत्यर्थो भाष्ये । संयोगः संबन्धः निमित्तत्वद्योतकः । लक्षणापत्तेरिति हेतुः पूरणीयः ॥ ३७ ॥

सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यत्वम्। अधि० १८।

प्रधानेनाभिसंबन्धादङ्गानां मुख्यकालत्वम् ॥ ३८ ॥

वाजपेयाङ्गत्वेन व्यवस्थितो बृहस्पतिसवः। स वाजपेयकाले ऽनुष्ठेय उत स्वकालइति संशये पूर्वपक्षमाह। प्रधानेनेति। अङ्गानां प्रधानेन प्रधानकालेन अभिसंबन्धात्। यः प्रधानकालः सो ऽङ्गानामिति वक्ष्यमाणत्वान्मुख्यस्य वाजपेयस्य कालत्वम् ॥ ३८ ॥

अपवृत्ते तु चोदनात्तत्सामान्यात्स्वकाले स्यात् ॥ ३९ ॥

सिद्धान्तमाह। अपेति। अपवृत्ते प्रयोगसमाप्त्यनन्तरं चोदनाद् विधानाद् वाजपेयेनेष्ट्वेति स्वभिन्नाङ्गकलापसहितप्रधानानन्तरं विधानादस्य वाजपेयप्रयोगबहिर्भूतत्वादिति भावः। तस्य बृहस्पतिसवस्य सामान्यात् प्रकृतिभूतज्योतिष्टोमकालत्वात् स्वकाले अनुष्ठानम् ॥ ३९ ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां चतुर्थस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

राजसूयेज्यानां विदेवनाद्यङ्गकत्वम्। अधि० १।

प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥ १ ॥

अक्षैर्दीव्यति, राजन्यं जिनाति इत्यादयः अयागरूपाः अनुमत्यै पुरोडाशमष्टाकपालं निर्वपतीत्यादयो यागरूपाश्च क्रियाः पठित्वा तत्सन्निधौ, राजा राजसूयेन स्वाराज्यकामो यजेतेति श्रुतम्। तत्र राजसूयशब्द उभयसाधारण उत यागमात्रपर इति संशये पूर्वपक्षमाह। प्रकरणेति। प्रकरणे स्वाराज्यकाम इतिवाक्यसन्निधौ शब्दानां यागतद्भिन्नप्रतिपादकानां सामान्यात् तुल्यत्वाच् चोदनागम्यार्थानां सर्वेषामनङ्गत्वं प्रधानत्वम् ॥ १ ॥

अपि वा ऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात् ॥ २ ॥

सिद्धान्तमाह। अपि वेति। अनिज्याः यागभिन्नाः क्रिया अङ्गम्। ततः यागक्रियातः विशिष्टत्वाद्विशेषवत्त्वात्। अयं भावः। राजसूयशब्दस्य यद्यपि राज्ञा सूयते उत्पाद्यतइति व्युत्पत्त्या सर्वसाधारण्यं तथा ऽपि तस्य धात्वर्थे ऽभेदेन अन्वयाद्राजसूयनामकयागस्यैव फलेन संबन्धाद्यागमात्रं प्रधानमिति ॥ २ ॥

विदेवनस्य कृत्स्नराजसूयाङ्गत्वम् । अधि० २ ।

**मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥**

राजसूये अभिषेचनीयाख्यः सोमयागो ऽस्ति । तत्सन्निधौ अक्षैर्दीव्यतीति श्रुतम् । इदमभिषेचनीयाङ्गमुत यावद्यागाङ्गमिति संशये पूर्वपक्षमाह । मध्यस्थमिति । यस्य मध्यस्थं सन्निधिपठितं तत्तदङ्गं मध्ये, पाठादिति पूरणीयम् ॥ ३ ॥

**सर्वासां वा समत्वाचोदनातः स्यान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥**

सिद्धान्तमाह । सर्वेति । सर्वासामङ्गं विदेवनं सर्वयागानां चोदनातः फलसंबन्धबोधकविधितस्तुल्यत्वात् । प्रधानत्वाविशेषादिति भावः । न हि तस्य सोमयागस्य प्रकरणमवान्तरप्रकरणमस्ति । उभयतः संदंशाभावादिति भावः । मध्ये पाठः देशार्थम् । वस्तुमात्रस्य देशं विना स्थित्यसंभवाद्यत्र क्व चित्पठितव्यं तत्रैव पठितमिति भावः ॥ ४ ॥

सौम्यादीनामुपसत्कालत्वम् । अधि० ३ ।

**प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ५ ॥**

राजसूयएव सौम्यं चरुं बभ्रुर्दक्षिणेति पठित्वा पुरस्तादुपसदां सौम्येन प्रचरन्तीति श्रुतम् । अयमुपसदङ्गं कालविधिर्वेति संशये पूर्वपक्षमाह । प्रकरणेति । प्रकरणस्य कथंभावाकाङ्क्षाया अविभागे ऽपि अविलक्षणत्वे ऽपि उभयं प्राप्तं सौम्यचरुमुद्दिश्योपसदङ्गत्वं तत्पूर्वकालविधिश्च विप्रतिषिद्धमपि वाक्यभेदग्रस्तमपि, उपसदङ्गं श्रुत्येति शेषः । षष्ठीश्रुत्या प्राधान्यमुपसदां, तृतीयाश्रुत्या चरोरङ्गत्वमिति भावः ॥ ५ ॥

**अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य ॥ ६ ॥**

सिद्धान्तमाह । कालमात्रमिति । कालमात्रं विधीयते । विशेषस्य आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीत्युभयवादिसिद्धकालमात्रविधायकवचनाद्विशेषस्यादर्शनात् । यत्सौम्येन प्रचरन्ति तत्पूर्वमिति । उपसदामिति षष्ठ्याः पञ्चम्यर्थतया पुरस्तादित्यनेनान्वय इति भावः ॥ ६ ॥

आमनहोमानां सांग्रहण्यङ्गत्वम् । अधि० ४ ।

**फलवदोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥**

वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इत्युक्त्वा ऽऽमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीति । इदमुभयं प्रधानमुत एकमङ्गमिति संशये तुल्यत्वात्प्रधानमिति पूर्वपक्षे सिद्धान्तमाह । फलेति । फलवत्फलसंबद्धं सांग्रहणी इतरस्य आमनहोमस्य प्रधानम् । उक्तहेतुत्वाद् राजसूयविदेवनयोरुक्तहेतुत्वात् ॥ ७ ॥

दधिग्रहस्य नित्यत्वम् । अधि० ५ ।

## दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ८ ॥

प्राजापत्यं दधिग्रहं गृह्णीयादिति श्रुतो दधिग्रहो नैमित्तिक उत नित्यनैमित्तिकोभयरूपः उत नित्य एवेति संशये प्रथमपक्षमाह । दधीति । श्रुतिसंयोगात् । यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्चेते प्राजापत्यं दधिग्रहं गृह्णीयादिति देवतान्तराये निमित्ते विहितत्वात् । शेषं स्पष्टम् ॥ ८ ॥

## नित्यश्च ज्येष्ठशब्दत्वात् ॥ ९ ॥

द्वितीयपक्षमाह । नित्य इति । चकारान्नैमित्तिको ऽपि । ज्येष्ठो वा एष ग्रहाणामिति श्रवणाज् ज्यैष्ठ्यं नित्यत्वं विना ऽनुपपन्नमिति भावः ॥ ९ ॥

## सार्वरूप्याच्च ॥ १० ॥

सार्वेति । सर्वासां वा एतद्देवतानां रूपं यदेष ग्रह इति सार्वरूप्यश्रुतेश्च ॥ १० ॥

## नित्यो वा स्यादर्थवादः तयोः कर्मसंबन्धाद्भङ्गित्वा-च्चान्तरायस्य ॥ ११ ॥

सिद्धान्तमाह । नित्य इति । दधिग्रहो नित्यः तयोरध्वर्युयजमानयोः कर्मणि संबन्धाभावात् । देवतान्तरायश्रवणस्य भङ्गित्वाद्दधिग्रहस्तावकत्वादर्थवादः ॥ ११ ॥

वैश्वानरस्य नैमित्तिकत्वम् । अधि० ६ ।

## वैश्वानरश्च नित्यः स्यान्नित्यैः समानसंख्यत्वात् ॥ १२ ॥

यो वै संवत्सरमुख्यमभृत्वा ऽग्निं चिनुते यथा सामिगर्भो वि पद्यते तादृगेव तदार्त्तिमार्च्छेद्वैश्वानरं द्वादशकपालं निर्वपेदिति । अयं यागः नित्यो नैमित्तिको वेति संदेहे पूर्वपक्षमाह । वैश्वानर इति । नित्यो ऽयं यागः । नित्यैः लोकैः समाना संख्या यस्य तत्त्वात् । त्रीण्येतानि हवींषि भवन्ति त्रय इमे लोका एषां लोकानां रोहायेत्यत्र लोकानां नित्यानां साम्येन स्तुतेरिति वैश्वानरं द्वादशकपालं निर्वपेदित्यत्रैव एतन्निमित्तसंयोगराहितम् आदित्यो भवति आग्नावैष्णवमेकादशकपालं निर्वपेदिति द्वयं पश्चाद्यो वै इति त्रीण्येतानीति मेलनं नित्यनैमित्तिकयोर्मेलनासंभवादिति भावः ॥ १२ ॥

## पक्षे वोत्पन्नसंयोगात् ॥ १३ ॥

सिद्धान्तमाह । पक्षइति । पक्षे इदं कर्म नैमित्तिकमित्यर्थः । उत्पन्ने निमित्ते यो वै संवत्सरमभृत्वेति अभरणे निमित्ते कर्मणः संबन्धात् । दधिग्रहे अध्वर्युयजमानयोः ज्योतिष्टोमेन न संबन्धः । किं त्वन्तरायेण । अत्र यः अभृत्वा अग्निं चिनुतइति कर्मणः कर्त्तुः संबन्धान्नैमित्तिकत्वमिति भावः ॥ १३ ॥

षष्ठ्याश्चितेर्नैमित्तिकत्वम् । अधि० ७ ।

## षट्चितिः पूर्ववत्स्यात् ॥ १४ ॥

अग्निचयनएव श्रूयते, यो ऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीं चिनुतइति । अथ षष्ठी चितिर्नैमित्तिकी नित्यैव वेति संशये पूर्वपक्षमाह । षडिति । षट्चितिः षष्ठी नित्या पूर्ववत् पञ्चचितिवत् ॥ १४ ॥

## ताभिश्च तुल्यसंख्यानात् ॥ १५ ॥

साधकान्तरमाह । ताभिरिति । ताभिः पञ्चचितिभिः तुल्यत्वेन परिगणनात् । तदित्यम् । इयं वाव प्रथमा चितिरोषधयः पुरीषमन्तरिक्षं द्वितीया वयांसि पुरीषमसौ तृतीया नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षिणा पुरीषं यजमानः पञ्चमी प्रजा पुरीषं संवत्सरो वाव षष्ठी ऋतवः पुरीषमिति ॥ १५ ॥

## अर्थवादोपपत्तेश्च ॥ १६ ॥

अर्थवादेति । षट् चितयो भवन्ति षट् पुरीषाणि द्वादश संपद्यन्तइत्यर्थवादोपपत्तेः नित्यत्वम् ॥ १६ ॥

## एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १७ ॥

सिद्धान्तमाह । एकेति । पूर्वं पञ्चचित्यनुष्ठानं ततः अप्रतिष्ठा तस्यां निमित्तभूतायां तत्परिहारायैकचितिकः अयं प्रयोगः । कुतः, अपवृक्ते चित्वेति पूर्वतनपञ्चचितिकप्रयोगसमाप्तौ निमित्तेन अप्रतिष्ठारूपेण संबन्धः चोद्यते गम्यते अतः ॥ १७ ॥

## विप्रतिषेधात्ताभिः समानसंख्यत्वम् ॥ १८ ॥

पूर्वपक्षसाधकार्थवादद्वयोपपत्तिमाह । विप्रतिषेधादिति । या षष्ठी चितिः सैका तस्यां षट्त्वं द्वादशत्वं च विरुद्धम् । तस्माद्विरोधपरिहाराय ताभिः पूर्वानुष्ठितपञ्चचितीः पूर्वतनानि पञ्च पुरीषाणि च गृहीत्वा तुल्यसंख्यत्वम् । इत्थं चैतत्कर्तृकाः निमित्ते सति षट् चितयः षट् पुरीषाणि च संपद्यन्त्येवेति भावः ॥ १८ ॥

पिण्डपितृयज्ञस्य दर्शयागानङ्गत्वम् । अधि० ८ ।

## पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ १९ ॥

अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति । इदं च दर्शयागाङ्गं न वेति संशये अमावास्याशब्दस्य कर्मपरत्वेन तदङ्गमिति पूर्वपक्षे सिद्धान्तमाह । पितृयज्ञ इति । पितृयज्ञः अनङ्गं स्वस्य पितृयज्ञस्य कालत्वादमावास्यायाः । अयं भावः । अमावास्याशब्दो न कर्मपरः लक्षणापत्तेः । किं तु पिण्डपितृयज्ञकालपरः । तथा च स्वतन्त्रकालत्वाच्चाङ्गमिति ॥ १९ ॥

## तुल्यवच्च प्रसंख्यानात् ॥ २० ॥

तुल्यवद् महायज्ञतुल्यतया प्रसंख्यानात् परिगणनात् । चत्वारो वै महायज्ञा अग्निहोत्रं दर्शपूर्णमासावग्निष्टोमः पिण्डपितृयज्ञश्चेति परिगणनात् ॥ २० ॥

## विप्रतिषिद्धे च दर्शनात् ॥ २१ ॥

विप्रतिषेधे दर्शयागप्रतिषेधे निषेधे ऽपि पितृयज्ञस्य दर्शनाद् विधानात्। पौर्णमासीमेव यजेत भ्रातृव्यवानामावास्यां पितृयज्ञेनैव ता देवताः प्रीणाति ॥ २१ ॥

रशनाया यूपाङ्गत्वम्। अधि॰ ९।

## पश्वङ्गं रशना स्यात् तदागमे विधानात् ॥ २२ ॥

ज्योतिष्टोमे श्रूयते, आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोतीति। अत्र त्रिवृता त्रिगुणया रशनयेत्यनेन श्रूयमाणा रशना पश्वङ्गं यूपाङ्गं वेति संशये पूर्वपक्षमाह। पश्विति। पश्वङ्गं रशना त्रिवृता परिवीय पशुमुपाकरोतीति वाक्येन पशुसंबन्धमागमय्य आपयित्वा विधानात् ॥ २२ ॥

## यूपाङ्गं वा तत्संस्कारात् ॥ २३ ॥

सिद्धान्तमाह। यूपेति। यूपाङ्गं रशना तस्य यूपस्य दृढिमरूपदृष्टसंस्कारात्। यूपमिति द्वितीया त्रिवृतेति तृतीया ऽप्यनुग्रहीतेति भावः ॥ २३ ॥

## अर्थवादश्च तदर्थवत् ॥ २४ ॥

अर्थवादः युवा सुवासाः परिवीत आगादिति मन्त्रः तदर्थवत्। परिवीत इति यूपविशेषणम्। यूपे ऽन्वितं सद् यूपः संस्कारफलवान् इति ज्ञापयति ॥ २४ ॥

स्वरोः पश्वङ्गत्वम्। अधि॰ १०।

## स्वरुश्चाप्येकदेशत्वात् ॥ २५ ॥

स्वरुणा पशुमनक्तीति श्रुतम्। तत्र स्वरुर्यूपाङ्गं पश्वङ्गं वेति संशये पूर्वपक्षमाह। स्वरुरिति। स्वरुर्यूपाङ्गं तदेकदेशत्वाद् यूपस्य स्वरुं करोतीत्यत्र स्वरुमन्तं यूपं करोतीत्यर्थेन यूपावयवत्वप्रतीत्या षष्ठीश्रुत्या यूपस्य प्राधान्यात् ॥ २५ ॥

## निष्क्रयश्च तदङ्गवत् ॥ २६ ॥

निष्क्रयश्च यूपाङ्गमिव दर्शयति । ते प्रस्तरं स्रुवां निष्क्रयमपश्यन् स्वरुं यूपस्येति वाक्ये यूपस्य निष्क्रयं स्वरुमपश्यन्नित्यर्थवादो यूपाङ्गत्वं प्रद्रढयति ॥ २६ ॥

## पश्वङ्गं वा ऽर्थकर्मत्वात् ॥ २७ ॥

सिद्धान्तमाह । पश्विति । पश्वङ्गं स्वरुः । अर्थकर्मत्वात् । दृष्टफलत्वात् । पश्वञ्जनं दृष्टं फलम् । यूपार्थत्वे अदृष्टकल्पनापत्तेः ॥ २७ ॥

## भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥

भक्त्येति । भक्त्या लक्षणया स्तावकत्वेन निष्क्रयवादः स्यात् । यूपो ऽग्नौ प्रक्षेप्तव्यः । स्वरोर्यूपावयवत्वेन स्वरुप्रक्षेपे यूप एव प्रक्षिप्तो भवतीति श्रुतिः ॥ २८ ॥

आघारादीनामाग्नेयाद्यङ्गत्वम् । अधि· ११ ।

## दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ॥ २९ ॥

दर्शपूर्णमासयोर्यावन्तो यागा विहिताः ते सर्वे प्रधानभूता उत के चन प्रधानरूपाः के चनाङ्गरूपाः इति संशये पूर्वपक्षमाह । दर्शेति । दर्शपूर्णमाससंबन्धिन इज्याः यागाः सर्वे ऽपि प्रधानरूपाः । अविशेषाद् इदमङ्गमिदं प्रधानमितिनियामकाभावात् ॥ २९ ॥

## अपि वा ऽङ्गानि कानि चिद्येष्वङ्गत्वेन संस्तुतिः सामान्यादभिसंस्तवः ॥ ३० ॥

सिद्धान्तमाह । अपि वेति । येष्वङ्गत्वेन संस्तुतिः, यथा चक्षुषी वा एते यज्ञस्य यदाज्यभागौ, यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियतइति, तानि कानि चिदङ्गानि सामान्यात् । चक्षुरादीनामिवाज्यभागादीनामप्यङ्गत्वसाजात्यात् स्तव उपपन्नः । अन्यथा कर्मण्यङ्गत्वाभावेन स्तवो नोपपन्न इति भावः ॥ ३० ॥

## तथा चान्यार्थदर्शनम् ॥ ३१ ॥

तथा चेति । अङ्गत्वे प्रयाजेषु सिद्धे अन्यस्यार्थस्य नव प्रयाजा इज्यन्तइत्यत्र प्राकृतप्रयाजानुवादेन नवत्वगुणविधानमुपपन्नम् । अन्यथा प्रधानस्यातिदेशाभावेन असंगतं स्यादिति भावः ॥ ३१ ॥

## अविशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३२ ॥

अङ्गत्वेन संस्तुतिः सामान्यादिति पूर्वसूत्रस्थहेतोः प्रधाने व्यभिचारमाशङ्कते । अविशिष्टमिति । कारणमङ्गत्वेन संस्तवः । अविशिष्टं प्रधाने आग्नेयादौ प्रयाजादौ च अङ्गत्वेन संस्तवः तुल्यः । शिरो वा एतद्यज्ञस्य यदाग्नेयः हृदयमुपांशुयाजः पादावग्नीषोमीय इति गुणस्य अङ्गत्वेन संस्तुतिरूपगुणस्य उभयत्र विद्यमानत्वात् ॥ ३२ ॥

## नानुक्ते ऽन्यार्थदर्शनं परार्थत्वात् ॥ ३३ ॥

परार्थदर्शनं दूषयति । नानुक्तइति । अन्यार्थदर्शनं पूर्वोक्तम् अनुक्ते प्रयाजप्रापणरूपफलरहिते न अङ्गत्वसाधकं प्रयाजवाक्यस्य परार्थत्वात् । नवत्वगुणप्राप्त्यर्थत्वात् ॥ ३३ ॥

## पृथक्त्वे त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वं तत्सन्निधावसंयुक्तं तदङ्गं स्याद्भागित्वात्कारणस्याश्रुतेश्चान्यसंबन्धः ॥ ३४ ॥

सिद्धान्तरहस्यमाह । पृथक्त्वेति । दर्शसंज्ञकमेकं त्रिकं पूर्णमाससंज्ञकं त्रिकं तयोः श्रुतितः दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रवणाद् द्विवचनेन व्यपदेशाद् निर्देशाच्च अभिधानयोर्नाम्नोः पृथक्त्वे सिद्धे, तयोरिति शेषः । निवेशः फलेन साकं संबन्धः । इत्थं च यत्फलवत्त्वं फलसंबन्धित्वेन श्रूयमाणत्वं तद् मुख्यस्य लक्षणम् । तल्लक्षणं द्वयोः त्रिकयोः अस्तीति त्रिकद्वयमेव प्रधानमिति भावः । तत्सन्निधौ उक्तलक्षणविशिष्टकर्मसन्निधौ असंयुक्तं फलेनासंबद्धं समिधो यजतीत्यादि तदङ्गं प्रधानाङ्गं कारणस्य प्रयाजादिरूपस्य कारणत्वेन श्रुतस्य भागित्वात्फलार्थत्वाद् अश्रुतेः भाव्याकाङ्क्षापूरकशब्दाश्रुतेः अन्येन प्रधानेन संबन्धः । किं भावयेदित्याकाङ्क्षायां प्रधानं भावयेदित्येव कल्प्यमिति भावः ॥ ३४ ॥

## गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यन्ते ॥ ३५ ॥

त्रिकद्वयपृथक्त्वे द्विवचनेन निर्देशमुक्त्वा अन्यदपि साधकं दर्शयति । गुणा इति । अङ्गेषु अभिमर्शनादिषु गुणाः चतुर्होत्रादिमन्त्राः

नामसंयुक्ताः चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रा ऽमावास्यामिति पौर्णमास्यादिनामसंयुक्ता विधीयन्ते । इदं विभागाभावे नाम्ना निर्देशो नोपपद्यते ॥ ३५ ॥

## तुल्या च कारणश्रुतिरन्यैरङ्गाभिसंबन्धैः ॥ ३६ ॥

आग्नेयादीनामङ्गत्वेन संस्तुतिस्तुल्येति अङ्गत्वं तेषामिति यदुक्तं तत्राह । तुल्येति । अन्यैः पुरुषसंबन्धिभिः अङ्गादिसंबन्धैः अवयवसंबन्धैः कारणे प्रधाने श्रुतिः अङ्गत्वश्रवणं तुल्या । अयं भावः । पुरुषवृत्त्यवयवेषु यः अग्रिमसूत्रे वक्ष्यमाणः क्रमस्तस्य पौर्णमासीयागत्रये सत्त्वाद्यागस्य पुरुषवाक्यैः स्तुतिरिति ॥ ३६ ॥

## उत्पत्तावभिसंबन्धस्तस्मादङ्गोपदेशः स्यात् ॥ ३७ ॥

ननु पुरुषावयवेषु कः क्रमः इत्यपेक्षायामाह । उत्पत्ताविति । मातुः उत्पत्तौ मातुरुदरे प्राणिन उत्पत्तौ प्रथमं शिरः ततो मध्यं ततः पादाविति तेनैव क्रमेणाग्नेयोपांशुयागाग्नीषोमीयानामनुष्ठानादङ्गैः शिरःप्रभृतिशब्दैः उपदेशः शिर आग्नेय इति निर्देशः सिंहो माणवक इतिवत् ॥ ३७ ॥

## तथा चान्यार्थदर्शनम् ॥ ३८ ॥

तथा च उक्तयुक्तिभिर्द्वयोः क्रिययोः पृथक् सिद्धौ अन्यार्थस्य चतुर्दश पौर्णमास्यामाहुतयः त्रयोदशामावास्यायामिति दर्शनमुपपन्नम् ॥ ३८ ॥

ज्योतिष्टोमे दीक्षणीयादीनामङ्गत्वम् । अधि॰ १२ ।

## ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ ३९ ॥

ज्योतिष्टोमे यागमात्रमविशेषेण प्रधानमुत सोमयाग एव तथेति संशये पूर्वपक्षमाह । ज्योतिरिति । ज्योतिष्टोमे यागरूपकर्माणि अविशिष्टानि तुल्यतया प्रधानानि । यतः फलसंबन्धरूपं प्राधान्यकारणमविशिष्टम् अविलक्षणम् ॥ ३९ ॥

## गुणानां तूत्पत्तिवाक्येन संबन्धात्कारणश्रुतिस्तस्मात्सोमः प्रधानं स्यात् ॥ ४० ॥

सिद्धान्तमाह । गुणानामिति । उत्पत्तिवाक्येन स्वर्गरूपफलसंबन्धोत्पत्तिवाक्येन ज्योतिष्टोमेन स्वर्गकामो यजेतेति वाक्येन गुणानां ज्योतिषां त्रिवृत्पञ्चदशः सप्तदशः एकविंश इत्यादिरूपाणां स्तोमानां संबन्धात्कारणश्रुतिः विशेषकारणश्रुतिरस्त्यतः सोमयाग एव प्रधानं नान्ये यागाः ज्योतिषां स्तोमा यत्रेति व्युत्पत्त्या धात्वर्थे अस्य विशेषणत्वादितरयागव्यावृत्तिरिति भावः ॥ ४० ॥

## तथा चान्यार्थदर्शनम् ॥ ४१ ॥

तथा चेति । तथा च उक्तयुक्त्या सोमयागस्य प्राधान्यसिद्धौ च अन्यस्य दीक्षणीयादिषु शिरो वा एतद्यज्ञस्य यद्दीक्षणीयेति अङ्गशब्देन स्तुतेर्दर्शनमुपोद्बलयति, उक्तमर्थमिति पूरणीयम् ॥ ४१ ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां चतुर्थस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्च चतुर्थोऽध्यायः ॥ ४ ॥



क्रमनियमाधिकरणम् ॥ १ ॥

## श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥

चतुर्थे प्रयोज्यप्रयोजकभावे निर्णीते तेन प्रयोगविधिपरिगृहीता इयन्तः पदार्था इति ज्ञाते तेषां क्रमज्ञानार्थं पञ्चमाध्यायारम्भः। तत्र नियतक्रमस्य प्रयोगाङ्गत्वे प्रमाणाभावेन इच्छयैवानुष्ठानमिति पूर्वपक्षे सिद्धान्तमाह। श्रुतीति। श्रुतिर्लक्षणं गमकं यस्य तद् आनुपूर्व्यं क्रमः। तस्य क्रमस्य, सः अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीतिवाक्यघटकक्त्वाप्रत्ययादिः प्रमाणं ज्ञापकं यस्य, तत्त्वात् ॥ १ ॥

क्रमस्य क्व चिदार्थिकत्वम्। अधि० २।

## अर्थाच्च ॥ २ ॥

अग्निहोत्रं जुहोति यवागूं पचतीत्यत्र त्वाप्रत्ययादीनामभावादनियमेनानुष्ठानमिति पूर्वपक्षे क्रमप्रापकं प्रमाणान्तरमाह। अर्थाच्चेति। अर्थाद् यवागूपाकस्य अग्निहोत्रहोमफलकत्वात्पूर्वं साधनं संपाद्य पश्चाद्धोमनिर्वृत्तिरिति भावः ॥ २ ॥

प्रयाजानुमन्त्रणे क्रमानियमः। अधि० ३।

## अनियमो ऽन्यत्र ॥ ३ ॥

अनियम इति। अन्यत्र क्रमनियामकतया प्रतिपादितप्रतिपाद्यमानषट्प्रमाणाभाववति अनियमः इच्छयैवानुष्ठानं यथा प्रयाजानुमन्त्रणे। वसन्तमृतूनां प्रीणामीत्येको मन्त्रः एकशाखापठितः। एको ममैका तस्येत्यन्यशाखापठितः। तयोः समुच्चयेन पाठे अनियमः ॥ ३ ॥

क्रमस्य क्व चित् पाठानुसारित्वम्। अधि० ४।

## क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥

पञ्चप्रयाजानामनुष्ठाने क्रमनियामकाभावेनेच्छैव नियामिकेति पूर्वपक्षे सिद्धान्तमाह। क्रमेणेति। क्रत्वेकत्वे एकक्रतुगतत्वे क्रमेण पाठक्रमेण अनुष्ठानक्रमो नियम्येत तद्गुणत्वाद् अनुष्ठानाङ्गत्वात् क्रमस्य ॥ ४ ॥

## अशाब्दमिति चेत्स्याद्वाक्यशब्दत्वात् ॥ ५ ॥

शब्दगम्यस्यैव धर्मत्वमिति सिद्धान्तात् क्रमस्य तथात्वाभाव इत्याशङ्कते। अशाब्दमिति। अशाब्दः क्रमः शब्दगम्यो न स्यात्। वाक्यं

पदसमूहो यस्य तत्त्वं शाब्दस्य इति चेत्तदेव न । अयं भावः । वाक्यस्य शाब्दजनकत्वं यदि स्यात्क्रमविशिष्टे शक्तिं वाक्यस्याङ्गीकृत्य तद्विषयको ऽपि शाब्दबोध इति शक्यते वक्तुम् । तन्निरस्तं तद्भूतानां क्रियार्थेन समाम्नाय इत्यधिकरणे । प्रत्येकपदानां स्वस्वार्थे शक्तिर्न क्रमे । तदुपस्थापकशब्दाभावादशाब्दः क्रम इति ॥ ५ ॥

## अर्थकृते चानुमानं स्यात्क्रत्वेकत्वे परार्थत्वात्स्वेन त्वर्थेन संबन्धस्तस्मात्स्वशब्दमुच्यते ॥ ६ ॥

समाधानमाह । अर्थेति । क्रत्वेकत्वे बहूनां कर्मणामेकफलकत्वे एककर्तृकत्वे च यः कश्चन क्रमः युगपदनुष्ठानासंभवादर्थसिद्धः, तथा ऽपि अर्थकृते चानुमानम् । स्वाध्यायो ऽध्येतव्य इतिविधिभाव्यफलानुसार्यनुमानं कर्तव्यम् । स्वाध्यायो ऽध्येतव्य इत्यस्य न केवलं वेदार्थज्ञानमेव संपादयेदिति तात्पर्यम् । किं तु यद्यद्दृष्टं संभवति तावद्भावयेदिति । इत्थं च यथा ऽर्थज्ञानं तथा तद्द्वारा प्रयोगकाले ऽनुष्ठेयार्थस्मरणमपि भावयितुं शक्यते । सा च स्मृतिः यथापाठमेव भविष्यतीति स्वाध्यायविधितात्पर्यविषयत्वान्नाशाब्दमिति भावः । नन्वेतावद्दूरं तात्पर्यकल्पने मानाभाव इत्यत आह । वेदस्येति शेषः । परार्थत्वात् । यद्यदनेन शक्यते कर्तुं तावदर्थत्वात् । स्वेन स्वसंबन्ध्यर्थेन अनुष्ठानकालीनस्मरणेनापि संबन्धः । तस्मात्स्वशब्दस्य स्वस्य पाठक्रमस्य प्रापकः शब्द इति । स्वप्रापकः शब्दः स्वशब्दः मध्यमपदलोपसमासः । नपुंसकत्वमार्षम् ॥ ६ ॥

## तथा चान्यार्थदर्शनम् ॥ ७ ॥

तथा चेति । तथा च उक्तरीत्या पाठक्रमस्य शाब्दत्वसिद्धौ च अन्यस्यार्थस्य व्यत्यस्तमृतव्या उपदधाति । राष्ट्रभृद्धोमे च अभिचरता प्रतिलोमं होतव्या इत्यादेर्दर्शनं सङ्गच्छते । अन्यथा पाठक्रमस्याश्रौतत्वे तस्य प्राप्त्यभावेन व्यत्यस्तं प्रतिलोममित्यादीनां पाठक्रमबाधकत्वं न स्यादिति भावः ॥ ७ ॥

क्रमस्य क्वचित्प्रथमप्रवृत्त्यनुसारित्वम् । अधि० ५ ।

## प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥

सप्तदश प्राजापत्यान्पशूनालभतइति वाजपेये श्रुतम् । तेषां पशूनां संस्कारवेलायां पदार्थानुसमयेनानुष्ठानं वक्ष्यते । प्रथमं यं पशुमारभ्य येन क्रमेणोपाकरणं कृतं तेनैव क्रमेण नियोजनादिकं कार्यमुतेच्छयेति संशये सिद्धान्तेनोपक्रमते । प्रवृत्त्येति । तुल्यकालानामेककालप्राप्तानामुपाकरणादिपशुसंस्काररूपाणां गुणानां प्रवृत्त्या प्रथमप्रवृत्तिक्रमेण द्वितीयादिसंस्कारक्रमो नियम्यते । तदुपक्रमात् तस्मादेव प्रथमं प्रारम्भात् । अयं भावः सर्वेषामङ्गानामव्यवधानेन अनुष्ठानमावश्यकं तत्र विधिप्राप्तं व्यवधानमङ्गान्तरं सहते इति प्रथमपशूपाकरणं स्वीयनियोजनमध्ये षोडशान्यपशूपाकरणैर्व्यवधानं वैधं सहते नाधिकम् । प्रथमोपाकृतपशौ चरमं नियोजने क्रियमाणे चरममुपाकृतपशौ नियोजनमव्यवहितं प्रथमोपाकरणं षोडशभिरुपाकरणैः षोडशभिर्नियोजनैश्च द्वात्रिंशद्भिरविहितैर्व्यवहितमिति वैरूप्यम् । प्रथमप्रवृत्तिक्रमेणानुष्ठाने सर्वेषां षोडशभिरेव व्यवधानं तुल्यमङ्गानां सान्निध्यमिति प्रथमप्रवृत्तिक्रम उत्तरानुष्ठाने नियामक एवं प्रधानसन्निकर्षो ऽपि तुल्य इति ॥ ८ ॥

## सर्वमिति चेत् ॥ ९ ॥

पूर्वपक्षयाशङ्कते । सर्वमिति । यथा सौर्ययागाङ्गजालं स्वीयातिरिक्ताङ्गजालेनाव्यवहितं तथा संपत्तये सर्वं स्वकीयमङ्गजालं काण्डानुसमयेन स्यादिति चेत् ॥ ९ ॥

## नाकृतत्वात् ॥ १० ॥

दूषयति काण्डानुसमयं, नेति । अकृतत्वाद् अविहितत्वात् ॥ १० ॥

## क्रत्वन्तरवदिति चेत् ॥ ११ ॥

सौर्ययागादौ काण्डानुसमयवदत्राप्यस्त्विति शङ्कते । क्रत्विति । क्रत्वन्तरवत् सौर्ययागवत् ॥ ११ ॥

## नासमवायात् ॥ १२ ॥

वैषम्यमाह । नेति । असमवायाद् यागान्तरेण साहित्याभावात् । इह तु सप्तदश प्राजापत्यान्पशूनालभतइति सप्तदशानां साहित्यस्य विवक्षितत्वात्काण्डानुसमयो न सम्भवतीति भावः ॥ १२ ॥

क्रमस्य क्व चित्स्थानानुसारित्वम् । अधि० ६ ।

## स्थानाच्चोत्पत्तिसंयोगात् ॥ १३ ॥

साद्यस्कनामके क्रतौ अग्नीषोमीयानूबन्ध्ययोः सवनीयपशुना सहानुष्ठानं विहितम् । तत्र प्रथमं कस्योपाकरणमिति संशये प्रकृताविवात्रापि अग्नीषोमीयस्य प्राथम्यमिति पूर्वपक्षे सिद्धान्तमाह । स्थानादिति । आश्विनं ग्रहं गृहीत्वा ऽऽग्नेयं पशुमुपाकरोतीति आश्विनग्रहग्रहणोत्तरस्थानमुत्पत्तौ स्वोत्पत्तिवाक्ये संबन्धो यस्येति व्युत्पत्त्या तादृशं, तादृशस्थानप्रमाणात्सवनीयपशुसंस्कारः प्रथम इति । अयं भावः आश्विने गृहीते तदुत्तरस्य सवनीयस्योपस्थितिर्भवति प्रयोगविधिपरिगृहीतत्वात्तस्य । उपस्थितपरित्यागे मानाभावेन तस्य प्राथम्यमिति ॥ १३ ॥

अङ्गक्रमस्य मुख्यक्रमानुसारित्वम् । अधि० ७ ।

## मुख्यक्रमेण चाङ्गानां तदर्थत्वात् ॥ १४ ॥

चित्रायागे श्रुतं, सारस्वतौ भवत इति । सरस्वती च सरस्वांश्च सरस्वन्तौ तत्सम्बन्धियागौ सारस्वतौ इति समस्तपदप्रयोगेण तयोरनुष्ठानं तन्त्रेणेति सिद्धम्। अत्राङ्गानामनुष्ठानक्रमे पूर्वोक्तप्रमाणाभावादिच्छयेति पूर्वपक्षे सिद्धान्तमाह । मुख्येति । मुख्यस्य यागोत्पत्तिवाक्ये क्रमो नास्ति तथाऽपि मन्त्रपाठक्रमे स्त्रीदेवताया मन्त्रः प्रणो देवीति प्रथमं पठितः । पश्चात्पपिवांसमिति त्वन्यस्य । तत्पाठक्रमेण प्रधानक्रमक्लृप्तौ मुख्यक्रमेणाङ्गानामनुष्ठानमङ्गानां तदर्थत्वात्प्रधानार्थत्वात् । मुख्यक्रमेणाङ्गानामनुष्ठाने सर्वेषां स्वस्वप्रधानसंनिधानसंनिकर्षः समानो भवतीत्यभिप्रायः ॥ १४ ॥

अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलीयस्त्वम् । अधि० ८ ।

## प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ १५ ॥

प्रकृतौ पौर्णमासयागे प्रथममुपांशुयागस्य पश्चादग्नीषोमीयस्य मन्त्रपाठक्रमेण क्लृप्तत्वादग्नीषोमीयनिर्वापात्प्रागाज्यनिर्वापः पूर्वन्यायेनेति पूर्वपक्षे सिद्धान्तमाह । प्रकृताविति । प्रकृतौ पूर्णमासयागे अङ्गानामनुष्ठानं यथाक्रमं यथा पाठः तथा प्रतीयेत ज्ञातव्यः स्वशब्दत्वादङ्गप्रतिपादकशब्दधर्मत्वात्, पाठस्येति शेषः । पाठक्रमेण प्रबलेन मुख्यक्रमबाध इति भावः ॥ १५ ॥

ब्राह्मणपाठापेक्षया मन्त्रपाठस्य बलीयस्त्वम् । अधि· ९ ।

## मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः सः ॥ १६ ॥

मन्त्रब्राह्मणपाठक्रमे प्रबलदुर्बलभावः चिन्त्यते । पूर्णमासयागे प्रथममुपांशुयागमन्त्रः पश्चादग्नीषोममन्त्रः । तयोरुत्पत्तिवाक्यपाठक्रमः तद्विपरीतोऽस्ति । एवं सत्युभयोरविशेषादिच्छैव नियामिकेति पूर्वपक्षे सिद्धान्तमाह । मन्त्रेति । ब्राह्मणपाठक्रमस्य मन्त्रतः मन्त्रपाठक्रमेण विरोधे मन्त्रक्रमेणानुष्ठानं स्यात् । प्रयोगरूपे प्रयोगरूपक्रियोत्पत्तौ सामर्थ्यात्कारणत्वात् । न ह्यनुष्ठीयमानक्रियास्मरणमन्तराऽनुष्ठानं संभवति । तत्स्मरणं मन्त्राधीनम् । अतः मन्त्रक्रमः प्रबल इति भावः । सः ब्राह्मणपाठः उत्पत्तौ स्वरूपज्ञानविषये देश उपदेशो यस्य तादृशः । अनुष्ठाने विप्रकृष्ट इति भावः ॥ १६ ॥

प्रयोगवचनाच्चोदकस्य बलवत्त्वम् । अधि· १० ।

## तद्वचनाद्विकृतौ यथाप्रधानं स्यात् ॥ १७ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरिति श्रुतम् । अत्र उपांशुयागाग्नीषोमवदङ्गपाठाभावात्प्रधानक्रमेण निर्वापः प्रकृतिवदेव वेति संशये पूर्वपक्षमाह । तदिति । विकृतौ उक्तयागे यथाप्रधानं प्रधानानुक्रमवद् अङ्गानुष्ठानं स्यात् । तद्वचनात् । प्रधानक्रमबोधकप्रधानवचनपाठबलात् ॥ १७ ॥

## विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति ॥ १८ ॥

सिद्धान्तमाह । विप्रतीति । विप्रतिपत्तौ मुख्याङ्गक्रमविप्रतिपत्तौ

विरोधे यथाप्रकृति प्राकृतक्रम एव कर्तव्यः । प्रकृतौ अन्वयात् क्रमस्य क्लृप्तत्वात् । प्रकृतितः अतिदिश्यमानानामङ्गानां क्रमसहितानामेव प्राप्त्या न क्रमाकाङ्क्षेति भावः ॥ १८ ॥

विकृतौ क्व चित्प्रकृतिधर्मानतिदेशः । अधि० ११ ।

## विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम् ॥ १९ ॥

चातुर्मास्ये श्रुतम्, अग्नये ऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकं सूर्येणोद्यता मरुद्भ्यः सांतपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुमिति । इमा इष्टयः प्रकृतिवद् द्व्यहसाध्या उत सद्यःकाला इति संशये पूर्वपक्षमाह । विकृतिरिति । विकृतिः उक्तेष्टयः तत्काला प्रकृतिकाला द्व्यहसाध्या स्यात् । प्रकृतेर्धर्मा यत्र तत्त्वाद्विकृतेः । यथा शिष्टं विहितं प्रकृतौ द्व्यहकालत्वं तथा ऽत्रापीति । यद्वा । यथा शिष्टं शेषाङ्गकलापः प्रकृतः तथा कालो ऽपीति ॥ १९ ॥

## अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधिरनुमानात्प्रकृतिधर्मलोपः स्यात् ॥ २० ॥

सिद्धान्तमाह । अपीति । प्रातर्मध्यन्दिने सायमिति क्रमदिनावयवरूपकालाभ्यां संयुक्ता विकृत्युत्पत्तिः सा सद्यः क्रियेत सद्यः करणस्य शब्दादेव प्रतीतेः । यथा देवदत्तः प्रातः पृथुकान्भुङ्क्ते मध्याह्ने ऽन्नं रात्रौ मोदकानित्यत्र एकदिनसाध्यत्वं शब्दादवगम्यते तथा ऽत्रापीति भावः । अत्र विकृतौ प्रकृतितो द्व्यहप्राप्तिरनुमानादतः प्रकृतिधर्मस्य द्व्यहकालस्य लोपः ॥ २० ॥

## कालोत्कर्ष इति चेत् ॥ २१ ॥

ननु सवनीयपशुवद्व्यागयोरुत्कर्षः तथा त्रयमेकं कर्म मध्यन्दिनादिशब्द उत्कर्षप्रापकः । इत्थं च पूर्वदिने कालत्रये त्रयाणामन्वाधानं परेद्युस्त्रिषु कालेषु यागत्रयमिति शङ्कते । कालेति । काले मध्यन्दिनादौ उत्कर्षः ॥ २१ ॥

## न तत्संबन्धात् ॥ २२ ॥

दूषयति । नेति । तत्संबन्धात् । उत्पत्तिवाक्यसंबन्धात् । उत्पत्तिवाक्यसंबन्धानां नोत्कर्षप्रापकत्वमिति भावः ॥ २२ ॥

अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षौ । अधि० १२ ।

## अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ २३ ॥

तिष्ठन्तं पशुं प्रयजतीत्यत्र पशौ प्रयाजापकर्षः आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीति अनूयाजोत्कर्षश्च श्रुतः । श्रुतस्यैवोत्कर्षापकर्षौ उत प्रयाजान्तस्यापकर्षः अनूयाजाद्यग्रिमाङ्गानां यावतामुत्कर्ष इति संशये पूर्वपक्षमाह । अङ्गानामिति । अङ्गानां प्रयाजानूयाजरूपश्रूयमाणाङ्गातिरिक्तानां मुख्यस्य यः समीपकालः तत्संबन्धित्वाद् यथोक्तं यावच्छ्रुतं तावद् उत्कर्षे कर्तव्ये स्यात् । उत्कर्षशब्दः अपकर्षोपलक्षकः ॥ २३ ॥

## तदादि वा ऽभिसंबन्धात्तदन्तमपकर्षे स्यात् ॥ २४ ॥

सिद्धान्तमाह । तदादीति । तदादि अनूयाजाद्यग्रिमं सर्वमुत्कृष्यते । तदन्तं प्रयाजान्तं यावदपकृष्यते । संबन्धात् प्रयोगविधिसंबन्धात् । प्रयोगविधिना प्रयाजपूर्वत्वस्य अनूयाजोत्तरत्वस्य च क्लृप्तत्वादिति भावः ॥ २४ ॥

प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभावित्वम् । अधि० १३ ।

## प्रकृत्याकृतकालानाम् ॥ २५ ॥

ज्योतिष्टोमे सुत्यादिने पाठक्रमः । प्रथमं प्रातरनुवाकः तदनन्तरं प्रचरणीहोमाः ततः सवनीयपुरोडाशनिर्वापः । एवं स्थिते प्रातर्यावभ्यो देवेभ्यो ऽनुब्रूहि ब्रह्मन्वाचं यच्छ प्रतिप्रस्थातः सवनीयान्निर्वपेति प्रैषवलेन निर्वापान्तानामपकर्षः । देवस्त्वा सविता मध्वा ऽनक्त्विति पुरोडाशालङ्कारादि तदुत्तरकर्मणां बहिष्पवमाने स्तुतआग्नीदग्नीन्विहर बर्हिस्तृणीहि पुरोडाशाः अलंकुर्विति तदन्तोत्कर्षः । एवं सति मध्यवर्तिनां सौमिकधर्माणां प्रचरणीहोमादीनां व्रीहिप्रोक्षणादीष्टिधर्माणाम् अनुष्ठाने इच्छैव नियामिकेति पूर्वपक्षे सिद्धान्तमाह । प्रकृत्येति । कृत्या दर्शपूर्णमासप्रयोगेण कृतकालानां ज्ञातकालानां निर्वापानन्तरं

सृतानां प्रोक्षणादीनामलंकारपर्यन्तानामनुष्ठानं, ततः सौमिकानां, निर्वापोत्तरं स्मृतप्रोक्षणादिपरित्यागे मानाभाव इति भावः ॥ २५ ॥

## शब्दविप्रतिषेधाच्च ॥ २६ ॥

शब्दविप्रतिषेधस्त्वेवम् अलंकुर्वित्युक्तः प्रोक्षणादीन् प्रतिपद्येत परमते । अस्मन्मते अलंकुर्वित्युक्ते अलंकरणमेव प्रतिपद्यते । अयं भावः । प्रातरनुवाकप्रैषानन्तरं प्रतिप्रस्थात्रा निर्वापे कृते प्रोक्षणादि अलंकरणपर्यन्तमकृत्वा प्रवरणीहोमादिसौमिकतन्त्रं प्रारभेद् बहिष्पवमानस्तोत्रपर्यन्तम् । ततः अग्नीदग्नीन्विहरेति पुरोडाशानलंकुर्विति प्रैषं दद्यात्तदाऽलंकरणात्प्राक्तनप्रोक्षणादीनामवशिष्टत्वात् तावत्पर्यन्तं प्रतीक्षां कुर्यात् । न चेदमुचितम् । पुरोडाशानलंकुर्वित्यत्र लोट् प्राप्तकालार्थः । प्रोक्षणादीनामननुष्ठितत्वेनालङ्करणकालाप्राप्तौ तदर्थकलोड् विरुध्यते । प्रोक्षणाद्यलङ्करणपर्यन्तमनुष्ठाय सौमिकतन्त्रोपक्रमे तेनैव क्रमेण बहिष्पवमाने स्तुतेऽलङ्करणकालप्राप्तौ लोड् न विरुध्यतइति ॥ २६ ॥

वैकृतयूपकर्ममात्रापकर्षः । अधि॰ १४ ।

## असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥ २७ ॥

दर्शप्रकृतिके अग्नीषोमीयपशौ यूपोत्पत्तिः पठिता । दीक्षासु यूपं छिनत्तीत्यपकर्षे तत्पूर्ववर्तिनः अग्नीषोमप्रणयनस्याप्यपकर्षः तदन्तापकर्षस्य क्लृप्तत्वादिति पूर्वपक्षे सिद्धान्तमाह । असंयोगादिति । वैकृतं स्वप्रकृतिभूतदर्शे अविद्यमानं यूपच्छेदनं तदेव तन्मात्रमेव प्रतिकृष्येत अपकृष्येत । असंयोगात् । अङ्गान्तरैः सह प्रयोगविधिपरिगृहीतक्रमलक्षणसंयोगस्यान्यत्राक्लृप्तत्वात् । अत्रैव ग्रहीतव्ये वचनेन दीक्षासमयएव ग्रहणात्प्रयाजापकर्षवैषम्यमिति भावः ॥ २७ ॥

दाक्षिणाग्निकहोमानपकर्षः । अधि॰ १५ ।

## प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ २८ ॥

वाग्निमारुतादूर्ध्वमनूयाजैः चरन्तीति अनूयाजोत्कर्षे तदावृत्कर्षे नियमेन अनूयाजोत्तरवर्तियावद्धोमाणामुत्कर्षवत्पिष्टलेपफलीकरणानामप्युत्कर्ष इति पूर्वपक्षे सिद्धान्तमाह । प्रासङ्गिकमिति । प्रासङ्गिकं पश्वर्थ

सत् प्रसङ्गादुपकारकं पुरोडाशस्यानूयाजकर्म नोत्कर्षेत् । पिष्टलेपफलीकरणहोमौ स्वस्थानाच्च्यावयितुमसमर्थौ, प्रासङ्गिकत्वाप्रासङ्गिकत्वरूपविरुद्धधर्मवत्त्वेन तयोरसंबन्धात् । साजात्याभावादिति भावः ॥ २८ ॥

पुरोडाशाभिवासनान्तस्य दर्शे ऽनपकर्षः । अधि॰ १६ ।

## तथा ऽपूर्वम् ॥ २९ ॥

पाठक्रमेण कपालासादनादूर्ध्वं पौर्णमास्यां वेदिकरणं प्राप्तम् । अमावास्यायां वेदकरणानन्तरं सा वेदिर्वेदं कृत्वा वेदिं करोतीति वचनेन पूर्वत्रापकृष्टा सती तदन्तं यावत्पूर्वकर्मापकर्षतीति पूर्वपक्षे सिद्धान्तमाह । तथेति । यथा प्रासङ्गिकं तदादित्वेन पिष्टलेपहोमं नोत्कर्षति तथा अपूर्वमपि तदन्तं नापकर्षतीति । अयं भावः । पौर्णमासी न दर्शप्रकृतिः । येन हेतुना अयमपकर्षविधिः । प्रकृतौ क्लृप्तकालस्यातिदेशे वचनेन ततः पूर्वकालप्रापकस्यैवापकर्षपदार्थत्वात् । अमावास्यायां वेदकालोत्तरकालो ऽपूर्वो विधीयतइति ॥ २९ ॥

सान्तपनीयाया अग्निहोत्रानुत्कर्षकत्वम् । अधि॰ १७ ।

## सांतपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥ ३० ॥

चातुर्मास्ये मरुद्भ्यः सांतपनेभ्यो मध्यन्दिने चरुमिति सान्तपनीयोपक्रान्ता दैवादग्निहोत्रकालपर्यन्तमुत्कृष्टा । तत्र सान्तपनीयाप्रयोगमध्ये अग्निहोत्रमनुष्ठेयमुताग्निहोत्रस्याप्युत्कर्ष इति संशये पूर्वपक्षमाह । सान्तपनीयेति । सूत्रे उत्कृष्यमाणेति पूरणीयम् । उत्कृष्यमाणा सान्तपनीया अग्निहोत्रमुत्कर्षेत् । स्वकालाच्च्यावयेत् । सवनवत् । यथा प्रातःसवनमुत्कृष्यमाणं माध्यन्दिनं सवनमुत्कर्षति तथा । किं च वैगुण्यमपि प्रणयनाद्यङ्गलोपेन ॥ ३० ॥

## अव्यवायाच्च ॥ ३१ ॥

अव्यवायात् । सान्तपनीयाङ्गप्रधानयोर्मध्ये अग्निहोत्रेण व्यवधानाभावो ऽपि सिध्यत्यतो ऽप्यग्निहोत्रोत्कर्षः ॥ ३१ ॥

## असंबन्धात्तु नोत्कर्षेत् ॥ ३२ ॥

सिद्धान्तमाह । असंबधादिति । असंबन्धात् । एकप्रयोगानन्तःपातित्वाद् नोत्कर्षेदग्निहोत्रम् ॥ ३२ ॥

## प्रापणाच्च निमित्तस्य ॥ ३३ ॥

होमकाले जीवनरूपनिमित्तस्य प्राप्तत्वान्निमित्ते सति नैमित्तिकमनुष्ठेयमिति आह । प्रापणादिति । व्याख्यातम् ॥ ३३ ॥

## संबन्धात्सवनोत्कर्षः ॥ ३४ ॥

संबन्धात्सवनोत्कर्ष इति । संबन्धात् । एकप्रयोगपठितत्वात् । अयं भावः । एकप्रयोगपठितत्वेन प्रयोगविधिपरिगृहीतप्रातःसवनसमाप्त्युत्तरकालो ऽप्यङ्गं माध्यन्दिनसवने प्रातःसवनमध्ये ऽनुष्ठाने स बाध्येतेति ॥ ३४ ॥

उक्थ्यानुरोधेन षोडश्युत्कर्षः । अधि० १८ ।

## षोडशी चोक्थ्यसंयोगात् ॥ ३५ ॥

ज्योतिष्टोमे षोडशिनं प्रकृत्य श्रूयते, तमुक्थ्येभ्यः पराञ्चं षोडशिनं गृह्णातीति । उक्थ्यग्रहस्य दैवादुत्कर्षे अकालप्राप्तौ उक्थ्यात्प्रागेव षोडशिस्तोत्रमुपक्रम्य स्वकाले षोडशिप्रचारः तत उक्थ्यप्रचारः, समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोतीति अस्तसमये स्तोत्रोपक्रमविधानादिति पूर्वपक्षे सिद्धान्तमाह । षोडशीति । उक्थ्योत्कर्षे षोडश्युत्कृष्यते । उक्थ्यसंयोगात् । उक्थ्योत्तरकाले विधानात् । अर्धास्तकालस्तु षोडशिस्तोत्रकालः । स त्वङ्गकालः । उक्थ्योत्तरकालः षोडशियागस्य प्रधानस्य कालः । न ह्यङ्गकालानुरोधेन प्रधानकालविरोधो युक्त इति भावः ॥ ३५ ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां पञ्चमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

वाजपेयपशूनां सर्वेषामेकदोपाकरणादिधर्मानुष्ठानम् । अधि० १ ।

## सन्निपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥

वाजपेये प्राजापत्यपशुषु सप्तदशसु उपाकरणनियोजनाञ्जनादिसंस्काराः प्रकृतितः प्राप्ताः तान्सर्वानेकपशौ समाप्य पश्वन्तरं व्रजेद्वत प्रथमसंस्कारं यावत्पशुषु कृत्वा तथैव द्वितीयादि कुर्यादिति संशये पूर्वपक्षमाह । सन्निपातइति । प्रधानानां संस्कार्याणां बहूनामेकप्रयोगे

सन्निपाते प्रत्येकमेकैकगुणानां सर्वं समयं कर्म निश्शेषं यथा तथा ऽनुष्ठानं स्यात् । तथा सति प्रकृतौ उपाकरणानन्तर्यं नियोजनस्य क्लृप्तं तदनुगृहीतं भवति । सिद्धान्तपक्षे प्रथमपशोर्नियोजनमितरपशूनां सप्तदशोपाकरणैर्व्यवहितमिति प्रकृतिकोपः स्यादिति ॥ १ ॥

## सर्वेषां वैकजातीयं कृतानुपूर्व्यत्वात् ॥ २ ॥

सिद्धान्तमाह । सर्वेषामिति । सर्वेषां पशूनामेकैकजातीयमुपाकरणत्वादिना सजातीयं सर्वेष्वेकजातीयं कृत्वा तथा परो ऽप्यनुष्ठेय इति फलितम् । वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्यनेन सप्तदशानां साहित्ये सिद्धे युगपत्सप्तदशक्रियाणामेककर्तृकाणामसंभवात् । क्षणभेदमात्रस्यापेक्षितत्वेन एकसंस्कारस्यैव कृतानुपूर्व्यात् । अनेनैव न्यायेन दर्शपूर्णमासे ऽङ्गानुष्ठानम् ॥ २ ॥

सहस्राश्वप्रतिग्रहस्थले एकैकस्यैकदा सर्वधर्मानुष्ठानम् । अधि· २ ।

## कारणादभ्यावृत्तिः ॥ ३ ॥

नन्वश्वप्रतिग्रहेष्टिष्वपि तथा ऽनुष्ठानं स्यादत आह । कारणेति । तत्र कारणात् प्रधानबाधरूपकारणाद् अभ्यावृत्तिः एकस्मिन्नेव यावत्संस्कारसंपादनम् । यत्र सहस्रमश्वाः प्रतिगृहीताः तावत्य इष्टयः प्राप्ताः तत्र प्रथमपुरोडाशस्याङ्गारयुतकपालेष्वासादनं कृत्वा शेषाणामासादने क्रियमाणे प्रथमपुरोडाशो भस्म स्यात् । अतः आसादनमारभ्योद्वासनान्तं काण्डानुसमयेनेति भावः ॥ ३ ॥

मुष्टिकपालादीनां समुदायानुसमयः । अधि· ३ ।

## मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ ४ ॥

दर्शपूर्णमासयोः चतुरो मुष्टीन्निर्वपेदिति । अत्राग्नेयाग्नीषोमीययोरेकैकमुष्टिं निरुप्य तथैव द्वितीयतृतीयमुष्टिनिर्वापा उत एकस्य चतुरो मुष्टीन्निरुप्यापरस्यापि तथा निर्वाप इति संशये पूर्वपक्षमाह । मुष्टीति । मुष्टौ एकेन अनुसमयः, न चतुर्मुष्टिनिर्वापानन्तरमपरनिर्वापः पूर्वाधिकरणसिद्धान्तात् । तथा ऽऽग्नेयस्यैकं कपालमुपधायाग्नीषोमीयस्यैकं, तथा

ऽऽग्नेयस्यैकावदानं कृत्वा ऽग्नीषोमीयस्यैकमवद्येत् । तथा दीक्षितसंस्कारे त्रिराङ्क्ते इत्यत्र एकचक्षुष एकमञ्जनं कृत्वा ऽपरचक्षुष एकमेवं त्रिः । दीक्षितसंस्काररूपमभ्यञ्जनमपि तथा । प्रतिदिशं त्रिस्त्रिर्वपतीत्यत्र एकैकवपनक्रमेण त्रित्वं संपादयेत् । तथा चित्पतिस्त्वा पुनात्विति सप्तभिर्मुखं, वाक्पतिस्त्वा पुनात्विति सप्तभिः मुखाधो नाभिपर्यन्तं, देवस्त्वा सविता पुनात्विति नाभिमारभ्य पादपर्यन्तं सप्तभिरिति विहितम् । इदं सत्रे कुलायनामके चातिदिष्टं, तत्र सर्वेषां यजमानानां प्रथमं मुखस्य पश्चान्नाभिपर्यन्तस्य ततः पादपर्यन्तस्य । अयं भावः निर्वापपदार्थस्य प्रत्येकमुष्टावपि क्लृप्तत्वेनैकमुष्टिरपि पदार्थ इति पदार्थानुसमयो युक्त इति भावः ॥ ४ ॥

## सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात् ॥ ५ ॥

निर्वापस्वरूपभेदस्य लोकतो ऽवगमे ऽपि अङ्गत्वापरपर्यायपदार्थभेदस्य शास्त्रैकगम्यत्वाद् इत्यभिप्रायेण सिद्धान्तमाह । सर्वाणीति । सर्वाणि चतुःसंख्याविशिष्टमुष्टिरेकः, पदार्थ इति शेषः । एककार्यत्वात् । एकापूर्वे युगपदन्वयात् । संख्यामुष्ट्युभयविशिष्टनिर्वापस्यापूर्वोद्देशेन विधानात् तद्गुणत्वात् । विशिष्टस्यापूर्वाङ्गत्वाद् विशिष्ट एव पदार्थः एकमुष्टिस्तु पदार्थैकदेशः । पूर्वाधिकरणे पदार्थानामेवानुसमय इत्युक्तो न पदार्थैकदेशस्यानुसमय इति भावः । एवं यदाग्नेयो ऽष्टाकपाल इत्यत्राष्टत्वविशिष्टस्याङ्गत्वम् । द्विर्हविषो ऽवद्यतीति त्रिराङ्क्ते त्रिरभ्यङ्क्ते त्रिस्त्रिर्वपतीति एकविंशत्या पावयतीति सर्वत्र संख्याविशिष्टस्य पदार्थत्वान्न प्रत्येकमनुसमयः ॥ ५ ॥

अवदानस्य प्रदानान्तानुसमयः । अधि० ४ ।

## संयुक्ते तु प्रक्रमात्तदन्तं स्यादितरस्य तदर्थत्वात् ॥ ६ ॥

द्विर्हविषो ऽवद्यतीति द्वित्वविशिष्टावदानस्य पदार्थत्वात्तस्यानुसमयसंभवादाग्नेयस्यावदाय होमात्प्रागेवाग्नीषोमावदानमिति पूर्वपक्षे सिद्धान्तमाह । संयुक्तइति । संयुक्ते चतुरवत्तं जुहोतीति चतुरवत्तसंबद्धे

होमे, विधीयमाने इति शेषः। प्रक्रमात्। चतुरवत्तेनोपक्रमात्। इतरस्य तदर्थत्वात्। होमार्थत्वात्। तदन्तं होमान्तमेकः पदार्थः स्यात्। उपस्तृणाति द्विर्हविषो ऽवद्यति सकृदभिघारयतीति चतुरवत्तावयवत्वेनैव विधानमिति भावः॥ ६॥

अञ्जनादेः परिव्याणान्तानुसमयः। अधि॰ ५।

## वचनात्तु परिव्याणान्तमञ्जनादिः स्यात्॥ ७॥

अग्नीषोमपशौ यूपसंस्काराः अञ्जनाभ्यञ्जनाष्टाश्रीकरणादयः। ते यूपैकादशिन्यामतिदेशेन प्राप्ताः। तत्र पदार्थानुसमयो न वेति संशये सिद्धान्तेनोपक्रमते। वचनादिति। अञ्जनादिपरिव्याणान्तं यजमानो यूपं नोत्सृजतीति वचनेन यजमानान्वारम्भस्याङ्गत्वात्तदसम्भवात्॥ ७॥

## कारणाद्वा ऽवसर्गः स्याद्यथा पात्रवृद्धिः॥ ८॥

पूर्वपक्षमाह। कारणादिति। कारणाद् अध्वर्योः सहायापेक्षारूपकारणात्। अवसर्गः यजमानातिरिक्तकल्पना स्यात्। यथा पात्रवृद्धिः, अष्टावुपभृति इत्यनूयाजार्थस्य प्रकृतौ एकोपभृति द्रव्यैकत्वेन ग्रहणे ऽपि यत्र प्रयाजानूयाजयोर्यत्राज्यं पृषदाज्यमिति द्रव्यभेदः तत्रानुक्तमपि पात्रान्तरं कल्प्यते, तथा ऽत्र यजमानकार्ये ऽन्वारम्भे ऽन्यः कल्प्यः। इत्थं च प्रयोगविधिपरिगृहीतप्रयोगप्राशुभावः सिध्यतीति भावः॥ ८॥

## न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात्पात्रवृद्धिः॥ ९॥

दूषयति। न वेति। इतरत् प्रयोगविधिपरिगृहीतप्रयोगप्राशुभावः न्यायमात्रं प्रतिज्ञाहेतूदाहरणगम्यम् अनुमानगम्यमिति यावत्। प्रकृतस्य अञ्जनादिपरिव्याणान्तकालपर्यन्तं यूपमुद्दिश्य यजमानकर्तृकान्वारम्भस्य शब्दकृतत्वात्प्रत्यक्षश्रुतिगम्यत्वादानुमानिकबाध इति भावः। उक्तस्थले पात्रवृद्धिरर्थाद् अनुपपत्त्या। प्रकृतौ अष्टावुपभृतीत्युपभृतमुद्दिश्य अष्टत्वसंख्याकं ग्रहणं विधीयते, न त्वेकत्वविशिष्टोपभृतमुद्दिश्य। उद्देश्यसंख्याया अविवक्षितत्वात्। तत्रत्यमेकत्वं प्रकृतावार्थिकम्। आर्थिकस्यानङ्गत्वात् सति प्रयोजने विकृतौ पात्रवृद्धौ बाधकाभाव इति भावः॥ ९॥

दैवताद्यवदानेषु पदार्थानुसमयः । अधि· ६ ।

## पशुगणे तस्य तस्यापवर्जयेत् पश्वेकत्वात् ॥ १० ॥

अग्नीषोमीयपशौ दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यति । सौविष्टकृतान्यवदाय न तावत्येव होतव्यमैडान्यवद्यतीति । दर्शपूर्णमासवद्धोमान्तमकृत्वा अवदानत्रयं प्रथमं कृत्वा पश्चात्क्रमेण होमः अग्नीषोमीयपशौ सिद्धः । प्रकृतौ एकस्मिन्पशौ अवदानत्रयस्य काण्डानुसमयः । एवमेव प्राजापत्यपशुगणे एकैकपशोः अवदानत्रयं संपाद्य द्वितीयपशोरपि तथैवावदानमित्यभिप्रायेण पूर्वपक्षमाह । पशुगणइति । पशुगणे तस्य तस्य अवदानस्य होमस्य च, एकैकपशाविति पूरणीयम् । अपवर्जयेत् । समापयेत् । पश्वेकत्वात् प्रत्येकस्मिन्पशौ प्रकृताविव पश्वेकत्वस्य तुल्यत्वात् । तथा च प्रकृत्यनुग्रहायेति भावः ॥ १० ॥

## दैवतैर्वैककर्म्यात् ॥ ११ ॥

सिद्धान्तमाह । दैवतैरिति । दैवतैरवदानैरनुसमयः, इदं सौविष्टकृदाद्युपलक्षकम् । कार्यः । पश्चात्सौविष्टकृतैरनुसमयः । ततः ऐडैरवदानैः ततो होम इति क्रमः । एककर्मत्वात् । एकप्रयोगत्वात् । पशुसंस्कारवत् ॥ ११ ॥

## मन्त्रस्य चार्थवत्त्वात् ॥ १२ ॥

मन्त्रस्येति । मन्त्रस्य, त्वं ह्यग्ने प्रथमो मनोतेति मन्त्रस्य अर्थवत्त्वात् । तन्त्रसंभवाद् लाघवरूपफलवत्त्वात् ॥ १२ ॥

नानाबीजेष्टौ उलूखलादीनां तन्त्रता । अधि· ७ ।

## नानाबीजे एकमुलूखलं विभवात् ॥ १३ ॥

राजसूये, अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुमिति । तत्र एकमुलूखलमुत प्रतिबीजं भिन्नं वेति संशयः । तदर्थं कृष्णाजिनास्तरणादितण्डुलनिष्पत्तिपर्यन्त एकः पदार्थः कृष्णाजिनास्तरणादयः पदार्थावयवाः उत ते ऽपि

पदार्था इति । तत्र सिद्धान्तेनोपक्रमते । नानेति । नानाबीजे उक्तकर्मणि एकमुलूखलम् । विभवात् । एकेनैवावहननसंभवात् ॥ १३ ॥

## विवृद्धिर्वा नियमादानुपूर्व्यस्य तदर्थत्वात् ॥ १४ ॥

पूर्वपक्षमाह । विवृद्धिरिति । विवृद्धिः उलूखलवृद्धिः । आनुपूर्व्यस्य पाठक्रमस्य नियमात् प्रकृतौ क्लृप्तत्वात् । अयं भावः । उलूखले हविरावापः तदव्यवहितोत्तरक्षणे अवहननं प्राप्तं हविषः प्रक्षेपावहननयोः तण्डुलस्य शूर्पेण परावापस्य च असति बाधके पदार्थानुसमयो युक्तः । कृष्णाजिनास्तरणादीनां पदार्थावयवत्वाभावात् । यावद्वीजानां हविरावपनमेकोलूखले न संभवत्यतः उलूखलवृद्धिरावश्यकीति । अत एवोक्तं तदर्थत्वात् । उलूखलस्य हविरावापार्थत्वात् । परस्परं बीजानां मेलनभिया वृद्धिरिति भावः ॥ १४ ॥

## एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥ १५ ॥

सिद्धान्तं व्यवस्थापयति । एकमिति । एकमुलूखलम् । एकबीजस्य तण्डुलभावात् । तण्डुलसिद्धिपर्यन्तं संपाद्य अपरबीजस्य तथा पर्यायेणानुष्ठानम् । अवपूर्वकहन्तेः तदर्थत्वात् तण्डुलनिष्पादकव्यापारलक्षणाया उलूखलाधिश्रयणमारभ्य तण्डुलनिष्पत्तिपर्यन्तक्रियाकलापार्थत्वात् । तावत्क्रियाकलाप एकः पदार्थः तेनानुसमय इति भावः ॥ १५ ॥

अग्नीषोमीयपशौ प्रयाजानूयाजयोः पात्रभेदः । अधि॰ ८ ।

## विकारे त्वनूयाजानां पात्रभेदोऽर्थभेदात् ॥ १६ ॥

पशौ अनूयाजार्थं पृषदाज्यं विहितं तदर्थं पात्रान्तरमुत प्रयाजहोमेन रिक्तायामुपभृति पश्चात्पृषदाज्यग्रहणमिति संशये उलूखलवत्पर्यायेणानुष्ठानमिति पूर्वपक्षे सिद्धान्तमाह । विकारइति । अनूयाजानां विकारे प्राकृतद्रव्यादन्यद्रव्यकत्वे पात्रभेदः पात्रवृद्धिः अर्थस्य द्रव्यस्य भेदात् । अष्टावुपभृतीति अष्टसंख्याकग्रहणस्यैकपदार्थतया तन्मध्ये न क्रियान्तरानुष्ठानमिति भावः ॥ १६ ॥

नारिष्टहोमस्योपहोमपूर्वत्वम् । अधि० ६ ।

## प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नानम् ॥ १७ ॥

नक्षत्रसत्रे प्रधानहोमानन्तरमुपहोमाः, अग्नये स्वाहा कृत्तिकाभ्यस्स्वाहेति वैकृताः पठिताः । प्रकृतितः नारिष्टहोमाः प्राप्ताः । तयोः समुच्चय इति दशमे वक्ष्यति । तत्र पूर्वापरभावविचारे सिद्धान्तमाह । प्रकृतेरिति । प्रकृतेः प्राकृतधर्माणां पूर्वोक्तत्वात् । उत्पत्तिवाक्यएव पूर्वपठितत्वात् । उत्पत्तिवाक्यश्रवणवेलायां कथंभावाकाङ्क्षापूरकतया प्रकृतिवदिति अध्याहृतत्वादिति भावः । अपूर्वं वैकृताङ्गमन्ते स्यात् । हि यतः अचोदितस्य अनुत्पन्नकर्मणः शेषाम्नानमङ्गपाठः संभवति । अतः उत्पत्त्यनन्तरमुत्पन्नकर्मणः सन्निधिपाठबलादङ्गत्वग्रहणं पाश्चात्त्यं, प्राकृतानां तूत्पत्तिवेलायामङ्गत्वग्रह इति प्राकृतानां पूर्वत्वमिति भावः ॥ १७ ॥

## मुख्यानन्तर्यमात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात्प्राकृतानां व्यवायः स्यात् ॥ १८ ॥

पूर्वपक्षरूपमात्रेयमतमाह । मुख्येति । आत्रेय आचार्यः वैकृतानां मुख्यस्य प्रधानस्य आनन्तर्यं प्राकृतात्पूर्वत्वं मनुते । तेन प्रधानेन तुल्यश्रुतित्वात् । यथा प्रधानस्य प्रत्यक्षश्रवणं तथा वैकृतानां प्रत्यक्षश्रुतत्वात् प्राथम्यम् । प्राकृतानां नारिष्टहोमानामशब्दत्वात् । आनुमानिकत्वेन विलम्बोपस्थितत्वात् । व्यवायः प्रधानेन साकं व्यवायः अन्तरायः स्यात् । व्यवधानं यथा तथाऽनुष्ठानमिति फलितम् ॥ १८ ॥

## अन्ते तु बादरायणः तेषां प्रधानशब्दत्वात् ॥ १९ ॥

बादरायणाचार्यमतं सिद्धान्तमाह । अन्ते त्विति । बादरायणः अन्ते प्राकृतधर्मान्ते वैकृतान् मनुते । तेषां प्राकृतानां प्रधानशब्दत्वात् । प्रधानविषयशाब्दविषयत्वात् । पूर्वोक्तदिशा उत्पत्तिवाक्यगम्यत्वादिति फलितम् ॥ १९ ॥

## तथा चान्यार्थदर्शनम् ॥ २० ॥

तथा चेति । तथा च पूर्वज्ञातस्य पूर्वमनुष्ठानमिति सिद्धौ च अन्य-

स्यार्थस्य दर्शनम्, आग्नेयं प्रथममग्निर्हि प्रथममवगत इति प्रथमानुष्ठाने प्रथमावगमस्य हेतुत्वं दर्शयति ॥ २० ॥

विदेवनादीनामभिषेकपूर्वत्वम् । अधि॰ १० ।

## कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगा-न्न्यायमात्रमितरत् ॥ २१ ॥

राजसूये, अक्षैर्दीव्यति शौनःशेपमाख्यापयति अभिषिञ्चतीति पाठक्रमः । माहेन्द्रस्तोत्रे प्रत्यभिषिञ्चतीत्यभिषेकस्यापकर्षे तावन्मात्रस्यापकर्षः दार्शिकवेदिवदिति पूर्वपक्षे सिद्धान्तमाह । कृतेति । कृतदेशाद् अभिषेचनीयाख्यसोमयागाङ्गभूतमाहेन्द्रस्तोत्रसमीपे माहेन्द्रस्तोत्रकॢप्तदेशाद् अभिषेकात्पूर्वेषां देवनादीनां स देशः स एव देशः स्यात् । तेन अभिषेकेण प्रत्यक्षसंयोगात् । अभिषेकात्पूर्वं प्रत्यक्षपाठात् । ननु अभिषेचनीयाख्यसोमयागोत्तरपाठोऽस्ति तदुत्तरपाठे तस्मिन्सोमयागे अतिदेशप्राप्तयावदङ्गोत्तरत्वं कॢप्तं विदेवनादीनां तदन्तापकर्षे अभिषेचनीयाङ्गत्वं विदेवनादिषु बाध्येतेत्यत आह । इतरत् । अभिषेचनीयाङ्गोत्तरत्वं न्यायमात्रं काल्पनिकं तदङ्गानां तत्पूर्वं पाठाभावादिदं दुर्बलं बाध्यतइति भावः ॥ २१ ॥

सावित्रहोमादीनां दीक्षणीयापूर्वत्वम् । अधि॰ ११ ।

## प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥

अग्निचयने प्रथमं वैकृतान् सावित्रहोमान् उखासंभरणादीन्पठित्वा पश्चात्प्राकृतदीक्षा विहिता, षड्भिर्दीक्षयतीति । अस्य सावित्रहोमात्प्रागनुष्ठानं नक्षत्रेष्टुपहोमन्यायादिति पूर्वपक्षे सिद्धान्तमाह । प्राकृतेति । यद् वैकृतं प्राकृतात्पुरस्तादग्रे पठितं तस्य स एव देशः । नारिष्ठहोमास्त्वयन्तमपठिता इति वैषम्यम् ॥ २२ ॥

याजमानसंस्काराणां रुक्मप्रतिमोकात्पूर्वभावित्वम् । अधि॰ १२ ।

## सन्निपातश्चेद्यथोक्तमन्ते स्यात् ॥ २३ ॥

चयनएव दीक्षणीयहोमानन्तरं, चोदकतः दीक्षितसंस्कारः प्रत्यक्षवचनपाठक्रमेण रुक्मधारणं च प्राप्तम् । तयोर्मध्ये वैकृतं रुक्मधारणं

प्रथमं, सावित्रहोमन्यायादिति पूर्वपक्षे सिद्धान्तमाह । सन्निपात इति । सन्निपाते प्राकृतवैकृतसन्निपाते यथोक्तं प्रत्यक्षश्रुतं हनुधारणमन्ते स्यात् । अयं भावः । दीक्षाहोमानन्तरं दीक्षितसंस्काराणामुपस्थितानामनुष्ठानानन्तरं हनुधारणे कृते ऽपि दीक्षोत्तरत्वबोधकः पाठो न विरुध्यते । दीक्षायाः सावित्रपाठात्प्रागनुष्ठाने सावित्रहोमोत्तरत्वबोधकः तदुत्तरपाठो विरुध्यतइति वैषम्यमिति ॥ २३ ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां पञ्चमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

प्रयाजादीनामेकादशादिसंख्यायाः सर्वसंपाद्यत्वम् । अधि॰ १ ।

## विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥

अग्नीषोमीयपशौ श्रूयते, एकादश प्रयाजान्यजतीति । अत्र एकादशत्वसंख्यायाः प्रतिप्रयाजमन्वयः उत समुदायइति संशये पूर्वपक्षमाह । विवृद्धिरिति । पृषदाज्येनानूयाजान्यजतीत्यत्र पृषदाज्यस्य यथा प्रत्येकमन्वयं तथा एकादशत्वस्य प्रत्येकमन्वय उपदिश्येत । तथा च समिदादिकर्मणां भेदात्तदनुसारेण विवृद्धिः पञ्चपञ्चाशत्प्रयाजा इत्यर्थः । प्रयाजोद्देशेन संख्याविधानादुद्देश्यगतसाहित्यस्य अविवक्षणात् प्रत्येकं संख्यान्वय इति भावः ॥ १ ॥

## अपि वा सर्वसंख्यत्वाद्विकारः प्रतीयेत ॥ २ ॥

सिद्धान्तमाह । अपि वेति । एकादशत्वसंख्यायाः सर्वसंख्यत्वात् समुदायवृत्तिसंख्यारूपत्वात्तस्य समुदायस्य विकारः आवृत्तिः प्रतीयेत । यथा इतरानिरपेक्षतया पृषदाज्यस्य प्रत्येकमन्वयः संभवति तथा संख्याया अन्वयो न संभवति । एकस्यां व्यक्तावेकादशत्वान्वयासंभवादिदमेव वैषम्यमिति भावः ॥ २ ॥

प्रथमादीनां तिसृणामुपसदां स्वस्थानावृत्तिः । अधि॰ २ ।

## स्वस्थानात्तु विवृध्येरन्कृतानुपूर्व्यत्वात् ॥ ३ ॥

क्व चित् षडुपसद इति श्रुतम् । तत्राभ्यासेन संख्यापूरणमिति पूर्वाधिकरणे स्थितम् । तत्र तिसृणामुपसदां द्विरावृत्त्या षट्त्वमुत प्रत्येकमेकैकस्य द्विरावृत्त्या षट्त्वमिति संशये, अनुवाको द्विवारं पठनीयमि-

त्युक्ते निखिलो ऽनुवाको द्विवारं पठ्यते, तथा निखिलोपसदां द्विरावृत्तिरिति पूर्वपक्षे सिद्धान्तमाह । स्वेति । कृतानुपूर्व्यत्वात् प्रकृतौ कॢप्तक्रमत्वात् स्वस्थानाद् विवृध्येरन् । प्रकृतौ प्रथमोपसदनन्तरं द्वितीयोपसत् तदुत्तरं तृतीयोपसत् तदनन्तरं प्रवर्ग्योद्वासनम् एवं क्रमः । प्रथमदिने प्रथमोपसदो द्विरावृत्तौ तथैव द्वितीययोरनुष्ठाने प्राकृतक्रमो न बाध्यते । समुदायावृत्तौ तृतीयोपसदनन्तरं प्रवर्ग्योद्वासनं त्यक्त्वा प्रथमोपसदनुष्ठाने कॢप्तक्रमबाध इति भावः ॥ ३ ॥

सामिधेनीषु आगन्तूनामन्ते निवेशः । अधि० ३ ।

## समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥ ४ ॥

प्रकृतौ नित्यत्वेन पञ्चदश सामिधेनीरुक्त्वा ततः एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येति श्रुतं, तत्संख्यासंपत्तये ऋगागमो ऽस्ति । आगच्छन्तीनामृचां क्व समावेश इति प्रश्ने पूर्वपक्षमाह । समिध्येति । प्रकृतौ पञ्चदशसामिधेनीमन्त्रमध्यवर्तिनी या समिध्यमानपदघटिता ऋक् सा समिध्यमानवती समिध्यमानो अध्वर इति । या च समिद्धपदवती समिद्धो अग्नआहुतेति । तयोः अन्तरेण मध्ये धाय्याः । धीयन्त इति धाय्याः । आगन्तुका ऋचः स्युः । तयोरन्तरालविधायकवाक्यशेषभूतार्थवादे द्यावापृथिवीमध्यत्वेन स्तुतत्वात् । स्तुतिवाक्यं च, इयं वै समिध्यमानवती असौ समिद्धवती यदन्तरा तद्धाय्येति स्तुतिवाक्येन सर्वेषां धाय्यापदवाच्यानामागन्तूनामुभयमध्यवर्तित्वेन स्तुतेरिति भावः ॥ ४ ॥

## तच्छब्दा वा ॥ ५ ॥

सिद्धान्तमाह । तदिति । तच्छब्दाः पृथुपाजवत्यौ धाय्ये इति वेदे यत्र प्रयुक्ताः तच्छब्दाः तद्वाचका धाय्याशब्दाः न तु योगेन सर्वासामागन्तूनां वाचकाः रूढिर्योगमपहरतीति न्यायात् । पृथुपाजाद्योरेव तदन्तरालदेशः अन्यासामन्ते निवेशः ॥ ५ ॥

## उष्णिक्ककुभोरन्ते दर्शनात् ॥ ६ ॥

उक्तार्थे लिङ्गमप्याह । उष्णिगिति । त्रैधातवीयायाम् उष्णिक्क-

कुम्भो धाय्ये इति वचनेन उष्णिक्छन्दस्कस्य प्रसो अग्ने इति ऋचः, प्रहोत्रे पूर्व्यं वच इति ककुप्छन्दसश्च सामिधेनीवचना। तयोः समिद्ववत्योः, अन्तरदेशं दर्शयित्वेति शेषः। अधाय्याया: अग्ने त्री ते वाजिनेति त्रिष्टुप्छन्दसः, त्रिवत्या परिदधातीति वचनेनान्ते दर्शनात्। इतरथा त्रिवत्या अपि धीयते इति योगेनान्तरैव प्राप्तौ त्रिवत्या परिदधातीत्यनेनान्ते निवेशनं विरुध्येतेति भावः॥ ६॥

बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालता। अधि० ४।

## स्तोमविवृद्धौ पुरस्तात्पर्यासादागन्तवः स्युः तथा हि दृष्टं द्वादशाहे॥ ७॥

ज्योतिष्टोमे बहिष्पवमाने त्र्यस्तृचाः। तेषां नामानि स्तोत्रीयः अनुरूपः पर्यासश्चेति। एवं प्रकृतिस्थितिः। एवमेकविंशेनातिरात्रेण प्रजाकामं याजयेदिति स्तोमवृद्धिः श्रूयते। सा वृद्धिः ऋगागमेन पूरणीयेति दशमे वक्ष्यते। द्वादशाहे स्तोत्रीयानुरूपयोरनन्तरमागन्तुका ऋचः वृषण्वत्यः पठिताः। पाठक्रमेण अनुरूपानन्तरं पर्यासात्प्राक् स्थानं क्लृप्तम्। तथैव क्लृप्त्या सर्वागन्तूनामन्यत्रापि पर्यासांशात्प्रागेव निवेश इत्यभिप्रायेण पूर्वपक्षमाह। स्तोमेति। सूत्रार्थः पूर्वग्रन्थेनावगतप्रायः॥ ७॥

## पर्यास इति चान्ताख्या॥ ८॥

पर्यासशब्दार्थमाह। पर्यास इति। अन्ताख्या अन्तपर्यायः॥ ८॥

## अन्ते वा तदुक्तम्॥ ९॥

सिद्धान्तमाह। अन्तइति। आगन्तूनामन्त निवेश इत्युक्तं प्राग्, अन्ते तु बादरायण इति सूत्रेण॥ ९॥

## वचनात्तु द्वादशाहे॥ १०॥

ननु द्वादशाहे कथं मध्ये निवेश इत्यत आह। वचनादिति। तत्सन्निधिपठितं तत्रैव विश्रान्तमिति भावः॥ १०॥

## अतद्विकारश्च॥ ११॥

अतिदेशेन प्राप्तिभ्रमं दूरीकरोति। अतदिति। उक्तस्य प्रतिष्ठाकामं याजयेदित्यस्य द्वादशाहविकृतित्वाभावाद् नातिदेशः॥ ११॥

## तद्विकारे ऽप्यपूर्वत्वात् ॥ १२ ॥

ननु द्वादशाहप्रकृतिके आगन्तूनामन्ते निवेशो ऽस्तु तत्प्रकृतिके अहीनसत्रादौ पर्यासस्थाने निवेशः स्यादित्यत आह । तदिति । तद्विकारे ऽपि अहीनसत्रादौ वृषण्वत्यतिरिक्तानामृचामन्तएव निवेशः । अपूर्वत्वाद् अकृप्तस्थानत्वात् । अयं भावः । वृषण्वतीनां पाठक्रमेण स्थानस्य पर्यासप्राग्देशरूपस्य क्लृप्तत्वात्तत्स्थानविशिष्टानां तासामतिदेशः । तद्भिन्नानामपूर्वाणामृचां तत्स्थाने मानाभावादन्तएव निवेश इति ॥ १२ ॥

बहिष्पवमाने आगन्तूनां साम्नां मध्ये निवेशः । अधि· ५ ।

## अन्ते तूत्तरयोर्दध्यात् ॥ १३ ॥

विवृद्धस्तोमकक्रतुषु माध्यन्दिनसवनार्भवपवमानयोः सामागमो न ऋगागम इति दशमे वक्ष्यते । तत्रागन्तूनां साम्नामन्ते मध्ये वा निवेश इति संशये पूर्वपक्षमाह । अन्तइति । उत्तरयोर्माध्यन्दिनार्भवपवमानयोः । आगन्तव इति स्तोमविवृद्धाविति सूत्रान्मण्डूकप्लुत्या ऽनुवर्तते । अन्ते दध्याद् योजयेत् । लिङ्गव्यत्यासेन विभक्तिव्यत्यासेन च नपुंसकं द्वितीयाविभक्तिरूपम् आगन्तूनीति ॥ १३ ॥

## अपि वा गायत्रीबृहत्यनुष्टुप्सु वचनात् ॥ १४ ॥

सिद्धान्तमाह । अपि वेति । गायत्रीत्रिष्टुबनुष्टुप्सु सामावापः नान्यच्छन्दस्कासु वचनात् । त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् चात्र ह्येवावपन्त्यत एवोद्वपन्तीति वचनात् ॥ १४ ॥

ग्रहेष्टकादीनां क्रत्वग्निशेषत्वम् । अधि· ६ ।

## ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ १५ ॥

अदाभ्यं गृह्णाति अंशुं गृह्णातीत्यनारभ्य श्रुतम् । एषां ग्रहाणां प्रकृतौ समावेश इति तथा चित्रिणीरुपदधाति वज्रिणीरुपदधातीत्यासामिष्टकानामपि चयने समावेश इति च तृतीये स्थितम् । तथा ऽपि ग्रहाणामदाभ्यादीनि सवनाङ्गम् । तथा उदाहृता इष्टकाः चित्यङ्गं ग्रहैः

सवनानामिष्टकाभिः चितेश्च जघन्यत्वाद् इत्यभिप्रायेण पूर्वपक्षमाह । यहेति । औपानुवाक्यमनारभ्य पठितम् । शेषं स्पष्टम् ॥ १५ ॥

## क्रत्वग्निशेषा वा चोदितत्वादचोदना तु पूर्वस्य ॥ १६ ॥

सिद्धान्तमाह । क्रत्वग्नीति । क्रतुशेषाः उक्तग्रहा, अग्निशेषा इष्टकाः चोदितत्वात् । यो ऽदाभ्यं गृहीत्वा यजते इति यागाङ्गत्वस्य, इष्टकाभिरग्निं चिनुतइति द्वितीयाश्रुत्येष्टकासामान्यं प्रति अग्नेः प्राधान्यस्य च चोदितत्वात् । पूर्वसवनचित्यङ्गत्वस्य अचोदना प्रमाणगम्यत्वाभावः ॥ १६ ॥

चित्रिण्यादीनां मध्यमचितावुपधानम् । अधि· ७ ।

## अन्ते स्युरव्यवायात् ॥ १७ ॥

भवत्वग्न्यङ्गत्वमेतासामुपधानं यावदन्ते । क्लृप्तक्रमैः पदार्थैरव्यवधानं संपद्यतइत्यभिप्रायेण पूर्वपक्षमाह । अन्तइति । स्पष्टम् ॥ १७ ॥

## लिङ्गदर्शनाच्च ॥ १८ ॥

उक्तार्थे लिङ्गमप्याह । लिङ्गेति । आवपनं वा उत्तमा चितिरन्या अन्या उपदधाति । आवपनं निराश्रितानां निवासस्थानम् ॥ १८ ॥

## मध्यमायां तु वचनाद्ब्राह्मणवत्यः ॥ १९ ॥

सिद्धान्तमाह । मध्यमायामिति । याः ब्राह्मणवत्यः लिङ्गक्रमसमाख्याभिरक्लृप्तस्थानाः केवलं ब्राह्मणवाक्यविहितमात्राः ताः मध्यमचितौ वचनात् । यां कां चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायामुपदध्यादिति वचनात् ॥ १९ ॥

लोकंपृणातः पूर्वं चित्रिण्याद्युपधानम् । अधि· ८ ।

## प्राग् लोकंपृणायाः तस्याः संपूरणार्थत्वात् ॥ २० ॥

भवतु मध्यमचितौ, तत्रापि सर्वान्ते अव्यधानायेति पूर्वपक्षे सिद्धान्तमाह । प्रागिति । लोकंपृणेष्टकाभ्यः प्राक्, तस्याः लोकंपृणायाः संपूरणार्थत्वाच् छिद्रपूरणार्थत्वात् । लोकंपृणानन्तरमुपधाने आसां छिद्रपूरकाभावेन सच्छिद्रमेवेदं स्यादिति भावः ॥ २० ॥

इष्टिसंस्कृताग्नावग्निहोत्राद्यनुष्ठानम् । अधि० ६ ।

## संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ २१ ॥

केवलमाधानमात्रे जाते पवमानेष्टेः प्रागप्यग्निहोत्राद्यनुष्ठेयमिति तत्सूत्रे पूर्वपक्षे सिद्धान्तमाह । संस्कृतइति । संस्कृते यावत्संस्कारसंस्कृते वस्तुनि सति पश्चात्कर्म अग्निहोत्रादिरूपं संस्कारस्य कर्मार्थत्वात् । आधानपवमानेष्टिभ्यामावहनीयसिद्धौ पश्चात्तस्मिन्होम इति भावः ॥ २१ ॥

## अनन्तरं च व्रतं तद्भूतत्वात् ॥ २२ ॥

ननु आहिताग्निर्न क्लिन्नं दार्वभ्यादध्यादित्यादीनि आहिताग्निकर्तृकाणि व्रतानि तान्यपि पवमानेष्ट्यनन्तरं स्युरित्यत्राह । अनन्तरमिति । अनन्तरमाधानानन्तरं व्रतं तस्य आधानस्य भूतत्वाद् उत्पन्नत्वात् । आहिताग्निर्न क्लिन्नमिति पूर्वोदाहृतवाक्येन आहितः आधानसंस्कृतः अग्निर्यस्येति व्रतनिमित्तत्वेन आधानस्यैव ग्रहणादिति भावः ॥ २२ ॥

## पूर्वं च लिङ्गदर्शनात् ॥ २३ ॥

नन्वग्निं वै सृष्टमग्निहोत्रेणानुद्रवन्तीत्यर्थवादलिङ्गं प्रागिष्टेरग्निहोत्रं द्रढयतीति पूर्वपक्ष्याशङ्कते । पूर्वमिति । पूर्वमिष्टेः पूर्वमग्निहोत्रमुक्तलिङ्गात् ॥ २३ ॥

## अर्थवादो वा ऽर्थस्य विद्यमानत्वात् ॥ २४ ॥

समाधत्ते । अर्थेति । अर्थस्य अग्निहोत्रस्य आधानाङ्गभूतस्य तूष्णीं विहिताग्निहोत्रस्य विद्यमानत्वात् । तदर्थवादः, न नित्याग्निहोत्रप्राप्त्यर्थः ॥ २४ ॥

## न्यायविप्रतिषेधाच्च ॥ २५ ॥

न्यायस्य आधानाङ्गभूताग्निहोत्रार्थवादस्यमीमांसारूपस्य विप्रतिषेधाद् विरोधात् । तथा हि ब्रह्मवादिनो वदन्ति होतव्यमग्निहोत्रं न होतव्यमिति यद्यजुषा जुहुयाद् अयथापूर्वमाहुतिं जुहुयाद् यच्च

जुहुयाद् अग्निः पराभवेत् तूष्णीमेव होतव्यम् इति । अत्र यजुषा होमपक्षे अयथापूर्वमिति दोषो दत्तः यथापूर्वं सर्वसंमतः पवमानेष्ट्युत्तरं यजुषा अग्निहोत्रहोमः तद्विरुद्धः स्यादिति दूषणदानेन पवमानेष्टेः प्राग् यजुषा होमो न सर्वसंमत इति न्यायविप्रतिषेधो ज्ञेयः ॥ २५ ॥

अग्निचिद्वर्षणादिव्रतानां क्रत्वन्ते ऽनुष्ठानम् । अधि॰ १० ।

## संचिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ २६ ॥

अग्निचिद्वर्षति न धावेदिति अयं नियमः केवलं चित्युत्तरमुत चितावनुष्ठितक्रतूत्तरमिति संशये पूर्वपक्षमाह । संचितइति । अग्निचिद्युक्तम् । अग्निचित्पदयुक्तवाक्यविहितं व्रतं संचिते चयनमात्रनिर्वृत्तौ सत्यां कार्यं निमित्तस्य चयनानुष्ठानरूपस्य प्रापणात् । प्राप्तत्वात् । आधानव्रतवत् ॥ २६ ॥

## क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २७ ॥

सिद्धान्तमाह । क्रत्वन्तइति । क्रत्वन्ते चित्यधिकरणक्रत्वन्ते व्रतानि चितिप्रयोगवचनाभावात् । चितेर्यः प्रयोगः अनुष्ठानं तद्बोधकशब्दाभावात् । अयं भावः । अग्निचिदित्यत्र, अग्नौ चेरिति पाणिनिसूत्रं, चितिरूपे ऽग्नौ तत्साध्यकर्मणि क्रतौ निवृत्ते तस्मात्चिधातोः क्विप् कर्तरि स्यादित्यर्थः । इत्थं चाग्निचित्कर्तृकव्रतमिदं, क्रत्वनुष्ठानं विना ऽग्निचित्पदप्रवृत्तिनिमित्तमेव नास्तीति क्रत्वनुष्ठानात्प्राग् न वर्षति धावननिषेधः । पूर्वाधिकरणे आहिताग्निकर्तृकनियमः । तत्राहितपदेन पवमानेष्ट्यन्तानुष्ठानार्थाहितशब्दप्रयोग इत्यत्र नानुशासनमिति वैषम्यमिति ॥ २७ ॥

## अग्नेः कर्मत्वनिर्देशात् ॥ २८ ॥

उक्तार्थे युक्त्यन्तरमाह । अग्नेरिति । य एवं विद्वानग्निं चिनुत इत्यत्र अग्निपदोत्तरद्वितीयाश्रवणेन अग्निरीप्सिततमः प्रतीयते चयनेनाग्निं भावयेदिति । अयं भावः अग्नेः कर्मत्वनिर्देशादुक्तदिशा आग्न्यर्थत्वे चयनस्य सिद्धे तदर्थत्वं च न तदुत्पादकत्वं प्रत्यक्षविरोधात् । किं तु अग्निना कार्ये क्रतुरूपे जननीये सहकारितया । सहकारित्वमपि साङ्ग

तुसमाप्तिपर्यन्तमग्न्याधारतया । अतः साङ्गप्रधानसाधनभूताग्न्याधारतानिमित्तं चिद् इत्यनेन प्राप्तम् । तन्निमित्तं क्रतूत्तरमेव संपद्यतइति ॥ २८ ॥

दीक्षाया इष्टिसिद्धत्वम् । अधि० ११ ।

## परेणावेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिसंबन्धात् ॥ २९ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति, दण्डेन दीक्षयतीति, दीक्षितो न ददाति न जुहोतीत्यादयो दीक्षितनियमाः सर्वान्तइतेष्ट्यन्तइति संशये पूर्वपक्षमाह । परेणेति । परेणाध्वर्युणा आवेदनान्निर्देशादूर्ध्वमदीक्षिष्टायं ब्राह्मण इति निर्देशादूर्ध्वमित्यर्थः । दीक्षितः स्यात् । सर्वैः पूर्वोदाहृतवाक्यैः दीक्षाभिसंबन्धात् । दीक्षारूपक्रियया संबन्धप्रतिपादनात् । विनिगमकाभावादिति भावः ॥ २९ ॥

## इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसंबन्धात् ॥ ३० ॥

सिद्धान्तमाह । इष्ट्यन्तइति । दीक्षणीयेष्ट्यन्तएव दीक्षितः । हि यतः तदर्था दीक्षितत्वसंपादनार्था सेष्टिः क्रियार्थक्रियायां विधीयमानत्वटः श्रवणादिति भावः । दण्डेन दीक्षयतीत्यत्र अविशेषेण क्रियाविशेषशून्येन अर्थेन द्रव्यरूपार्थेन संबन्धात् । अयं भावः । दीक्षितत्वमलौकिको धर्मः तदुत्पादने क्रियैव समर्था न दण्डादिरूपं द्रव्यं, क्रियायामपि तदुत्पादकत्वं शास्त्रैकगम्यं दीक्षिष्यमाण इत्यत्र लटा इष्ट्याः कार्यं तदिति प्रतिपत्तुं शक्यते । दण्डेन दीक्षयतीत्युक्ते दण्डस्यायोग्यत्वात्क्रियाविशेषस्याश्रवणाद्वैषम्यमिति । इदमुपलक्षणं धारणरूपक्रियाद्वारा तस्य जनकत्वे यावत्कालं शास्त्रे धारणं विहितं तदुत्तरमेव तदुत्पत्तिरिति वक्ष्यतया मेखलया यजमानं दीक्षयतीति मेखलाधारणस्यावभृथपर्यन्तं सत्त्वात्तदुत्तरमेव दीक्षितनियमाः स्युः ॥ ३० ॥

## समाख्यानं च तद्वत् ॥ ३१ ॥

यथोक्तयुक्त्या दीक्षितत्वसंपादकत्वमिष्टौ तद्वद् दीक्षणीयेति समाख्यानमपि तत्साधकम् ॥ ३१ ॥

काम्येष्टीनामनियमेनानुष्ठानम् । अधि० १२ ।

## अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ ३२ ॥

ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इत्यादिकाम्येष्टयः क्रमेण पठिताः। तासामनुष्ठानं पाठक्रमेण उत यथेच्छमिति संशये पूर्वपक्षमाह । अङ्गवदिति । क्रतूनां काम्येष्टीनामानुपूर्व्यं पाठक्रमेणानुष्ठानम् अङ्गवत्प्रयाजादिवत् ॥ ३२ ॥

## न वा ऽसंबन्धात् ॥ ३३ ॥

सिद्धान्तमाह । नेति । न पाठक्रमः असंबन्धात् तेषां परस्परमसंबन्धात्प्रयोगभेदादिति भावः ॥ ३३ ॥

## काम्यत्वाच्च ॥ ३४ ॥

काम्यत्वात् । यथा पाठः तेनैव क्रमेण तत्तदिच्छा भवतीत्यत्रापि मानाभावादिति भावः ॥ ३४ ॥

## आनर्थक्यान्नेति चेत् ॥ ३५ ॥

ननु क्रमेण पाठानर्थक्यमाशङ्कते । आनर्थक्यादिति । न, यथेच्छक्रमो न इति चेत् ॥ ३५ ॥

## स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३६ ॥

क्रमपाठस्य अपूर्वजनकत्वेन सार्थकतां दर्शयति । स्यादिति । स्पष्टो ऽर्थः ॥ ३६ ॥

यज्ञानामग्निष्टोमपूर्वकत्वम् । अधि० १३ ।

## य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥

एष वाव प्रथमो यज्ञो यज्ज्योतिष्टोमस्तदेतेनानिष्ट्वाथान्येन यजेतेत्यत्र एतच्छब्देन सप्तसंस्थाग्रहणमुत ज्योतिष्टोमग्रहणमिति संशये पूर्वपक्षस्यातिशिथिलतयोत्तरपक्षमाह । य एतेनेति । स्पष्टो ऽर्थः ॥ ३७ ॥

## लिङ्गाच्च ॥ ३८ ॥

उक्तार्थे लिङ्गमाह । लिङ्गाच्चेति । लिङ्गमेवं पूर्वोदाहृतवाक्यशेषः श्रूयते, तस्य नवतिशतं स्तोत्रीया इति । नवत्युत्तरशतमित्यर्थः । एतत्संख्यासंपत्तिश्चेत्थम् । बहिष्पवमानस्य त्रिवृत्त्वात् स्तोत्रीयाः ९ । एकैका-

ज्यस्तोत्रस्य पञ्चदशेति चतुर्णामाज्यस्तोत्राणाम् ६० । माध्यंदिने पवमाने १५ । पृष्ठस्तोत्राणि चत्वारि एकैकस्य सप्तदशेति मिलित्वा ६८ । आर्भवपवमाने संख्या १७ । यज्ञायज्ञीये २१ । एवं च नवत्युत्तरं शतम् । इदं लिङ्गं ज्योतिष्टोमातिरिक्ते नास्त्यतो ऽपि एतच्छब्दवाच्यो ज्योतिष्टोम इति भावः ॥ ३८ ॥

ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकत्वम् । अधि० १४ ।

## अथान्येनेति संस्थानां सन्निधानात् ॥ ३९ ॥

पूर्वोदाहृतवाक्ये, नान्येन यजेतेत्यत्रान्यशब्दः सप्तसंस्थामात्रपरः सत्राहीनादिसाधारणो वेति संशये पूर्वपक्षमाह । अथेति । यथा एतद्घटान्यमानयेत्युक्ते ऽपि एतद्घटभिन्नं स्वगेहस्थमेवानयति न गेहान्तरस्थं, तथा प्रकृते ऽपि ज्योतिष्टोमान्या ज्योतिष्टोमसन्निहिताः संस्था एवेति भावः ॥ ३९ ॥

## तत्प्रकृतेर्वा ऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते ॥ ४० ॥

सिद्धान्तमाह । तत्प्रकृतेरिति । सः ज्योतिष्टोमः प्रकृतिर्यस्य यस्य तावतां सर्वेषामन्यशब्देन ग्रहणम् । हि यतः, आपत्तिः अन्यस्य यत्स्वातन्त्र्यं तत्प्राप्तिः, विहारः अन्यपदार्थैरन्यस्योपभोगः । तुल्येषु स्वामिवेषु भेदाघटितसादृश्यवत्सु नोपपद्यते । अयं भावः । ज्योतिषां त्रिवृत्पञ्चदशसप्तदशैकविंशादिरूपाणां स्तोमो यत्रेति व्युत्पत्त्या ज्योतिष्टोमपदवाच्याः सर्वाः संस्थाः तथा ऽपि येन स्तोत्रेण क्रतुसमाप्तिः तन्नाम्ना व्यवहारः । ज्योतिष्टोमत्वं च सप्तसंस्थासाधारणं रूपम् । एतेनेत्यनेन प्रथमसंस्थारूपस्याग्निष्टोमस्यैव ग्रहणमिति सिद्धम् । तत्प्रतियोगिकभेदवानित्यनेन शेषसंस्थानां षण्णामेव ग्रहणे ज्योतिष्टोमनिष्ठस्वातन्त्र्यप्राप्तिरूपापत्तेरन्यभोगसाधनैरवश्योपभोगरूपविहारस्य चार्थवादेन कथनं विरुध्यते । प्रजापतिर्वा अग्निष्टोमः उत्तरानेकाहानसृजत ते सृष्टा अब्रुवन्न वै प्रभवाम इति तेभ्यः स्वातन्त्र्यं प्रायच्छत्तया च ते प्राभवन्निति । आपत्तिः प्राप्तिः । यथा वा अग्नेर्जाता अन्ये ऽग्नयो विह्रियन्त एवं वा एतस्माद्यज्ञादन्ये क्रतवो विह्रियन्त इति । एतस्माज्ज्योतिष्टोमादन्ये क्रतवः

विह्रियन्ते शोभन्ते । ज्योतिष्टोमादङ्गानवाप्य शोभन्ते इति स्तुतिः विहारप्राप्तिरूपा अहीनसत्रादिष्वन्यशब्देन गृह्यमाणेषु तेषां ज्योतिष्टोमान्यत्वादन्यस्मिन् ज्योतिष्टोमे यत्स्वातन्त्र्यमितरनिरपेक्षफलजनकत्वं तद् अन्येषामहीनादीनामपीत्युपपद्यते । यदि संस्थामात्रं तदा तस्य ज्योतिष्टोमरूपत्वे तत्र स्वातन्त्र्यस्य क्लृप्तत्वेन तत्प्राप्तिकथनम् अनयैव दिशा विहारप्राप्तिकथनं च विरुध्येतेति ॥ ४० ॥

## प्रशंसा च विहरणाभावात् ॥ ४१ ॥

पूर्वपक्ष्याशङ्कते । प्रशंसेति । प्रशंसा केवलमविद्यमानगुणैः स्तुतिमात्रम् । कुतः, विहरणाभावात् । ज्योतिष्टोमाङ्गानां प्रकरणेन ज्योतिष्टोमएव विश्रान्तत्वेनोत्तरक्रतुषु तदसंक्रमात् । विहारपदमाप्तेरप्युपलक्षकम् । तस्याप्यभावात् पूर्वसूत्रेण तत्प्राप्तिविरोध इत्युक्तं तन्नेति भावः ॥ ४१ ॥

## विधिप्रत्ययाद्वा न ह्यकस्मात्प्रशंसा स्यात् ॥ ४२ ॥

समाधत्ते । विधीति । विधिप्रत्ययात् प्रकरणेन ज्योतिष्टोमे विश्रान्ता अपि प्रकृतिवत्कर्तव्यम् इत्यतिदेशविध्यनुभवात् तं गृहीत्वैव विहारप्रशंसा । तद्धर्माणां प्रापकशास्त्राभावे अकस्मात्प्रशंसा कथं स्यात् ॥ ४२ ॥

एकानेकस्तोमकानां सर्वेषामग्निष्टोमपूर्वकत्वम् । अधि॰ १५ ।

## एकस्तोमो वा क्रतुसंयोगात् ॥ ४३ ॥

अस्त्वन्यशब्दस्य ज्योतिष्टोमविकारपरत्वं तथाऽपि त्रिवृन्मात्रस्तोमको यः तथा पञ्चदशमात्रस्तोमकश्च यः एवमेकस्तोमका ये तेषामेव ग्रहणं नेतरेषामित्यभिप्रायेण पूर्वपक्षमाह । एकस्तोम इति । एकस्तोमे अन्यशब्दः । क्रतुसंयोगात् । अर्थवादे यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयतीति । त्रिवृत्स्तोमः अन्यं क्रतुं चोदकशास्त्रेण प्राप्नोति सः त्रिवृत्तं क्रतुं दीपयतीति एकस्यैव त्रिवृतः क्रतुना संबन्धात् ॥ ४३ ॥

## सर्वेषां वा चोदनाविशेषात्प्रशंसा स्तोमानाम् ॥ ४४ ॥

सिद्धान्तमाह । सर्वेति । अन्यपदेन सर्वेषां ग्रहणं चोदनाविशेषात् ।

अन्यशब्दशक्यार्थाविशेषात् । दीपयतीति स्तोमानां स्तुतिमात्रं, न हि सर्वक्रतुग्रहणे प्रशंसा विरुध्यते यतः संकोचः स्यात् ॥ ४४ ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां पञ्चमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वम् । अधि॰ १ ।

## क्रमकोपो ऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥

श्रुत्यर्थक्रमयोः पाठक्रमेण विरोधे, यथा ऽऽश्विनग्रहग्रहणे अग्निहोत्रयवागूपाके च, प्रमाणानां साम्यात्प्रबलदुर्बलभावे मानाभावाद्विकल्पेनानुष्ठानमिति पूर्वपक्षे सिद्धान्तमाह । क्रमेति । अर्थः पूर्वोदाहृतद्वितीयप्रमाणं शब्दः प्रथमं श्रुत्याख्यं प्रमाणं ताभ्यां क्रमप्रतिपादने क्रमकोपः पाठक्रमस्य बाधः स्यात् । श्रुतिविशेषात् । प्रत्यक्षश्रुतिगम्यत्वात् । अर्थपरत्वाद् अग्निहोत्ररूपार्थसाधकत्वेन यवागूपाकस्य तात्पर्यविषयत्वात् । पाठक्रमस्य आनुमानिकवाक्यगम्यत्वेन यवागूपाके फलकल्पनापत्त्या च दौर्बल्यमिति भावः ॥ १ ॥

मुख्यक्रमेणाग्नेयस्य पूर्वमवदानाद्यनुष्ठानम् । अधि॰ २ ।

## अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥

दर्शयागे दध्युत्पत्तौ पूर्वं प्रवृत्तिरस्ति पश्चात्पुरोडाशोत्पत्तौ, मन्त्रपाठक्रमेण प्रदानं त्वग्नेः पश्चादिन्द्रस्य । एवं सति तत्तद्धविरवदानादौ क्रमविप्रतिपत्तौ पूर्वपक्षमाह । अवदानेति । अवदाने हविषां प्रयाजशेषाभिघारे वेद्यामासादने च आनुपूर्व्यं क्रमः प्रवृत्त्या प्रथमप्रवृत्त्या स्यात् ॥ २ ॥

## यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥

सिद्धान्तमाह । यथेति । प्रदानक्रमेण अवदानादि तेषामवदानादीनां तदर्थत्वात् । प्रदानार्थत्वात् । मुख्यक्रमात्प्रवृत्तिक्रमो दुर्बल इति भावः ॥ ३ ॥

## लिङ्गदर्शनाच्च ॥ ४ ॥

लिङ्गेति । प्रयाजशेषाभिघारे प्रथमं ध्रुवामभिघारयेत्प्रथममाज्यभागौ हि यक्ष्यन्भवतीति । प्रथममाज्यभागयोरग्नीषोमयोः प्रदानं तदीयं द्रव्यं ध्रुवायामस्ति तदभिघारप्राथम्ये प्रथमप्रदानकथनं लिङ्गम् ॥ ४ ॥

दृष्टिसोमयोः पौर्वापर्यानियमः । अधि० ३ ।

## वचनादिष्टिपूर्वत्वम् ॥ ५ ॥

दर्शपूर्णमाससोमयागयोः पूर्वापरभावो नियतो न वेति संशये पूर्वपक्षमाह । वचनादिति । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति वचनादिष्टिपूर्वत्वम् ॥ ५ ॥

## सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात्तदर्थेनानर्थकं हि स्यात् ॥ ६ ॥

सिद्धान्तमाह । सोमश्चेति । एकेषां केषां चिद्यजमानानां सोमः सोमयागश्च पूर्वो भवति । अग्न्याधेयस्य य ऋतुः वसन्तादिः नक्षत्रं रोहिण्यादि तदतिक्रमवचनात् । सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेन नक्षत्रमिति तयोः त्यागवचनश्रवणात् । तदर्थेन पूर्वपक्षसिद्धार्थेन योगे कालबाधकमिदं वचनं निरर्थकमेव स्यात् । कालबाधे फलाभावात् । सोमस्याधानानन्तर्ये वसन्ते ज्योतिषा यजेतेति सोमकालानुरोधेनाधानस्य प्राप्तवसन्तादिकालबाधः सफल इति भावः ॥ ६ ॥

## तदर्थवचनाच्च नाविशेषात्तदर्थत्वं स्यात् ॥ ७ ॥

इतश्चाधानानन्तर्यं सोमस्येत्याह । तदिति । विशेषात् । सोमेन यक्ष्यमाण इतिविशेषवचनपूर्वतः तदर्थत्वात् सोमार्थत्वादाधानस्य तदर्थत्वं सोमार्थत्वं सोमेन कदा चिद्वा यक्ष्यमाण इति तात्पर्यं तदा इष्टिपशुबन्धादिभिः सर्वैरेव कदाचिद्यक्ष्यमाणत्वात्सोमो ऽपि तेभ्यो ऽविशिष्ट इति सोमेन यक्ष्यमाणो ऽग्नीनादधीतेत्यत्र यक्ष्यमाणान्तं पदं व्यर्थमेव स्यात् । तस्मात्तदाधानं केवलं सोमार्थं सत् स्वानन्तर्यमेव सोमस्य ज्ञापयतीति भावः ॥ ७ ॥

## अयक्ष्यमाणस्य च पवमानहविषां कालविधानादानन्तर्याद्विशङ्का स्यात् ॥ ८ ॥

साधकान्तरमाह । अयक्ष्यमाणस्येति । यो ऽयक्ष्यमाणो ऽग्निमादधीत स पुरा संवत्सरात्पवमानहवींषि निर्वपेदिति । अयक्ष्यमाणः सोमेनेत्यर्थः । अनेन वचनेन पवमानहविषां सोमयागकर्तृत्वाभावे निमित्ते

कालविशेषो विधीयते । यावज्जीवं सोमयागकर्तृत्वाभाववान् पवमाने-ष्ट्यधिकारी न शास्त्रतः प्रसिध्यति सोमयागस्य नित्यत्वात् । तस्माद-नन्तरमयक्ष्यमाण इत्येव तदर्थो वाच्यः । तथा चेदृशकालविधानाद् आनन्तर्यात् सोमयागस्याधानानन्तर्याद् विशङ्का संशयाभावः स्यात् ॥ ८ ॥

## इष्टिरयक्ष्यमाणस्य तादर्थ्येन सोमपूर्वत्वम् ॥ ९ ॥

एतदधिकरणफलमाह । इष्टिरिति । सोमेनानन्तरमयक्ष्यमाणस्य पूर्वमिष्टिः तादर्थ्येन सोमार्थत्वेन यक्ष्यमाणस्य इष्ट्याः सोमपूर्वत्वमिति विचारफलम् ॥ ९ ॥

ब्राह्मणस्याग्नीष्टिसोमयोः पौर्वापर्यानियमः । अधि॰ ४ ।

## उत्कर्षाद्ब्राह्मणस्य सोमः स्यात् ॥ १० ॥

सोमपूर्वत्वविकल्पे ब्राह्मणस्य सोमपूर्वत्वं नियतं न वेति संशये पूर्वपक्षमाह । उत्कर्षादिति । ब्राह्मणस्येष्टेः पूर्वं नियमेन सोमः स्यात् । अग्नीषोमीयस्य वचनादुत्कर्षात् । आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वा ऽग्नीषोमीयो भवतीति यदेवादः पौर्णमासं हविः तदनुनिर्वपेदुभयदेवत्यो भवतीति वचनेन सोमोत्तरमग्नीषोमीयस्योत्कर्षात् । अग्नीषोमयागं विना शेषयागैः फलानुत्पत्तेः षड्यागानामुत्कर्ष इति भावः ॥ १० ॥

## पौर्णमासी वा श्रुतिसंयोगात् ॥ ११ ॥

पूर्वपक्षान्तरमाह । पौर्णमासीति । केवलं पौर्णमासत्रिकम् उत्कृ-ष्यते श्रुतिसंयोगात् । पूर्वोक्तवचने पौर्णमासं हविरनुनिर्वपेदिति श्रव-णात् ॥ ११ ॥

## सर्वस्य चैककर्मत्वात् ॥ १२ ॥

प्रथमपूर्वपक्षं दृढयति । सर्वेति । सर्वस्य षड्यागसमूहस्य उत्कर्षः एककर्मत्वाद् एकस्मिन्फले समुच्चयेन जनकत्वात् ॥ १२ ॥

## स्याद्वा विधिः तदर्थेन ॥ १३ ॥

पक्षद्वयमसहमानः तृतीयं पूर्वपक्षमाह । स्यादिति । तदर्थेन ज्यो-तिष्टोमार्थेन ज्योतिष्टोमाङ्गत्वेन विधिः अपूर्वकर्मविधिः स्यात् पौर्णमा-सनामकमपूर्वं कर्म विधीयतइति भावः ॥ १३ ॥

## प्रकरणात्तु कालः स्यात् ॥ १४ ॥

प्रथमपक्षमाह । प्रकरणादिति । प्रकरणाद् दर्शपूर्णमासप्रकरणात् कालः सोमयागोत्तरत्वरूपः कालविधिः स्यात् । प्रकरणबाधभिया तदुत्तरत्वरूपकालविधिमङ्गीकृत्य दर्शपूर्णमासयोरुभयोरुत्कर्षो न्याय्य इति भावः ॥ १४ ॥

नर्तुं प्रतीक्षेदित्यादिना सोमकालबाधः । अधि॰ ५ ।

## स्वकाले स्यादविप्रतिषेधात् ॥ १५ ॥

एवं पूर्वपक्षे स्थिते अधिकरणान्तरमारभते । स्वेति । सोमेन यक्ष्यमाणो नर्तुंन्सूर्क्षेन्न नक्षत्रमित्यनेनाधानकालो बाध्यतउत सोमयागकाल इति संशये पूर्वपक्षसूत्रं, स्वेति । ज्योतिष्टोमः स्वकाले स्यात् । ज्योतिष्टोमस्य प्रधानत्वेन तत्कालस्याविप्रतिषेधात् । अङ्गभूताधानकालस्यैव बाध इति भावः ॥ १५ ॥

## अपनयो वाऽऽधानस्य सर्वकालत्वात् ॥ १६ ॥

सिद्धान्तमाह । अपनयो वेति । अपनयः प्रधानकालस्य बाधः । आधानस्य यद्येवैनं यज्ञउपनमेद् अथादधीतेति सोमानुष्ठानश्रद्धायामाधानकालो न शोध्य इत्यर्थकेन वचनेनाधानकालबाधे तस्य सर्वकालत्वात् । बाधितस्य पुनर्बाधासंभवादिति भावः ॥ १६ ॥

## पौर्णमास्यूर्ध्वं सोमाद्ब्राह्मणस्य वचनात् ॥ १७ ॥

पूर्वमुपक्रान्तपूर्वपक्षस्योत्तरं सिद्धान्तमाह । पौर्णमासीति । पौर्णमास्येव सोमादूर्ध्वं ब्राह्मणस्य वचनात् पूर्वोदाहृतवचनात् ॥ १७ ॥

## एकं वा शब्दसामर्थ्यात्प्राक्कृत्स्नविधानम् ॥ १८ ॥

पौर्णमासं हविरपि न कृत्स्नमेकमग्नीषोमीयमेव । शब्दस्य पूर्वोक्तवचने अदःशब्दस्य सामर्थ्यात् । अदः पौर्णमासमित्यनेन समीपवृत्तिन एव निर्देशादिति भावः । अतः प्राक् सोमात्प्राक् कृत्स्नस्य अग्नीषोमातिरिक्तस्य सर्वस्य विधानमनुष्ठानम् ॥ १८ ॥

आज्यस्य सोमादनुत्कर्षः । अधि॰ ६ ।

## पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ १९ ॥

नन्वग्निर्वै ब्राह्मण इति पूर्वोदाहृतवाक्ये केवलाग्नेरप्युपक्रमाद्-दःशब्देन तदपि कुतो न गृह्यतइत्यत आह । पुरोडाश इति । पुरोडाशः आग्नीषोमीयपुरोडाशः तद्युक्ते अग्नियुक्ते सोमे देवतात्वसत्त्वात् । अनिर्देशे पूर्ववाक्ये उभयदेवत्यो भवतीति निर्देशेन एकदेवताकहविषः अनिर्देशात् । न केवलाग्नेरुत्कर्षः ॥ १९ ॥

## आज्यमपीति चेत् ॥ २० ॥

ननु उपांशुयागे वैष्णवो ऽग्नीषोमीयः प्राजापत्यो वेति पक्षे आग्नीषोमीयसत्त्वादुपांशुयागो ऽप्युत्कृष्यतामिति शङ्कते । आज्यमिति । आज्यमाज्यद्रव्यकः उपांशुयागः ॥ २० ॥

## न मिश्रदेवतात्वादैन्द्राग्नवत् ॥ २१ ॥

नेति । मिश्रदेवतात्वात् । एकदेवतात्वद्विदेवतात्वोभयमिश्रत्वा-द्यागस्य तस्य यागस्य विष्णुः प्रजापतिश्च पक्षे भवतः । अतो द्विदेव-त्यत्वं तस्मिन्ननियतमिति भावः । ऐन्द्राग्नवदिति एतदधिकरणाष्टम-सूत्रे योज्यं दृष्टान्तरूपं न त्वत्रानाकाङ्क्षितत्वात् ॥ २१ ॥

वैकृतानामैन्द्राग्नादीनां सद्यःकालता । अधि· ७ ।

## विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तराततिः तयोः प्रत्यक्षशिष्टत्वात् ॥ २२ ॥

ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इत्याद्या विकृतयः एकाहसाध्या उत द्व्यहसाध्या इति संशये सिद्धान्तेनोपक्रमते । विकृते-रिति । उत्तराततिः विकृतीष्टिसंघातः सद्यस्काला स्यात् । प्रकृतौ अमावास्यापौर्णमासीरूपो यः कालः यश्च पूर्वद्युरिध्माबर्हिः करोतीति कालः तयोः प्रत्यक्षशिष्टत्वात् । प्रत्यक्षवचनविहितत्वात् । तत्र युक्तं द्व्यहकालसाध्यत्वम् । विकृतेः द्व्यहसाध्यत्वस्य प्रकृतिकालत्वादेव ग्रहणं चोदकशास्त्रेणैव प्राप्तं, तस्य य इष्ट्या पशुना यजेत सो ऽमावास्यायां पौर्णमास्यां वेति प्रत्यक्षवचनेन बाधितमिति भावः ॥ २२ ॥

## द्वैयहकाल्ये तु यथान्यायम् ॥ २३ ॥

पूर्वपक्षमाह । द्वैयेति । विकृतेः द्वैयहकाल्ये दिनद्वयानुष्ठेयत्वे यथान्यायं प्रकृतिवत्कर्तव्यमिति न्यायसिद्धं भवति ॥ २३ ॥

**वचनाद्वैककाल्यं स्यात् ॥ २४ ॥**

तच्च द्वैयहकाल्यं प्रकृतावेव युक्तं न विकृतावित्याह । वचनादिति । पूर्वेद्युरमावास्यायां वेदिं करोतीति वचनात्तत्र तत् । विकृतौ चोदकशास्त्रमानुमानिकं तस्य च दृष्टेत्यनेन बाध इति भावः ॥ २४ ॥

सोमात्साम्नाय्यविकारादीनामुत्कर्षः । अधि॰ ८ ।

**साम्नाय्याग्नीषोमीयविकारादूर्ध्वं सोमात्प्रकृतिवत् ॥ २५ ॥**

साम्नायविकाराः पशुयागादयः काम्यपशुयागाः अग्नीषोमीयविकाराः अग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेदिति । ईदृशा विकृतयः सोमात्पूर्वमनुष्ठेया उत पश्चादिति संशये पूर्वमप्यविशेषादनुष्ठेयमिति पूर्वपक्षे सिद्धान्तमाह । साम्नाय्येति । स्पष्टार्थः । प्रकृतिवदित्यनेन प्रकृतौ द्वयोः सोमोत्तरकालस्य क्लृप्तत्वात्तद्विकृतौ तद्बाधो ऽयुक्त इति सूचितम् ॥ २५ ॥

सोमविकाराणां दर्शपूर्णमासाभ्यामूर्ध्वं कर्तव्यत्वम् । अधि॰ ९ ।

**तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २६ ॥**

ज्योतिष्टोमविकारा अहीनादयः पूर्वं सोमानुष्ठाने ऽपि प्राग् दर्शपूर्णमासाभ्यां कर्तव्याः उत तदूर्ध्वमिति संदेहे अविशेषादिच्छयेति पूर्वपक्षे सिद्धान्तमाह । तथेति । यथा साम्नायादिप्रकृतीनां ज्योतिष्टोमोत्तरत्वं तथा सोमविकाराणां दर्शपूर्णमासौ तयोरुत्तरं दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति वाक्यस्थत्वाप्रत्ययेन दर्शपूर्णमासोत्तरकालस्य श्रुतिप्रमाणेनाङ्गत्वं क्लृप्तम् । सोमेन यक्ष्यमाणो ऽग्नीनादधीतेति आधानसोमयोः पूर्वोक्तयुक्त्या ऽऽनन्तर्यमात्रे सिद्धत्र्यार्थिकं दर्शपूर्णमासपूर्वत्वमार्थिकस्याङ्गत्वाभावेनातिदेशासंभवाद्दर्शपूर्णमासोर्ध्वकालस्याङ्गभूतस्यातिदेश इति भावः ॥ २६ ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां पञ्चमस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्च पञ्चमो ऽध्यायः ॥ ५ ॥

यागादिकर्मणां स्वर्गादिफलसाधनत्वम् । अधि० १ ।

## द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ॥ १ ॥

षष्ठाध्यायारम्भः । तत्र प्रथमाधिकरणमध्यायविषयाधिकारोपोद्घातरूपम् । तथा हि । फलभोगित्वमेवाधिकारित्वम् । तच्च फलसिद्धौ तद्भोगादि । एतदधिकरणसिद्धान्तयुक्त्या फलस्यासिद्धौ पूर्वपक्षस्यैव दृढत्वेन फलाभावे अधिकाराध्यायो निर्विषयः स्यात् । अतः तदुपोद्घातत्वं युक्तम् । वस्तुतस्तु इदमधिकरणं सर्वशास्त्रस्यैवोपोद्घातरूपम् । तथा हि । उक्तयुक्त्या फलासिद्धौ भावार्थाधिकरणं लुप्तम् । तत्र किं भावशब्दाः फलसंबन्धिन उत द्रव्यगुणशब्दा इति यः संशयः तस्यानुपस्थितिः तदनुपस्थितौ फलस्य कालान्तरभाविनः कारणत्वं न संभवतीत्यपूर्वकल्पनमित्यपूर्वाधिकरणलोपः । ततः अपूर्वप्रयुक्तशब्दान्तरादिप्रमाणकः कर्मभेदो लुप्तः । एवं भेदाभावे सर्वं कर्मैकमेवेति अङ्गाङ्गिभावविचारलोपः । तन्मूलप्रयुक्तिक्रमविचारलोपः । एवं सप्तमादिषु प्रयाजादीनामतिदेशादिलोपः कर्मण ऐक्यादिति । अतः निखिलशास्त्रोपोद्घातरूपमिदमधिकरणम् । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र स्वर्गकामः यागं प्रति गुणः उत प्रधानमिति संशये पूर्वपक्षमाह । द्रव्याणामिति । द्रव्याणां स्वर्गादीनां कर्मणा यागेन संयोगे संबन्धे श्रूयमाणे गुणत्वेन संबन्धः कार्यः । अयं भावः । पूर्वपक्षे स्वर्गशब्दः सुखसाधनद्रव्यमात्रपरः द्रव्यस्य क्रियासाधनत्वं लोकसिद्धं, तस्य यावतः प्राप्तावाक्षेपेण कर्तुः यत्सुखसाधनं तेनैवायं कार्यः याग इति नियम्यते । स्वर्गकामः इत्यत्र स्वर्गेच्छावान्पुरुषो बुध्यते । तदिच्छाया आकारश्च मम स्वर्गेण यागो भवत्विति । स्वर्गस्तु द्रव्यरूपः सिद्धः यागस्तु श्रवणवेलायामसिद्ध इति सिद्धसाध्ययोः समभिव्याहारे सिद्धं साध्यायोपयुज्यतइति न्यायाद् यागस्य भाव्यत्वमेवोचितम् । अपि च भावनायां प्रथममन्वयवेलायां भाव्याकाङ्क्षा पश्चात्साधनाकाङ्क्षा, तत्र भाव्याकाङ्क्षायां पदान्तरोपात्तस्य भाव्यत्वापेक्षया एकपदश्रुत्या यागस्यैव अन्वयो भाव्यत्वेनोचितः । यद्यपि स्वर्गकाम इति विशिष्टार्थस्यैव विधिः प्रतीयते तथा ऽपि आख्यातलक्षितकर्तृत्वेन

पुरुषस्य प्राप्तत्वात् पुरुषस्यानुवादः स्वर्गमात्रं साधनत्वेन विधीयते । यथा श्येने अतिदेशप्राप्तऋत्विजः अनूद्य लोहितोष्णीषादिरूपगुणमात्रविधानं तथेति अलं विस्तरेण ॥ १ ॥

## असाधकं तु तादर्थ्यात् ॥ २ ॥

सिद्धान्तमाह । असाधकमिति । तादर्थ्यात् । स्वर्गार्थत्वाद्यागस्य असाधकं स्वर्गो यागसाधको न । अयं भावः । पुरुषस्य प्रथमं फले इच्छा फलं सुखं दुःखाभावो वा । तदनन्तरं तयोः कृत्यसाध्यत्वात्तदुपायसाध्यत्वाद् उपायेच्छा ततः तद्विषयिणी प्रवृत्तिः इति लोकानुभवः । क्रियायाः सुखदुःखातिरिक्तत्वं लोकगम्यमतः तद्विषयिणी इच्छा न संभवति । तयोः साधनविषयिण्यपि न । तव मते यागस्य फलाभावात् । मन्मते स्वर्गकामस्य भाव्यत्वेनान्वये विशेष्ये पुरुषे भाव्यत्वासंभवे ऽपि सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसङ्क्रामत इति न्यायेन स्वर्गे साध्यतोपपत्तिः । यत्तु असिद्धस्य साधनत्वं न संभवतीति तन्न । तृप्तिकामो भोजनं कुर्यादित्यादौ असिद्धस्यापि भोजनस्य तृप्तिसाधनत्वग्रहणे सिद्धसाध्ययोरिति न्यायस्य व्यभिचारात् । तस्माद्यागस्य स्वर्गफलत्वमपरिहार्यमिति सर्वो ऽपि शास्त्रारम्भः सार्थक इति ॥ २ ॥

## प्रत्यर्थं चाभिसंयोगात्कर्मतो ह्यभिसंबन्धस्तस्मात्कर्मोपदेशः स्यात् ॥ ३ ॥

ननु पदश्रुत्या भाव्यत्वं यागस्येत्युक्तं तस्योत्तरं किमित्याकाङ्क्षायामाह । प्रत्यर्थमिति । हि यतः उक्तयुक्त्या कर्मतः यागेन साकं कस्यचित्सम्बन्ध आवश्यको ऽतः प्रत्यर्थं स्वर्गं प्रति अभिसंयोगः साध्यताख्यः संबन्धः कल्प्यः । तस्मात्स्वर्गमुद्दिश्य कर्मोपदेशः यागविधिः । अयं भावः । उक्तयुक्त्या उत्पत्तिशिष्टपुरोडाशाद्यवरुद्धे यागे द्रव्यस्यानाकाङ्क्षित्वाद् यागप्रवृत्त्यर्थं फलस्याकाङ्क्षितत्वात् पदश्रुतिं बाधित्वा वाक्यश्रुत्यादर इति भावः ॥ ३ ॥

यागादिषु मनुष्यस्यैवाधिकारः । अधि० २ ।

## फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥ ४ ॥

दर्शपूर्णमासाधिकारः अन्धादिसाधारण उत यावदङ्गसहितप्रधानानुष्ठानसमर्थस्येति संशये पूर्वपक्षमाह । फलेति । शास्त्रं दर्शपूर्णमासाभ्यामिति वाक्यं सर्वाधिकारं सर्वेषामधिकारदर्शकं सर्वेषां कर्मणः यागात्फलार्थत्वात् फलेच्छावत्त्वात् ॥ ४ ॥

## कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते ॥ ५ ॥

सिद्धान्तमाह । कर्तुरिति । कार्त्स्न्येन कर्तुः यावदङ्गसहितप्रधानकर्तुः विधिः । अधिकारविधिः श्रुतिसंयोगात् । उक्तार्थे विधितात्पर्यात् । सेतिकर्तव्यताकप्रधानस्यैव प्रधानापूर्वजनकत्वबोधनादन्धादीनामाज्यावेक्षणादियावदङ्गानुष्ठानासंभवान्नाधिकार इति भावः ॥ ५ ॥

यागादिषु स्त्रीपुंसयोरुभयोरधिकारः । अधि० ३ ।

## लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः ॥ ६ ॥

पुंस एवाधिकारः किं स्त्रिया अपीति संशये पूर्वपक्षमाह । लिङ्गेति । लिङ्गविशेषस्य पुल्लिङ्गस्य स्वर्गकाम इत्यत्र निर्देशात् पुंयुक्तं यजमानत्वमिति ऐतिशायनमतम् ॥ ६ ॥

## तदुक्तित्वाच्च दोषश्रुतिरविज्ञाने ॥ ७ ॥

ननु ग्रहैकत्वाधिकरणउद्देश्यविशेषणानामविवक्षेति स्थिते कथमयं पूर्वपक्षो ऽत आह । तदिति । तदुक्तित्वात् । लिङ्गस्य विवक्षितत्वादेव अविज्ञाने दोषश्रुतिः । अयं भावः गर्भेणाविज्ञातेन भ्रूणहेति । अस्यार्थः । गर्भिण्या हनने उदरस्थो गर्भः पुमान्स्त्री वेत्यज्ञानाद् भ्रूणहत्यापापं प्राप्नोति । भ्रूणो यज्ञः तन्नाशकः । यदि स्त्रीपुंसयोरधिकारः तदा गर्भमात्रहनने यज्ञकर्तृवधः संपन्न इत्यविज्ञातपदं व्यर्थं स्यात् । पुरुषमात्रस्य तथात्वे स्त्रीगर्भे न दोषः पुंगर्भे यज्ञहा । अन्यतरनिर्णयाभावेन शङ्का अविज्ञातइत्यनेन सूचिता । तस्मादत्रोद्देश्यगतमपि पुंस्त्वं विवक्षितमिति ॥ ७ ॥

## जातिं तु बादरायणो ऽविशेषात्तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥ ८ ॥

सिद्धान्तमाह । जातिमिति । अविशेषात् पुंस्त्वस्याविवक्षणात् । जातिं स्वर्गविषयकेच्छामधिकारितावच्छेदकत्वेन बादरायणाचार्यो मनुते । जात्यर्थस्य तादृगिच्छाया उभयत्राविशेषेण सत्त्वेन स्त्र्यपि अधिकारिणी । यदुक्तं लिङ्गविशेषेण विवक्षितं लिङ्गं तद्, अविज्ञातो वा एव शूयते यद्यायवा, इतिविधिस्तावकं सद् न पुंस्त्वविवक्षायां समर्थमिति भावः ॥ ८ ॥

## विभक्त्येति चेन्न ॥ ९ ॥

पशुना यजेतेत्यत्र कथं विवक्षेति शङ्कते । विभक्त्येति । एकत्वबोध इति शेषः ॥ ९ ॥

## चोदितत्वाद्यथाश्रुति ॥ १० ॥

समाधत्ते । चोदितेति । चोदितत्वाद् विहितत्वाद् यथा श्रुतं तथा । अत्र त्वनुवादगतमिति भावः ॥ १० ॥

## द्रव्यवत्त्वात्पुंसां स्याद् द्रव्यसंयुक्तं क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात् ॥ ११ ॥

स्त्रिया नाधिकारः स्वस्वत्वाश्रयद्रव्याभावादिति सिद्धान्तमाक्षिपति । द्रव्येति । यतो द्रव्यसंयुक्तं द्रव्यसाध्यं कर्मातः द्रव्यवत्त्वात् पुंसामेवाधिकारः स्त्रीणां क्रयविक्रयाभ्यां द्रव्यैः समानयोगित्वात् साध्यसाधनभावसंबन्धात् । पितुः स्वकन्याविक्रयेण द्रव्यस्य साध्यत्वात् स्त्रीद्रव्ये साध्यतासंबन्धः । भर्तुः क्रयसाधनत्वं संबन्धः तादृशसंबन्धवत्त्वाद् अद्रव्यत्वम् । अयं भावः । पित्रा विक्रीतत्वात्पितृद्रव्येणासंबन्धः । भर्त्रा क्रीतत्वाद्दासादिवत्पतिद्रव्येणासंबन्धः । अतो ऽद्रव्येति स्त्रीणामद्रव्यत्वम् । अद्रव्यायाः द्रव्यसाध्यक्रतुः कथं भवेदतो नाधिकारः । शतमधिरथं दुहितृमते दद्यादिति विक्रयलिङ्गम् ॥ ११ ॥

## तथा चान्यार्थदर्शनम् ॥ १२ ॥

भर्तुः क्रयलिङ्गं दर्शयति । तथा चेति । तथा च पितुः विक्रये सिद्धे च अन्यार्थस्य भर्तुः क्रयस्य च दर्शनं, या पत्या क्रीता ऽथान्यैश्चरतीति क्रयदर्शनवाक्यम् ॥ १२ ॥

## तादर्थ्यात्कर्मतादर्थ्यम् ॥ १३ ॥

ननु कर्तनादिना सा ऽपि द्रव्यं लभतामत्राह । क्रीतत्वेन तादर्थ्यात् । भर्त्रर्थत्वात् । भर्त्रर्थे यत्कर्म तदेव तया कार्यं नान्यत्कर्तनादि । अत एव स्मृतिः । भार्या दासश्च पुत्रश्च निर्धनाः सर्वएव ते । यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमिति ॥ १३ ॥

## फलोत्साहाविशेषात्* ॥ १४ ॥

इमं पक्षं दूषयति । फलेति । फलोत्साहः फलेच्छा तस्याविशेषादस्त्यधिकारः स्त्रियाः ॥ १४ ॥

## अर्थेन च समवेतत्वात् ॥ १५ ॥

तस्या द्रव्याभावो ऽसिद्ध इत्याह । अर्थेति । समवेतत्वाद्युक्तत्वात् । पत्नी हि पारिणाय्यस्येशे इति श्रुत्या धर्मे चार्थे च कामे च नातिचरितव्येति स्मृत्या च तस्या द्रव्यस्वामित्वं सिद्धमिति भावः ॥ १५ ॥

## क्रयस्य धर्ममात्रत्वम् ॥ १६ ॥

यत्र क्रयः लोके गवादीनां तत्र कस्याश्चिद्दश मुद्राः अपरस्यास्त्वाश्च ततो न्यूनो ऽधिको वा दृश्यते । इह तु क्रयो विक्रयश्च नियतद्रव्यक इत्यदृष्टार्थ एवेत्याह । क्रयस्येति । धर्ममात्रत्वमदृष्टसाधनत्वम् ॥ १६ ॥

यागे दंपत्योः सहाधिकारः । अधि० ४ ।

## स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥

एवमपरिसमाप्ते एतदधिकरणे विचारान्तरम् । पत्न्या अधिकारे सिद्धे यजमानेन तया च पृथगेव यज्ञः कार्य इति पूर्वपक्षे सिद्धान्तमाह । स्वेति । स्ववतोर्वचनात् । आज्यस्य एकप्रयोगे उभययोगे उभयोरवेक्षणवचनादैककर्म्यं मिलित्वैकप्रयोगः ॥ १७ ॥

## लिङ्गदर्शनाच्च ॥ १८ ॥

उक्तार्थे लिङ्गमाह । लिङ्गेति । मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वायेति, भिन्नप्रयोगे यजमानप्रयोगे योक्त्राभावेन मिथुनत्वं विरुध्येत ॥ १८ ॥

* भाष्ये तुशब्दघटितः पाठः ।

## क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ १९ ॥

पूर्वशेषं पूरयति । तत्र सिद्धान्ताक्षेपसूत्रम् । क्रीतेति । पत्न्याः क्रीतत्वात् स्वामित्वं द्रव्यस्वामित्वं भक्त्या गौणवृत्त्योच्यते न मुख्यवृत्त्या ॥ १९ ॥

## फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः ॥ २० ॥

दूषयति । फलेति । फलार्थित्वाद् मिलितयोः फलार्थित्वश्रवणाच्च गौणवृत्त्या स्वामित्वं किं तु मुख्यस्वामित्वेनाभिसंबन्धः ॥ २० ॥

## फलवत्तां च दर्शयति ॥ २१ ॥

फलवत्तां मिलितयोः फलवत्तां दर्शयति, यज्ञस्य युक्तौ धुर्यावभूतां संजानानौ विजहतामरातीः, दिवि ज्योतिरजरमारभेथामिति श्रुतिः ॥ २१ ॥

एकस्यैव पुंस आधाने ऽधिकारः । अधि॰ ५ ।

## द्व्याधानं च द्वियज्ञवत् ॥ २२ ॥

क्षौमे वसानावग्निमादधीयातामिति श्रुतमतः आधानं पुंद्वयकर्तृकमुत स्त्रियं गृहीत्वा द्विवचनमिति संशये पूर्वपक्षमाह । द्वीति । द्व्याधानं द्वाभ्यां पुरुषाभ्यामाधानं कर्तव्यं द्विवचनश्रवणात् । द्वियज्ञवद् एतेन राजपुरोहितौ यजेयातामितिवत् ॥ २२ ॥

## गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात् ॥ २३ ॥

सिद्धान्तमाह । गुणस्येति । गुणस्य क्षौमस्य विधानत्वात् । विधीयमानत्वात् । द्वितीयशब्दः द्विवचनशब्दः पत्न्या पत्नीं गृहीत्वा स्यात् । वसन्ते ब्राह्मण इत्युत्पत्तिवाक्ये एकवचनश्रवणादेककर्तृत्वं, क्षौमवस्त्रपरिधानकर्तृत्वं द्वयोरिति भावः ॥ २३ ॥

पत्न्या यावदुक्ताशीर्ब्रह्मचर्यादावेवाधिकारः । अधि॰ ६ ।

## तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २४ ॥

उक्तरीत्या पत्न्या अधिकारे सिद्धे सर्वं याजमानं तस्याः अपि, किं वा यावदुक्तमिति संशये फलभोक्तृधर्माविशेषाद् उभयोरिति पूर्वपक्षे

सिद्धान्तमाह । तस्या इति । यावदुक्तं, पत्नीं सन्नह्यति पत्नीं वाचयतीत्यादिभिः श्रुतं, नातो ऽधिकमतुल्यत्वात् । अध्ययनाभावेन यजमानातुल्यत्वात् । किं च आशीः आशीर्वाचका मन्त्रा आयुर्दा अग्ने ऽस्यायुर्मे देहीत्यादयः केवलप्रार्थनारूपाः ब्रह्मचर्यपदेन फलिसंस्काराः सर्वे ग्राह्याः । उभयोस्तुल्यम् ॥ २४ ॥

यागे शूद्रस्यानधिकारः । अधि० ७ ।

## चातुर्वर्ण्यमविशेषात् ॥ २५ ॥

कर्मण्यधिकारः त्रैवर्णिकानामुत चातुर्वर्ण्यमिति संशये पूर्वपक्षमाह । चातुरिति । अविशेषात् । विशेषवचनाभावात् ॥ २५ ॥

## निर्देशाद्वा त्रयाणां स्यादग्न्याधेये संबन्धः क्रतुषु ब्राह्मणश्रुतेरित्यात्रेयः ॥ २६ ॥

वसन्ते ब्राह्मणो ऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य, इति त्रयाणां निर्देशादाधाने ब्राह्मणश्रुतेः ब्राह्मणादिश्रुतेः क्रतुषु दर्शपूर्णमासादिष्वसंबन्धः आहवनीयाभावाद् इत्यात्रेयमतम् ॥ २६ ॥

## निमित्तार्थे च बादरिः तस्मात्सर्वाधिकारः स्यात् ॥ २७ ॥

वसन्ते इति वाक्यं निमित्तार्थकं ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः । एवं क्षत्रियादेस्तत्तत्कालो नियम्यते । शूद्रस्यानियतकाल इत्यभिप्रायं बादरिमतमाह । निमित्तेति । स्पष्टो ऽर्थः ॥ २७ ॥

## अपि वा ऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥ २८ ॥

सिद्धान्तमाह । अपि वेति । अन्यत्र अर्थदर्शनात् त्रैवर्णिकं गृहीत्वा तत्तन्निमित्ते अर्थदर्शनात् । यथा पयो ब्राह्मणस्य व्रतं, यवागू राजन्यस्यामिक्षा वैश्यस्येति, एवं बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्पार्थुरश्मं राजन्यस्य रायोवाजीयं वैश्यस्येति यथा निमित्तत्वं तथा ऽऽधानवाक्यउत्पत्तिवाक्ये वसन्तादिश्रवणेन निमित्तत्वासंभवाद् यथाश्रुति वसन्तादिविशिष्टमपूर्वकर्म प्रतीयते ॥ २८ ॥

## निर्देशात्तु पक्षे स्यात् ॥ २९ ॥

पुनर्निमित्तत्वपक्षमेवोत्थापयति । निर्देशादिति । निर्देशाद् य एवं विद्वानग्निमाधत्ते इत्युत्पत्तिवाक्यनिर्देशात् । पक्षे उक्तनिमित्ते वसन्तादिः स्यात् ॥ २९ ॥

## वैगुण्यान्नेति चेत् ॥ ३० ॥

पूर्वोक्तपयोव्रतादीनां ब्रह्मसामादीनामभावेन शूद्रकर्तुर्विगुणः स्यादित्याशङ्कते । वैगुण्यादिति ॥ ३० ॥

## न काम्यत्वात् ॥ ३१ ॥

परिहरति । नेति । काम्यत्वात्स्वर्गकामो यजेतेति अविशेषेण श्रवणेन तस्यापि शूद्रस्यापि कामनावत्त्वात् । पयोव्रतादीनां तत्तत्कर्तृकत्वे निमित्ते नियमः शूद्रस्यानियमाद्येन केनापि व्रतादीति भावः ॥ ३१ ॥

## संस्कारे च तत्प्रधानत्वात् ॥ ३२ ॥

व्रतस्य पुरुषसंस्कारत्वाद्यस्य श्रूयते तस्यैव नान्यस्येत्याह । संस्कारइति । संस्कारे पयोव्रतरूपसंस्कारे तत्प्रधानत्वात्पुरुषप्रधानत्वात् ॥ ३२ ॥

## अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत ॥ ३३ ॥

उपनयनस्य वेदग्रहणार्थत्वात्त्रैवर्णिकानामेव उपनयनं विहितम् । वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति शूद्रस्योपनयनाभावेन वेदाभावात् त्रैवर्णिकानामेवाधाने ऽधिकार इत्याह । अपि वेति । वेदस्य त्रैवर्णिकेषु निर्देशादपशूद्राणां शूद्रभिन्नानामेवाधिकारः प्रतीयेत ॥ ३३ ॥

## गुणार्थत्वान्नेति चेत् ॥ ३४ ॥

उपनयनं पुरुषसंस्कारः न विद्यार्थ इत्याह । गुणार्थत्वात् संस्कारार्थत्वान्न उक्तार्थसिद्धिः ॥ ३४ ॥

## संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ॥ ३५ ॥

दृष्टे संभवत्यदृष्टकल्पनमन्याय्यमिति भावेनाह । संस्कारस्येति । संस्कारस्य उपनयनस्य तदर्थत्वाद्विद्यार्थत्वाद्विद्यायामेव ब्राह्मणादिपुरुषश्रुतिः ॥ ३५ ॥

## विद्यानिर्देशान्नेति चेत् ॥ ३६ ॥

स्वर्गकामश्रवणादेव विद्या कल्पमीयेत्याशङ्कते । विद्येति । विद्यानिर्देशात् कल्पनादिति चेत् ॥ ३६ ॥

## अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥

परमसिद्धान्तमाह । अवैद्यत्वादिति । अवैद्यत्वात् । विद्याभावात् । कर्मण्यधिकाराभावः स्यात् ॥ ३७ ॥

## तथा चान्यार्थदर्शनम् ॥ ३८ ॥

अवैद्यत्वे साधकमाह । तथा चेति । एतच्छ्मशानं यः शूद्रः तस्माच्छूद्रसकाशे नाध्येयमिति । समीपे अध्ययनाभावः, किमु वक्तव्यं विद्याभाव इति भावः ॥ ३८ ॥

यागे निर्धनस्याप्यधिकारः । अधि॰ ८ ।

## त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ३९ ॥

द्रव्यहीनो दर्शपूर्णमासादावधिक्रियते न वेति संशये पूर्वपक्षमाह । त्रयाणामिति । कर्मणो द्रव्यसिद्धित्वात् । द्रव्यसाध्यत्वात् त्रिवर्णानां मध्ये द्रव्यवानधिकारी ॥ ३९ ॥

## अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ४० ॥

सिद्धान्तमाह । अनित्यत्वादिति । दारिद्र्यस्यानित्यत्वाद् नैवं स्यात् । दरिद्र इति का चन जातिर्न स्यात् । अर्थात् संपादनाद् द्रव्यसंयोगो भविष्यति ॥ ४० ॥

अङ्गहीनस्यापि यागे ऽधिकारः । अधि॰ ९ ।

## अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥

यो द्रव्यस्य न्याय उक्तः स एवाङ्गहीने । अन्धत्वमौषधेन दूरीकृत्याधिकारीति भावः ॥ ४१ ॥

अचिकित्स्याङ्गवैकल्यस्य यागानधिकारः । अधि॰ १० ।

## उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥

यस्तु चिकित्सादिभिरङ्गवैकल्यं परिहर्तुमक्षमः स नाधिकारीति सिद्धान्तमाह । उत्पत्ताविति । उत्पत्तिवेलायामेव यो ऽन्धः तस्यान्धत्वस्य नित्यसंयोगादपरिहार्यत्वान्नाधिकारी ॥ ४२ ॥

दर्शपूर्णमासयोः त्र्यार्षेयस्यैवाधिकारः । अधि॰ ११ ।

## अत्र्यार्षेयस्य हानं स्यात् ॥ ४३ ॥

आर्षेयं वृणीतइत्युक्त्वा तत्समीपे एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातिप्रवृणीतइति श्रुतम् । अत्राऽत्र्यार्षेयाणां क्रतावधिकारो ऽस्ति न वेति चिन्तायामेकं वृणीतइत्यादिश्रवणादेकाद्यार्षेयाणामस्त्यधिकार इति पूर्वपक्षे सिद्धान्तमाह । अत्र्यार्षेयस्येति । अत्र्यार्षेयस्य त्र्यार्षेयभिन्नस्य हानमधिकाराभावः स्यात् । एकादीनामपि विधाने वाक्यभेदापत्तेः त्रीन्वृणीतइति विधिः शेषो ऽर्थवाद इति भावः ॥ ४३ ॥

चातुर्वर्ण्यातिरिक्तस्य रथकारस्याधाने ऽधिकारः । अधि॰ १२ ।

## वचनाद्रथकारस्याधाने सर्वशेषत्वात् ॥ ४४ ॥

वर्षासु रथकार आदधीतेति आधानं त्रैवर्णिकभिन्नस्येति सिद्धान्तेनोपक्रमते । वचनादिति । आधानस्य वसन्तादिवाक्यैर्विहिताधानस्य सर्वशेषत्वात् । त्रैवर्णिकाङ्गत्वाद्वचनादुदाहृतवचनाद्रथकारस्य वक्ष्यमाणजातेः ॥ ४४ ॥

## न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् ॥ ४५ ॥

पूर्वपक्षमाह । न्याय्य इति । कर्मसंयोगात् । रथनिर्माणरूपक्रियासंबन्धात् । रथं करोतीति व्युत्पत्त्या त्रैवर्णिक एव रथकारवाच्यो न्याय्यः । शूद्रस्य शूद्रप्रभृतेः प्रतिषिद्धत्वात्कर्मानधिकारात् ॥ ४५ ॥

## अकर्मत्वात्तु नैवं स्यात् ॥ ४६ ॥

इमं पक्षं दूषयति । अकर्मेति । अकर्मत्वात् । त्रैवर्णिकानां शिल्पिकर्मनिषेधाद् नैवं, त्रैवर्णिको न रथकारवाच्यः ॥ ४६ ॥

## आनर्थक्यं च संयोगात् ॥ ४७ ॥

संयोगात् । ब्राह्मणाद्याधानेषु वसन्तादिकालसंयोगात् । पुनर्वर्षर्तुविधानानर्थक्यम् ॥ ४७ ॥

## गुणार्थमिति चेत् ॥ ४८ ॥

गुणार्थमिति पूर्वपक्षिसूत्रम् । गुणार्थे निमित्तार्थे त्रैवर्णिकेष्वेव रथकारणक्रियानिमित्तः कालो विधीयतइति भावः ॥ ४८ ॥

## उक्तमनिमित्तत्वम् ॥ ४६ ॥

उक्तमनिमित्तत्वमिति सिद्धान्तसूत्रम् । अयं भावः । य एवं विद्वानग्निमाधत्तइत्यनेनाधानस्य प्राप्तौ वसन्तादिकालो निमित्ते विधेयः । स च न संभवति कालस्यानुपादेयत्वाद्, इति निमित्तत्वं न संभवतीत्युक्तं प्राग् अस्मिन्नेव पादे इति ॥ ४९ ॥

## सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन् ॥ ५० ॥

तर्हि अत्र को ऽधिकारीति उच्यते । सौधन्वना इति । त्रैवर्णिकादीनाः सौधन्वना जातिविशेषाः अत्राधिकारिणः । सौधन्वना ऋभवः सुरचक्षस इति मन्त्रलिङ्गात् । ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्येति लिङ्गात् । तद् अधिकृतत्वं प्रतीयेत ज्ञातव्यम् ॥ ५० ॥

त्रैवर्णिकभिन्नस्य निषादस्य रौद्रयागे ऽधिकारः । अधि० १३ ।

## स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥ ५१ ॥

एतया निषादस्थपतिं याजयेदित्यत्र त्रैवर्णिकानामधिकार उत निषादस्यैवेति संशये निषादानां स्थपतिरिति व्युत्पत्त्या त्रैवर्णिकानामेवाधिकार इति पूर्वपक्षे सिद्धान्तमाह । स्थपतिरिति । यः स्थपतिः स एव निषादः स्यात् । शब्दसामर्थ्यात् । शब्दनिष्ठमुख्यवृत्तिसामर्थ्यात् । अयं भावः षष्ठीतत्पुरुषे लक्षणापत्त्या कर्मधारय एव युक्त इति ॥ ५१ ॥

## लिङ्गदर्शनाच्च ॥ ५२ ॥

कूटं दक्षिणेति । कूटं निषादानामेवोपकारकं नार्याणाम् ॥ ५२ ॥
इति जैमिनिसूत्रवृत्तौ षष्ठस्याध्यायस्य प्रथमः पादः ॥ १ ॥

सत्रे प्रत्येकस्य ऋत्विजः फलसंबन्धः । अधि० १ ।

## पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात् ॥ १ ॥

ऋद्धिकामाः सत्रमासीरन्नित्यत्र एकस्मिन्कर्मण्यनेककर्तृविधाने प्रयोगभेदापत्तेः एकप्रयोगनिर्वाहकं सप्तदशपुरुषनिष्ठं कर्तृत्वं व्यासक्तं, तथा सति तेषां फलमपि विभक्तम्, न तु प्रत्येकं संपूर्णं फलमित्युत्सूत्रे पूर्वपक्षे सिद्धान्तमाह । पुरुषार्थेति । तस्य तस्य प्रत्येकपुरुषस्याधिकारः संपूर्णफलभोगः स्यात् । पुरुषार्थस्य फलस्य एकसिद्धित्वात् । प्रत्येकपुरुषात्सिद्धिरुत्पत्तिर्यस्य तत्त्वात् । अयं भावः ऋद्धिकामा इति वाक्यम् ऋद्धिसाधनं सत्रं तदपि बहुकर्तृकं फलजनने समर्थमिति ज्ञापयति । तथा च संपूर्णर्द्धिकामः अपरं संपूर्णर्द्धिकाममुक्त्वा वदति, मम यज्ञे त्वमपि सहायो भव तव मम च कार्यं भविष्यति । अन्यथा उभयोरपि न फलं फलसाधने बहुकर्तृकत्वश्रवणादिति मिलित्वा स्वतन्त्राः संपूर्णफलकामाः सन्त एव प्रवर्तन्तइति ॥ १ ॥

## अपि वोत्पत्तिसंयोगाद्यथा स्यात्सत्त्वदर्शनं तथा भावो विभागे स्यात् ॥ २ ॥

नन्वेकस्मिन्प्रयोगे बहूनां कर्तृत्वं मुख्यं न संभवति अदृष्टत्वात् । ऋत्विजामन्यत्र दृष्टं न मुख्यम् । तदनधीनत्वादत आह । अपि वेति । नैतद्युक्तं यथा सत्त्वदर्शनम् । यथा ऽश्वं पश्यन्तु इति बहूनां नियोगे बहुकर्तृकाश्वदर्शनक्रिया एकक्षणे संपद्यते तथा भावः अनुष्ठानं विभागे पुरुषभेदे ऽपि स्यात् । अध्वर्युणा ऽऽहवनीये हविषि प्रक्षिप्ते बहुभिः एकक्षणे त्यागरूपानुष्ठानसंभवाद् इति भावः । ननु बहुषु मुख्यकर्तृत्वे किं मानमित्यत्राह । उत्पत्तिसंयोगात् । उत्पत्तिवाक्ये कर्त्रन्वयिबहुत्वसंख्याश्रवणात् । दर्शपूर्णमासादावुत्पत्तिवाक्ये एकवचनश्रवणेन कर्त्रैक्यं सिद्धं परवाक्यत्वात् ऋत्विज इत्युत्पन्नशिष्टसंख्योत्पत्तिशिष्टं प्रबलमेकत्वं बाधितुमसमर्थं सद्गौणकर्तृत्वे पर्यवस्यति । इह तु बहुत्वसंख्योत्पत्तिशिष्टा सर्वा ऽपि मुख्या ऽतः न व्यासक्तं कर्तृत्वं न वा फलांशभागित्वमश्रवणात् । ऋद्धिकामा इत्यस्य ऋद्ध्यंशे लक्षणां विना तदलाभात् । लक्षणायां मानाभावादिति भावः ॥ २ ॥

दर्शादौ कर्त्रैक्यनियमः । अधि० २ ।

## प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ ३ ॥

ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ आख्यातप्रतिपाद्यमेकत्वं विवक्षितं न वेति संशये पूर्वपक्षमाह । प्रयोगइति । प्रयोगे उदाहृतवाक्ये पुरुषश्रुतेः पुरुषमात्रश्रुतेः प्रयोगे अनुष्ठाने यथाकामी यथेच्छमेको द्वौ त्रयो वा यागं निर्वर्तयेयुः । अयं भावः । यजेत स्वर्गकाम इत्यनेन यागेन फलं प्राप्नुयादित्यर्थः, न यागं कुर्यादिति । तथा च भावनायाः अविधाने आक्षेपलभ्यकर्तुरनुष्ठानं प्रति गुणत्वाभावात् वाक्ये श्रूयमाण-पुरुषस्य फलं प्रति प्रधानत्वादुद्देश्यगतसंख्या ऽविवक्षितेति भावः ॥ ३ ॥

## प्रत्यर्थं श्रुतिभाव इति चेत् ॥ ४ ॥

सिद्धान्ती शङ्कते । प्रत्यर्थमिति । प्रत्यर्थम् । अर्थमर्थं प्रतीति प्रत्यर्थम् । अर्थभेदेनेति फलितम् । श्रुतिभावः गुणप्रधानभावः स्वर्गकाम-इतिपदप्रतिपाद्यपुरुषस्य फलं प्रत्युद्देश्यत्वात्तद्गतसंख्या ऽविवक्षिता भवतु । तथा ऽप्याख्यातेन यागानुरक्तां क्रियां विदधता क्रियागुणभूतकर्तुराक्षेपा-त्तदुपात्तसंख्या विधेयगता कर्तृपरिच्छेदकतया विवक्षिता ऽपि वक्तव्येति । अन्यथा पुरुषव्यापारशक्ताख्यातस्य प्राप्त्यर्थत्वे लक्षणापत्तेरिति भावः ॥ ४ ॥

## तादर्थ्ये न गुणार्थता ऽनुक्ते ऽर्थान्तरत्वात्कर्तुः प्रधा-नभूतत्वात् ॥ ५ ॥

गुणप्रधानभाव एकत्र न संभवतीत्याह । तादर्थ्ये नेति । तादर्थ्ये फलस्य तदर्थत्वे तत्र प्राधान्याच्च गुणार्थता गुणभूतो यो यागः तदर्थता तदङ्गत्वं पुरुषस्य न । प्रधानत्वगुणत्वयोर्विरोधादिति भावः । ननु अनयोर्विरोधो न शब्दगम्यो ऽत आह । अनुक्ते ऽर्थान्तरत्वात् । अनुक्ते ऽपि शब्दागम्ये ऽर्थान्तरं प्रमाणान्तरं प्रत्यक्षादि तत्त्वात् । तद्गम्यत्वात् । लोके यत्र प्रधानत्वं दृष्टं तत्र न गुणत्वमप्रधानत्वमिति दृष्टमिति भावः । कर्तुः प्रधानभूतत्वादिति तादर्थ्ये हेतुः ॥ ५ ॥

### चोदनैकत्वात्* ॥ ६ ॥

अग्निहोत्रं जुहोति दध्ना जुहोतीतिवाक्यद्वयप्रतिपाद्ये यागे विरुद्धो गुणप्रधानभावो दृश्यते ऽत आह । चोदनेति । एको विधिः एकस्मिन्प्राधान्यं तत्रापरस्याङ्गत्वं वदेत् । इह पुरुषं प्रधानीकृत्य तत्र फलस्याङ्गत्वम् एवं यागं प्रधानीकृत्य तत्र कर्तुरङ्गत्वं चेति उभयं वक्तुमशक्य एको विधिः । अग्निहोत्रविधौ वाक्यभेदात्तथा कथनं युक्तमिति भावः ॥ ६ ॥

### अपि वा कामसंयोगे संबन्धात्प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् ॥ ७ ॥

सिद्धान्तमाह । अपि वेति । आख्यातस्येति शेषः । कामस्य कामशब्दस्य संयोगो यस्मिन् यजेत स्वर्गकाम इति वाक्ये आख्यातस्य संबन्धात् । घटकत्वसंबन्धात् । प्रयोगाय पुरुषप्रवृत्त्यर्थमुपदिश्यते श्रूयते । अयं भावः । यथा तृप्तिकामेन भोजने ऽनुष्ठिते ऽनुष्ठातरि तृप्तिप्राप्तिरवश्यं भाविनीति पुरुषे फलप्राप्तिरर्थसिद्धेति, तथेह पुरुषप्राधान्यं न शास्त्रतात्पर्यविषयः किं त्वनेन यागानुष्ठानमेव विधीयते । अनुष्ठानविधौ अनुष्ठानसाधनकर्ता ऽनुष्ठानाङ्गं तत्परिच्छेदकतया ऽऽख्यातसंख्या विवक्षितेति । यत्रैकस्मिन्नेव गुणप्रधानभावः शास्त्रविषयः तत्र तत्तात्पर्यज्ञापिका श्रुतिर्दृश्यते । यथा कृष्णविषाणया कण्डूयतइत्यत्र तृतीयाश्रुतिः । विषाणे तृतीयाश्रुत्या ऽङ्गत्वं चात्वाले कृष्णविषाणां प्रास्यतीत्यत्र द्वितीयाश्रुत्या प्राधान्यं तथा नात्रेति वक्तुं दृष्टान्तमाह । प्रत्यर्थमिति । प्रत्यर्थे प्राधान्यार्थे विधेयस्यार्थे विधिश्रुतिर्विधितात्पर्यज्ञापिका श्रुतिर्यथा विषाणायां तथा ऽत्र नेति फलितम् ॥ ७ ॥

### अन्यस्यापीति चेन्न ॥ ८ ॥

ननु कर्तारमुद्दिश्य फलप्राप्तिर्यदि न विधीयते किं त्वनुष्ठानमात्रं तर्हि परस्य स्वर्गकामनावता ऽप्यनुष्ठेयं स्यात् । न हि स्वर्गकाम इत्यत्रात्मनः परस्य वेति विशेषः श्रूयते इत्याह । अन्यस्येति ॥ ८ ॥

### अन्यार्थेनाभिसंबन्धः ॥ ९ ॥

* इदं सूत्रं भाष्ये वार्त्तिके च न दृश्यते ।

इदं दूषणं परिहरति । अन्यार्थेति । अन्यार्थेन अन्यस्य स्वर्गेच्छावता समं कर्तुः नाभिसंबन्धः । नाभेदः । आत्मनेपदश्रवणादिति पूरणीयं, कर्तृगामिनि क्रियाफलएवात्मनेपदस्य साधुत्वादिति भावः ॥ ९ ॥

## फलकामो निमित्तमिति चेत् ॥ १० ॥

स्वर्गकामपदं निमित्तत्वद्योतकं यावज्जीवपदवदित्याह। फलेति। फलकामः स्वर्गकामशब्दः निमित्तं निमित्तत्वद्योतकम् ॥ १० ॥

## न नित्यत्वात् ॥ ११ ॥

नेति । निमित्तं न, नित्यत्वात् । निमित्तत्वसूचकणमुलप्रत्ययादेरभावादिति भावः ॥ ११ ॥

## कर्म तथेति चेत् ॥ १२ ॥

युवं हि स्थः स्वःपती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादिति वाक्यमेककर्मणि उभयकर्तृकत्वं द्रढयतीत्याह । कर्मेति । अस्मिन्सूत्रे उदाहृतवाक्यार्थानुपपत्तेरिति हेतुः पूरणीयः । कर्म ज्योतिष्टोमादि तथा उभयकर्तृकमपि क्वचित् ॥ १२ ॥

## न समवायात् ॥ १३ ॥

दूषयति । नेति । समवायात् । एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति क्लृप्तोभयकर्तृके सावकाशत्वात् ॥ १३ ॥

आरब्धकाम्यकर्मणो ऽपि समाप्तिनियमः । अधि० ३ ।

## प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात् ॥ १४ ॥

कारीर्या वृष्टिकामो यजेतेति वृष्टिसाधने प्रवर्तते । मध्ये संपन्नायां वृष्टौ तत्रैव विरामः उत समापनीयमिति संदेहे सिद्धान्तसूत्रमाह । प्रक्रमादिति । प्रक्रमात् कर्मारम्भाद् नियम्येत कर्मसमाप्तिर्नियमः । कुतः । आरम्भस्य क्रियानिमित्तत्वात् क्रियायां समाप्तिक्रियायां निमित्तत्वात् । अयं भावः यजेतेत्यत्र विधिगम्यशब्दभावनोद्देश्यत्वमाख्यातार्थरूपार्थभावनायां, सा चार्थभावना समाप्तिरूपा । नारम्भसमाप्त्युभयरूपा । आरम्भं विना समाप्तेरसम्भवेन समाप्तिविधाने तस्याक्षिप्तस्य विध्यविषयत्वात् । पाकविधौ वह्निसम्पादनमिव । तथा च

समाप्त्युद्देशेनैव प्रवृत्तत्वात् तत्सिद्धिरावश्यकीति । कामनायाः अनुष्ठाननिमित्तत्वादनुष्ठानस्य समाप्तिरूपत्वान्निमित्तस्य कामनाशे ऽपि समाप्तिरनुष्ठेयेति फलितो ऽर्थः । यथा च्युतो निवृत्तावप्याचमनं तथा ॥ १४ ॥

**फलार्थित्वाद्वा नियमो यथा ऽनुपक्रान्ते ॥ १५ ॥**

सिद्धान्तमाक्षिपति । फलेति । फलार्थित्वाद्यागस्येति शेषः । फलसाधनत्वमात्रप्रतिपादनात् । निमित्तत्वस्य फलेच्छायाः पूर्वाधिकरणे निरस्तत्वादनियमः समापनीयमित्यनियमः । यथा ऽनुपक्रान्ते कामनासत्त्वे ऽपि आरम्भाभावे समाप्त्यभावः । तथा ऽऽरम्भे ऽपीति भावः ॥ १५ ॥

**नियमो वा तन्निमित्तत्वात्कर्तुस्तत्कारणं स्यात् ॥ १६ ॥**

कामनायाः समाप्त्यनिमित्तत्वे ऽपि आरम्भस्य समाप्तिनिमित्तत्वमावश्यकमित्याह । नियमो वेति । नियमः समाप्तिनियमः । आरम्भस्येति मण्डूकप्लुतिन्यायेन प्रथमसूत्रादनुवृत्तिः । आरम्भस्य तन्निमित्तत्वात् । समाप्तिनिमित्तत्वात् । अनुष्ठानस्य फलं किमित्याकाङ्क्षायामाह । कर्तुः आरम्भकर्तुः तद् असमापनं कारणं प्रत्यवायकारणं स्यात् । यो यत्परत्युत्वा न यजते त्रैधातवीयेन यजेत इति प्रायश्चित्तश्रवणादितिभावः ॥ १६ ॥

आरब्धलौकिककर्मणः समाप्त्यनियमः । अधि॰ ४ ।

**लोके कर्मणि वेदवत्ततो ऽधिपुरुषज्ञानम् ॥ १७ ॥**

गृहाद्यारम्भकर्तुः समाप्तिरावश्यकी न वेति चिन्तायां पूर्वपक्षमाह । लोकइति । लोके कर्मणि गृहारम्भादौ वेदवद् वैदिककर्मवत् समाप्तिरावश्यकीति भावः । ननु शास्त्रप्रतिपादितो ऽयं नियमः गृहनिर्माणादिकमशास्त्रमत आह । तत इत्यादि । पुरुषमधिकरोतीत्यधिपुरुषं गृहादिनिर्माणं, षष्ठ्यर्थे द्वितीया तद्विषयं ज्ञानं ततः शास्त्राद्, अतः इदमप्यशास्त्रीयं नेति भाः ॥ १७ ॥

**अपराधे ऽपि च तैः शास्त्रम् ॥ १८ ॥**

साधकान्तरं स्वमते पूर्वपक्ष्याह । अपराधेति । अपराधे रथनिर्माणसमये आरे भग्ने तैः शिल्पिभिः शास्त्रं प्रायश्चित्तशास्त्रम्, आरे भग्ने इन्द्रबाहुर्बन्धव्यः पायसेन ब्राह्मणो भोजयितव्य इति, पठ्यत इतिशेषः ॥ १८ ॥

अशास्त्रात्तूपसंप्राप्तिः शास्त्रं स्यान्न प्रकल्पकं तस्मा-
दर्थेन गम्येताप्राप्ते शास्त्रमर्थवत् ॥ १९ ॥

शिल्पिशास्त्रं न वेदमूलमित्यभिप्रायेण सिद्धान्तमाह । अशास्त्रेति । अशास्त्रा निर्मूला उपसंप्राप्तिः गृहादिनिर्माणप्राप्तिः तस्माच्छास्त्रं शिल्पिशास्त्रं न प्रकल्पकम् अकल्पकम् । स्वमूलवेदानुमापकं नेत्यर्थः । अर्थेनेति । अर्थेन स्वरक्षणादिप्रयोजनेन गम्येत ज्ञातव्यः । ननु शिल्पिशास्त्रस्य निर्माणफलं किमित्याकाङ्क्षायामाह । अप्राप्तइति । अप्राप्ते गृहनिर्माणादिकौशल्यशून्ये पुरुषे शास्त्रमर्थवत् सफलं स्वबुद्ध्या कर्तुमक्षमः शास्त्रं दृष्ट्वा कुर्यादित्यर्थः ॥ १९ ॥

देवताश्रये च* ॥ २० ॥

ननु यागे ऽग्न्यादिवद्गृहनिर्माणाङ्गवास्तुपुरुषादीनां सत्त्वाच्छ्रुतिमूलत्वमित्याशङ्कायामाह । देवतेति । देवताश्रये देवताङ्गत्वप्रतिपादके ऽपि, न प्रकल्पकमित्यनुवर्तते । पूर्वस्मात्तदपि निर्मूलमिति भावः ॥ २० ॥

प्रतिषिद्धकर्मणामनुष्ठाने ।निष्टप्राप्तिः । अधि० ५ ।

प्रतिषेधेष्वकर्मत्वात्क्रिया स्यात्प्रतिषिद्धानां
विभक्तत्वादकर्मणाम् ॥ २१ ॥

न कलञ्जं भक्षयेदिति पर्युदासो निषेधो वेति संशये पूर्वपक्षमाह । प्रतिषेधेष्विति । प्रतिषेधेषु सिद्धान्तिनो निषेधत्वेनाभिमतेषु न कलञ्जमिति वाक्येषु अकर्मत्वाद् भक्षणविरोधिसंकल्पविधित्वात् क्रिया स्यात् तत्कामनारहितपुरुषैर्भक्षणमनुष्ठेयं स्यात् । अयं भावः नञो न भावनायामन्वयः, भक्षणव्यवहितत्वात् । न कलञ्जेन, समासापत्तेः । भक्षणे अन्वेतीत्यपि न । तथा सति भक्षणाभावस्य कृत्यसाध्यतया कर्तव्यताप्रतिपादकविध्यनन्वयात्तस्मादगत्या नेक्षेतोद्यन्तमादित्यमितिवद् भक्षणपदस्य भक्षणविरोधिसंकल्पादौ लक्षणा । तस्य कर्तव्यतया विधानम् । तस्य फलाकाङ्क्षायां विश्वजिन्न्यायात्स्वर्गः फलं तत्फलेच्छारहितेन भक्षणं कर्तव्यमिति फलितमिति । अकर्मणां भक्षणविरुद्धसंकल्परूपकर्मप्रतिपादकानां

* इदमपि सूत्रं भाष्ये वार्त्तिके च न दृश्यते ।

पर्युदासरूपाणां निषिद्धानां च विभक्तत्वात् परस्परं भिन्नत्वादित्यर्थः। नञ्पदसमभिव्याहृतधातोः स्वविरुद्धार्थे लक्षणा यादृशवाक्ये स पर्युदासः। प्रवर्तकवाक्यमिति फलितम्। यच्च निवर्तकं तस्य निषेधरूपत्वात्॥ २१॥

## शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयेत तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः॥ २२॥

प्राजापत्यव्रतदृष्टान्तवैषम्यं दर्शयन् सिद्धान्तमाह। शास्त्राणामिति। प्राजापत्यव्रते त्रीणि शास्त्राणि सन्ति तस्य व्रतमित्येकं, नेक्षेतोद्यन्तमादित्यमिति द्वितीयम्। एतावता हैनसा भवतीति तृतीयम्। शास्त्राणां त्रयाणां वाक्यानामर्थवत्त्वेन एकार्थप्रतिपादकत्वेन पुरुषार्थः पुरुषस्यार्थः फलं यस्मादिति व्युत्पत्त्या ईक्षणविरोधी नेक्षिष्य इति संकल्परूपः विधीयते। अयं भावः। तस्य व्रतमित्यत्र व्रतशब्दार्थो मानसो व्यापारः। तदुत्तरं मानसव्यापारविशेषजिज्ञासायां नेक्षेतेति ईक्षणविरोधी संकल्पः। तस्य फलजिज्ञासायां तृतीयं वाक्यमिति त्रयमेकवाक्यतापन्नं भवतीति लक्षणा धातोर्युक्तेति। तयोः प्रथमतृतीयवाक्ययोः, न कलञ्जमित्यत्रासमवायित्वात्। अभावात्। तादर्थ्ये, चतुर्थ्यर्थे सप्तमी, शक्यार्थलाभाय विध्यतिक्रमः। विधीयमानार्थनिषेधः स्यात्। नञसमभिव्याहारे भक्षणानुष्ठानापरपर्यायो भावना विधीयते नञा तन्निषेधः। इत्थं च धातोः मुख्यार्थः संपद्यते तदर्थे व्यवहितान्वयोऽपि न दोषायेति भावः॥ २२॥

गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यत्वम्। अधि० ६।

## तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन्॥ २३॥

क्षुतआचामेदित्यादिस्मार्तधर्माः जन्मप्रभृति उतोपनयनमारभ्येति संशये पूर्वपक्षमाह। तस्मिन्निति। तस्मिन्मन्वादिग्रन्थे शिष्यमाणानि पठ्यमानानि आचमनादीनि जननेन जन्ममात्रेण प्रवर्तेरन्। विशेषाश्रवणादिति शेषः॥ २३॥

## अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन्॥ २४॥

सिद्धान्तमाह। अपि वेति। स्मृतीनां वेदतुल्यत्वाद् उपायेन उपनयनेन सह प्रवर्तेरन्॥ २४॥

अग्निहोत्रादियावज्जीवकर्मणां स्वकालमात्रकर्तव्यत्वम् । अधि॰ ७ ।

## अभ्यासोऽकर्मशेषत्वात्पुरुषार्थो विधीयते ॥ २५ ॥

यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति वाक्येनाभ्यासो विधीयतइति द्वितीये स्थितम् । अयमभ्यासोऽजस्रं कार्य उत सायंप्रातरिति संशये पूर्वपक्षमाह । अभ्यास इति । अयमभ्यासः अकर्मशेषत्वात् पुरुषार्थो विधीयते अतः सातत्येन होतव्यम् । अयं भावः । जीवने निमित्ते विधानान्निमित्तस्य सर्वदा सत्त्वादजस्रमनुष्ठानमिति ॥ २५ ॥

## एतस्मिन्नसंभवन्नर्थात् ॥ २६ ॥

एतस्मिन्नजस्रानुष्ठाने । असंभवन् निद्राविहारादिलोपभियेति शेषः । अर्थात् निद्राहारादिरूपावश्यकानुष्ठानातिरिक्ते काले सर्वदा होतव्यमिति ॥ २६ ॥

## न कालेभ्य उपदिश्यन्ते ॥ २७ ॥

सिद्धान्तमाह । कालेभ्यः विहितकालेभ्योऽन्यत्र न । यतः उपदिश्यन्ते कालाः, सायं प्रातरग्निहोत्रं जुहोतीति अमावास्यायाममावास्यया यजेतेत्यादिभिः ॥ २७ ॥

## दर्शनात्काललिङ्गानां कालविधानम् ॥ २८ ॥

उक्तार्थे लिङ्गमप्याह । दर्शनादिति । काललिङ्गानां विहितकाल एवेत्यत्र लिङ्गानां दर्शनात् । अमावास्यां पौर्णमासीं वाऽतिपादयतीति, तत्रानुष्ठाने प्रायश्चित्तश्रवणं लिङ्गम् । अतः काले विधानम् अनुष्ठानं नाजस्रम् । कालविधिना निमित्तसंकोचादिति भावः ॥ २८ ॥

अग्निहोत्रादीनां स्वकालावृत्त्याऽऽवृत्तिः । अधि॰ ८ ।

## तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥ २९ ॥

दर्शपूर्णमासादि सकृदनुष्ठेयमुत काले कालइति संशये सकृत्कृतश्चरितार्थ इति न्यायेन सकृदेवानुष्ठानमिति बहिः पूर्वपक्षे सिद्धान्तमाह । तेषामिति । तेषां विहितकालानामौत्पत्तिकत्वाद् उत्पत्तेरनुष्ठाने निमित्तत्वान्निमित्तस्यागमेन पुनः प्रवर्तते ॥ २९ ॥

## तथा हि लिङ्गदर्शनम् ॥ ३० ॥

तथा हि उक्तार्थे हि लिङ्गदर्शनम् । यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वा ऽतिपादयतीति प्रायश्चित्तश्रवणम् ॥ ३० ॥

दर्शादौ भेदादिनिमित्तावृत्त्या ऽऽवृत्तिः । अधि॰ ६ ।

## तथा ऽन्तःक्रतुयुक्तानि ॥ ३१ ॥

यथा क्रतुनिमित्तावृत्तौ क्रत्वावृत्तिः तथा ऽन्तःक्रतुयुक्तानि क्रतुमध्ये यानि नैमित्तिकानि भिन्ने जुहोति छिन्ने जुहोतीत्यादीनि क्रत्वर्थानि तथा आवर्तन्ते ॥ ३१ ॥

गुर्वनुगमनादीनां प्रतिनिमित्तमावृत्तिः । अधि॰ १० ।

## आचाराद्गृह्यमाणेषु तथा स्यात्पुरुषार्थत्वात् ॥ ३२ ॥

गुर्वनुगमनादिषु आचारप्राप्तेषु तथा आवृत्तिः स्यात् पुरुषार्थत्वात् । गुरुप्रीत्यर्थत्वात् ॥ ३२ ॥

ऋणत्रयापाकरणस्य ब्राह्मणक्षत्रियवैश्यानां नित्यत्वम् । अधि॰ ११ ।

## ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३३ ॥

सोमवेदाध्ययनप्रजोत्पत्तयः नित्या उतानित्या इति संदेहे, अनित्याः नित्यत्वबोधकप्रमाणाभावादिति बहिः पूर्वपक्षे, सिद्धान्तमाह । ब्राह्मणस्येति । ब्राह्मणस्येति क्षत्रियवैश्ययोर्लक्षणम् । सोमविद्याप्रजं नित्यम् । ऋणवाक्येन ऋणशब्दघटितवाक्येन संयोगात् । अयाकरणेऽर्णी भवतीति दोषश्रवणात् । जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासीति श्रुतिवाक्यम् ॥ ३३ ॥

इति श्रीमज्जैमिनिसूत्रवृत्त्यां षष्ठस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

नित्ये यथाशक्त्यङ्गानुष्ठानम् । अधि॰ १ ।

## सर्वशक्तौ प्रवृत्तिस्स्यात्तथाभूतोपदेशात् ॥ १ ॥

यावज्जीवमिति विहितनित्याग्निहोत्रे यावदङ्गानुष्ठानसमर्थ एवाधिकार्यथ वा यावच्छक्त्यङ्गानुष्ठानसमर्थो ऽप्यधिकारीति संशये पूर्वपक्षमाह । सर्वेति । सर्वशक्तौ प्रवृत्तिः स्यात् सर्वानुष्ठानसमर्थस्य प्रवृत्तिः

यागप्रवृत्तिः स्यात् । तथाभूतोपदेशात् । साङ्गानुष्ठानस्यैव विहितत्वात् ॥ १ ॥

## अपि वा ऽप्येकदेशे स्यात्प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्र तदर्थत्वात् ॥ २ ॥

सिद्धान्तमाह । अपि वेति । एकदेशे अङ्गैकदेशानुष्ठाने ऽपि प्रयोगः स्यात् । प्रधाने प्रधानानुष्ठाने ऽपि अर्थस्य फलस्य प्रत्यवायाभावरूपस्य निर्वृत्तिः सिद्धिः । इतरत्र इतरफले स्वर्गादौ गुणमात्रं यावदङ्गानुष्ठानं यावदङ्गानुष्ठानस्य तदर्थत्वात् स्वर्गाद्यर्थत्वात् ॥ २ ॥

## तद्कर्मणि च दोषः तस्मात्ततो विशेषः स्यात्प्रधानेनाभिसंबन्धात् ॥ ३ ॥

ननु दर्शपूर्णमासेभ्यः प्रधानेभ्यः पृथक्कृत्वा नित्ये प्रयोगे अङ्गानामप्रयोजकत्वे प्रधानमप्यप्रयोजकं किं न स्यात्तत्राह । तदेति । तद्कर्मणि तस्य प्रधानस्यानुष्ठाने दोषः श्रूयते । पथो वा एषो ऽध्यपथेनैतीति । तस्मात्ततः अङ्गाद् विशेषः प्रधानेनाभिसबन्धात् प्रधानमात्रानुष्ठानस्यावश्यकत्वात् ॥ ३ ॥

## कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात्सर्वेषामुपदेशः स्यात् ॥ ४ ॥

अमावास्यायाममावास्यया पौर्णमास्यां पौर्णमास्या यजेतेति साङ्गप्रधानानुष्ठानश्रवणं नित्ये यथाशक्ति काम्ये नेति वैरूप्यसूचकं नेति जैमिनिमतमाह । कर्मेति । कर्मणोः प्रयोगयोः अभेदमेकरूपतां जैमिनिराह । प्रयोगवचनस्य दर्शितस्यैकरूपत्वात् । प्रयोगद्वये ऽपि सर्वेषां यावदङ्गानाम् उपदेशः अनुष्ठानं स्यात् ॥ ४ ॥

## अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथा क्रत्वन्तरेषु ॥ ५ ॥

सिद्धान्तरहस्यमाह । अर्थस्येति । एकस्य प्रयोगे ऽपि किंचिदङ्गकनित्यप्रयोगे ऽपि फलं प्रत्यवायाभावः स्यात् । कुतः, अर्थस्य प्रधानस्याङ्गेभ्यः पृथक्कृतत्वात् । अमावास्यया यजेत पौर्णमास्या यजेतेत्यत्रा-

मावास्यापौर्णमासीशब्दौ न साङ्गप्रधानपरौ किं तु केवलप्रधानयङ्गाग-पराविति विद्वदधिकरणे प्रपञ्चितत्वान्न पूर्वसूत्राक्षेपावकाश इति भावः। इत्थं च नित्यकाम्यप्रयोगयोः परस्परमनपेक्षत्वान्नित्यं विगुणमपि कर्तव्यम्। अत्र दृष्टान्तमाह। यथा क्रत्वन्तरेषु यथा दर्शपूर्णमासाग्निहोत्रयोः परस्परनिरपेक्षत्वं तथा नित्यकाम्ययोरित्यर्थः॥ ५॥

## विध्यपराधे च दर्शनात्समाप्तेः॥ ६॥

साधकान्तरमाह। विध्यपराधइति। विध्यपराधे ऽपि अङ्गानुष्ठानासंभवे ऽपि समाप्तेः दर्शनात्समापनस्य श्रुतत्वात्। सदैव यादृक्कीदृक् च होतव्यमित्यच्छिद्रकाण्डे दर्शनात्। यादृक्कीदृग् यथाकथं चिदङ्गहीनमपि प्रधानमनुष्ठेयमिति वाक्यार्थः॥ ६॥

## प्रायश्चित्तविधानाच्च॥ ७॥

नित्ये किंचिदङ्गलोपे अभ्यनुज्ञासूचकमन्यदप्याह। प्रायश्चित्तेति। यस्याग्निमनुद्धृतं सूर्यो ऽभ्युदेति चतुर्गृहीतमाज्यं पुरस्ताद्धरेदित्यादिभिः प्रायश्चित्तश्रवणात्। अङ्गलोपे ऽपि अनुष्ठेयमिति ज्ञापयतीति भावः॥ ७॥

अङ्गवैकल्ये काम्यस्य निष्फलत्वम्। अधि॰ २।

## काम्येषु चैवमर्थित्वात्॥ ८॥

यथा नित्यं विगुणमनुष्ठेयं तथा काम्यमिति पूर्वसिद्धान्तमाक्षिपन् पूर्वपक्षसूत्रमाह। काम्येष्विति। एवं विगुणस्याप्यनुष्ठानम्। अर्थित्वात् प्रधानजन्यफलेच्छायाः सत्त्वात्॥ ८॥

## असंयोगात्तु नैवं स्याद्विधेः शब्दप्रमाणत्वात्॥ ९॥

एवं न, विधेः असंयोगात्। केवलप्रधानस्यापूर्वजनकत्वे तात्पर्याभावात्। अपूर्वजनकत्वस्य शब्दप्रमाणत्वाच् शब्दैकगम्यत्वात्। केवलयागभावना न विधीयते किं त्वितिकर्तव्यतासहिता ऽपूर्वजनिकेति विधीयतइति भावः॥ ९॥

## अकर्मणि चाप्रत्यवायात्॥ १०॥

ननु नित्ये ऽपि तुल्यमत आह । अकर्मणीति । अकर्मणि नित्यानमनुष्ठाने यथा प्रत्यवायः तथा काम्ये अश्रवणाच्च काम्यनित्ययोः साम्यमिति भावः ॥ १० ॥

द्रव्यभेदे ऽपि कर्माभेदः । अधि० ३ ।

## क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागः स्यात् ॥ ११ ॥

इतः पदमोपादसमाप्ति यथाशक्तिप्रयोगचिन्ता । तत्र मुख्याभावे नीवारादिना क्रियमाणो यागो भिन्नः स एव वेति विचारे पूर्वपक्षमाह । क्रियाणामिति । क्रियाणां यावत्क्रियाणामाश्रितत्वाद् द्रव्याश्रितत्वाद् द्रव्यभेदे व्रीहिनीवारादिभेदे विभागः कर्मभेदः स्यात् ॥ ११ ॥

## अपि वा ऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥

सिद्धान्तमाह । अपि वेति । ऐककर्म्यं स्यात् । द्रव्यभेदे ऽपि दर्शपूर्णमासादिपदवाच्यत्वेनैकं स्यात् । अव्यतिरेकाद् व्यतिरेकसाधकाभावात् । तत्र हेतुमन्यमप्याह । रूपशब्दाविभागात् । तद्वाचकपदस्य दर्शपूर्णमासरूपस्य अभेदाद् वाच्यस्य दर्शत्वपूर्णमासत्वरूपधर्मस्य च ऐक्यात् । यथा गोपदैक्ये तद्वाच्यगोत्वैक्ये गोत्वावच्छिन्ना व्यक्तिरपूर्वा न, तथा । दृष्टान्तान्तरमाह । सत्त्ववत् । द्रव्यगुणकर्मणां भेदे ऽपि सत्त्वेन न भेदः सदितिनामधेयं च न पृथक् तथा ॥ १२ ॥

नित्यकर्मणो ऽनित्यप्रारब्धकर्मणश्च द्रव्यापचारे प्रतिनिधिना समापनम् । अधि० ४ ।

## श्रुतिप्रमाणत्वाच्छिष्टाभावे ऽनागमो ऽन्यस्याशिष्टत्वात् ॥ १३ ॥

व्रीह्यभावे नीवारा ग्राह्या न वेति संशये पूर्वपक्षमाह । श्रुतीति । श्रुतिप्रमाणत्वात् । व्रीहिभिर्यजेतेति तृतीयाश्रुत्या ऽङ्गत्वप्रतिपादनात् । शिष्टाभावे विहितव्रीह्यभावे अन्यस्य नीवारादेः अनागमः अप्राप्तिः अशिष्टत्वात् । अनङ्गत्वात् ॥ १३ ॥

## क्वचिद्विधानाच्च ॥ १४ ॥

क्व चिदिति । क्व चित् ज्योतिष्टोमे सोमाभावे पूतीकानभिषुणोतीति प्रतिनिधिविधानात् । अत्र तथा नीवारप्रापकवचनाभावादिति भावः ॥ १४ ॥

## आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥

सिद्धान्तमाह । आगम इति । आगमः नीवारप्राप्तिः चोदनार्थाविशेषात् । चोदनार्थस्य यागस्याभिन्नत्वस्य पूर्वमेव व्यवस्थापितत्वात् । नीवारैरपि यागनिष्पत्तिसंभवादिति भावः ॥ १५ ॥

## नियमार्थः क्व चिद्विधिः ॥ १६ ॥

ननु कथं पूतीकविधानं नीवारादिवत्स्वतः प्राप्तत्वादत आह । नियमार्थेति । विधिः पूतीकविधिः नियमार्थः प्रतिनिधित्वेनान्यस्यापि प्राप्तौ पूतीका एव ग्राह्या इति ॥ १६ ॥

## तन्नित्यं तच्चिकीर्षा हि ॥ १७ ॥

ननु नियमार्थमिति कथमवगतमत आह । तदिति । हि यस्मात्कारणात् तच्चिकीर्षा यागचिकीर्षा नित्या । अकरणे प्रत्यवायश्रवणान्नित्या । अतः तत् पूतिकाप्रापणं नित्यम् अवश्यं शास्त्रं विना पक्षे प्राप्तं, मुख्यालाभे ऽपि यागस्यावश्यकत्वादिति भावः ॥ १७ ॥

देवतामन्त्रक्रियाणामपचारे प्रतिनिध्यभावः । अधि० ५ ।

## न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १८ ॥

देवतादिप्रतिनिधिरस्ति न वेति संशये पूर्ववदस्तीति पूर्वपक्षे सिद्धान्तमाह । न देवतेति । देवता इन्द्रादिः, अग्निराहवनीयादिः शब्दो मन्त्रकलापः, क्रिया प्रयाजादिः, न प्रतिनिधिमर्हति । अन्यार्थेन अत्रार्थशब्दो न्यायपरः । तथा च प्रतिनिधिसाधको यो न्यायः तस्मादन्येन न्यायेन युक्तत्वाद्देवतादेः । अयं भावः । द्रव्यस्य पुरोडाशकार्यसाधकत्ववन्नीवारस्यापि तत्साधकत्वं प्रत्यक्षगम्यम् । देवतादेरदृष्टसाधकत्वं, विहितदेवताप्रयोज्यं यददृष्टं तदन्येन भवतीति शास्त्रमन्तरा ज्ञातुमशक्यमिति ॥ १८ ॥

## देवतायां च तदर्थत्वात् ॥ १९ ॥

इतो ऽपि देवतायाः प्रतिनिधिर्नेत्याह । देवतायामिति । देवतायामग्न्यादिदेवतायां तदर्थत्वाद्धविरुद्देश्यत्वात् । दर्शहविषः उद्देश्यो ऽग्न्यादिः सूर्यादियोजने दर्शयागो न भवतीति भावः ॥ १९ ॥

प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावः । अधि· ६ ।

## प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ २० ॥

निषिद्धं माषादिकमपि न प्रतिनिधित्वेन ग्राह्यमित्याह सिद्धान्तसूत्रम् । प्रतिषिद्धमिति । माषादि प्रतिषिद्धं न, यतः तच्छ्रुतिः निषेधश्रुतिः अविशेषेण सामान्यरूपेण । अयज्ञिया वै माषा इति यज्ञत्वावच्छिन्ने निषेधादिति भावः ॥ २० ॥

स्वामिनः प्रतिनिध्यभावः । अधि· ७ ।

## तथा स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात् ॥ २१ ॥

स्वामिनो ऽपि प्रतिनिधिर्नास्तीत्याह । तथेति । स्वामिनस्तथा न प्रतिनिधिः फलस्य कर्मयोगित्वात् । प्रयोक्तृगामित्वात् । फलसमवायात् प्रतिनिधौ फलोत्पत्त्यापत्तेः ॥ २१ ॥

सत्रे कस्य चित् स्वामिनो ऽपचारे प्रतिनिध्यादानम् । अधि· ८ ।

## बहूनां च प्रवृत्तावन्यमागमयेदवैगुण्यात् ॥ २२ ॥

सत्रे बहूनां यजमानानां मध्ये एकमरणे अन्यो योज्य इति सिद्धान्तमाह । बहूनामिति । अवैगुण्यात्सप्तदशत्वसंख्यालोपभिया । शेषं स्पष्टम् ॥ २२ ॥

सत्रे प्रतिनिहितस्यास्वामित्वम् । अधि· ९ ।

## स स्वामी स्यात्संयोगात् ॥ २३ ॥

मृतप्रतिनिधिः स्वामी न वेति चिन्तायां पूर्वपक्षसूत्रम् । स इति । सः प्रतिनिधिः स्वामी । तत्संयोगात् स्वामिस्थानसंबन्धात् ॥ २३ ॥

## कर्मकरो वा क्रीतत्वात् ॥ २४ ॥

सिद्धान्तमाह । कर्मेति । कर्मकरः अध्वर्य्वादिवत्केवलकर्ता परिक्रीतत्वाद् द्रव्यदानेन ॥ २४ ॥

## तस्मिंश्च फलदर्शनात् ॥ २५ ॥

फलं कस्येत्याकाङ्क्षायामाह । तस्मिन्निति । तस्मिन्मृते फलश्रवणात् । यः सत्राय दीक्षितानां प्रमीयेतापि तस्य फलमिति श्रुतिः ॥ २५ ॥

सत्रे प्रतिनिहितस्य यजमानधर्मग्राहित्वम् । अधि· १० ।

## स तद्धर्मा स्यात्तत्कर्मसंयोगात् ॥ २६ ॥

यजमानप्रतिनिधौ यजमानकार्यमस्तीति सिद्धान्तमाह । स तद्धर्मेति । प्रतिनिधिः तद्धर्मा यजमानधर्मवान् । तस्य विहितकार्यकारी स्यात्तत्कर्मसंबन्धात् तत्कर्मार्थं नियुक्तत्वात् ॥ २६ ॥

श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वम् । अधि· ११ ।

## सामान्यं तच्चिकीर्षा हि ॥ २७ ॥

व्रीहीणामभावे सदृशमेव प्रतिनिधेयमुत यत्किं चिदिति संदेहे सिद्धान्तमाह । सामान्यमिति । सामान्यं व्रीहिसदृशं ग्राह्यम् । हि यस्माद् यागे प्रवृत्तस्य तच्चिकीर्षा यद्विषयिणी इच्छा तदलाभे तत्सदृशमेवेच्छतीति भावः ॥ २७ ॥

परिगृहीतद्रव्यापचारे तत्सदृशस्यैवोपादानं न तु वैकल्पिकद्रव्यान्तरस्य । अधि· १२ ।

## निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ २८ ॥

अग्नीषोमीयपशौ यूपः खादिरः पालाशश्चेति विकल्पेन विहितः, एवं सति यस्मिन्प्रयोगे खादिरो गृहीतः प्रथमं, स नष्टः, अन्यः खादिरो न लभ्यते, तत्र खादिरसदृशो ग्राह्य उत पालाश इति संशये सिद्धान्तमाह । निर्देशादिति । विकल्पे विषये यत्प्रवृत्तं यद्द्रव्यमङ्गीकृतं तत्सदृशं ग्राह्यमिति पूरणीयम् । निर्देशात् । प्रथमप्रवृत्तद्रव्यस्यैव अङ्गत्वेन निर्देशात् । यदा पालाशस्वीकारः तदा खदिरशास्त्रे अप्रामाण्यग्रहादिति भावः ॥ २८ ॥

## अशब्दमिति चेत् ॥ २९ ॥

सदृशस्यानङ्गत्वात्कथमुपादानमित्याशङ्कते । अशब्दमिति । अविहितमित्यर्थः ॥ २९ ॥

## नानङ्गत्वात् ॥ ३० ॥

अविहितत्वं वैकल्पिकेऽपि तुल्यमिति समाधत्ते। नेति। अनङ्गत्वात्। अविहितत्वस्य तुल्यत्वात्। इतरशास्त्रेऽप्रामाण्यग्रहादिति भावः ॥ ३० ॥

## *संस्काराश्च खादिरे कर्तव्याः ॥ ३१ ॥

प्रतिनिधौ संस्काराः कर्तव्या इत्याह । संस्कारा इति । खादिरे खदिरप्रतिनिधौ ॥ ३१ ॥

पूतीकस्य सोमप्रतिनिधित्वम् । अधि· १३ ।

## वचनाचान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ ३२ ॥

सोमाभावे निमित्ते पूतीकविधिस्तु नियमः प्रतिनिधेरिति संशये निमित्ते विधिरिति पूर्वपक्षे सिद्धान्तमाह । वचनादिति । अभावे सोमाभावे तत्सामान्येन तत्सादृश्येनेतरस्य पूतीकातिरिक्तस्य प्राप्तौ वचनात् सोमाभावे इति वचनाद् अन्याय्यं सदृशम्, असदृशं पूतीकरूपं द्रव्यं प्रतिनिधिः स्यात् । अभावे ईदृशवचनाभावे इतरस्य सदृशस्य प्राप्तिः ॥ ३२ ॥

प्रतिनिध्यपचारे उपात्तद्रव्यसदृशस्य प्रतिनिधित्वम् । अधि· १४ ।

## न प्रतिनिधौ समत्वात् ॥ ३३ ॥

नीवारनाशे नीवारसदृशः प्रतिनिधिस्तु व्रीहिसदृश इति संशये नीवारसदृश इति पूर्वपक्षे सिद्धान्तमाह । नेति । प्रतिनिधिनाशे न तत्सदृशं समत्वात् । आगन्तुकत्वस्य तुल्यत्वाद् अतो मुख्यसदृश एव ग्राह्य इति भावः ॥ ३३ ॥

श्रुतस्यापि प्रतिनिधेरभावे मुख्यसदृशस्यैव प्रतिनिधित्वम् । अधि· १५ ।

## स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ ३४ ॥

नीवारनाशे तत्सदृशग्रहणं मा भवतु, पूतीकनाशे तत्सदृशमेव ग्राह्यमिति पूर्वपक्षमाह । स्यादिति । श्रुतिलक्षणे वाक्येन नियमितप्रति-

* इदं सूत्रं भाष्ये सूत्रत्वेनोल्लिखितं न दृश्यते ।

निधिनाशे नष्टसदृशग्रहणं स्यात् । तस्मिन्प्रयोगे तस्य पूतीकस्य नियतत्वात् ॥ ३४ ॥

## न तदीप्सा हि ॥ ३५ ॥

सिद्धान्तमाह । नेति । न पूतीकसदृशोपादानम् । हि यतः यागे प्रवृत्तस्य तदीप्सा सोमेच्छा प्रथमं, न पूतीकेच्छा, अत आगन्तुकसदृशो नेच्छाविषयो भवितुमर्हतीत्यर्थः ॥ ३५ ॥

मुख्यापचारे पुनस्तत्प्राप्तौ तस्यैवोपादानम् । अधि० १६ ।

## मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ ३६ ॥

मुख्यस्यालाभेन नीवारान् संपाद्य यागार्थं प्रवृत्तः, न निर्वापादि कृतं, दैवाद् व्रीहिलाभे तादृशप्रयोगे लब्धे ऽपि व्रीहयो न ग्राह्या इति पूर्वपक्षे सिद्धान्तमाह । मुख्याधिगमेति । मुख्याधिगमे व्रीहिलाभे उक्तस्थले मुख्यं व्रीहयः ग्राह्याः । हि यतः तदभावाद् मुख्याभावाद् आगमः नीवारागमः । सर्वथा मुख्याभावएव प्रतिनिधिरिति भावः ॥ ३६ ॥

प्रतिनिधिना प्रारब्धे कर्मणि मुख्यलाभे ऽपि प्रतिनिधिनैव समापनम् । अधि० १७ ।

## प्रवृत्ते ऽपीति चेत् ॥ ३७ ॥

यत्र नीवारपुरोडाशेन प्रधानयागः संपन्नः । पश्चाद्व्रीहिलाभे पुनरनुष्ठेयं साद्गुण्यायेति पूर्वपक्षमाह । प्रवृत्तइति । प्रवृत्ते प्रधानयागसंपत्त्यनन्तरमपि पुनर्व्रीहिग्रहणमिति पूरणीयम् ॥ ३७ ॥

## नानर्थकत्वात् ॥ ३८ ॥

सिद्धान्तमाह । नेति । न व्रीहिग्रहणमनर्थकत्वात् । व्यर्थत्वात् । यागार्थं द्रव्यसंपादनम् । यागस्य जातत्वाद्व्यर्थं संपादनं, नाङ्गानुसारेण प्रधानावृत्तिर्युक्तेति भावः ॥ ३८ ॥

अमुख्ये संस्कारयोग्ये ऽपि मुख्यस्यैवोपादानम् । अधि० १८ ।

## द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३९ ॥

यूपप्रकृतिभूतः मुख्यः खदिरः पशुनियोजनमात्रसमर्थः अष्टाश्रीकरणादिसंस्कारासमर्थः, तत्सदृशः कदरस्तूभयसमर्थः, तत्र को ग्राह्य इति संशये सिद्धान्तमाह । द्रव्येति । द्रव्यस्य खदिरस्य संस्कारस्य अष्टा

श्रीकरणादेः परस्परं विरोधे उभयोरेकत्रासंभवे द्रव्यं ग्राह्यम् । संस्कारो बाध्यः । संस्कारस्य तदर्थत्वाद् द्रव्यार्थत्वात् । अङ्गप्रधानविरोधे अङ्गस्य लोप इति भावः ॥ ३९ ॥

प्रयोजनायोग्यस्य मुख्यस्य सत्वे ऽपि प्रतिनिध्यादानम् । अधि० १६ ।

## अर्थद्रव्यविरोधे ऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् ॥ ४० ॥

यत्र खदिरद्रव्यं पशुनियोजने ऽप्यसमर्थमतिसूक्ष्मं कदरस्तु समर्थः, तत्र किं ग्राह्यमिति विचारे सिद्धान्तमाह । अर्थेति । अर्थस्य पशुनियोजनकार्यस्य द्रव्यस्य खदिरस्य विरोधे द्रव्यं त्यक्त्वा ऽर्थः संपादनीयः । द्रव्याभावे मुख्यद्रव्याभावे गौणेनापि कार्योत्पत्तेः द्रव्यस्य पशुनियोजनाङ्गत्वात् । प्रधानानुसारेणाङ्गलोपो युक्त इति भावः ॥ ४० ॥

अङ्गनिर्वाहासमर्थस्यापि प्रधाननिर्वाहकस्य मुख्यस्योपादानम् । अधि० १७ ।

## विधिरप्येकदेशे स्यात् ॥ ४१ ॥

यत्र व्रीहयो द्व्यवदानमात्रे पर्याप्ताः, नीवारास्तु सर्वकार्यपर्याप्ताः, तत्र किं ग्राह्यमिति विचारे पूर्वपक्षमाह । विधिरिति । विधिः विहितद्रव्यं व्रीह्यादि एकदेशे द्व्यवदानमात्रे समर्थं तत्र प्रतिनिधिः स्यात् । भूयसामङ्गानामनुग्रहायेति भावः ॥ ४१ ॥

## अपि वा ऽर्थस्य शक्यत्वादेकदेशेन निर्वर्त्येतार्थानामविभक्तत्वाद्गुणमात्रमितरत्तदर्थत्वात् ॥ ४२ ॥

सिद्धान्तमाह । अपि वेति । एकदेशेन अल्पेनापि प्रधानद्रव्येण निर्वर्त्येत प्रधानं कर्तव्यम् । अत्र हेतुद्वयम्, अर्थस्य प्रधानस्यानुष्ठातुं शक्यत्वाद्, इतरत् स्विष्टकृदादि तदर्थत्वाद् हविःसंस्कारार्थत्वाद्गुणमात्रं हविषः अङ्गम् अतः अर्थानां स्विष्टकृदादिशेषप्रतिपत्तिकार्याणां सर्वेषामर्थानां कार्याणामविभक्तत्वादभेदात् । सर्वाण्यपि शेषकर्माणि हविरङ्गभूतानीति भावः । व्रीहिभिर्यजेतेति श्रुत्या व्रीहयः यागाङ्गं शेषकार्याणि हविरङ्गमिति दुर्बलमिति भावः ॥ ४२ ॥

इति जैमिनिसूत्रवृत्तौ षष्ठस्य तृतीयः पादः ॥ ३ ॥

अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानम् । अधि० १ ।

## शेषाद् द्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥

पुरोडाशात् स्रुचि अवदानानन्तरमेवत्तनाशे पुनः पुरोडाशादवदानमुत नेति संशये पूर्वपक्षमाह । शेषादिति । द्व्यवदाननाशे शेषात् पुरोडाशाद्ग्राह्यम् । तदर्थत्वाद् अग्न्यर्थत्वात् । अग्नये जुष्टं निर्वपामीति निर्वापेण निखिलपुरोडाशस्याग्न्यर्थत्वादिति भावः ॥ १ ॥

## निर्देशाद्वा ऽन्यदागमयेत् ॥ २ ॥

सिद्धान्तमाह । निर्देशादिति । निर्देशान्मध्यात्पूर्वार्धादवद्यतीति विधानात् । तन्नाशे अन्यत् पुरोडाशं निर्माय तेन यागः मध्यपूर्वार्धयोराग्न्यर्थत्वादिति भावः ॥ २ ॥

स्विष्टकृदर्थावत्तनाशे पुनरवदानाभावः । अधि० २ ।

## अपि वा शेषभाजां स्याद्विशिष्टकारणात् ॥ ३ ॥

स्विष्टकृदाद्यर्थमवत्तनाशे पुनः द्रव्यमुत्पादयेन्न वेति संशये सिद्धान्तमाह । अपि वेति । शेषभाजां शेषप्रतिपत्त्यर्थमवत्तानां नाशे स्विष्टकृदादिलोपः विशिष्टकारणत्वात् । प्रधाननिवृत्त्यनन्तरं शिष्टस्य प्रतिपत्तिकारणत्वात् । अयं भावः । शेषहविःसंस्कारार्थाः स्विष्टकृदादयः हविरङ्गभूताः, अङ्गानुसारेण प्रधानावृत्तिर्न युक्तेति भावः ॥ ३ ॥

ऋत्विजामेव शेषभक्षणम् । अधि० ३ ।

## निर्देशाच्छेषभक्षो ऽन्यैः प्रधानवत् ॥ ४ ॥

शंयुवाकादिभक्षणम् ऋत्विग्भ्यो ऽन्यैः कार्यमुत तैरेवेति संशये पूर्वपक्षमाह । निर्देशादिति । शेषभक्षः शंयुवाकादिभक्षः अन्यैर्ऋत्विग्भ्यो ऽन्यैः कार्यः निर्देशात् । यजमानपञ्चमाः प्राश्नन्तीति निर्देशात्प्रधानवत् । यथा मध्यादवद्यतीति निर्देशेनान्यः पुरोडाशः प्रधानार्थः तथा ऽत्रान्ये भक्षणार्थम् ॥ ४ ॥

## सर्वैर्वा समवायात्स्यात् ॥ ५ ॥

सिद्धान्तमाह । सर्वैरिति । सर्वैः इडादिसर्वभक्षैः ऋत्विजो युज्यन्तइति पूरणीयम् । समवायात् । कर्मकरत्वेन संबन्धात् ॥ ५ ॥

## निर्देशस्य गुणार्थत्वम् ॥ ६ ॥

ननु यजमानपञ्चमा इति वाक्यं व्यर्थमत आह । निर्देशेति । निर्देशस्य यजमानपञ्चमा इति वचनस्य गुणार्थत्वं कर्मकरत्वाभावेनाप्राप्तयजमानविध्यर्थत्वम् ॥ ६ ॥

## प्रधाने श्रुतिलक्षणम् ॥ ७ ॥

ननु प्रधानदृष्टान्तो विरुध्येत तत्राह । प्रधानइति । प्रधाने श्रुतिलक्षणं वाक्यप्रामाण्यम् । अयं भावः । तत्र विधेयमन्यत्रास्तीति परिसंख्या । अत्र न तथेति ॥ ७ ॥

## अश्ववदिति चेत् ॥ ८ ॥

अश्वमेधे यथा ऋत्विजां न सर्वभक्षणं तथाऽत्रापि किं न स्यादित्याक्षिपति । अश्वेति ॥ ८ ॥

## न चोदनाविरोधात् ॥ ९ ॥

समाधत्ते । नेति । चोदनाविरोधात् । अयं भावः । अश्वमेधे बहुलं मांसं सर्वभक्षणे ऋत्विजां मरणे यज्ञो न समाप्येत, अश्वमेधेन यजेतेति श्रुतिर्बाध्येतेति ॥ ९ ॥

कृत्स्नैकदेशभेदे प्रायश्चित्तानुष्ठानम् । अधि० ४ ।

## अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥ १० ॥

भिन्ने जुहोतीति श्रुतम् । इदं कपालस्यैकदेशभेदनेऽपि उत केवलसर्वभेदनइति संशये सिद्धान्तमाह । अर्थेति । एकदेशे एकदेशभेदनेऽपि, अपिना संपूर्णभेदे । प्रायश्चित्तं होमः, अर्थस्य भेदनरूपनिमित्तस्य समवायात् संपन्नत्वात् ॥ १० ॥

## न त्वशेषे वैगुण्यात्तदर्थं हि ॥ ११ ॥

भिन्ने होमो न सर्वभेदने, होमस्य भिन्नवस्तुसंस्काररूपत्वात्सर्वांशेन भिन्नस्यात्वे कार्याक्षमत्वादित्यभिप्रायेण पूर्वपक्षमाह । न त्विति । अशेषे भिन्ने तु न होमः । हि यतः तदर्थं भिन्नस्याङ्गं होमः अशेषभिन्नस्य वैगुण्यात् कार्याक्षमत्वात् ॥ ११ ॥

स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्न हि तस्य गुणार्थत्वेनानित्यत्वात् ॥ १२ ॥

न भिन्नसंस्कारः किं तु भेदने निमित्ते होम इत्याह । स्यादिति । सर्वनाशे ऽपि होमः स्यात् । भेदनरूपप्राप्तनिमित्तत्वात् । अतद्धर्मः । भिन्नकपालादिसंस्कारो न । होमस्य नित्यसंयोगात् । तस्य भेदनस्य गुणार्थत्वेन गुणकार्यत्वेन, निर्देशइति शेषः । भेदनस्य अनित्यत्वात् । कादाचित्कत्वात् । न हि नित्यमनित्यस्योपकारं कर्तुं शक्नोतीति भावः ॥ १२ ॥

गुणानां च परार्थत्वाद्वचनाद्व्यपाश्रयः स्यात् ॥ १३ ॥

किं च, असति आर्षप्रमाणे अङ्गानां प्रधानसंबन्ध एव युक्तो नाङ्गेन संबन्ध इत्याह । गुणानामिति । गुणानामङ्गानां परार्थत्वात् प्रधानार्थत्वाद् वचनाद् विशेषवचनाद् व्यपाश्रयः अन्यत्र विनियोगः । अयं भावः भिन्ने जुहोतीति वाक्ये विशेषाश्रवणात्प्रधानहोमाधिकरणविधिर्वाच्यः । स च न संभवति । आहवनीयावरुद्धत्वादिति ॥ १३ ॥

*वचनाद्विकल्प इति चेन्न निमित्तार्थेन संभवात् ॥ १४ ॥

उभयोस्तुल्यबलत्वेन विकल्पो ऽस्त्वित्याह । वचनादिति । निमित्तत्वेनोपपत्तौ दुष्टो विकल्पो न युक्त इत्याह । नेति ॥ १४ ॥

भेदार्थमिति चेत् ॥ १५ ॥

भिन्नस्य पुनःसंधानार्थता मन्त्रलिङ्गेन प्रतीयते सा बाध्येतेत्याह । भेदार्थमिति । गायत्र्या त्वा शताक्षरया संदधामीति संधानलिङ्गं ज्ञेयम् ॥ १५ ॥

नाशेषभूतत्वात् ॥ १६ ॥

होमेन कपालसंधानस्यासंभवादवृष्टार्थमित्याह । नेति । अशेषभूतत्वात् । पुनरुत्पत्त्यजनकत्वात् ॥ १६ ॥

अनर्थकं च सर्वनाशे स्यात् ॥ १७ ॥

किं च, यदि किंचिदेकदेशनाशे उक्तमन्त्रलिङ्गविरोधादवृष्टद्वारा

* इदं भाष्यपुस्तके सूत्रत्वेन नाधारि ।

कपालं संस्कृत्य उपधाने योजयेदिति कल्प्यते तदा ऽयमवचनं व्यर्थमित्याह । अनर्थकमिति । सर्वनाशे सर्वनाशपरत्वे । अयं भावः । भिन्नं कपालमप्सु प्रहरतीति श्रुतम् । अस्य तव मते सर्वनाशपरत्वं वाच्यं, तथा सति एकदेशनाशे तदुपधानस्यापूर्वाजनकत्वेन कश्चिदज्ञात्वा कुर्यादिति जले प्रक्षेपविधिः सफलः, सर्वनाशे तदसंभवेन प्रक्षेपविधानं व्यर्थमिति ॥ १७ ॥

क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानम् । अधि० ५ ।

## क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १८ ॥

पुरोडाशदाहे प्राश्चित्तं श्रुतम् । तदेकदेशदाहे ऽथ वा संपूर्णदाहइति संशये पूर्वाधिकरणवदेकदेशदाहे ऽपीति पूर्वपक्षे सिद्धान्तमाह । क्षामइति । क्षामे दाहे यत्प्रायश्चित्तं तत् सर्वदाहे स्यात् । एकदेशस्य एकदेशदाहस्यावर्जनीयत्वाद् नित्यत्वात् । नित्यस्य नैमित्तिकत्वासंभवादिति भावः ॥ १८ ॥

## दर्शनादेकदेशे स्यात् ॥ १९ ॥

यस्य पुरोडाशौ क्षायतः तं यज्ञं वरुणो गृह्णाति यदा तद्धविः संतिष्ठेताथ तदेव हविर्निर्वपेद्यज्ञो हि यज्ञस्य प्रायश्चित्तिरिति । क्षायतः दग्धौ स्तः । अस्मिन्वाक्ये तद्धविः संतिष्ठेतेति, तेन हविषा यागः समाप्येतेत्यर्थकम् । सर्वदाहे भस्मीभूतस्य यागानर्हत्वाद्वाक्यं विरुध्येत, अत एकदेशदाह एवात्राभिमत इति शङ्कते । दर्शनादिति । दर्शनात्तद्यागसमाप्तिश्रवणाद् एकदेशदाहे स्यात् ॥ १९ ॥

## अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः ॥ २० ॥

इमं दोषं परिहरति । अन्येनेति । अन्येनाज्येन एतत् समापनम् । ननु आज्येन समापने पुनः करणं कुतः तत्राह । शास्त्राद् दाहे पुनरावृत्तिरिति शास्त्रात् कारणप्राप्तिः, निमित्तप्राप्तिः, अस्तीति शेषः । अन्यद्रव्येण कृते ऽपि, दाहे निमित्तत्वं न गच्छति, निमित्तं नैमित्तिकमिति भावः ॥ २० ॥

तद्धविःशब्दान्नेति चेत् ॥ २१ ॥

तद्धविः संतिष्ठतेत्यनेन वाक्येन तस्यैव दग्धहविषः साधनत्वश्रवणादन्येन हविषा कथं समाप्तिरिति शङ्कते । तद्धेति । न अन्येनेत्यर्थः ॥ २१ ॥

स्यादिज्यागामी हविःशब्दस्तल्लिङ्गसंयोगात् ॥ २२ ॥

हविःशब्दो यागवाचीति समाधत्ते । स्यादिति । इज्यागामी यागवाची हविःशब्दः तल्लिङ्गसंयोगात् । संतिष्ठतेतिलिङ्गसंबन्धात् । अतोऽन्येन हविषा स्यात् ॥ २२ ॥

एकहविरार्तावपि पञ्चशरावनिर्वापः । अधि० ६ ।

यथाश्रुतीति चेत् ॥ २३ ॥

यस्योभयं हविरार्तिमार्च्छति ऐन्द्रं पञ्चशरावमोदनं निर्वपेदिति । उभयं हविः सायंप्रातर्हविः । अत्रोभयार्तिनिमित्तमुतान्यतरार्तिरिति संशये पूर्वपक्षमाह । यथेति । यथा श्रूयते तथा उभयार्तिनिमित्तमित्यर्थः ॥ २३ ॥

न लक्षणत्वादुपपातो हि कारणम् ॥ २४ ॥

सिद्धान्तमाह । नेति । हि यतः उपपातः नाशः कारणं निमित्तं, केवलक्षणादीनां नाशस्य सार्वकालिकत्वेन नित्यत्वात्केवलनाशस्य निमित्तत्वासंभवात् । लक्षणत्वात् । केवलहविषः प्रतियोगितासंबन्धेन विशेषत्वात् । उभयत्वस्यापि प्रतियोगितावच्छेदककोटिप्रवेशे वाक्यभेदः स्यादिति भावः ॥ २४ ॥

होमाभिषवोभयकर्तुरेव भक्षणम् । अधि० ७ ।

होमाभिषवभक्षणं च तद्वत् ॥ २५ ॥

ज्योतिष्टोमे ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीति । अत्राभिषवहोमौ भक्षणे प्रत्येकं कारणमुत मिलिताविति संशये पूर्वपक्षमाह । होमेति । होमाभिषवभक्षणं तद्वद् हविरार्तिवत् प्रत्येकं कारणमित्यर्थः ॥ २५ ॥

उभाभ्यां वा, न हि तयोर्धर्मशास्त्रम् ॥ २६ ॥

सिद्धान्तमाह । उभाभ्यामिति । हि यतः तयोः होमाभिषवयोः भक्षणस्य धर्मत्वप्रतिपादकमिदं शास्त्रं न, येनावृत्तिः स्याद् भक्षस्य ।

अतो नावृत्तिः । तयोरङ्गत्वे भक्षणस्य प्रतिप्रधानमिति न्यायः प्रवर्त्ततेति भावः ॥ २६ ॥

पुनराधानं प्रति वह्न्यनुगमद्वयस्य निमित्तत्वम् । अधि० ८ ।

## पुनराधेयमोदनवत् ॥ २७ ॥

यस्योभावग्नी अनुगताविभिनिम्लोचेदभ्युदियाद्वा पुनराधेयमिति । उभौ गार्हपत्याहवनीयौ । अत्रोभयत्वं विवक्षितं न वेति संशये पूर्वपक्षमाह । पुनरिति । पुनराधेयं पुनराधाननिमित्तत्वमोदनवत् । ऐन्द्रपञ्चशरावौदननिमित्तवत् । अन्यतरानुगमनमपि निमित्तमिति भावः ॥ २७ ॥

## द्रव्योत्पत्तेर्वोभयोः स्यात् ॥ २८ ॥

सिद्धान्तमाह । द्रव्येति । उभयोरनुगमे पुनराधानं स्यात् । द्रव्योत्पत्तेः अग्निरूपद्रव्योत्पत्तेः, आधानकार्यत्वादिति पूरणीयम् । पुनराधेयमित्यनेन वसन्ते ब्राह्मणो ऽग्निमादधीतेत्यनेन विहिताधानादन्यद्विधीयते मासाग्निहोत्रवत् । प्रकृताधाने अग्निद्वयोत्पादकत्वमाधानस्य क्लृप्तम्, एकाग्निनाशे तदुत्पादकत्वस्याक्लृप्तत्वादत्राग्निद्वयनाशो निमित्तमिति वक्तव्यमिति भावः ॥ २८ ॥

पञ्चशरावनिर्वापस्य कर्मान्तरत्वम् । अधि० ९ ।

## पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ २९ ॥

ऐन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्र सान्नाय्यप्रतिनिधिद्रव्यं विधीयते अपूर्वयागो वेति संशये पूर्वपक्षमाह । पञ्चशराव इति । सूत्रार्थः स्पष्टः । निर्वापविधौ एकपदश्रुतिरनुगृहीता भवतीति भावः ॥ २९ ॥

## चोदना वा द्रव्यदेवताविधिरवाच्ये हि ॥ ३० ॥

सिद्धान्तमाह । चोदनेति । हि यतः द्रव्यदेवताविधिः अतः कर्मविधिः द्रव्यदेवतासंबन्धस्य यागमन्तरा ऽसंभवादिति भावः । ननु प्राकृतकर्मानुवादेन द्रव्यविधिरिति चेन्न । ऐन्द्रमित्यनर्थकं स्यात् । न च यदैन्द्रं तत्पञ्चशरावनिर्वापेण कुर्यादित्युद्देश्यनिर्देशार्थं तदिति शक्यते वक्तुं, प्रकृते इन्द्रमहेन्द्रयोर्देवतात्वेनैन्द्रशब्दस्य उभयावाचकत्वादित्याह । अवाच्ये । उभे ते अवाच्ये अतः देवताद्रव्यविशिष्टं कर्म विधीयते ॥ ३० ॥

पञ्चशरावयागस्य नैमित्तिकदर्शयागाङ्गत्वम् । अधि० १० ।

## स प्रत्याम्नेस्स्थानात् ॥ ३१ ॥

अयं यागः दर्शप्रतिनिधिरूप उत तदङ्गमिति संशये पूर्वपक्षमाह । स इति । सः पञ्चशरावयागः प्रत्याम्नेत् प्रतिनिधिः तत्स्थानात् ॥ ३१ ॥

## अङ्गविधिर्वा निमित्तसंयोगात् ॥ ३२ ॥

सिद्धान्तमाह । अङ्गविधिरिति । स्पष्टो ऽर्थः ॥ ३२ ॥

सत्रायागूर्याप्रवृत्तस्य विश्वजिदावश्यकत्वम् । अधि० ११ ।

## विश्वजिद्प्रवृत्ते भावः कर्मणि स्यात् ॥ ३३ ॥

एतदाम्नायते, यस्सत्रायागुरते स विश्वजिता यजेतेति । अयं यागः सत्रप्रवृत्तस्य सत्रमनुतिष्ठत उत सत्रान्निवृत्तस्येति संशये विशेषाश्रवणात्प्रवृत्तस्यापीति पूर्वपक्षे सिद्धान्तमाह । विश्वजिदिति । आरभ्याप्रवृत्ते विश्वजित्स्यात् । भावः सत्रफलं कर्मणि विश्वजिति यतः ॥ ३३ ॥

## निष्क्रयवादाच्च ॥ ३४ ॥

लिङ्गं दर्शयति । निष्क्रयेति । निष्क्रयवादात् । सर्वाभ्यो देवताभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानं निष्क्रीणीतइति अर्थवादः, देवतोद्देशेन संकल्पाकरणे ऋणी सन् अनेन विश्वजिता परिक्रीणीतइति संगत इति भावः ॥ ३४ ॥

बर्हिषेत्यादिश्रुतेः व्रतकालविधानार्थत्वम् । अधि० १२ ।

## वत्ससंयोगे व्रतचोदना स्यात् ॥ ३५ ॥

दर्शपूर्णमासयोः श्रुतम् । बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामिति । अत्र वत्सादिविशिष्टव्रतविधिरुत कालविधिरिति संशये पूर्वपक्षमाह । व्रतेति । व्रतचोदना वत्सविशिष्टव्रतविधिः । वत्ससंयोगाद् वत्सव्रतयोः श्रूयमाणत्वात् ॥ ३५ ॥

## कालो वोत्पन्नसंयोगाद्यथोक्तस्य ॥ ३६ ॥

सिद्धान्तमाह । काल इति । कालः वत्सापाकरणकालो विधीयते । यथोक्तप्राप्तस्य सकारणव्रतस्य उत्पन्नस्य संयोगाच्च श्रवणात् । अमा-

यममांसं बहुसर्पिष्कं व्रतयतीति वचनेन प्राप्तत्वादप्राप्तकालमात्रविधिरिति भावः ॥ ३६ ॥

## अर्थपरिमाणाच्च ॥ ३७ ॥

इतो ऽपि कालविधिरित्याह । अर्थेति । अत्र वत्सो व्रतयितव्यः किं वत्सेन हस्तस्थानीयेन व्रतयितव्यं किं वत्सं समीपे संस्थाप्य व्रतमुपेयादिति, एतादृशानां मध्ये एकस्य नियामकस्याभावात्काललक्षकत्वमित्यर्थः ॥ ३७ ॥

## वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् ॥ ३८ ॥

वत्सस्य विधौ शक्यार्थः संभवति कालपरत्वे लक्षणा स्यादित्याक्षिपति । वत्स इति । श्रुतिसंयोगात् । शक्यार्थसंभवात् ॥ ३८ ॥

## कालस्तु स्यादचोदनात् ॥ ३९ ॥

लक्षणैव न्याय्येत्याह । काल इति । अचोदनात् प्रकृतवाक्यस्य अनुवादकत्वात् । अयं भावः । पुरा वत्सानामपाकर्तोर्दंपती अश्नीयातामित्यनेन कालस्यापि प्राप्तत्वादनुवादरूपत्वाल्लक्षणा न दोषायेति ॥ ३९ ॥

## अनर्थकश्च कर्मसंयोगे ॥ ४० ॥

इतो ऽपि नेत्याह । अनर्थक इति । कर्मसंयोगे कर्माङ्गत्वे सिद्ध ऽपि अनर्थकः अङ्गत्वं कया ऽपि रीत्या संपादयितुमशक्यः ॥ ४० ॥

## अवचनाच्च स्वशब्दस्य ॥ ४१ ॥

ननु वत्सविशसनं कृत्वा मांसेन व्रतसंपादने अङ्गत्वं निर्वहतीत्यत्रोत्तरमाह । अवचनादिति । स्वशब्दस्य वत्सशब्दस्य अवचनाद् मांसे शक्त्यभावाल्लक्षणा ऽपरिहार्येति भावः ॥ ४१ ॥

बर्हिषेत्याद्युक्तकालस्य सन्नयदसन्नयदुभयसाधारणत्वम् । अधि० १२ ।

## कालश्चेत्सन्नयत्पक्षे तल्लिङ्गसंयोगात् ॥ ४२ ॥

अयं कालविधिः सन्नयत उतासन्नयतो ऽपीति संशये पूर्वपक्षमाह । काल इति । सन्नयत्पक्षे सान्नाय्यसहितप्रयोगे कालः स्यात् । सान्नाय्यलिङ्गयुक्तत्वाद्वाक्यस्य ॥ ४२ ॥

## कालार्थत्वादोभयोः प्रतीयेत ॥ ४३ ॥

सिद्धान्तमाह । कालेति । कालार्थत्वाद् व्रतस्य सान्नाय्यानङ्गत्वेन केवलकालमात्रापेक्षत्वादुभयोः सन्नयतः असन्नयतश्च स्यात् ॥ ४३ ॥

सह शाखयेत्यस्य कालविधानार्थत्वम् । अधि० १५ ।

## प्रस्तरे शाखा श्रयणवत् ॥ ४४ ॥

सह शाखया प्रस्तरमाहवनीये प्रहरतीत्यत्र प्रस्तरप्रहरणाङ्गं शाखा उत कालविधिरिति संशये पूर्वपक्षमाह । प्रस्तरइति । प्रस्तरे शाखा ऽङ्गं, यथा मैत्रावरुणं पयसा श्रयतीत्यत्र द्वितीयाश्रुत्या शेषिशेषभावः तद्वदत्रापि श्रुतिद्वयसत्त्वात् ॥ ४४ ॥

## कालविधिर्वोभयोर्विद्यमानत्वात् ॥ ४५ ॥

सिद्धान्तमाह । कालविधिरिति । उभयोः प्रस्तरशाखयोः विद्यमानत्वाद् वचनान्तरेण प्राप्तत्वात् ॥ ४५ ॥

## अतत्संस्कारार्थत्वाच्च ॥ ४६ ॥

ननु प्रस्तरस्य शाखा दृष्टोपकारं मा जनयतु अदृष्टद्वारोपकारी ऽस्त्वत आह । अतदिति । प्रस्तरसंस्कारार्था ऽपि शाखा न ॥ ४६ ॥

## तस्माच्च विप्रयोगे स्यात् ॥ ४७ ॥

उपसंहरति । तस्मादिति । विप्रयोगे शाखाऽभावे ऽपि प्रस्तरप्रहरणं स्यात् ॥ ४७ ॥

## उपवेषश्च पक्षे स्यात् ॥ ४८ ॥

उपवेषे विशेषमाह । उपवेषइति । पक्षे अमावास्यायां सन्नयत एव, मूलत उपवेषं करोतीति शाखामूलस्योपवेषत्वात् ॥ ४८ ॥

इति जैमिनिसूत्रवृत्त्यां षष्ठस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

दर्शे ऽभ्युदयेष्टौ नैमित्तिकदेवताऽपनयः । अधि० १ ।

## अभ्युदये कालापराधादिज्याचोदना स्याद्यथा पञ्चशरावे ॥ १ ॥

यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थवि-

ष्टास्तानिन्द्राय प्रदात्रे दध्यृश्टतं ये ऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमिति । किं कालापराधे प्रायश्चित्तरूपं यागान्तरं किं वा चन्द्रोदये निमित्ते दर्शकर्मण्येव प्राकृतदेवताऽपनयो विधीयतइति संशये पूर्वपक्षमाह । अभ्युदयइति । अभ्युदये चन्द्रोदये कालापराधाद् दर्शभ्रान्त्या चतुर्दश्यां निर्वापे कालापराधात् । द्रव्यचोदना स्यात् । यागविधिः स्यात् । हविरार्तौ पञ्चशरावषत् ॥ १ ॥

## अपनयो वा विद्यमानत्वात् ॥ २ ॥

सिद्धान्तमाह । अपनय इति । अपनयः द्रव्यसंबन्धप्राकृतदेवताया विभागः विधीयते । विद्यमानत्वात् प्राकृतदेवतासंबन्धस्य विद्यमानत्वात् । पूर्वदेवतासंबद्धद्रव्ये देवतान्तरविधानासंभवेन यागविध्यसंभवादिति भावः ॥ २ ॥

## तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥

उक्तार्थे साधकान्तरमाह । तद्रूपत्वादिति । शब्दानामुक्तवाक्यघटकशब्दानां तण्डुलान्विभजेदित्यादीनां तद्रूपत्वात् । देवताऽपनयार्थत्वात् । विभजेदित्यनेन देवताऽपनयः साक्षादेव श्रूयते । एवं ये मध्यमा इत्यादयः परम्परया तत्प्रतिपादका इति भावः ॥ ३ ॥

## आतञ्चनाभ्यासस्य च दर्शनात् ॥ ४ ॥

साधकान्तरमाह । आतञ्चनेति । आतञ्चनस्य यो ऽभ्यासः आवृत्तिः तस्य दर्शनाच् श्रवणात् । अर्धं हविरातञ्चनार्थं निदध्यादभ्युदियादनेनातञ्च्य प्रचरेदिति । यद्यपूर्वं स्यात्प्रकृतितः आतञ्चनप्राप्तौ पुनर्विधानं व्यर्थं स्यादिति भावः ॥ ४ ॥

## अपूर्वत्वाद्विधानं स्यात् ॥ ५ ॥

ननु यः पशुकामः स्यात्सो ऽमावास्यामिष्ट्वा वत्सानपाकुर्यादित्यत्र कथमपूर्वकर्मविधिरित्यत्रोत्तरमाह । अपूर्वत्वादिति । अपूर्वत्वात् । अमावास्यामिष्ट्वेत्यनेन प्रकृतयागस्य समाप्तत्वेनापूर्वत्वात् । शेषं स्पष्टम् ॥ ५ ॥

## पयोदोषात्पञ्चशरावे ऽदुष्टं हीतरत् ॥ ६ ॥

पञ्चशरावदृष्टान्तवैषम्यमाह । पय इति । पञ्चशरावे हविर्दो-

षाद् हविर्नाशात् । नवीनद्रव्यदेवतायोगात्कर्मान्तरम् । इतरत्पक्कं पयःप्रभृति अदुष्टम् अतो नान्यत्कर्म ॥ ६ ॥

सान्नाय्ये ऽपि तथेति चेत् ॥ ७ ॥

पञ्चशरावे पूर्वहविर्यथा दुष्टं तथा अकालनिर्वापेण सान्नाय्यमपि दुष्टमित्यभिप्रायवान् शङ्कते । सान्नाय्यइति । स्पष्टम् ॥ ७ ॥

न तस्यादुष्टत्वादविशिष्टं हि कारणम् ॥ ८ ॥

परिहरति । नेति । तस्य सान्नाय्यस्य अदुष्टत्वाद् द्रोपत्वेन शिष्टैः परिगृहीतानधिकरणत्वात् कारणं कालापराधे प्रायश्चित्तं दुष्टे अदुष्टे अविशिष्टं तुल्यम् ॥ ८ ॥

लक्षणार्था शृतश्रुतिः ॥ ९ ॥

ननु शृते चरुमित्यत्र श्रपणसंस्कारो भूतः प्रतीयते । न हि चन्द्रोदयवेलायां पयसि श्रपणं संपन्नम् । कथं तदनुवादेन देवतासंबन्ध इत्याशङ्कायामाह । लक्षणेति । लक्षणार्था लक्षणारूपवृत्तितात्पर्यिका शृतश्रुतिः । शृतपदस्य श्रपणसहचरितवत्सापाकरणादिविशिष्टे लक्षणा । वत्सापाकरणादीनां पूर्वं संपन्नत्वाद् भूतार्थकक्तप्रत्ययश्रुतिरुपपन्नेति भावः ॥ ९ ॥

उपांशुयागे ऽपि देवताऽपनयः । अधि॰ २ ।

उपांशुयाजे ऽवचनाद्यथाप्रकृति ॥ १० ॥

तत्रैवोपांशुयागसाधनद्रव्ये प्राकृतदेवताऽपनयः कार्यो न वेति संशये पूर्वपक्षमाह । उपांश्विति । अवचनाद् देवतान्तरसंबन्धाश्रवणात् । यथाप्रकृति प्राकृतदेवताकमेवानुष्ठेयम् ॥ १० ॥

अपनयो वा प्रवृत्त्या यथेतरेषाम् ॥ ११ ॥

अत्र तण्डुलपदस्य हविर्मात्रलक्षकत्वात् तस्याप्यपनयः इति सिद्धान्तमाह । अपनयो वेति । प्रवृत्त्या उक्तादिशा हविष्ट्वावच्छिन्नत्वेन विधिप्रवृत्त्या । शेषं स्पष्टम् ॥ ११ ॥

अनिरुप्ते ऽप्यभ्युदयेष्टिः । अधि॰ ३ ।

निरुप्ते स्यात्तत्संयोगात् ॥ १२ ॥

अस्यामिष्टौ निर्वापो निमित्तमुत संकल्पादिकमपीति संशये पूर्वपक्षमाह । निरुप्तइति । निरुप्ते इयमिष्टिः तत्संयोगात् । वाक्ये निर्वापशब्दसंयोगात् ॥ १२ ॥

## प्रवृत्ते प्रापणान्निमित्तस्य ॥ १३ ॥

सिद्धान्तमाह । प्रवृत्तइति । प्रवृत्ते आरब्धे स्यात् । वाक्येन हविर्मात्रस्य निमित्तस्य प्रापणात् । बोधनात् । यस्य हविरभ्युदेतीत्येव विवक्षितं न निरुप्तमित्यपि । निमित्तविशेषणानामविवक्षेति हविरार्त्यधिकरणे सिद्धत्वादिति भावः ॥ १३ ॥

## लक्षणमात्रमितरत् ॥ १४ ॥

केवलद्रव्यस्य चन्द्रोदयस्य द्रव्यविशिष्टस्य नित्यत्वेन निमित्तत्वासंभवात्प्रवृत्तत्वमात्रविवक्षा, तल्लक्षकं निरुप्तपदमित्याह । लक्षणेति । इतरत् निरुप्तपदं लक्षणमात्रं प्रवृत्तिलक्षकम् ॥ १४ ॥

## तथा चान्यार्थदर्शनम् ॥ १५ ॥

उक्तार्थे साधकान्तरमाह । तथा चेति । अन्यार्थे एतद्विधिशेषेऽर्थवादे दर्शनमुक्तार्थदर्शनम् । स यद्यगृहीतं हविरभ्युदियात्तदैवैव व्रतचर्येति । अगृहीते अनिरुप्ते हविषि व्रतचर्येति लिङ्गम् ॥ १५ ॥

अनिरुप्ते ऽभ्युदये वैकृतीभ्यो निर्वापः । अधि० ४ ।

## अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यः तण्डुलभूतेष्वपनयात् ॥ १६ ॥

प्रवृत्तिमात्रं निमित्तमिति स्थिते अयं देवताविभागः तण्डुलावस्थे हविषि कार्यः । तण्डुलोत्पत्तिप्राक्कालीननिर्वापस्तु प्राकृतदेवताभ्य एव उत निर्वापो वैकृतीभ्य इति संशये पूर्वपक्षमाह । अनिरुप्तइति । अनिरुप्ते निर्वापात्प्रागभ्युदये प्राकृतीभ्यो निरुप्य पश्चात्तण्डुलावस्थायां प्राकृतदेवताऽपनयः तण्डुलान्विभजेदिति तण्डुलेष्वपनयश्रवणाद् इत्याश्मरथ्यमतम् ॥ १६ ॥

## स्यूर्ध्वं भाग्भ्यस्त्वा लेखनस्तत्कारित्वाद्देवता-ऽपनयस्य ॥ १७ ॥

सिद्धान्तमाह । स्यूर्ध्वेति । स्यूर्ध्वंभाग्भ्यः हविरशनभाग्भ्यः वैकृतीभ्य इत्यर्थः । निर्वापः । कुतः, देवताऽपनयस्य तत्कारित्वाद्वैकृतदेवतासंबन्धलाभार्थत्वात् । प्रथमं संबन्धं कृत्वा पश्चाद्विभागं कृत्वा देवताऽन्तरसंबन्धस्य शिरोवेष्टनपूर्वकनासिकास्पर्शतुल्यत्वादिति भावः । तण्डुलपदस्य छविर्लक्षकत्वमिति प्रागुक्तत्वात् ॥ १७ ॥

किं चिचिरुप्ते ऽभ्युदये ऽवशिष्टस्य तूष्णीं निर्वापः । अधि० ५ ।

## विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् ॥ १८ ॥

यदा प्राकृतदेवतोद्देशेन मुष्टिद्वयनिर्वापः ततश्चन्द्रोदये शेषमुष्टिद्वयनिर्वापः कथं कार्यं इति विचारे पूर्वपक्षमाह । विनिरुप्तइति । विनिरुप्ते अर्धनिरुप्ते, ततश्चन्द्रोदये इति शेषः । न तत्र तदानीं देवताऽपनयः, तद्गुणत्वात् । सा देवता गुणो यस्य निर्वापस्य तत्त्वात् । मुष्टीनां न गुणः, देवताया निर्वापाङ्गत्वात् । मुष्टिचतुष्टयनिर्वापस्यैककर्मत्वात् । तावत्कर्मण्येका देवतेति भावः । ततो ऽपनय इति भावः ॥ १८ ॥

## अप्राकृतेनहिसंयोगस्तत्स्थानीयत्वात् ॥ १९ ॥

सिद्धान्तमाह । अप्राकृतेति । शेषनिर्वापे न प्राकृतसंयोगः अप्राकृतेनसंयोगः । नञा साकं समासे मध्ये तृतीयालोपाभावो हियोगादिः आर्षः । शेषमुष्टिद्वये प्राकृतदेवतासंयोगो नेति यावत् । आगन्तुकदेवतानां तत्स्थानीयत्वात् । प्राकृतदेवतास्थानीयत्वात् ॥ १९ ॥

## अभावाच्चेतरस्य स्यात् ॥ २० ॥

ननु शेषनिर्वापो वैकृतदेवतासंबन्धी स्यात्तत्राह । अभावेति । इतरस्य वैकृतदेवतासंबन्धस्य मुष्टिद्वये अभावात् । शेषनिर्वापः तूष्णीं स्यात् । मुष्टिचतुष्टयनिर्वापस्यैकविधिना चतुरो मुष्टीन्निर्वपेदित्यनेन विहितत्वेनैकपदार्थत्वात्पदार्थैकदेशे गुणान्तरसंबन्धो न सम्भवतीति तूष्णीमेव शेषनिर्वाप इति ॥ २० ॥

सन्नयदसन्नयदुभयस्यैवाभ्युदये प्रायश्चित्तम् । अधि॰ ६ ।

**सान्नाय्यसंयोगात्सन्नयतः स्यात् ॥ २१ ॥**

इयमिष्टिः केवलं सन्नयत उतासन्नयतो ऽपीति संशये पूर्वपक्षमाह । सानाय्येति । सान्नाय्यसंयोगाद्दधिक्षीरवाचकशब्दसंयोगात् ॥ २१ ॥

**ओषधिसंयोगादुभयोः ॥ २२ ॥**

सिद्धान्तमाह । ओषधीति । ये मध्यमा ये स्थविष्ठा इत्योषधिसंयोगाद् उभयोः स्यात् । सन्नयतो ऽसन्नयतश्च ॥ २२ ॥

**वैगुण्यान्नेति चेत् ॥ २३ ॥**

ननु दध्यधिकरणत्वाभावेन चरोः वैगुण्यं स्यादित्याह । वैगुण्येति ॥ २३ ॥

**नातत्संस्कारत्वात् । २४ ॥**

परिहरति । नेति । अतत्संस्कारात् । दधिसंयोगेनौषधिसंस्काराविधानाद् न वैगुण्यं, तण्डुलवद्दध्नो ऽपि वैकृतदेवतासंबन्धार्थमनुवादादिति भावः ॥ २४ ॥

सत्राय प्रवृत्तमात्रस्य विश्वजित् । अधि॰ ७ ।

**साम्युत्थाने विश्वजित्क्रीते विभागसंयोगात् ॥ २५ ॥**

सत्राय दीक्षिताः साम्युत्तिष्ठेरन् सोमं विभज्य विश्वजिता यजेतेति । सामि अपरिसमाप्य । अयं विश्वजिद्यागः सोमक्रयोत्तरं विरामेच्छायामुत प्रवृत्तमात्रे विरामेच्छायामिति संशये पूर्वपक्षमाह । सामिति । सामि असमाप्य व्युत्थाने विश्वजिद्यागः क्रीते सोमएव । विभागसंयोगात् । वाक्ये इति शेषः ॥ २५ ॥

**प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ २६ ॥**

सिद्धान्तमाह । प्रवृत्तइति । प्रवृत्ते संकल्पमात्रे विश्वजिद् निमित्तस्य विश्वजिद्यागनिमित्तस्य प्रापणात् प्राप्तत्वात् । संकल्पोत्तरत्यागस्य विश्वजिन्निमित्तत्वादिति भावः ॥ २६ ॥

**आदेशार्थेतरा श्रुतिः ॥ २७ ॥**

ननु सोमविभागस्याङ्गत्वश्रवणादक्रीते विभागाभावाद्विगुणं स्या-

इत आह । आदेशेति । इतरा श्रुतिः सोमं विभज्येति श्रुतिः आदेशार्था सर्वद्रव्यविभागार्था । सत्रयागार्थं स्वीयद्रव्यस्य संपृक्तत्वेन स्वस्य उपरतौ स्वीयांशविभागस्य लोकप्रसिद्धस्यानुवादकं न त्वङ्गत्वविधायकमिति भावः ॥ २७ ॥

दीक्षापरिमाणस्य द्वादशाहत्वनियमः । अधि॰ ८ ।

## *दीक्षापरिमाणे याथाकाम्यविशेषात् ॥ २८ ॥

एका दीक्षा द्वादश दीक्षा इति वाक्यद्वयं, तयोः इच्छया ऽनुष्ठानमुत व्यवस्थितमिति संशये पूर्वपक्षमाह । दीक्षेति । दीक्षापरिमाणे दीक्षादिवसपरिमाणे याथाकामी कर्तुरिच्छा नियामिकेति सारम् ॥ २८ ॥

## द्वादशाहस्तु लिङ्गात्स्यात् ॥ २९ ॥

एका दीक्षा प्रकृतौ । द्वादशदीक्षापक्षस्तु द्वादशाहे । दीक्षितो द्वादश रात्रीः भृतिं वन्वीतेत्यत्र द्वादशरात्रपर्यन्तं यज्ञसाधनद्रव्यभिक्षाविधान लिङ्गादित्यभिप्रायेण सिद्धान्तमाह । द्वादशेति । द्वादशाहक्रतुः द्वादशदीक्षः स्यात् । उक्तलिङ्गात् ॥ २९ ॥

गवामयने माघपौर्णमास्याः पुरस्ताद् दीक्षा । अधि॰ ९ ।

## पौर्णमास्यामनियमो ऽविशेषात् ॥ ३० ॥

गवामयने श्रुतम् । चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्निति । अत्र या का चित्पौर्णमासी उत नियतेति संशये पूर्वपक्षमाह । पौर्णमास्यामिति । स्पष्टो ऽर्थः ॥ ३० ॥

## आनन्तर्यात्तु चैत्री स्यात् ॥ ३१ ॥

पक्षान्तरमाह । आनन्तर्यादिति । आनन्तर्यात् । चित्रापूर्णमासे दीक्षेरन्नित्यस्य उदाहृतवाक्यसमीपवृत्तित्वात् चैत्री स्यात् ॥ ३१ ॥

---

* अत्र भाष्यकारो, द्वादशदीक्षापक्षः प्रकृतौ, एकादिदीक्षापक्षास्तु विकृतौ इति प्रतिपादितवान् । तदनुसारेण अधिकरणविषयोल्लेखः कृतः । वार्त्तिककारस्तु भाष्यस्यायुक्तत्वं वर्णयित्वा याथाकाम्यपक्षस्यैव सिद्धान्तत्वमङ्गीकृत्य द्वादशाहस्तु लिङ्गात् स्याद् इति सूत्रेण उत्सूत्रपूर्वपक्षान्तरसमाधानं चकार ॥

## माघी वैकाष्टकाश्रुतेः ॥ ३२ ॥

सिद्धान्तमाह । माघीति । तेषामेकाष्टकायां क्रयः संपद्यतइति माघबहुलाष्टम्यां सोमक्रयविधानात् । तदनुरोधेन माघपूर्णिमा नियता । तथा च द्वादशदीक्षानन्तरं त्रयोदशदिवसे ऽष्टम्यां क्रय इति भावः ॥ ३२ ॥

## अन्या अपीति चेत् ॥ ३३ ॥

सर्वा अपि कृष्णाष्टम्यः एकाष्टकापदवाच्या इति शङ्कते । अन्या अपीति । अन्याः द्वादशाप्यष्टम्यः ॥ ३३ ॥

## न भक्तत्वादेषां हि लोके ॥ ३४ ॥

परिहरति । नेति । भक्तत्वाद् लक्षणया लोके व्यवहारात् ॥ ३४ ॥

## दीक्षापराधे चानुग्रहात् ॥ ३५ ॥

माघ्या एवैकाष्टकापदवाच्यत्वे लिङ्गमाह । दीक्षेति । दीक्षाया अपराधे अयोगे अनुग्रहात् क्रयेण तदनुग्रहश्रवणात् । अयं भावः । एषा वै संवत्सरस्य पत्नी यदेकाष्टकेत्युक्त्वा तस्यामेकाष्टकायां क्रयः संपद्यते तेनैकाष्टकां न छम्बट्कुर्वन्तीति । न छम्बट् कुर्वन्ति अनादरं न कुर्वन्ति । दीक्षाया अयोगेन यो ऽनादरः स क्रययोगेन परिहृत इति भावः । एकाष्टकाया, एषा वै संवत्सरस्य पत्नीत्यत्रैकवचनश्रवणं सर्वाष्टमीषु तत्पदवाच्यत्वाभावे लिङ्गम् ॥ ३५ ॥

## उत्थाने चानुपरोहात् ॥ ३६ ॥

एकवचनश्रवणाद्भवत्वेका सा माघ्येव कथमत्राह । उत्थानइति । उत्थाने एकाष्टकायाः प्राप्तौ अनुपरोहाद् ओषधिवनस्पतीनां पल्लवितत्वश्रवणात्, तानुत्तिष्ठत ओषधयो वनस्पतयो ऽनूत्तिष्ठन्तीति । तान् सत्रिणः उत्तिष्ठतः यागार्थमुत्तिष्ठतः ओषधिवनस्पतयो ऽनूत्तिष्ठन्तीति वसन्तसामीप्यं ज्ञापयति । इदं लिङ्गं नान्यत्रेति भावः ॥ ३६ ॥

## अस्यां च सर्वलिङ्गानि ॥ ३७ ॥

अस्यां माघकृष्णाष्टम्यामेकाष्टकापदवाच्यायामन्यानि बहूनि

लिङ्गानि सन्तीत्याह । अस्यामिति । तानि लिङ्गानि भाष्याज्ज्ञेयानि ॥ ३७ ॥

दीक्षोत्कर्षे तन्नियमानामप्युत्कर्षः । अधि० १० ।

दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३८ ॥

दीक्षितो न ददाति, न जुहोतीत्यादिनियमा अवभृथपर्यन्तं श्रुताः। तत्र दैवादवभृथोत्कर्षे नियमविमोकस्याप्युत्कर्षो न वेति संशये पूर्वपक्षमाह । दीक्षेति । दीक्षाकालस्य, न जुहोतीत्यादिनिषेधाङ्गत्वेन शिष्टत्वात् अतिक्रमे अवभृथोत्कर्षे नियतानामग्निहोत्रादिनिषेधानामनुत्कर्षः । दीक्षाविमोकस्य दैवादुत्कर्षे ऽपि विमोककालस्य प्राप्तत्वात् । अग्निहोत्रादिकमवभृथात्प्रागप्यनुष्ठेयमिति भावः ॥ ३८ ॥

उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम् ॥ ३९ ॥

दीक्षितो न जुहोतीत्यत्र कालस्य निषेधाङ्गत्वे दीक्षितशब्दस्य लक्षणापत्त्या दीक्षाविशिष्टत्वमेव निषेधप्रवृत्तिकारणं, तस्यावभृथोत्कर्षे सत्त्वान्निषेधस्याप्युत्कर्ष इति सिद्धान्तमाह । उत्कर्ष इति । निषेधस्याप्युत्कर्षः । दीक्षितत्वात् तदानीं दीक्षाविशिष्टत्वात् । निषेधपालनकारणमविशिष्टमस्त्येव ॥ ३९ ॥

ज्योतिष्टोमोत्कर्षे प्रतिहोमाननुष्ठानम् । अधि० ११ ।

तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ४० ॥

दैवादवभृथोत्कर्षे उत्कर्षस्य पुरुषापराधप्रयुक्तत्वात् तत्र होमलोपो दोषजनकः । अतः दीक्षाविमोकानन्तरं गणनं कृत्वा तावद्धोमा अनुष्ठेया इति बहिः पूर्वपक्षे सिद्धान्तमाह । तत्रेति । प्रतिहोमः परिसंख्याय होमो न, यथा पूर्वेषां प्रवर्ग्यानुदिनसंबन्धिनां तथा ॥ ४० ॥

कालप्राधान्याच्च ॥ ४१ ॥

कालस्यानुपादेयत्वेन विधानासंभवात्स प्रधानं, स च यो गतः स गत एवेति अभिप्रायवानाह । कालेति ॥ ४१ ॥

उदवसानीयोत्कर्षे अपि प्रतिहोमाननुष्ठानम् । अधि· १२ ।

## प्रतिषिद्धश्चोर्ध्वमवभृथादिष्टेः ॥ ४२ ॥

दैवादुदवसानीयाया: अवभृथोत्तरवर्तिन्या उत्कर्षे दीक्षायहणस्याऽवभृथान्तत्वाद् दीक्षाऽभावेन तत्र प्रतिहोमा आवश्यका इति पूर्वपक्षे सिद्धान्तमाह । प्रतीति । ऊर्ध्वमवभृथादुदवसानीयेष्ट्याः प्राग् लुप्तानां न प्रतिहोमः । यतः वचनेन प्रतिषिद्धः । एतया पुनराधेयसंमितयेष्ट्वाऽग्निहोत्रं होतव्यमिति । एतयोदवसानीयया ॥ ४२ ॥

प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भः । अधि· १३ ।

## प्रतिहोमश्चेत्सायंप्रभृतीनि हूयेरन् ॥ ४३ ॥

प्रतिहोमो ऽस्तीति कृत्वा चिन्त्यते । प्रतिहोमे सिद्धान्तमाह । प्रतीति । सायंहोममारभ्य होम इति सूत्रार्थः । चेदित्यनेन कृत्वाचिन्ता सूचिता ॥ ४३ ॥

षोडशिसंस्थे प्रातरग्निहोत्रप्रभृत्यनुष्ठानम् । अधि· १४ ।

## प्रातस्तु षोडशिनि ॥ ४४ ॥

षोडशिक्रतौ प्रातरारभ्य लुप्तत्वात्प्रतिहोमे स एव क्रम इत्याह । प्रातरिति ॥ ४४ ॥

भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गत्वम् । अधि· १५ ।

## प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४५ ॥

दर्शपूर्णमाससमीपे पठितं, भिन्ने जुहोतीति प्रायश्चित्तं सर्वत्र तन्निमित्ते उत तत्रैवेति संशये पूर्वपक्षमाह । प्रायश्चित्तमिति । अधिकारे किं चित्प्रकरणे श्रुतं प्रायश्चित्तं सर्वत्र दोषस्य निमित्तस्य भेदनादेः साम्यात् ॥ ४५ ॥

## प्रकरणे वा शब्दहेतुत्वात् ॥ ४६ ॥

सिद्धान्तमाह । प्रकरणइति । प्रकरणएव विश्रामः शब्दस्य यजेतेतिशब्दप्रतिपाद्यप्रधानयागस्य हेतुत्वात् । उपकारकत्वात् । तत्रैव विश्रामे प्रकरणपठितानां प्रधानोपकारकत्वं क्लृप्तं, प्रकरणविभेदे फलं कल्पनीयमिति गौरवमिति भावः ॥ ४६ ॥

## अतद्विकाराच्च ॥ ४७ ॥

ननु दर्शपूर्णमासे विश्रान्तमपि भिन्ने जुहोतीत्यादि प्रायश्चित्तम निर्देशेनाग्निहोत्रादौ सिध्यतामत आह । अतदिति । अग्निहोत्रस्य दर्शपूर्णमासप्रकृतिकत्वाभावादिति तदर्थः ॥ ४७ ॥

व्यापन्नशब्दार्थनिर्णयः । अधि० १६ ।

## व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥ ४८ ॥

व्यापन्नमप्सु प्रक्षिपेदित्यत्र व्यापन्नपदार्थः क इति प्रश्ने उत्तरमाह । व्यापन्नस्येति । गतौ इत्यन्तम् उक्तवाक्यानुवादकम् । आर्याणां यदभोज्यं केशक्रिमिमलादिदूषितं तद्व्यापन्नं प्रतीयेत ॥ ४८ ॥

अपच्छेदयौगपद्ये ऽपि प्रायश्चित्तम् । अधि० १७ ।

## विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ ४९ ॥

बहिष्पवमानस्तोत्रार्थं बहिः प्रसर्पतामृत्विजामन्वारम्भः श्रूयते । अध्वर्युं प्रस्तोता ऽन्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाता उद्गातारं ब्रह्मेति । एवमन्वारम्भेण गच्छतां प्रमादाद्विभागे प्रायश्चित्तं श्रुतम् । यदि प्रतिहर्ता ऽपच्छिन्द्यात्तस्मिन्नेव सर्ववेदसं दद्याद् यद्युद्गाता ऽपच्छिन्द्याददक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेतेति तत्र तद्दद्याद्यत्पूर्वस्मिन् दास्यन्स्यादिति। अपच्छेदो विभागः । सर्ववेदसं सर्वस्वम् । अत्रोद्गातृप्रतिहर्तृसंयोगनाशिकायामन्यतरक्रियायां प्रायश्चित्तद्वयमुक्तम् । उभयक्रियया यत्र विभागः तत्र प्रायश्चित्तं प्रवर्तते उत नेति संशये पूर्वपक्षमाह । विभागेति । यद् अन्यतरविभागे श्रुतं प्रायश्चित्तं तद् यौगपद्ये उभयक्रियाजन्यविभागे सति न विद्यते । अन्यतरक्रियाजन्यविभागरूपनिमित्ताभावादिति शेषः ॥ ४९ ॥

## स्याद्वा प्राप्तनिमित्तत्वात्कालमात्रमेकम् ॥ ५० ॥

सिद्धान्तमाह । स्याद्वेति । प्रायश्चित्तं स्यात् प्राप्तनिमित्तत्वात् । अयं भावः । यत्क्रियाजन्यो विभागः स तत्कर्तेति व्यवहारः । उभयक्रि-

याजन्यविभागे तद्विभागानुकूलज्ञातिमत्त्वं कर्तृत्वं प्रत्येकमस्त्येव । दैवात्कालैक्यम् । तथा च निमित्तसत्त्वात्प्रायश्चित्तमस्त्येवेति ॥ ५० ॥

अपच्छेदयौगपद्ये अदक्षिणत्वसर्वस्वदक्षिणत्वयोः विकल्पः । अधि० १८ ।

*तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥ ५१ ॥

एवं निमित्तद्वयसिद्धौ प्रायश्चित्तयोः समुच्चयो विकल्पो वेति संदेहे समुच्चय इति पूर्वपक्षे सिद्धान्तमाह । तत्रेति । तत्र उक्तनिमित्तकर्मणोः अनुष्ठाने विप्रतिषेधाद् विरोधाद् विकल्पः स्यात् । अयं भावः । उद्गात्रपच्छेदे प्रक्रान्तस्यादक्षिणत्वमन्यस्य द्वादशशतदक्षिणत्वम्, एवं प्रतिहर्त्रपच्छेदे तस्मिन्नेव सर्वस्वदक्षिणा एवं प्रयोगद्वयम् । तत्र प्रथमप्रयोगे सर्वस्वदाने अपरनिमित्तकः अदक्षिणत्वव्याघातः । द्वितीये सर्वस्वदाने तस्य द्वादशशतदक्षिणत्वव्याघातः सर्वस्वदक्षिणायाः प्रथमप्रयोगसंबन्धव्याघातश्चेति ॥ ५१ ॥

प्रयोगान्तरे वोभयानुग्रहः स्यात् ॥ ५२ ॥

प्रथमप्रयोगं सर्वस्वदक्षिणं समाप्य पुनर्द्रव्यसंपादनं कृत्वा एकमदक्षिणं समाप्य द्वितीयप्रयोगं विहितदक्षिणं कुर्यात् । तथा च समुच्चयः संभवतीत्याशङ्कते । प्रयोगेति । व्याख्यातकल्पम् ॥ ५२ ॥

न चैकसंयोगात् ॥ ५३ ॥

इमं पक्षं दूषयति । न चेति । प्रक्रान्तप्रयोगएव सर्वस्वदक्षिणाया अदक्षिणत्वस्य च श्रवणे प्रयोगभेदेनानुष्ठाने अशास्त्रीयमेव स्यादिति भावः ॥ ५३ ॥

अनुक्रमेणापच्छेदे उत्तरापच्छेदनिमित्तकप्रायश्चित्तम् । अधि० १९ ।

पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५४ ॥

प्रथमं प्रतिहर्तृकर्तृक उद्गातृतो विभागः, पश्चादुद्गातृकर्तृको ब्रह्मणो विभागः, तत्र क्रमिकत्वात्कस्य केन बाध इति विचारे सिद्धान्तमाह । पौर्वापर्येइति । पूर्वदौर्बल्यं पूर्वनिमित्तककर्मबाधः । प्रकृतिवत् । यथा प्रकृ-

* प्रतिषेधादिति भाष्ये पाठः ।

ततः पञ्चप्रयाजानां प्रथमं प्राप्तौ नव प्रयाजा इज्यन्त इत्यनेन वैकृतेन पूर्वस्य पञ्चत्वस्य बाधस्तथा ॥ ५४ ॥

उद्गातुरुत्तरापच्छेदेऽपि सर्वस्वदक्षिणादानम् । अधि० २० ।

### यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥ ५५ ॥

तत्र प्रथमं प्रतिहर्तुरपच्छेदः तन्निमित्तक्रतुः स एव सर्वस्वदक्षिणः प्राप्तः । तत उद्गात्रपच्छेदे अदक्षिणं समाप्य द्वितीयस्य प्रयोग आरब्धः तस्मिन्प्रयोगे पूर्वप्रयोगारम्भवेलायां द्वादशशतदक्षिणा स्थिता तत्रैव प्रतिहर्त्रपच्छेदेन द्वादशशतदक्षिणां बाधित्वा सर्वस्वदक्षिणा प्राप्ता । एवं सति उत्तरप्रयोगे पूर्वप्रयोगे देयत्वेन यत् क्लृप्तं तद्दक्षिणेति विहितम् । पूर्वक्रतौ द्वादशशतं प्रथमं क्लृप्तं पश्चात्सर्वस्वं क्लृप्तम् । उत्तरप्रयोगे कतमद् ग्राह्यमिति संशये प्रथमक्लृप्तं द्वादशशतमेवेति पूर्वपक्षे सिद्धान्तमाह । यदीति । उद्गाता उद्गात्रपच्छेदः जघन्यः पश्चात् पुनर्यज्ञे सर्ववेदसं दद्यात् । प्रतिहर्तृमात्रापच्छेदे यथेतरस्मिन् यथा प्रतिहर्त्रपच्छेदे पूर्वदिने सर्वस्वदक्षिणा तथैव । पूर्वस्मिन् दास्यन्स्यादित्यत्र पूर्वशब्देनाव्यवहितनैमित्तिकी, न व्यवहितं द्वादशशतमिति भावः ॥ ५५ ॥

अहर्गणेऽपच्छेदे न सर्वेषामावर्तनम् । अधि० २१ ।

### अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात् ॥ ५६ ॥

अहर्गणे द्वादशरात्रादौ मध्ये यस्यां चित्सुत्यायामुद्गातुरपच्छेदे निखिलसुत्यानाम् एकफलजनकत्वेनैककर्मत्वात्तं द्वादशरात्रात्मकं निखिलक्रतुमदक्षिणं समाप्य निखिलः क्रतुरावर्त्य इति बहिः पूर्वपक्षे सिद्धान्तमाह । अहरिति । अहर्गणे द्वादशाहादौ यस्मिन्नहनि अपच्छेदः तत् तदहर्मात्रमावर्तते । कर्मणां द्वादशसुत्यानां पृथक्त्वात् । द्वादशाह इति संख्यया कर्मभेदादिति भावः ॥ ५६ ॥

इति श्रीमज्जैमिनिसूत्रवृत्तौ षष्ठस्याध्यायस्य पञ्चमः पादः समाप्तः ॥ ५ ॥

सत्रे समानकल्पानां सहाधिकारः । अधि० १ ।

## सन्निपाते वैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥

वासिष्ठराजन्यानां नराशंसो द्वितीयः अन्येषां तनूनपाद् द्वितीयः प्रकृतौ विहितं सत्रे दीक्षणीयादौ अतिदेशेनाधिकारिभेदेनोभयं प्राप्तं सत्रे भिन्नकल्पानां मिलित्वा ऽधिकारे कल्पद्वयानुष्ठानासंभवात् तुल्यकल्पानामेवाधिकार इति सिद्धान्तेनोपक्रमते । सन्निपातइति । सन्निपाते वासिष्ठकाश्यपानामेकक्रतौ मेलने यथा प्रकृतौ वासिष्ठेन तनूनपादनुष्ठाने वैगुण्यं तथा ऽत्रापि स्यात् । अतः तुल्यकल्पानामेव सत्रे ऽधिकारः ॥ १ ॥

## वचनाद्वा शिरोवत्स्यात् ॥ २ ॥

पूर्वपक्षमाह । वचनादिति । ऋद्धिकामाः सत्रमासीरन्निति वचनमविशेषाद् भिन्नकल्पानामधिकारसिद्धौ शिरोवत् । यथा चयनातिरिक्ते शवस्पर्शस्य दोषजनकत्वे ऽपि पुरुषशीर्षमुपदधातीति वचनात्तदपवादः, तथा प्रकृतौ वासिष्ठानां तनूनपाद्वैगुण्यजनकश्चेदपि सत्रे नेति भावः ॥ २ ॥

## न वा ऽनारभ्य वादत्वात् ॥ ३ ॥

इदं दूषणं परिहरति । नेति । अनारभ्य अनधिकृत्य वादत्वात् पठितत्वात् । अयं भावः । यथा चयनमधिकृत्य शिर उपधानं विहितमेवं भिन्नकल्पानधिकृत्य सत्रमासीरन्निति स्याद्, अधिकारबलेन प्रकृतिवद् दुष्टता बाध्येत । अत्र त्वनारभ्य सत्रमासीरन्निति विहितं समानकल्पेषु चरितार्थमिति ॥ ३ ॥

## स्याद्वा परार्थत्वादौदुम्बरीवत् ॥ ४ ॥

नराशंसतनूनपातोरुभयोरपि क्रत्वर्थत्वेन एकानुष्ठाने ऽपि क्रतुः सिद्धो भवति । यथौदुम्बरीमानमेकस्यापि क्रतूपकारं जनयति तथेत्यभिप्रायवाञ् शङ्कते । स्यादिति । स्याद्, भिन्नकल्पानां सत्रं स्यात् । परार्थत्वात् । क्रत्वर्थत्वात् । औदुम्बरीवत् । व्याख्यातम् ॥ ४ ॥

न तत्प्रधानत्वात् ॥ ५ ॥

वासिष्ठानां नराशंस इति वाक्ये षष्ठ्या वासिष्ठानां प्राधान्यश्रवणात् । सप्तदशारत्निर्वाजपेयस्य यूप इतिवद्, इत्यभिप्रायेण समाधत्ते । नेति । तस्य वासिष्ठादेः प्रधानत्वात् ॥ ५ ॥

औदुम्बर्याः परार्थत्वात्कपालवत् ॥ ६ ॥

औदुम्बरीदृष्टान्तं वारयति । औदुम्बर्या इति । परार्थत्वात् । क्रत्वर्थत्वात् । कपालवत् । यथा पुरोडाशार्थमपि कपालं तृतीयाश्रुत्या तुषोपवपनाङ्गम् । एवं यजमानस्य फलेनान्वितस्यापि तृतीयाश्रुत्या मानाङ्गत्वमिति येन केनापि कृतं चरितार्थमिति भावः ॥ ६ ॥

अन्येनापीति चेत् ॥ ७ ॥

एवं सति क्रत्वन्तरसंयुक्तयजमानेनापि मानं किं न स्यादित्याशङ्कते । अन्येनेति । अन्येन क्रत्वन्तरसंयुक्तेनापि ॥ ७ ॥

नैकत्वात्तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् ॥ ८ ॥

परिहरति । नेति । नान्ययजमानेन मानमेकत्वात् । यजेतेत्याख्यातार्थान्वितयजमानस्यैकत्वात् । अन्ययजमानस्य अनधिकारात् । एतत्प्रयोगजन्यफलभोक्तृत्वाभावात् । शब्दस्य यजमानेन संमितौदुम्बरीतिवाक्यगतयजमानशब्दस्य अविभक्तत्वात् । एतत्फलभोक्तृभिन्नप्रतिपादकत्वात् ॥ ८ ॥

सन्निपातात्तु निमित्तविघातात् बृहद्रथंतरवद्विभक्तशिष्टत्वाद्वसिष्ठनिर्वर्त्ये ॥ ९ ॥

भिन्नकल्पे प्रयोगे द्वयोः इच्छैव नियामिकेति युक्त्यन्तरेण कश्चिदाशङ्कते । सन्निपातादिति । भिन्नकल्पयोः सन्निपातात् । निमित्तस्य वसिष्ठकर्तृकत्वनिमित्तनराशंसस्य काश्यपकर्तृकत्वनिमित्ततनूनपातश्च प्रत्येकं यो नियमः तस्य विघातः अभावः स्यात् । वसिष्ठनिर्वर्त्ये इदमुपलक्षणं काश्यपनिर्वर्त्ये च प्रयोगे ऽपि विभक्तशिष्टत्वात् । प्रत्येककर्तृ-

कत्वे निमित्ते एव विधानात् । यथा पृष्ठस्तोत्रे बृहत्स्यतिसाम्नि शुक्रायता, रथंतरसाम्नि ऐन्द्रवायवायता, विकृतिविशेषे उभयं यत्र, तत्र निमित्तद्वयबाधः, इच्छैव नियामिका, तथा ऽत्रापि इच्छैव नियामिकेति भावः ॥ ९ ॥

## अपि वा कृत्स्नसंयोगादविभागः प्रतीयेत स्वामित्वेनाभिसंबन्धस्तस्मात्तत्र विघातः स्यात् ॥ १० ॥

परिहरति । अपि वेति । कृत्स्नसंयोगात् । संपूर्णतनूनपाता संपूर्णनराशंसेन च संबन्धाद्वसिष्ठादीनामविभागः प्रतीयेत । निमित्तविभागो न प्रतीयेत। कुतः, स्वामित्वेनाभिसंबन्धात् । वसिष्ठमुद्दिश्य नराशंसविशिष्टं निखिलं कर्म फलसाधनत्वेन विधीयते । एवं काश्यपानुद्दिश्येति । भिन्नकल्पानामधिकारे उभयानुष्ठानं प्रसज्येत । तथा च प्रयाजे पञ्चत्वबाधः अतो भिन्नकल्पानां सत्रे नाधिकारः इति भावः ॥ १० ॥

## साम्नोः कर्मवदेकदेशेन संयोगो गुणत्वेनाभिसंबन्धस्तस्मात्तत्र विघातः स्यात् ॥ ११ ॥

बृहद्रथंतरदृष्टान्तवैषम्यं परिहरति । साम्नोरिति । कर्मवृद्ध्या बृहद्रथंतरोभयसामकैकपृष्ठस्तोत्रविधानेन स्तोत्रात्मककर्मवृद्ध्या साम्नोः बृहद्रथंतरयोः एकदेशेन स्तोत्रैकदेशेन संयोगः एकं वैषम्यम् । बृहद्रथंतरयोः स्तोत्रं प्रति गुणत्वेनाकृत्स्नेनाभिसंबन्ध इति अपरं वैषम्यम् । तस्मात्तत्र तन्निमित्तविघातो युक्तः, इह तथा न ॥ ११ ॥

भिन्नकल्पयोरपि राज्ञः पुरोहितस्य च कुलालयज्ञे ऽधिकारः । अधि॰ ३ ।

## वचनात्तु द्विसंयोगः तस्मादेकस्य पाणिवत् ॥ १२ ॥

एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र राज्ञः पुरोहितौ इति समासेनैकराजपुरोहितद्वयस्यात्राधिकार इति तात्पर्यवानाह । वचनादिति । वचनात् । उक्तवचनादेव द्विसंयोगः । एकस्य राज्ञः पुरोहितद्वयसंयोगः । एतेन वचनेनैव एकस्य राज्ञः पुरोहितद्वयस्वीकारो ऽपि सिध्यतीति भावः। अन्यथा एतेनेत्युदाहृतवाक्यस्य गत्यन्तरविरहेणाप्रामा-

वयापत्तेरित्यभिमानः । एकस्य पाणिद्वयवद्, यथा वामहस्तस्य कर्मानर्हत्वे ऽपि अञ्जलिना जुहोतीति वचनात्कर्मयोग्यत्वं तथेति भावः ॥ १२ ॥

## अर्थाभावात्तु नैवं स्यात् ॥ १३ ॥

इमं पक्षं दूषयति । अर्थेति । अर्थाभावात्तु नैवं, पुरोहितस्य प्रवरेण राजा प्रवृणीतइति प्रवरार्थं पुरोहित एकः अपेक्षितः द्वितीयस्य प्रयोजनाभावादिति भावः ॥ १३ ॥

## अर्थानां च विभक्तत्वान्न तच्छ्रुतेन संबन्धः ॥ १४ ॥

उक्तमर्थं दृढयति । अर्थानामिति । एतद्यागाधिकारिणोः ब्रह्मक्षत्रयोः संबन्धस्तवे अर्थानां संबन्धिद्वयवृत्तिगुणानां विभक्तत्वात् । श्रुतेन पुरोहितद्वयेन यागस्य न संबन्धः । राजपुरोहितौ सायुज्यकामौ यजेयातामित्युक्त्वा ब्राह्मणस्य तेजसा स्तुतिः क्षत्रियस्य वीर्येण स्तुतिः कृता । पुरोहितयोरधिकारे वीर्येण स्तुतिर्व्यर्था स्यादिति भावः ॥ १४ ॥

## पाणेः प्रत्यङ्गभावादसंबन्धः प्रतीयेत ॥ १५ ॥

पाणिदृष्टान्तं परिहरति । पाणेरिति । पाणेः वामपाणेः स्वदक्षिणहस्तेनाञ्जलिकरणे प्रत्यङ्गभावात् । सहकारित्वात् । असंबन्धः अन्यदक्षिणहस्तासंबन्धः प्रतीयेत । अन्यदक्षहस्तेन स्वदक्षहस्तसंयोगे संहताञ्जलिर्न भवत्यतो ऽगत्या वामहस्तयोजनमिति भावः ॥ १५ ॥

सत्रे ब्राह्मणमात्रस्याधिकारः । अधि० ३ ।

## सत्राणि सर्ववर्णानामविशेषात् ॥ १६ ॥

यएवं विद्वांसः सत्रमुपयन्तीति वाक्ये विशेषाश्रवणाज् ज्योतिष्टोमवत्सर्ववर्णानामधिकार इति पूर्वपक्षमाह । सत्राणीति । स्पष्टो ऽर्थः ॥ १६ ॥

## लिङ्गदर्शनाच ॥ १७ ॥

सर्ववर्णानामधिकार इत्यत्र लिङ्गमस्तीत्याह । लिङ्गेति । द्वादशाहे ब्रह्मसामान्येवं श्रूयते । बार्हद्गिरं ब्राह्मणस्य पार्थुरश्मं राजन्यस्य रायोवाजीयं वैश्यस्येति गुणभेदश्रवणात्त्रयाणामधिकारः ॥ १७ ॥

## ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥ १८ ॥

सिद्धान्तमाह । ब्राह्मणानामिति । आर्त्विज्याभावात् । ऋत्विजां यजमानत्वश्रवणादिति भावः ॥ १८ ॥

## वचनादिति चेत् ॥ १९ ॥

ये यजमानास्तऋत्विज इति क्षत्रियादिषु यजमानेषु आर्त्विज्यं वचनात्प्राप्तमित्याशङ्कते । वचनादिति ॥ १९ ॥

## न, स्वामित्वं हि विधीयते ॥ २० ॥

ये यजमानास्तऋत्विज इति नान्वयः, किं तु यऋत्विजः ते यजमाना इति । पूर्वयजमाने आर्त्विज्यस्याङ्गत्वे अदृष्टकल्पनापत्तेरित्यभिप्रायवान् सिद्धान्तमाह । नेति ॥ २० ॥

## गार्हपते वा स्यातामविप्रतिषेधात् ॥ २१ ॥

सत्रे गृहपतिरिति व्यवह्रियमाणो यः स सर्ववर्णो स्तु, तत्रार्त्विक्कार्याभावादित्यभिप्रायेण शङ्कते । गार्हपतइति । गृहपतिसंबन्धिकर्माणि त्रैवर्णिकाधिकारः स्यात् । अविप्रतिषेधात् । अविरोधात् ॥ २१ ॥

## न वा कल्पविरोधात् ॥ २२ ॥

राजन्यस्य गृहपतित्वे तस्य चमसो न्यग्रोधरसस्य अन्येषां सोमचमस इति वैरूप्यापत्तेर्नेति समाधत्ते । नेति । कल्पः उक्तचमसवैरूप्यं तेन विरोधात् ॥ २२ ॥

## स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥ २३ ॥

द्वादशाहः अहीनात्मकः सत्ररूपश्च । पूर्वोक्तलिङ्गस्य आर्त्विज्यविरोधादहीने चारितार्थ्यं तत्र यजमाने ऋत्विक्त्वविध्यभावादित्याह । स्वामित्वादिति । सत्रे ऋत्विजां स्वामित्वात् ॥ २३ ॥

सत्रे विश्वामित्रतत्समानकल्पानामधिकारः । अधि० ४ ।

## वासिष्ठानां वा ब्रह्मत्वनियमात् ॥ २४ ॥

ब्राह्मणानां सत्रे अधिकारेऽपि न सर्वेषां, वासिष्ठो ब्रह्मा भव

तीति वासिष्ठस्य ब्रह्मत्वे समानकल्पत्वोपपत्तये वासिष्ठानामधिकार इति पूर्वपक्षमाह । वासिष्ठानामिति । व्याख्यातकल्पम् ॥ २४ ॥

### सर्वेषां वा प्रतिप्रसवात् ॥ २५ ॥

यः स्तोमभागानधीते स वासिष्ठ इति शब्दार्थविवरणात्सर्वेषां तदध्ययनसत्त्वात् सर्वेषामधिकार इति पक्षान्तरमाह । सर्वेषामिति । प्रतिप्रसवात् । वासिष्ठशब्दविवरणात् ॥ २५ ॥

### वैश्वामित्रस्य हौत्रनियमाद् भृगुशुनकवसिष्ठानामनधिकारः ॥ २६ ॥

विश्वामित्रो होता भवतीति वचनाद् विश्वामित्रो नियतः स एव ऋत्विक्स्तोमभागान्पठति । तेन वसिष्ठादीनां भिन्नकल्पत्वात्तेषां नाधिकार इति सिद्धान्तमाह । वैश्वामित्रस्येति । व्याख्यातम् ॥ २६ ॥

सत्रे आहिताग्नेरेवाधिकारः । अधि० ५ ।

### विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २७ ॥

सत्रे साग्निकानामनग्निकानां मिलित्वा ऽधिकारो ऽस्ति न वेति संदेहे पूर्वपक्षमाह । विहारस्येति । विहारस्य एकाहवनीयस्य प्रभुत्वादनग्निकक्रतूपकारसमर्थत्वात् । शेषं स्पष्टम् ॥ २७ ॥

### सारस्वते च दर्शनात् ॥ २८ ॥

सारस्वते तन्नामकसत्रे दर्शनात् स्पष्टं श्रवणात् । परस्यैर्वा एते स्वर्गं लोकं यन्ति ये ऽनाहिताग्नयः सत्रमासतइति ॥ २८ ॥

### प्रायश्चित्तविधानाच्च ॥ २९ ॥

यस्याहिताग्नेरन्यैरग्निभिरग्नयः संसृज्यन्ते अग्नये विविचये ऽष्टाकपालं निर्वपेदित्यन्याग्निसंसर्गे प्रायश्चित्तश्रवणादेक एवाहवनीय इत्याह । प्रायश्चित्तेति ॥ २९ ॥

### साग्नीनां वेष्टिपूर्वत्वात् ॥ ३० ॥

सिद्धान्तमाह । साग्नीति । साग्नीनामधिकारः । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति इष्टिपूर्वत्वनियमात् । सोमस्येष्टिपूर्वत्वे नियते तद्विकृतेरप्यावश्यकत्वादनाहिताग्नेः तदसंभवादिति भावः ॥ ३० ॥

## स्वार्थेन च प्रयुक्तत्वात् ॥ ३१ ॥

अग्नीनादधीतेत्यात्मनेपदेनात्मार्थत्वज्ञापनादित्याह । स्वार्थेति । स्वार्थेन च स्वफलेन संबद्धत्वात्स्वाहवनीयस्य ॥ ३१ ॥

## सन्निवापं च दर्शयति ॥ ३२ ॥

सन्निवापं सर्वेषामग्नीनां मेलनं दर्शयति साग्निकानामेव सत्रमिति सावित्राणि होष्यन्तः सन्निवपेरन्निति वाक्यम् ॥ ३२ ॥

सत्रे जुह्वादीनां सर्वसाधारण्यम् । अधि० ६ ।

## जुह्वादीनामप्रयुक्तत्वात्संदेहे याथाकामी प्रतीयते ॥ ३३ ॥

सत्रे जुह्वादिपात्राणि सप्तदशानां मध्ये यस्य कस्य चिद्ग्राह्याणि उत नवीनानीति संशये पूर्वपक्षमाह । जुह्वादीति । संदेहे उक्तरीत्या संदेहे जुह्वादीनामप्रयुक्तत्वात् पात्रग्रहणवेलायां स्वप्रयोगस्यैवेत्यनिर्दिष्टत्वात् । याथाकामी इच्छैव नियामिकेति भावः ॥ ३३ ॥

## अपि वा ऽन्यानि पात्राणि साधारणानि कुर्वीरन्विप्रतिषेधाच्छास्त्रकृतत्वात् ॥ ३४ ॥

सिद्धान्तमाह । अपि वेति । अन्यानि नवीनानि साधारणानि सर्वसाधारणानि कार्याणि । कस्य चिद्ग्रहणे तस्य मध्ये मरणे तच्छरीरेण सह तदीयपात्रदाहे अन्यपात्राभावेन विप्रतिषेधाद् अनुष्ठानप्रतिबन्धाच्चवीनस्य करणस्य शास्त्रकृतत्वाच् शास्त्रतात्पर्यविषयत्वात् ॥ ३४ ॥

## प्रायश्चित्तमापदि स्यात् ॥ ३५ ॥

पूर्वाधिकरणे प्रायश्चित्तमग्निसंसर्गे श्रुतम् । तल्लिङ्गमुक्तम् । तस्य चारितार्थ्यमाह । प्रायश्चित्तमापदीति । प्राणसंकटे संसर्गो ऽन्योन्यक्तः । आपन्निवृत्तौ अग्नीन्विभज्य प्रायश्चित्तं कुर्युरिति भावः ॥ ३५ ॥

विकृतिसप्तदशसामिधेनीषु वर्णत्रयाधिकारः । अधि० ७ ।

## पुरुषकल्पेन विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येकस्मिन्नधिकारः स्यात् ॥ ३६ ॥

विकृतिषु अध्वरकल्पायथादिषु वैश्य एवाधिकार्युत त्रैवर्णिक इति संशये पूर्वपक्षमाह । पुरुषेति । सप्तदशानुब्रूयाद्वैश्यस्येति वाक्येन साप्तदश्यसामान्यमुद्दिश्य वैश्यकर्तृकत्वनियमविधानात् । विकृतौ अध्वरकल्पादौ पुरुषकल्पेन पुरुषविशेषकर्तृकत्वेनाम्नातसाप्तदश्यकत्वेन कर्तृनियमः वैश्यरूपकर्तृनियमः स्यात् । यतस्त्वाध्वरकल्पादेः तद्गुणत्वात् । तत्साप्तदश्यं गुणो यस्य तत्त्वात् । इतरान्प्रति ब्राह्मणादीन्प्रति अभावात् साप्तदश्याभावात् । एकस्मिन्वैश्ये अधिकारः स्यात् । अयं भावः । सप्तदशानुब्रूयाद्वैश्यस्येति साप्तदश्यसामान्यमनूद्य वैश्यकर्तृकत्वं नियम्यते । अध्वरकल्पादिसमीपपठितेन सप्तदशानुब्रूयादिति वाक्येन साप्तदश्येन प्राप्तेन सह वैश्यकर्तृकत्वमपि प्राप्तमेवेति ॥ ३६ ॥

## लिङ्गाच्चेज्याविशेषवत् ॥ ३७ ॥

सप्तदशो वै वैश्य इतीत्यर्थवादोऽपि साप्तदश्यं ब्राह्मणक्षत्रियासंबद्धमित्यर्थं द्रढयतीत्याह । लिङ्गेति । लिङ्गात् । उक्तार्थवादात् । साप्तदश्यं वैश्यकर्तृकत्वमात्रसंबन्धि यथेज्याविशेषो वैश्यस्तोमो वैश्यमात्रकर्तृकस्तथा । यस्मिन्क्रतौ साप्तदश्यं स वैश्यकर्तृक इति व्याप्तिः सिध्यतीति भावः ॥ ३७ ॥

## न वा संयोगपृथक्त्वाद्गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३८ ॥

सिद्धान्तमाह । न वेति । न अध्वरकल्पादौ वैश्यकर्तृकत्वनियमः । संयोगयोः वाक्यद्वयसंयोगयोः पृथक्त्वात् । विजातीयत्वात् । वैजात्यमुपपादयति । अध्वरकल्पादिसन्निधौ पठितेन सप्तदशानुब्रूयाद्वैश्यस्येति वाक्येन विहितस्य गुणस्य साप्तदश्यस्येज्याप्रधानत्वाद् यागप्रधानत्वात् । यत्र प्रधानभूतो यागः तत्र गुणस्याश्रयत्वात् । इज्याप्रधानत्वं कथम् अत आह । असंयुक्तेति । हि यतः वैश्यपदेन असंयुक्ता रहिता चोदना विधिवाक्यम् । अयं भावः । सप्तदशानुब्रूयाद्वैश्यस्येति वाक्ये साप्तदश्यस्यानुवादः वाक्यान्तरेण प्राप्तत्वात् । प्रकरणहान्यापत्तेश्च । अतः नित्यत्वेन प्रकृताविव पाञ्चदश्यप्राप्तौ वैश्यकर्तृकत्वे निमित्ते साप्तदश्यं नैमित्तिकम् ।

तच्च प्रकरणएव विश्रान्तम् । वैकृतवाक्ये क्रतुसामान्यमुद्दिश्य विहित-पाञ्चदश्यस्य प्राप्तौ क्रतुत्वव्यापकत्वेन पाञ्चदश्यं विधीयते । तद्व्याप-कत्वं सर्वेषामधिकारएव घटतइति ॥ ३८ ॥

## इज्यायां तद्गुणत्वाद्विशेषेण नियम्येत ॥ ३९ ॥

वैश्यस्तोमदृष्टान्तं परिहरति । इज्यायामिति । इज्यायां वैश्य-स्तोमे तद्गुणत्वात् । तस्य वैश्यकर्तृकत्वस्य गुणत्वात् । वैश्यो वैश्यस्तो-मेन यजेतेत्यनेन गुणत्वेन विधानात् । विशेषेण तत्क्रतुमुद्दिश्य वैश्यक-र्तृकत्वं नियम्येत । यत्र वैश्यस्तोमत्वं तत्र वैश्यकर्तृकत्वं, स्वप्रधाने सति स्वस्यावश्यकत्वात्, तथा ऽन्याभावादिति भावः ॥ ३९ ॥

इति जैमिनिसूत्रवृत्तौ षष्ठाध्यायस्य षष्ठः पादः ॥ ६ ॥

विश्वजिति पित्रादीनामदेयत्वम् । अधि॰ १ ।

## स्वदाने सर्वमविशेषात् ॥ १ ॥

विश्वजिति सर्वस्वं देयमिति श्रुतत्वात्पित्रादीनां दानमस्ति न वेति संशये पूर्वपक्षमाह । स्वेति । स्वदाने सर्वस्वदाने सर्वं पित्रादिक-मपि देयम् । अविशेषात् ॥ १ ॥

## यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् ॥ २ ॥

सिद्धान्तमाह । यस्येति । यस्य स्वस्य त्यागे प्रभुः तद्देयम् इतरस्य पित्रादेः स्वत्वस्य त्यक्तुमशक्यत्वात् । न हि पितुर्दाने पितृत्वमपैतीति भावः ॥ २ ॥

विश्वजिति पृथिव्या अदेयत्वम् । अधि॰ २ ।

## न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ ३ ॥

तत्रैव महाभूमिर्देया न वेति संशये सार्वभौमस्य विद्यमानस्वत्व-त्यागसम्भवाद्देयेति बहिः पूर्वपक्षे सिद्धान्तमाह । नेति । स्पष्टो ऽर्थः ॥ ३ ॥

विश्वजिति अश्वादीनामदेयत्वम् । अधि॰ ३ ।

## अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥ ४ ॥

तत्रैव अश्वा देया न वेति संशये सिद्धान्तमाह । अकार्येति । अकार्यत्वात् । न केसरिणो ददाति, केसरिणो ऽश्वाः, इति निषेधाददेयत्वात् । ततः सुवर्णादिभ्यः विशेषः दानकर्मत्वाभावः स्यात् ॥ ४ ॥

विश्वजिति विद्यमानानामेव सर्वस्वानां दानम् । अधि० ४ ।

## नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ५ ॥

अथ संपाद्यमानं द्रव्यमपि देयं न वेति संशये सिद्धान्तमाह । नित्येति । सर्वस्वदानस्य नित्यत्वाद् अग्रिमद्रव्यलाभस्यानिश्चयादनित्यैः न संबन्धः न दानकर्मत्वम् ॥ ५ ॥

विश्वजिति धर्मार्थसेवकशूद्रस्यादेयत्वम् । अधि० ५ ।

## शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥

स्वकीयधर्मसंरक्षणार्थं यः शूद्रः द्विजं सेवते सो ऽप्यदेय इत्याह । शूद्र इति । धर्मशास्त्रत्वाद्धर्मरक्षणार्थं शुश्रूषमाणत्वात् । तस्मिन्स्वत्वाभावादिति भावः ॥ ६ ॥

विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वानां देयत्वम् । अधि० ६ ।

## दक्षिणाकाले यत्स्वं प्रतीयेत तद्दानसंयोगात् ॥ ७ ॥

सिद्धान्तसूत्रमाह । दक्षिणाकालइति । दक्षिणाकाले यत्स्वं यावद्वस्तुषु स्वत्वं तावद्देयं प्रतीयेत । दानसंयोगात् । स्वत्वाश्रयस्यैव दानार्हत्वादिति भावः ॥ ७ ॥

विश्वजिति दक्षिणादानोत्तराङ्गानामप्यनुष्ठानम् । अधि० ७ ।

## अशेषत्वात्तदंतः स्यात्कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥

विश्वजिद्यागो दक्षिणान्तः उत प्रकृतिवदवभृथान्त इति संशये पूर्वपक्षमाह । अशेषत्वादिति । अशेषत्वात् क्रतोरशेषदक्षिणात्वाच्च शेषकर्मणः द्रव्यसिद्धित्वाद् द्रव्यसाध्यत्वात् सर्वस्वदाने तत्काले द्रव्याभावेन तदन्तः दक्षिणान्तः स्यात् । सर्वस्वदानस्य प्रत्यक्षवचनप्राप्तत्वादातिदेशिकं कर्मशेषं बाधतइति भावः ॥ ८ ॥

## अपि वाऽशेषकर्म स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥

सिद्धान्तमाह । अपि वेति । क्रतोः विश्वजिता यजेतेत्यनेन समाप्तिपर्यन्तस्य विश्वजित्क्रतोः प्रत्यक्षशिष्टत्वाद्विहितत्वादशेषकर्म समाप्तिपर्यन्तः स्यात् ॥ ९ ॥

## तथा चान्यार्थदर्शनम् ॥ १० ॥

उक्तार्थं दृढयति । तथेति । तथा च समाप्तिपर्यन्तत्वादेव अन्यार्थस्य, अवभृथादुदेत्य वत्सत्वचमाच्छादयत,इत्यनेन विहितस्य दर्शनं श्रवणं संगच्छते । दक्षिणान्तत्वे नोपपद्यतइति भावः ॥ १० ॥

## अशेषं तु *समञ्जसमादाने शेषकर्म स्यात् ॥ ११ ॥

संपादनेन शेषकर्मेत्याशङ्कते । अशेषमिति । यतः अशेषं देयमिति समञ्जसमतः आदाने नवीनसंपादने शेषकर्म स्यात् ॥ ११ ॥

## नादानस्यानित्यत्वात् ॥ १२ ॥

परिहरति । नेति । आदानस्य लाभस्यानित्यत्वाद् अनिश्चितत्वात् ॥ १२ ॥

## दीक्षासु विनिर्देशादक्रत्वर्थेन संयोगस्तस्मादविरोधः स्यात् ॥ १३ ॥

ज्योतिष्टोमे इदं क्रत्वर्थमिदं दक्षिणार्थमिति विभागो विहितः सोऽतिदेशेन प्राप्तः इत्थं च क्रत्वर्थत्वेन कल्पितस्वत्वमस्येत्यपि समाधत्ते । दीक्षेति । अक्रत्वर्थेन क्रत्वर्थत्वेन क्लृप्तभिन्नेन संयोगः दानसंबन्धः तस्मात्सर्वस्वं ददातीत्यपि अविरुद्धम् ॥ १३ ॥

अहर्गणस्थे ऽपि विश्वजिति सर्वस्वदानम् । अधि॰ ८ ।

## अहर्गणे च तद्धर्मः स्यात्सर्वेषामविशेषात् ॥ १४ ॥

अस्त्यष्टरात्रनामको ऽहर्गणः । तत्र विश्वजित्सर्वपृष्ठो ऽतिरात्रो भवतीति विश्वजिद्विहितः । तत्र सर्वस्वदक्षिणात नियतसंख्यातेति संदेहे सिद्धान्तमाह । अहर्गणइति । अहर्गणे अष्टरात्रे तद्धर्मः प्रकृतिभूतविश्वजि-

* समञ्जसा ऽऽदानेनेति शा॰ भा॰ पु॰ पाठः ।

दूर्मः सर्वस्वदक्षिणादिः स्यात् । सर्वेषां प्रकृतिविकृतिरूपाणामविशेषात् ॥ १४ ॥

## द्वादशशतं वा प्रकृतिवत् ॥ १५ ॥

अहर्गणस्य ज्योतिष्टोमप्रकृतिकत्वेन तदन्तःपातिविश्वजितोऽपि तथेति पूर्वपक्षमाह । द्वादशशतं वेति ॥ १५ ॥

## अतद्गुणत्वात्तु नैवं स्यात् ॥ १६ ॥

दूषयति । अतदिति । अतद्गुणत्वाज् ज्योतिष्टोमधर्मत्वाभावाद् । नैवं, ज्योतिष्टोमदक्षिणा न स्यात् । आनुमानिकातिदेशाद् नामातिदेशस्य प्रबलत्वादिति भावः ॥ १६ ॥

## लिङ्गदर्शनाच्च ॥ १७ ॥

हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं न ददातीति-लिङ्गविरोधमाह । लिङ्गेति* ॥ १७ ॥

विश्वजिति द्वादशशतन्यूनधनस्यानधिकारः । अधि. ६ ।

## विकारः सन्नुभयतोऽविशेषात् ॥ १८ ॥

सर्वस्वपदं द्वादशशताधिकपरमेकगोपरमपीति विचारे पूर्वपक्षमाह । विकार इति । विकारः विश्वजिद्रूपविकारधर्मः उभयतः द्वादशशतन्यूनदाने ऽधिकदाने ऽपि उपपद्यते । सर्वस्वं दद्यादिति अविशेषाद् न्यूनमधिकमितिविशेषाभावात् । एकगोस्वामिना सहस्रगोस्वामिना च कर्तव्यो विश्वजिदिति फलितम् ॥ १८ ॥

## अधिकं वा प्रतिप्रसवात् ॥ १९ ॥

सिद्धान्तमाह । अधिकमिति । अधिकं द्वादशशताधिकं प्रतिप्रसवात् । एवं वावर्त्त्विज आनेया अपि वा सर्वस्वदानेनेति, अपि वेति द्वादशशतेन ऋत्विगलाभे सर्वस्वं सूचयति, न तन्न्यूने सम्भवतीति भावः ॥ १९ ॥

* इदं च प्राप्तिमात्रपरमधिकरणम् । प्राप्तं विश्वजिति सर्वस्वं बाधित्वा इतरेषां सत्त्रानामह्नां द्वादशशतदक्षिणानां भूयसां साधर्म्याद् द्वादशशतमेव देयम्, सकैव च तन्त्रेण सर्वेषामेकप्रयोगवर्तिनां दक्षिणा, न पृथक् पृथक् प्रदातव्या. तस्माद् भूयोऽनुग्रहाय द्वादशशतमेव देयम्. इति वार्त्तिकमतं शास्त्रदीपिकायां प्रतिपादितम् ॥

## अनुग्रहाच्च पादवत् ॥ २० ॥

साधकान्तरमाह । अनुग्रहेति । अनुग्रहात्माङ्गलद्वादशशतानुग्रहात् । एकमुद्रादाने तदन्तपादमुद्रा ऽपि दत्ता भवति तथा अधिके दत्ते तदप्यनुगृहीतमिति भावः ॥ २० ॥

आधाने अपरिमितं देयमित्यनेन संख्यान्तरविधानम् । अधि० १० ।

## अपरिमिते संख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ २१ ॥

आधाने श्रूयते, एका देया शतं देयं सहस्रं देयमपरिमितं देयमिति । अपरिमितमित्यनेन एकादिपरिमितसंख्याप्रतिषेधः क्रियते उत अतिरिक्तः कल्पो विधीयतइति विचारे पूर्वपक्षमाह । अपरिमिते इति । अपरिमितशब्दश्रवणे सति पूर्वसंख्याप्रतिषेधः तस्य अपरिमितशब्दस्य श्रुतित्वात् शक्यार्थापपत्तेः । अयं भावः । परिमितं न भवतीति व्युत्पत्तौ परिमाणशून्यद्रव्यस्यासिद्धत्वेनाप्रामाण्यापत्त्या असूर्यपश्या राजदारा इतिवदसमर्थसमासे नञ आख्यातार्थान्वये परिमितदानं न कर्तव्यमिति सिद्धमिति ॥ २१ ॥

## कल्पान्तरं वा तुल्यवत्प्रसंख्यानात् ॥ २२ ॥

सिद्धान्तमाह । कल्पेति । कल्पान्तरमपरो दानकल्पः तुल्यवत्प्रसंख्यानात् । एका देयेत्यादितुल्यतया पाठात् ॥ २२ ॥

अपरिमितशब्देन सहस्राधिकस्य ग्रहणम् । अधि० ११ ।

## अनियमो ऽविशेषात् ॥ २३ ॥

अपरिमितशब्देन सहस्रशब्देन सह पठितेन न्यूनं ग्राह्यं ततो ऽधिकमिति संशये पूर्वपक्षमाह । अनियम इति । न्यूनाधिकयोरनियमः विशेषाश्रवणात् ॥ २३ ॥

## अधिकं वा स्याद्बह्वर्थत्वादितरैः सन्निधानात् ॥ २४ ॥

सिद्धान्तमाह । अधिकमिति । अधिकं श्रूयमाणसंख्याया अधिकम् । इतरैः शतसहस्रादिशब्दैः सन्निधानं यस्य तादृशबह्वर्थत्वात् । यत्र इतर-

संख्यावाचकशब्दसमभिव्याहृतबहुत्ववाचकः शब्दः तत्र बहुत्ववाचकशब्दे इतरश्रूयमाणसंख्याधिकसंख्यावाचकत्वमिति व्याप्तिः सर्वानुभवसिद्धेति भावः ॥ २४ ॥

## अर्थवादश्च तदर्थवत् ॥ २५ ॥

अपरिमितमित्यस्य संनिधौ उत्कृष्टं वै तदपरिमितमित्यर्थवादो ऽपीममेवार्थं दृढयतीत्याह । अर्थवाद इति । अर्थवाद उक्तो यः स तदर्थवद् अधिकसंख्यार्थकम् ॥ २५ ॥

इति ह स्मेत्यादिपरकृतिपुराकल्पानामर्थवादत्वम् । अधि० १२ ।

## परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥

इति ह स्माह बहुर्वार्ष्णिर्माषान्मे पचतेति, बहुनामा वार्ष्णिः वृष्णिगोत्रोत्पन्नः माषान्मे पचतेत्याह इति । अनेन वाक्येन विहितो यो माषपाकः स मनुष्यमात्रस्य वृष्णिगोत्राणाम् अथ वा ऽर्थवाद इति संशये प्रथमपक्षमाह। परेति । एककर्तृकः परकृतिवाच्यः । बहुकर्तृकः पुराकल्पः । एतादृशोदाहृतो विधिः मनुष्यधर्मः मनुष्यमात्राधिकारः अर्थाय फलाय हि वाक्यस्य अनुकीर्तनम् । अतः उक्ताधिकारप्रदर्शनमेव वाक्यप्रयोजनमिति भावः ॥ २६ ॥

## तद्युक्ते च प्रतिषेधात् ॥ २७ ॥

इतो ऽपि विधिः सफल इत्याह । तदिति । तद्युक्ते अमेध्या वै माषा इति निन्दायुक्ते अनेन निन्दाप्रतिषेधात् सफलम् ॥ २७ ॥

## निर्देशाद्वा तद्धर्मः स्यात्पञ्चावत्तवत् ॥ २८ ॥

एतादृशं सफलत्वं वृष्णिगोत्रमात्राधिकारे ऽपि संभवतीति पक्षान्तरमाह । निर्देशादिति । वाक्ये वृष्णिनिर्देशात् तद्धर्मः वृष्णिधर्मः स्यात् । जमदग्नीनां पञ्चावत्तमिति निर्देशेन पञ्चावत्तं तस्यैव, तथा ॥ २८ ॥

## विधौ तु वेदसंयोगादुपदेशः स्यात् ॥ २९ ॥

पक्षान्तरमाह । विधाविति । वेदे अर्थवादे वार्ष्णिसंयोगाद्विधौ तदनुमितविधौ वृष्णिशब्दस्योपदेशः स्यात् । पूर्वकल्पे अयमर्थवादो न भवतीति, अस्मिन्कल्पे उदाहृतवाक्येऽर्थवादत्वाङ्गीकार इति भेदः ॥ २९ ॥

अर्थवादो वा विधिशेषत्वात्तस्मान्नित्यानुवादः स्यात् ॥ ३० ॥

सिद्धान्तमाह । अर्थवाद इति । विधिशेषः क्लृप्तविधेः आरण्यस्याश्नीयादित्यस्य शेषत्वात् स्तावकत्वादयमर्थवादः । शेषं स्पष्टम् ॥ ३० ॥

सहस्रसंवत्सरशब्दस्य सहस्रदिनपरत्वम् । अधि० १३ ।

सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु ॥ ३१ ॥

सहस्रसंवत्सरसाध्यत्वेन श्रूयमाणे विश्वसृजामयनं सहस्रसंवत्सरसाध्यमिति श्रूयमाणे कस्याधिकार इति विचारे प्रथमपक्षमाह। सहस्रेति। सहस्रसंवत्सरसाध्यं सत्रं तदायुषां सहस्रायुषां देवादीनां, मनुष्येष्वसंभवात् ॥ ३१ ॥

उपचारोऽन्यार्थदर्शनम् ॥ ३२ ॥

उपचारस्तदर्थवादः, अन्यार्थदर्शनं देवानामधिकारं दर्शयति । प्रजापतिं वै प्रजाः सृजमानं पाप्मा मृत्युरभिजघान सहस्रसंवत्सरेण पाप्मानं मृत्युं जहाविति प्रजापतिकर्तृकत्वश्रवणादिति भावः ॥ ३२ ॥

अपि वा तदधिकारान्मनुष्यधर्मः स्यात् ॥ ३३ ॥

पक्षान्तरमाह । अपि वेति । मनुष्याधिकारः स्यात् । निखिलशास्त्रस्य तदधिकारात् ॥ ३३ ॥

नासामर्थ्यात् ॥ ३४ ॥

इमं पक्षं दूषयति । नेति । असामर्थ्यात् तावदायुरभावात् ॥ ३४

संबन्धादर्शनात् ॥ ३५ ॥

ननु रसायनादि साधयित्वा मनुष्येणापि आयुर्वृद्धिः संपादयि

शक्यते इत्याशङ्कायामाह । संबन्धेति । आयुर्वृद्धेः रसायनस्य जन्यजनकभावरूपसंबन्धस्य अदर्शनादननुभवात् ॥ ३५ ॥

**सकुल्यः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसंभवात् ॥ ३६ ॥**

पक्षान्तरमाह । सकुल्य इति । सकुल्यः एकेन कर्तुमशक्यत्वात्पुत्रादिः अधिकारी एकस्मिन्नसंभवादिति कार्ष्णाजिनिमतम् ॥ ३६ ॥

**अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् ॥ ३७ ॥**

एक एव प्रयोक्तेत्यभिप्रायेण आह । अपि वेति । कृत्स्नसंयोगात् कृत्स्नप्रयोगस्य फलजनकत्वाद् एकस्यैव प्रयोगः कृत्स्नः ॥ ३७ ॥

**विप्रतिषेधात्तु गुणयन्यतरः स्यादिति लावुकायनः ॥ ३८ ॥**

विश्वसृजामयनसन्निधावेवं श्रुतं, पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः । एवमेव पञ्चदशाधिकमिति विश्वसृजां सहस्रसंवत्सरमिति । अत्र उक्तपक्षो ऽपि न संभवति । एकदेशानुष्ठातरि फलाश्रवणादतः पञ्चपञ्चाशत इति संख्यां मुख्यसंवत्सरे संबन्ध्य वाक्यप्रामाण्यनिर्वाहः न संभवतीत्यन्यतरस्य गौणार्थत्वमवश्यमुपेत्य प्रामाण्यं निर्वाह्यमित्याह । विप्रतिषेधादिति । विप्रतिषेधाद् विरोधाद् अन्यतरो गौण इति लावुकायनमतम् ॥ ३८ ॥

**संवत्सरो वा विचालितत्वात् ॥ ३९ ॥**

संवत्सरशब्द एव गौणः । विचालितत्वात् । चान्द्रसावनसौरादिषु दृष्टत्वेन तदर्थस्य व्यभिचरितत्वात् । पञ्चपञ्चाशच्छब्दो हि संख्याविशेषे नियतः अतः गौणो नेति भावः ॥ ३९ ॥

**स प्रकृतिः स्यादधिकारात् ॥ ४० ॥**

संवत्सरशब्दस्य गौणत्वमङ्गीकृत्य पक्षान्तरमाह । स इति । सः संवत्सरशब्दः प्रकृतिः प्रकृतिवत् । स्वप्रकृतिभूतगवामयनवत् । गवामयने यो मासः स संवत्सर इति व्यवहारेणात्रापि तथा स्यात् ॥ ४० ॥

**अहानि वा ऽभिसंख्यत्वात् ॥ ४१ ॥**

उपनयनोत्तरं वेदाध्ययनदारसंपत्तौ कृत्वा ऽऽधानज्योतिष्टोमानन्तरं सहस्रमासजीवित्वासंभवादसंभवीति सिद्धान्तपक्षमाह । अहानीति । अहानि पञ्चपञ्चाशदहानि संवत्सरपदवाच्यानि अभिसंख्यत्वात्। सर्वसत्रप्रकृतिभूतद्वादशाहे त्रिवृदहः प्रकृत्य, आदित्यो वै सर्वर्तवः स यदोदेति अथ वसन्तः यदा संगवो ऽथ ग्रीष्मो यदा मध्यंदिने ऽथ वर्षा यदपराह्णे ऽथ शरद् यदा ऽस्तमेत्यथ हेमन्तशिशिरावित्येकस्मिन्नहनि षडृतुपरिगणनात् । षडृतुमत्त्वरूपसंवत्सरत्वं युक्तमिति भावः ॥ ४१ ॥

इति जैमिनिसूत्रवृत्तौ षष्ठाध्यायस्य सप्तमः पादः ॥ ७ ॥

अनाहिताग्नेरेव चतुर्होतृहोमाधिकारः । अधि· १ ।

## इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वो ऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥

प्रजाकामं चतुर्होत्रा याजयेदित्यनारभ्य पठितदर्वीहोमाः आहवनीये उत लौकिके ऽग्नाविति संशये पूर्वपक्षमाह । इष्टीति । अक्रतुशेषः कस्यापि क्रतोरनङ्गभूतः अपूर्वो ऽपि यत्किंचिदप्रकृतिको ऽपि होमः दर्वीहोमः संस्कृतेषु आधानादिसंस्कृतेषु आधानस्य आधानसंस्कृताग्नेः आहवनीयस्य सर्वशेषत्वात् । यदाहवनीये जुहोतीत्यनेन सर्वहोमशेषत्वात् । अत एव इष्टिपूर्वत्वादाहवनीयस्य पवमानेष्टिसाध्यत्वादाहिताग्नेरेवात्राधिकारो न अनाहिताग्नेरिति भावः ॥ १ ॥

## इष्टित्वेन संस्तवश्चतुर्होतॄनसंस्कृतेषु दर्शयति ॥ २ ॥

सिद्धान्तमाह । इष्टीति । चतुर्होतृहोमानाम् एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतार इति इष्टित्वेन संस्तुतिः चतुर्होतृहोमानसंस्कृतेषु आधानाद्यसंस्कृतेषु दर्शयति ज्ञापयति ॥ २ ॥

## उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥

अस्यार्थवादत्वे वैयर्थ्याद् अयमुत्पत्तिविधिः अक्रतुशेषकर्मसामान्यस्य इत्यभिप्रायेणाह । उपदेशः विधिः । अपूर्वत्वादप्राप्तत्वात् ॥ ३ ॥

## स सर्वेषामविशेषात् ॥ ४ ॥

विधित्वमङ्गीकृत्य क्रत्वङ्गत्वादितरसाधारणो विधिरिति शङ्कते । स इति । स विधिः । शेषं स्पष्टम् ॥ ४ ॥

अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥ ५ ॥

अनाहिताग्नेः क्रतोरभावादनाहिताग्निपदश्रवणादक्रतुशेषस्य विधिरित्याह । अपि वेति । सूत्रं व्याख्यातम् ॥ ५ ॥

जपो वा ऽनग्निसंयोगात् ॥ ६ ॥

एषा वा अनाहिताग्नेरित्यनेन उत्पन्ना क्रिया जपरूपैवास्तु इति शङ्कते । जप इति । अनग्निसंयोगात् । अनाहिताग्निशब्दसंयोगात् ॥ ६ ॥

इष्टित्वेन संस्तुते होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥

इमं दूषयति । इष्टित्वेनेति । इष्टित्वेन इष्टिपदवाच्येन संस्तुतः अतः होम एव स्यात् । ननु आहवनीयः स्यात्तत्राह । अनारभ्येति । अनारभ्याधीतत्वादाहवनीयप्रापकवचनस्य उक्तरीत्या दर्वीहोमे अवाच्यत्वात्प्रवेशासंभवादितरेषां श्रौतकर्मणामेवाहवनीयः । यदि यदाहवनीये इति शास्त्रं चातुर्होत्रसन्निधौ पठितं स्यात्तदा ऽपरिहार्यं स्यात्तदेव नेति भावः ॥ ७ ॥

उभयोः पितृयज्ञवत् ॥ ८ ॥

आशङ्कते । उभयोरिति । उभयोः आहितानाहिताग्न्योः पिण्डपितृयज्ञवत् ॥ ८ ॥

निर्देशो वा ऽनाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥

नोभयोः, यतः वचने अनाहिताग्निनिर्देशः । अनारभ्याग्निसंयोगादिति पूर्वसूत्रे व्याख्यातम् ॥ ९ ॥

पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥ १० ॥

पितृयज्ञदृष्टान्तं परिहरति । पितृयज्ञे इति । पितृयज्ञे संयुक्तस्य आहिताग्निसंयुक्तस्य पुनर्वचनमनाहिताग्नेरौपासने अपणधर्मा होमश्चेति पृथग्विधिः, तथा नात्र ॥ १० ॥

अनाहिताग्निषु उपनयनहोमाः । अधि० २ ।

## उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥

उपनयनाङ्गहोमाः आहवनीये उत लौकिकइति संशये पूर्वपक्षमाह । उपेति । उपनयनं कुर्वन् आधानं कुर्यात् । जुहोतीति होमसंयोगात् । होमस्याहवनीयापेक्षत्वादाहवनीयस्याधानापेक्षत्वादिति भावः ॥ ११ ॥

## स्थपतिवल्लौकिके वा विद्याकर्मानुपूर्वत्वात् ॥ १२ ॥

सिद्धान्तमाह । स्थपतीति । विद्या स्वाध्यायाध्ययनं तत्साधनोपनयनरूपं कर्म एतदुभयपूर्वत्वादाधानस्य एतयोः पूर्वमसंभवेनोपनयनकाले आधानासंभवात् । एतया निषादस्थपतिं याजयेदित्यत्र तदिष्टिवल्लौकिके ऽग्नाविति भावः ॥ १२ ॥

## आधानं च भार्यासंयुक्तम् ॥ १३ ॥

आधानस्य भार्यासाहित्यादपि नेत्याह । आधानमिति । स्पष्टम् ॥ १३ ॥

## अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः ॥ १४ ॥

उपनयनात्प्रागाधानार्थमेका भार्या ऽस्तु अध्ययनोत्तरं दारसंग्रहः प्रजार्थो ऽस्त्वित्याह । अकर्मेति । आधानादूर्ध्वं परिणीतायामकर्म कर्मसंबन्धाभावः । तस्मिन्नुपनयनकाले समवायो भार्यासंबन्धः कर्मभिः । संबद्ध इति शेषः ॥ १४ ॥

## अकर्म च दारक्रिया ऽऽधानोत्तरकाले ॥ १५ ॥

इमं पक्षं दूषयति । अकर्मेति । आधानोत्तरकाले दारक्रिया अकर्म अननुष्ठेया । अशास्त्रादिति पूरणीयम् ॥ १५ ॥

## श्राद्धवदिति चेत् ॥ १६ ॥

पितृयज्ञो यथा ऽऽहितानाहिताग्न्योः तथा कालद्वये भार्याद्वयमित्याह । श्राद्धेति । श्राद्धवत् । पितृयज्ञवत् ॥ १६ ॥

## न श्रुतिविप्रतिषेधात् ॥ १७ ॥

स्नात्वोद्वहेदितिवचनविरोधान्नेत्याह । श्रुतीति ॥ १७ ॥

अर्थादन्यदेवेति चेत् ॥ १८ ॥

रागेण प्राप्तदारसंग्रहस्य कालविधिरित्याशङ्कते । अर्थेति । अर्थाद् रागात् प्राप्तौ अन्यदेव कालमेव विदधाति ॥ १८ ॥

सर्वार्थत्वादपुत्रार्थो न प्रयोजयेत् ॥ १९ ॥

भोगार्थं प्राप्तमपि कर्मार्थमप्राप्तविवाहः कालविशिष्टो ऽनेन विधीयते । विवाहद्वयमप्रमाणमित्याह । सर्वेति । सर्वार्थत्वात् । धर्मप्रजोभयार्थत्वादेकस्याः केवलं पुत्ररूपो ऽर्थः न प्रयोजयेद् न प्रेरयेत् ॥ १९ ॥

सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत् ॥ २० ॥

उक्तयुक्त्या उपनयनसमये विवाहो मा ऽस्तु तथा ऽपि पुरुषस्याप्रजसः भार्यान्तरसंयोगो ऽभिमत इत्याह । सोमेति । सोमपानात् । सोमपो न द्वितीयां जायामभ्युपयते, इति वचनाद् द्वितीयविवाहस्य प्रापणम् । निषेधस्य प्राप्तिपूर्वकत्वादिति भावः । तस्मादन्यां भार्यामुपयच्छेद् गृह्णीयात् ॥ २० ॥

पितृयज्ञे तु दर्शनात्प्रतीयेत ॥ २१ ॥

पितृयज्ञस्य पूर्वोक्तवचनादाधानात्प्रागनुष्ठानमित्याह । पितृयज्ञ इति । दर्शनाद्वचनदर्शनात् ॥ २१ ॥

अनाहिताग्नौ स्थपतीष्टिः । अधि० ३ ।

स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥ २२ ॥

स्थपतीष्टौ को ऽग्निरिति विचारे पूर्वपक्षमाह । स्थपतीति । स्थपतीष्टिः प्रयाजवत् । यथा प्रयाजादीन् चोदकाद्गृह्णाति तथा अग्न्याधेयं प्रयोजयेत् । गृह्णीयात् । तादर्थ्याद् इष्टिमात्रार्थत्वात् तत्रत्याधानस्य अपवृज्येत अग्न्युत्सर्गं कुर्वीत ॥ २२ ॥

अपि वा लौकिके ऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २३ ॥

सिद्धान्तमाह । अपि वेति । आधानस्य असर्वशेषत्वाद् यावत्पुरुषकर्तृकयज्ञाङ्गत्वाभावात् । आधानोत्पत्तिवाक्ये त्रैवर्णिककर्तृकत्वश्रवणेन त्रैवर्णिकयज्ञाङ्गत्वादिति भावः ॥ २३ ॥

अनाहिते ऽग्नावावकीर्णिपश्वनुष्ठानम् । अधि॰ ४ ।

## अवकीर्णी पशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ २४ ॥

यो ब्रह्मचार्यवकिरेत्स गर्दभं नैर्ऋतं पशुमालभेतेत्यत्र सिद्धान्तमाह । अवकीर्णीति । अवकीर्णी ब्रह्मचारी सन् स्त्रीरतः । तत्पशुः स्थपतिवत् । शेषं स्पष्टम् ॥ २४ ॥

दैवकर्मणामुदगयनादिकालता । अधि॰ ५ ।

## उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपा- न्यार्थदर्शनात् ॥ २५ ॥

चूडाप्रभृतीनां स्मार्तकर्मणामनियतकालानां कालनियमं सिद्धान्तमाह । उदगिति । स्मृतिवाक्यदर्शनात् । शेषं स्पष्टम् ॥ २५ ॥

## अहनि च कर्मसाकल्यम् ॥ २६ ॥

तथा दिवैव न रात्राविन्याह । अहनीति ॥ २६ ॥

पित्र्यकर्मणो ऽपरपक्षादिकालता । अधि॰ ६ ।

## इतरेषु तु पित्र्याणि ॥ २७ ॥

श्राद्धादीनि पित्र्याणि इतरेषु अपरपक्षेषु अपराह्णे च ॥ २७ ॥

ज्योतिष्टोमाङ्गयाच्ञाक्रययोर्नित्यत्वम् । अधि॰ ७ ।

## याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २८ ॥

यज्ञार्थं चन्द्रमसीत्यादिमन्त्रैः भिक्षणम्, तथा सोमक्रयश्च, स्वस्य द्रव्योपपत्तौ नेति पूर्वपक्षमाह । याच्ञेति । याच्ञा भिक्षा क्रयणं सोमक्रयश्च अविद्यमानएव तथा लोके दृष्टत्वात् ॥ २८ ॥

## नियतं वा ऽर्थवत्त्वात्स्यात् ॥ २९ ॥

सिद्धान्तमाह । नियतमिति । नियतं विद्यमाने ऽप्यवश्यं कार्यमर्थवत्त्वात् । क्रत्वपूर्वजननरूपफलवत्त्वात् ॥ २९ ॥

ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यत्वम् । अधि॰ ८ ।

## तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ ३० ॥

इत्थं नियममन्यत्रातिदिशति । तथेति । भक्षः तण्डुलादिसत्त्वे ऽपि पय एव भक्षः प्रोक्षण्यासादनज्ञानसत्त्वे ऽपि प्रोक्षणीरासादयेति प्रैषः अन्य-

वस्त्रसत्त्वे ऽपि दर्भमयं परिदधातीति दर्भमयवस्त्रपरिधानम् । तथा पशुना शकृत्यादाघाताद्यकरणे ऽपि, यत्पशुर्मायुमकृतोरो वा पद्भिराहत इति मन्त्रेण संज्ञपनहोमः । यो मां द्वेष्टि जातवेद इति मन्त्रपाठः द्वेष्यभावे ऽपि कार्यः ॥ ३० ॥

अपररात्रे व्रतस्यानियमः । अधि० ९ ।

## अनर्थकं त्वनित्यं स्यात् ॥ ३१ ॥

पयोव्रतादिनियमो ऽपि यत्र महानिष्टसंपादकः स त्याज्य इत्याह । अनर्थेति । अनर्थकं महानिष्टमरणादिजनकमजीर्णदोषेण तत्र अनित्यं कर्तव्य एवेतिनियमत्यागः ॥ ३१ ॥

छागस्यैवाग्नीषोमीयपशुत्वम् । अधि० १० ।

## पशुचोदनायामनियमो ऽविशेषात् ॥ ३२ ॥

अग्नीषोमीयपशुः यः कश्चनोत छाग इति संशये पूर्वपक्षमाह । पश्विति । पशुचोदनायाम् अग्नीषोमीयं पशुमालभेतेति वाक्ये अविशेषात् । अनियमः छाग एवेति न ॥ ३२ ॥

## छागो वा मन्त्रवर्णात् ॥ ३३ ॥

सिद्धान्तमाह । छाग इति । छाग एव । छागस्य वपाया मेदस इति मन्त्रलिङ्गात् ॥ ३३ ॥

## न चोदनाविरोधात् ॥ ३४ ॥

मन्त्रलिङ्गेन न विधिसंकोचः संभवतीति शङ्कते । नेति । विधिवाक्यस्य प्रबलत्वेन दुर्बलेन मन्त्रेण संकोचो नेति भावः ॥ ३४ ॥

## आर्षेयवदिति चेत् ॥ ३५ ॥

यथा आर्षेयं वृणीतइत्युक्त्वा त्रीन्वृणीतइति संकोचः तथा ऽत्रेति ब्रूते । आर्षेयवदिति ॥ ३५ ॥

## न तत्र ह्यचोदितत्वात् ॥ ३६ ॥

दृष्टान्तवैषम्यमाह । तत्रेति । तत्र छागे अचोदितत्वाद्विध्यभावात् । आर्षेयस्थले त्रित्वेन संकोचे विधिरस्तीति भावः ॥ ३६ ॥

## नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभिधानात् ॥ ३७ ॥

संकोचे शक्यार्थबाधाभावाद् दुर्बलेनापि मन्त्रलिङ्गेन संकोचो युक्त इति सिद्धान्त्याह । नियमो वेति । हि यतः ऐकार्थ्यं पशुशब्दार्थपशुत्वच्छागशब्दार्थच्छागत्वयोरविरोधः । दुर्बलत्वे ऽपि मन्त्रलिङ्गस्य शक्यार्थस्य बाधो न क्रियतइति भावः । तर्हि यदि पृथक्त्वेन परस्परविरोधेन अभिधानाद् अर्थभेदान्मन्त्रलिङ्गविध्यर्थयोर्भेदः तत्र मन्त्रलिङ्गमन्यद्भवत्विति पूरणीयम् । यथा ऐन्द्रार्चा गार्हपत्योपस्थानइति ॥ ३७ ॥

## अनियमो वा ऽर्थान्तरत्वादन्यत्वं व्यतिरेक-शब्दभेदाभ्याम् ॥ ३८ ॥

पूर्वपक्ष्याह । अनियम इति । अर्थान्तरत्वाद् उभयोरपर्यायत्वाद् घटकलशवत् तथा व्यतिरेकः छागत्वाभाववद्गवादिवृत्तित्वं पशुत्वे शब्दान्तरं भिन्नशब्दवाच्यत्वं ताभ्यां हेतुभ्यां भेदः वैरूप्यं यतः अतो ऽनियमः ॥ ३८ ॥

## न वा प्रयोगसमवायित्वात् ॥ ३९ ॥

सिद्धान्तमाह । न वेति । अनियमो न । उक्तमन्त्रस्य नित्यं प्रयोगसंबन्धात् । अश्वादिग्रहणे मन्त्रलिङ्गविरोधेन मन्त्रः पाक्षिकः स्यादिति भावः ॥ ३९ ॥

## छागेन कर्माख्यारूपलिङ्गाभ्याम् ॥ ४० ॥

ननु छिन्नगतिः छाग इति मन्त्रलिङ्गमप्यन्यत्र योगेनाबाधितमत आह । छागेनेति । छागेनैव कर्मयोगः । आख्यारूपं रूढिशक्तिः लिङ्गं पुल्लिङ्गं ताभ्याम् । रूढिर्योगमपहरतीति न्यायाद्योगशक्तेरप्रवृत्तिरिति भावः ॥ ४० ॥

## रूपान्यत्वान्न जातिशब्दः स्यात् ॥ ४१ ॥

ननु छागो बस्त इति शब्दाः वयोविशेषपराः । तथा च वयोविशेषं गृहीत्वा ऽश्वे ऽपि संभवन्तीत्यत आह । रूपेति । रूपस्य अश्ववृत्तिवयसः छागवृत्तिवयोविशेषादन्यत्वाद् न अश्वादिपरः किं तु छागत्वरू-

पजातिवाची शब्दः स्यात् । अयं भावः । यथा कलभशब्दः वयोविशेषविशिष्टं हस्तिनमेवाचष्टे नाश्वादिकं तथा छागशब्दो वयोविशेषविशिष्टं छागमेवाचष्टे नान्यमिति ॥ ४१ ॥

## विकार इति चेत् ॥ ४२ ॥

पदपदार्थसंबन्धो न नियतः नदीशब्दस्य शब्दविशेषे ऽपि वैयाकरणैः प्रयुज्यमानत्वादित्यमत्रास्त्वित्याशङ्कते । विकार इति । विकारः कल्पितसंबन्धः ॥ ४२ ॥

## नौत्पत्तिकत्वात् ॥ ४३ ॥

दूषयति । नेति । पदपदार्थसंबन्धस्य औत्पत्तिकत्वाद् नित्यत्वाद् नदीशब्दस्य शब्दविशेषे लक्षणैवेति भावः ॥ ४३ ॥

## स नैमित्तिकः पशोर्गुणस्याचोदितत्वात् ॥ ४४ ॥

ननु सुषिरं वा एतत् क्रियते यद्वपामुत्खिदतीत्यर्थवादादवगतच्छिद्रनिमित्तः छागशब्दो ऽस्तु स चान्यत्रापीत्याशङ्कते । स नैमित्तिक इति । नेति पूर्वसूत्रादनुवर्तते । सः छागशब्दः छिद्रनिमित्तो न । पशौ छिद्रत्वस्य विधिविहितत्वाभावात् । रूढिर्योगमपहरतीति दत्तोत्तरत्वाच्च ॥ ४४ ॥

## जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ॥ ४५ ॥

उपसंहरति । जातेरिति । जातेरेव वाचकः छागशब्दः तत्प्रायवचनं जातौ भूरिप्रयोगेण रूढिशक्त्या अर्थवत्त्वेन विध्यविरुद्धार्थवत्त्वेन च ॥ ४५ ॥

इति श्रीजैमिनिसूत्रवृत्तौ षष्ठस्याध्यायस्य अष्टमः पादः ॥ ८ ॥

समाप्तश्च षष्ठाध्यायः ॥ ६ ॥

## पूर्वार्धं समाप्तम् ॥



प्रयाजादिधर्माणामपूर्वप्रयुक्तत्वम् । अधि० १ ।

## श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥ १ ॥

पूर्वेण षट्केन प्रत्यक्षधर्मा विचारिताः उत्तरषट्केनातिदेशिकधर्मविचारो वैकृतः क्रियते । प्रयाजादिधर्माः दर्शपूर्णमाससन्निधौ पठिताः किं तदर्था उत यावद्यागार्था इति संशये सिद्धान्तेनोपक्रमते । श्रुतीति । मुख्यानामपूर्वाणां भेदे शेषाणां प्रयाजादीनां यथाऽधिकारं यस्य प्रकरणं तत्रैव व्यवस्था स्यात् । अयमस्य शेष इति श्रुत्यैकगम्यत्वात् । दर्शपूर्णमासे कथंभावाकाङ्क्षया ऽन्विताः, नान्यत्र गन्तुं समर्था इति भावः ॥ १ ॥

## उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥ २ ॥

पूर्वपक्षमाह । उत्पत्तीति । ऐकधर्म्यं सर्वेषां तुल्यधर्मत्वं स्यात्सर्वे धर्माः सर्वार्था इति भावः । उत्पत्तेर्यज्ञेर्यो ऽर्थः अपूर्वं तयोरविभागात् । अविशेषात् । सत्त्ववत् । गवादिवत् । यथा गां पदा न स्पृशेदित्युक्ते न सन्निहितायामपि कस्यां चिद्गवि, यावद्गोग्रहणम्, तथा यागमुद्दिश्यैते धर्मा विधीयमाना यावद्यागार्था भवितुमर्हन्तीति भावः ॥ २ ॥

## चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥

सिद्धान्तमाह । चोदनेति । प्रयाजादयः दर्शपूर्णमासार्था एवेति व्यवतिष्ठेरन् दर्शपूर्णमासनाम्नोः कर्मणोः उत्पत्तौ अपूर्वे गुणभूतत्वादङ्गत्वात् । तथा चोदनायाः दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विधेः शेषभावात् । एकदेशरूपत्वात् । अतः तद्भेदादपूर्वभेदस्य द्वितीये व्यवस्थापितत्वात् । अयं भावः । धर्माणां यागाङ्गत्वं न वाक्येन किं तु कथंभावाकाङ्क्षारूपप्रकरणेन । तच्च यागेनापूर्वं कुर्यादु इति अपूर्वमुद्दिश्य यागविधौ कथमपूर्वं कुर्याद्यागेनेति तद्विधिश्रवणजनिताकाङ्क्षापूर्वकतया । निखिलाङ्गविधिवाक्यानां तत्संबन्धाद्धर्मसमाम्नायः कर्मविध्येकदेशरूपः । इत्थं चापूर्वोद्देशेन कर्मविधानाद्यागो विधेय इति दर्शपूर्णमासशब्दवा-

त्यत्वविशिष्टयागस्यैव विधानात्तद्विधिशेषभूता धर्माः तदपूर्वप्रयुक्ता एव न त्वपूर्वान्तरप्रयुक्ता इति ॥ ३ ॥

## सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥ ४ ॥

सत्त्ववदितिदृष्टान्तवैषम्यं दर्शयति । सत्त्वइति । सत्त्वे गोव्यक्तौ लक्षणस्य लक्षणावृत्तेः संयोगात् संबन्धात्सार्वत्रिकं सकलगोसाधारणं प्रतीयेत । गोपदेन व्यक्तिं लक्षयित्वा तदनुवादेन पादस्पर्शनिषेधविधानात् । सन्निहितत्वविशिष्टस्योद्देश्यत्वे वाक्यभेदभिया गोत्वावच्छिन्नपरत्वमिह तु यागस्य गुणत्वात्फलं प्रति सन्निहितत्वविशिष्टयागविधौ न वाक्यभेद इति भावः ॥ ४ ॥

## अविभागात्तु नैवं स्यात् ॥ ५ ॥

पूर्वपक्षयत्तिष्ठते । अविभागादिति । नैवम्, अपूर्वार्था धर्मा इति न । अविभागात्प्रत्यक्षप्रमाणावगतयागनिरूपितकारणतया अङ्गानामवियोगात् । अङ्गभूते द्रव्ये तथा देवतायां तथा मन्त्रेषु अग्न्यादौ यागकारणत्वं प्रत्यक्षगम्यम् । अपूर्वसाधनत्वमानुमानिकं दुर्बलमिति भावः ॥ ५

## द्व्यर्थत्वं च विप्रतिषिद्धम् ॥ ६ ॥

दूषणान्तरमप्याह । द्व्यर्थेति । यदि दर्शपूर्णमासार्था एव प्रयाजादयः तदा सौर्ययागे प्रयाजाभावेन प्रयाजे प्रयाजे कृष्णलं जुहोतीति वाक्यस्य यागमुद्दिश्य प्रयाजविध्यर्थत्वं प्रयाजमुद्दिश्य कृष्णलविध्यर्थत्वमिति द्व्यर्थत्वं विप्रतिषिद्धमन्याय्यं वाक्यभेदभिया। मन्मते धर्माणां सर्वार्थत्वात् तत्र प्रयाजानां क्लृप्तत्वात्कृष्णलमात्रविधानम् ॥ ६ ॥

## उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्ततश्च कर्मभेदः स्यात् ॥ ७ ॥

सिद्धान्ती ब्रूते । उत्पत्ताविति । चोदनायामपूर्वे धर्माणां प्रवृत्तिः स्यात् । उत्पत्तौ यागे धर्माणां विध्यभावात् । ततः अपूर्वार्थत्वात्तद्भेदात्कर्मणः धात्वर्थस्य भेदः स्यात् ॥ ७ ॥

## यदि वा ऽप्यभिधानवत्सामान्यात्सर्वसिद्धिः स्यात् ॥ ८ ॥

धर्माणामपूर्वार्थत्वमङ्गीकृत्यापि सर्वार्थत्वं साधयति । यदीति । यदि वा ऽपूर्वार्थत्वमस्तु, तथा ऽपि सर्वधर्मः स्यात् । अभिधानवत्सामान्यात् । अभिधानमपूर्वमिति नाम । तद्वत्त्वेन सर्वापूर्वाणां तुल्यत्वात् । यथा वाहीको ऽतिथिरागतः तस्मै यवान्नं दीयतामित्युक्ते यवान्नदानप्रयोजकं वाहीकमात्रं जानाति न पुरोवृत्तिमात्रं, तथेति भावः ॥ ८ ॥

## अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात्प्रयोगस्य कर्मणः शब्दभाव्यत्वाद्विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥

वाहीकदृष्टान्तवैषम्यं दर्शयति । अर्थस्येति । अर्थस्य वाहीकदेशसंबन्धस्य तावत्पुरुषेषु अविभक्तत्वान्नियतत्वात् । यवान्नदाननिमित्तं तद्देशसंबन्धः, न पुरुषः । नन्विदं कथं ज्ञातमत्राह । प्रयोगस्य उक्तवाक्यप्रयोगस्य पूर्ववत्त्वादेतत्पूर्वमपि सत्त्वात् । अयं भावः । पूर्वमसकृद्वाहीकागमने वाहीक आगतः यवान्नं देहीति वाक्यम् असकृच्छ्रुत्वा पश्चात्तद्देशसंबन्धी यः स यवान्नप्रिय इति व्याप्तिं गृह्णातीति, तथा ऽत्र नेत्याह । कर्मणः अपूर्वस्य शब्दभाव्यत्वात् शब्दैकगम्यत्वात्तस्य अपूर्वस्य शब्देन विभागात् । कर्मभेदेन भेदसिद्धेः । शेषाणां प्रयाजादीनां सर्वत्राप्रवृत्तिः स्यात् । यत्र पठितं तत्रैव विश्रान्तिः ॥ ९ ॥

## स्मृतिरिति चेन्न ॥ १० ॥

नन्वरुणपराशरा नाम शाखिनः तेषां परिचरेषु स्मृतिरूपब्राह्मणं, ये दर्शपूर्णमासयोर्धर्माः ते सर्वेष्टीनामिति स्मृतं, तस्याः का गतिरिति शङ्कते । स्मृतिरिति ॥ १० ॥

## पूर्वत्वात् ॥ ११ ॥

स्मृतिं लापयति । पूर्वत्वादिति । पूर्वत्वाद् दर्शपूर्णमासप्रकृतिकत्वं विकृतीष्टीनां चोदकशास्त्रेण तद्धर्मप्राप्तिरिति वक्ष्यमाणं, तदनुवादिका स्मृतिरिति भावः ॥ ११ ॥

**अर्थस्य शब्दभाव्यत्वात्प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावः स्यात् ॥ १२ ॥**

उक्तार्थं निगमयति । अर्थस्येति । अर्थस्य अङ्गकलापस्य शब्देन विधिना भाव्यत्वादङ्गत्वात्तेषामङ्गानां प्रकरणेन निबन्धनादन्यत्र गन्तुमशक्यत्वादन्यत्र सौर्ययागादौ तेषामङ्गानां भावः सत्त्वं शब्दादतिदेशशास्त्रेण वक्ष्यमाणेनैव स्यात् । अतः अतिदेशशास्त्रमारम्भणीयमिति भावः ॥ १२ ॥

समानमितरच्छ्येनेनेति श्रुत्या इषौ श्येनीयविशेषधर्मातिदेशः । अधि० २ ।

**समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ १३ ॥**

अस्तीषुनामकः कश्चिदेकाहविशेषः आभिचारिकः । तत्र कांश्चिद्विकृतान् धर्मान्विधाय ततः समानमितरच्छ्येनेनेत्युक्तम् । अयमनुवादो विधिर्वेति संशये पूर्वपक्षमाह । समानइति । समानउक्तवाक्ये उत्पन्नाधिकारः स्यात् । अनुवादः स्यात् । पूर्ववत्त्वात् । ज्योतिष्टोमविकृतित्वात् । अयं भावः । श्येनस्येषोश्च अव्यक्तलिङ्गत्वेन ज्योतिष्टोमः प्रकृतिः । इषुसमीपे वैशेषिका ये धर्माः तदितरेषां प्राकृतानां ज्योतिष्टोमादतिदेशेन प्राप्तानामेवानेनानुवाद इति ॥ १३ ॥

**श्येनस्येति चेत् ॥ १४ ॥**

श्येनवैशेषिकधर्मान् लोहितोष्णीषादीनतिदिशति इदं वाक्यमिति शङ्कते । श्येनस्येति ॥ १४ ॥

**नासन्निधानात् ॥ १५ ॥**

निराकरोति । नेति । श्येने ज्योतिष्टोमधर्माः श्येनवैशेषिकधर्माश्च सन्ति । तत्र इतरपदेन ज्योतिष्टोमधर्मा एव ग्राह्या अव्यक्तलिङ्गेन तेषामेव सन्निधानाद् इति भावः ॥ १५ ॥

**अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १६ ॥**

सिद्धान्तमाह । अपि वेति । अपूर्वत्वात् । उक्तवाक्यस्य विधायकत्वात् । इतरशब्दो ऽधिकार्थः न भेदवद्वाचकः । इत्थं च ज्योतिष्टो·

मिकाद्विधेः ज्योतिष्टोमसंबन्धिधर्मास्तु, तद्वाचकं तत् इति पदं वाचकं येषा-मिति विग्रहेण अधिकमिति फलितं, ज्यौतिष्टोमिकविधेरधिकं यल्लोहिताष्णीषादिधर्मजातं श्येनेन समानमिति वचनार्थः । यदि विधिः तदा सार्थक इति भावः ॥ १६ ॥

एतद्ब्राह्मणानीत्यादिना पञ्चसु हविःषु सार्थवादविध्यतिदेशः । अधि० ३ ।

## पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात् ॥ १७ ॥

चातुर्मास्ये एतद्ब्राह्मणान्येव पञ्च हवींषीति श्रुतम् । अत्र ब्राह्मणपदेनार्थवादा एव ग्राह्या उताङ्गविधयो ऽपीति संशये पूर्वपक्षमाह । पञ्चेति । पञ्चसंचरेषु, पञ्चहविषामाग्नेयादीनां पञ्चानां प्रतिपर्वं गमनमस्तीति तानि पञ्चसंचरपदवाच्यानि, तेषु वरुणप्रघासेषु उक्तवाक्येनातिदिष्टेषु ब्राह्मणपदेनार्थवादमात्रातिदेशः स्यात् नाङ्गविधीनां, विधिवाक्यशेषत्वेन तस्य सन्निधानात् ॥ १७ ॥

## सर्वस्य चैकशब्द्यात् ॥ १८ ॥

सिद्धान्तमाह । सर्वस्येति । सर्वस्य अङ्गविधीनां ब्राह्मणानां च अतिदेशः स्यात् । ऐकशब्द्यात् । एकेन ब्राह्मणशब्देन उभयोः प्रतिपाद्यत्वात् ॥ १८ ॥

## लिङ्गदर्शनाच्च ॥ १९ ॥

लिङ्गेति । वरुणप्रघासे त्रिंशदाहुतय इति परिगणनमङ्गविध्यतिदेशं विना ऽनुपपन्नमिति भावः ॥ १९ ॥

## विहिताम्नानान्नेति चेत् ॥ २० ॥

नन्वङ्गविधीनां यद्यतिदेशः तर्हि वैश्वदेवधर्माणाम्, अग्निं मन्थन्ति प्रसुवो भवन्तीति पुनर्विधानं व्यर्थमित्याशङ्कते । विहितेति । विहितस्य वैश्वदेवे विहितस्याग्निमन्थनादेः पुनराम्नानात् । पुनर्विधानान्नाङ्गविध्यतिदेशः ॥ २० ॥

## नेतरार्थत्वात् ॥ २१ ॥

समाधत्ते । नेति । न वैयर्थ्यं पुनर्विधेः इतरार्थत्वात् । मारुतीप्रचारार्थत्वात् ॥ २१ ॥

एतद्ब्राह्मणा इत्यनेन एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशः । अधि० ४ ।

## एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

तथा साकमेधे एतद्ब्राह्मण ऐन्द्राग्नः एतद्ब्राह्मण एककपालइति । अत्रापि पूर्वोत्तरपक्षौ पूर्वाधिकरणवत् ॥ २२ ॥

साकमेधे वारुणप्रघासिकैककपालातिदेशः । अधि० ५ ।

## एककपालानां वैश्वदेविकप्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्द्व्यवदानस्य वचनात् ॥ २३ ॥

वैश्वदेवपर्वणि द्यावापृथिव्यमेककपालं वरुणप्रघासे कायमेककपालमिति साकमेधीये वैश्वकर्मणमेककपालमित्युक्त्वा तत्रैवैतद्ब्राह्मण एककपाल इति श्रुतम् । अस्मिन्वाक्ये एतच्छब्देन वैश्वदेविकैकपाल उत वरुणप्रघाससंबन्धी ग्राह्य इति संशये भूयोधर्मत्वाद् वैश्वदेवसंबन्धिनो ग्रहणमिति पूर्वपक्षे सिद्धान्तमाह । एककपालानामिति । वारुणप्रघासिकैककपालस्यैव ग्रहणम् । तथा हि । एककपालानां यावदेककपालानां वैश्वदेवैककपालं प्रकृतिः । आग्रयणे द्यावापृथिव्यैककपाले सर्वहोमस्य अपरिवृत्तिश्च दर्शनादनुवादात् । अवभृथे वारुणैककपाले द्विरवद्यतीति द्व्यवदानविधायकवचनाच्च । यदि वैश्वदेवप्रकृतिकत्वं न स्यात्तर्हि द्विरवदानस्य द्विर्हविषो ऽवद्यतीत्यनेनैव प्राप्तत्वात्पुनर्विधानं व्यर्थं स्यात् । तत्प्रकृतित्वे तु वैश्वदेवपर्वणि एककपालस्य यदेककपालस्यावद्येद् यजमानस्यावद्येदिति निषेधात्तस्यातिदेशेन प्राप्तौ तद्बाधकं प्रकृतवचनम् । इत्थं च वैश्वदेवैककपालधर्माणां प्रकृतित्वेनैव प्राप्तौ एतद्वचनमनर्थकं स्यादतः सर्वप्रकृतित्वेन वैश्वदेवधर्माणां प्राप्तिः । शमीमय्यः स्रुच इति विशेषाणां वरुणप्रघासधर्माणामपि प्राप्त्यर्थमिदं वचनम् । तस्मादेतत्पदेन वरुणप्रघासैककपालग्रहणम् । एतादृशार्थलाभाय सूत्रे कानि चित्पदानि प्रपूर्याणि ॥ २३ ॥

इति श्रीजैमिनिसूत्रवृत्तौ सप्तमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

रथंतरादिशब्दस्य गानविशेषार्थत्वम् । अधि० १ ।

## साम्नो ऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥ १ ॥

कवतीषु रथन्तरं गायतीति । अस्यार्थः । अभि त्वा शूर नोनुम इत्यृचि गानविशेषेण गीयमानं साम रथन्तरशब्दवाच्यम् । एतस्य कवतीषु कया नश्चित्र आभुवदित्यृचि गानं कार्यमिति । अत्रातिदेशः कस्येति विचिकित्सायां प्रथमं पक्षमाह । साम्न इति । साम्नो ऽभिधायकशब्देन वाचकशब्देन रथन्तरमित्यानुपूर्व्या यथाशिष्टं यथा गुरुपरम्परया उपदिष्टं तथा प्रवृत्तिः स्यात् । रथन्तरं साम पठेत्युक्ते गानयुक्तामृचं पठति । अतः गानविशिष्टाया ऋचो ऽतिदेश इति भावः ॥ १ ॥

## शब्दैस्त्वर्थविधित्वादर्थान्तरे ऽप्रवृत्तिः स्यात्पृथग्भावात्क्रियाया ह्यभिसंबन्धः ॥ २ ॥

गानविशिष्टाया ऋचो ऽतिदेश इत्युक्तं तत्र ऋगंशं दूषयति । शब्दैरिति । न ऋचः प्रवृत्तिः यतः शब्दैरर्थविधित्वात् । स्वस्वार्थबोधफलत्वात् । अर्थान्तरे अन्यशब्दार्थैरन्यशब्दस्य अप्रवृत्तिः स्यात् पृथग्भावात् । तत्तदर्थवाचकशब्दानां पृथक्त्वात् । क्रियायास्तत्तदर्थस्य तेन तेन संबन्धः । अयं भावः । ऋचो ऽतिदेशे अभि त्वेत्यृचो बोध्यो यो ऽर्थः स, कया नश्चित्र आभुवदित्यृचा बोधनीयः । स च न संभवति तत्तदर्थभेदादतः ऋगतिदेशो न संभवतीति भावः ॥ २ ॥

## स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ॥ ३ ॥

मा ऽस्तु ऋगन्तरस्य ऋगन्तरार्थबोधकत्वं तथा ऽप्यदृष्टार्थमित्याशङ्कते । स्वार्थेति । स्वार्थे प्रवर्तमाना अप्यभिवत्यः कवतीनामङ्गभावेनोपदिश्येरन् विधीयेरन् । उभयसमुच्चय इति भावः । क्रियाया अभि त्वेति ऋक्पाठस्य प्रयोजनं फलम्, अदृष्टम् इति शेषः ॥ ३ ॥

## शब्दमात्रमिति चेत् ॥ ४ ॥

पक्षान्तरमाह । शब्दमात्रं रथन्तरमित्यानुपूर्वीविशिष्टं ताव-

न्मात्रं, कवतीषु योन्यमिति पूरणीयम् । अदृष्टार्थं तावत्पदकल्पने गौरवादिति भावः ॥ ४ ॥

## नौत्पत्तिकत्वात् ॥ ५ ॥

दूषयति । नेति । नामिनाम्नोः संबन्धस्यौत्पत्तिकत्वात् स्वतःसिद्धत्वात् । न, रथन्तरशब्देन रथन्तररूपशब्दार्थविधायकत्वं न संभवति । औत्पत्तिकशब्दसंबन्धाभावादिति भावः ॥ ५ ॥

## शास्त्रं चैवमनर्थकं स्यात् ॥ ६ ॥

अस्मिन्पक्षे दूषणान्तरमाह । शास्त्रमिति । शास्त्रमतिदेशशास्त्रमनेन वचनेन अतिदेशो विधेयः स चानर्थकः स्यात् । असिद्धः स्यात् । अस्य शब्दस्य अन्यत्राङ्गत्वे अक्लृप्तत्वाच्चैव अपूर्वविधानादिति भावः ॥ ६ ॥

## स्वरस्येति चेत् ॥ ७ ॥

मा ऽस्तु रथन्तरमिति शब्दस्य कवतीषु विधानम् । किं तु अभि त्वेत्यृचि यः स्वरः स कवतीषु विधीयतइत्याह । स्वरस्येति ॥ ७ ॥

## नार्थाभावाच्छ्रुतेर्न संबन्धः ॥ ८ ॥

दूषयति । नेति । अर्थस्य अभिव्यक्त्या ऋचः स्वरस्य कवतीष्वभावात् । श्रुतेः कवतीषु रथंतरं गायतीत्यस्याः श्रुतेर्न संबन्धः । स्वरेण साकं संबन्धो न । स्वरविधौ तात्पर्यं नेति भावः ॥ ८ ॥

## स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ९ ॥

सिद्धान्तं वक्तुं प्रचक्रमे । स्वर इति । अभि त्वा शूरेत्यृचि ये वर्णा याश्च मात्राः तेषां कवतीष्वपि सत्त्वेन तदविभक्तत्वात्तदभिन्नत्वात् । उत्पत्तिषु अभि त्वा शूरेत्यृचि उत्पन्नेषु वर्णेषु यः स्वरः सः तेषु तत्रत्यवर्णेष्वपि स्यात् । यदि च तेषु वर्णेषु तस्य स्वरस्य सिद्धत्वेन विधिवैयर्थ्यमिति तर्हि अनुवादो ऽस्तु ॥ ९ ॥

## लिङ्गदर्शनाच्च ॥ १० ॥

साधकान्तरमाह । लिङ्गेति । रथंतरमुत्तरयोर्न पश्यामीति विश्वामित्रः तपस्तेपे बृहदुत्तरयोर्न पश्यामीति वसिष्ठ इति । यच्च विद्यमानं न दृश्यते तद्दर्शनाय यत्नः, न त्वविद्यमानदर्शनविषयिणी इच्छा यत्नो वा भवति । अतः उत्तरयोरपि रथंतरमस्तीति सिद्धम् ॥ १० ॥

## अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ११ ॥

कृत्स्नस्वरयोरुत्तरयोरनुवाद इति पक्षं दूषयति । अश्रुतेरिति । उत्तरासु विकारस्य नवीनधर्मस्याश्रुतेः अविधानात् । यथाश्रुति स्वाध्यायकाले यथा पठितं तथा पाठः स्यात् । तथा च रथंतरमुत्तरयोर्गायति कवतीषु रथंतरं गायतीति वचनान्यनर्थकानि स्युरिति भावः ॥ ११ ॥

## शब्दानां चासामञ्जस्यम् ॥ १२ ॥

ननु अनुवादे वैयर्थ्यभिया रथंतरधर्मज्ञापकः । ते च धर्मा रथंतरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेदित्यादयः । तत्राप्यर्थमिदं वचनमस्त्वित आह । शब्दानामिति । असामञ्जस्यं शक्यार्थबोधो न, लक्षणा स्यादिति ॥ १२ ॥

## अपि तु कर्मशब्दः स्याद्भावो ऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टो ऽन्यैः ॥ १३ ॥

परमसिद्धान्तमाह । अपि त्विति । पूर्वोक्तं किमपि न । अपि तु कर्मशब्दः स्यात् । गानाख्यस्य ऋक्संस्काररूपकर्मवाचको रथंतरादिशब्दः स्यात् । अयं भावो ऽर्थः वास्तवार्थः सिद्धान्तरूप इत्यर्थः । प्रसिद्धग्रहणत्वात् । रूढिशक्तिमत्त्वाद्गायतिधातोः । अग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्दस्य धात्वर्थेऽत्र रथंतरं गायतीत्यत्र रथंतरशब्दार्थस्य गाने अभेदेनान्वयात् । किं च अन्यैरविशिष्टः अन्यैरवहननादिभिः अविशिष्टः तुल्यः । अवहननेन यथा वितुषीभावः तथा गानेन ऋचो ऽक्षराभिव्यक्तिरिति ॥ १३ ॥

## अद्रव्यं चापि दृश्यते ॥ १४ ॥

अद्रव्यम्, अत्र द्रव्यशब्दस्य छन्दोगानाम् ऋचि प्रयोगो दृश्यते ।

अद्रव्यम् ऋक्शून्यमपि साम दृश्यते । प्रजापतेर्हृदयमनृचं गायतीति । प्रजापतेर्हृदयं सामविशेषः । अतो ऽपि न गानविशिष्टर्ग्विधिरिति भावः ॥ १४ ॥

## तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् ॥ १५ ॥

ननु ऋक्संस्कारार्थं साम तर्हि अवहननादिवत् प्रयोगशून्यकाले पठनं व्यर्थं स्यादित्यत्राह । तस्येति । अकर्मकाले तस्य रथंतरादिपदवाच्यस्य क्रिया पाठः ग्रहणार्था अभ्यासार्था । यतो नानार्थेषु नानाश्रयेषु ऋग्रूपेषु विरूपित्वाद् भिन्नरूपत्वात् । तत्तद्रूपं तदभ्यासं विना न संभवतीति भावः । अवहननादिवैषम्यं दर्शयति । आसां रथंतरादिसंज्ञानामर्थः अलौकिकः विधानाद् गुरुशिक्षयैव ज्ञेयः । अतः अभ्यासार्थमकर्मकाले पाठ इति भावः ॥ १५ ॥

## तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥ १६ ॥

ननु साम्नो गानरूपस्य रथंतरादिपदार्थत्वे गानस्यैकरूपत्वात्संज्ञाभेदो बृहद्रथंतरमिति व्यर्थो ऽत्राह । तस्मिन्निति । तस्मिन् गाने ऽपि विकारपृथक्त्वात् । गानस्वरूपाणां पृथक्त्वात् । संज्ञाविशेषाः बृहदादिसंज्ञाविशेषाः स्युः ॥ १६ ॥

## योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥ १७ ॥

हेत्वन्तरमाह । योनीति । योनिः साम्नो योनिः सा चासौ शस्या च शस्त्रसाधनीभूता ऋक् च योनिशस्या । ताः इतराभिरयोनिशस्याभिः तुल्यवद्विधीयन्ते । अयं भावः । याभ्यां शंसतीति अयोनिशंसनं रथंतरस्य योनिमनुशंसतीति योनिशंसनमुभयोरपि शंसतिधातुना तुल्यं निर्देशात् । रथंतरस्य योनिमिति षष्ठ्या रथंतरयोनिशब्दार्थयोर्भिन्नत्वादिति भावः ॥ १७ ॥

## अयोनौ चापि दृश्यते ऽतथायोनि ॥ १८ ॥

इतो ऽपि रथंतरशब्दो गीतिवाचक इत्याह । अयोनाविति । अयोनौ योनिभूतऋग्भिन्ने, बृहद् गायत्री, क्रियते इति गायत्रीछंदस्काया-

मृचि बृहत्साम दृश्यते । अयोनि च स्वयोनिभूता ऋचो यच्छन्दस्काः ततोऽधिकन्यूनाक्षरकऋक्छाणि सामानि, दृश्यन्ते । इदं सर्वं रथंतरादीनां ऋक्त्वे न घटतइति भावः ॥ १८ ॥

एकार्थे नास्ति वैरूप्यमिति चेत् ॥ १९ ॥

यच्चोक्तम् ऋकर्मकाले पाठो दृष्टार्थमिति तमाक्षिपति । एकेति । एकार्थे रथंतरैककार्यके रथंतरे वैरूप्यं नास्तीति । अयं भावः । पूर्वं रथंतरबृहदादिसंज्ञाभेदः गानभेदादित्युक्तम् । सर्वत्र रथंतरगानस्यैकरूपत्वात्तस्य स्वयोनिभूतायामृचि दृढीकृते उत्तरयोरपि प्रयोगवेलायां गातुं शक्यत्वेन प्रयोगाद्बहिः पठनं व्यर्थमिति भावः ॥ १९ ॥

स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके ॥ २० ॥

समाधत्ते । स्यादिति । अर्थान्तरेषु ऋगन्तरेषु अनिष्पत्तेः अभ्यासं विना अनिष्पत्तेः प्रयोगाद्बहिः पाठः स्यात् । यथा पाके, पाकपदार्थस्य सर्वत्रैक्ये ऽपि एकत्र तण्डुले पाकज्ञाने ऽपि गुडस्य पाकार्थं पुनरभ्यासः क्रियते न तण्डुलपाकेन तज्ज्ञानं भवति अधिष्ठानभेदात्, तथा ऽत्रापीति भावः ॥ २० ॥

शब्दानां च सामञ्जस्यम् ॥ २१ ॥

शब्दानां कवतीशब्दानां रथंतरादिशब्दानां च सामञ्जस्यं साफल्यम् । उभयोरपि ऋग्वाचकत्वे ऋचि ऋगधिकरणत्वासंभवेन कवतीनां द्योतकत्वं रथंतरशब्दस्य वा तत्कार्यलक्षकत्वादीति भावः ॥ २१ ॥

इति जैमिनिसूत्रवृत्तौ सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥

अग्निहोत्रादिनाम्ना धर्मातिदेशः । अधि० १ ।

उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥

कौण्डपायिनामयने मासमग्निहोत्रं जुहोति इति । इदं नित्याग्निहोत्रादन्यदपूर्वं कर्मेति द्वितीये व्यवस्थितम् । इत्थं चात्राग्निहोत्रमिति कर्मनामधेयमिति च प्रथमे व्यवस्थितम् । तेनैव नाम्ना अस्य कर्मणो निर्देशः

नित्याग्निहोत्रधर्मप्राप्त्यर्थे इति सिद्धान्तेनोपक्रमते । उक्तमिति । क्रियायाः अग्निहोत्रक्रियायाः अभिधानं नामेति उक्तं नामधेयपादे । अन्यत्र कुण्डपायिनामयने तच्छ्रुतौ अग्निहोत्रशब्दश्रुतौ विधेः धर्मस्य प्रदेशः अतिदेशः स्यात् ॥ १ ॥

अपूर्वे वा ऽपि भागित्वात् ॥ २ ॥

पूर्वपक्षयत्याशङ्कते । अपूर्वइति । वा ऽपीति विपरीतेन अपि वेति योज्यम् । अपूर्वे मासाग्निहोत्रे ऽपि अग्निहोत्रशब्दः स्यात् । भागित्वाद् योग्यत्वात् । उभयोरपि नामाभिव्यन्यर्थः फलितः ॥ २ ॥

नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥

इमं पक्षं दूषयति । नाम्न इति । नाम्नः अग्निहोत्रादिशब्दानामर्थेन साकं संबन्धस्य औत्पत्तिकत्वात् । नियतत्वात् । एकः शब्दः एकेनार्थेन नियमेन संबद्धः नानेकैरर्थैरिति । न हि माणवके प्रयुज्यमानः सिंहशब्दः माणवकेन संबद्धस्तद्वति भावः ॥ ३ ॥

प्रत्यक्षाद्गुणसंयोगात्क्रियाभिधानं स्यात्तदभावे ऽप्रसिद्धं स्यात् ॥ ४ ॥

विनिगमकं न पश्याम इत्याशङ्कायामाह । प्रत्यक्षादिति । नैयमिकाग्निहोत्रे प्रत्यक्षात् श्रूयमाणाद् अग्निर्ज्योतिरितिमन्त्रलिङ्गेन गुणस्य देवताख्यस्य संयोगात् तत्प्रख्यन्यायेन क्रियाभिधानं तत्कर्मणो नाम स्यात् । मासाग्निहोत्रे तदभावे तत्सन्निधिपठितमन्त्राद्यभावे अप्रसिद्धमङ्गं विधास्यन् न नामत्वं लभते । अतः नित्याग्निहोत्रनाम, अत्र धर्मप्राप्त्यर्थं तन्नाम्ना व्यवहार इति भावः ॥ ४ ॥

प्रायणीयेति नाम्ना धर्मानतिदेशः । अधि० २ ।

अपि वा सर्वत्र कर्मणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥

द्वादशाहे प्रथममहः प्रायणीय इति । तद्विकृतौ गवामयने ऽपि प्रायणीयं प्रथममहरिति । अत्र प्रायणीयशब्दो धर्मप्राप्त्यर्थमिति पूर्वपक्षे सिद्धान्तमाह । अपि वेति । सर्वत्र कर्मणि प्रकृतौ विकृतौ च गुणार्थी गुण-

विध्यर्थमेषा प्रायणीय इत्येषा श्रुतिः । प्रारभ्य अयति प्रवर्तते यत्र इति व्युत्पत्त्या प्रायण्यरूपगुणार्थत्वमुभयत्र तुल्यमिति भावः ॥ ५ ॥

सर्वपृष्ठशब्देन षण्णां पृष्ठानामतिदेशः । अधि० ३ ।

## विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठानि अस्ति च पृष्ठशब्दः ॥ ६ ॥

विश्वजित्सर्वपृष्ठो ऽतिरात्रो भवतीति। अत्र सर्वपृष्ठानुवादः विधिर्वेति संशये प्रथमपक्षमाह। विश्वजिदिति । विश्वजिति सर्वपृष्ठे उदाहृतवाक्ये ज्योतिष्टोमिकान्येव पृष्ठानि प्रतिपाद्यन्ते। कुतः, तत्पूर्वकत्वात् तद्विकृतित्वात् । प्रकृतित एव प्राप्तौ इदमनुवादकं भवतीति भावः । ननु ज्योतिष्टोमे न बहूनि पृष्ठानि सन्ति किं तु माध्यन्दिनसवने एकमेव पृष्ठं, कथं सर्वपृष्ठशब्देन अनुवादः तत्राह । अस्ति चेति । ज्योतिष्टोमे माहेन्द्रादिचतुर्षु स्तोत्रेषु पृष्ठशब्दः पृष्ठशब्देन व्यवहारः, सप्तदश पृष्ठानीति, अतो ऽनुवादः ॥ ६ ॥

## षडहाद्वा तत्र चोदनाः ॥ ७ ॥

सिद्धान्तमाह । षडहादिति । षडहधर्मातिदेशः तत्र षण्णां पृष्ठस्तोत्राणां रथन्तरबृहद्वैरूपवैराजरैवतशाक्वराणां चोदनाः विधयो यतः सन्ति अतः ॥ ७ ॥

## लिङ्गदर्शनाच्च ॥ ८ ॥

लिङ्गेति । वैरूपं होतुः वैराजं मैत्रावरुणस्येत्यादिशाक्वरान्तानां कर्तृविशेषसंबन्धो लिङ्गं षडहधर्मत्वे ॥ ८ ॥

## उत्पन्नाधिकारो ज्योतिष्टोमः ॥ ९ ॥

यच्च ज्योतिष्टोमे ऽपि बहूनि पृष्ठानि सन्तीत्युक्तम् । तद्दूषयति । उत्पन्नेति। बृहत्पृष्ठं भवतीत्युत्पन्नपृष्ठस्तोत्राधिकारिकः ज्योतिष्टोमः, तत्र माहेन्द्रस्तोत्रादिषु पृष्ठशब्दः छत्रिन्यायेनेति भावः ॥ ९ ॥

## द्वयोरिति चेत् ॥ १० ॥

ज्योतिष्टोमे बृहद्रथन्तरयोर्विकल्पेन सत्त्वादुभयोः समुच्चयार्थमिदमित्याशङ्कते । द्वयोरिति । समुच्चय इति सूत्रे योज्यम् ॥ १० ॥

न व्यर्थत्वात्सर्वशब्दस्य ॥ ११ ॥

दूषयति । नेति । सर्वशब्दो बहुषु प्रयुज्यते न द्वयोरिति वैयर्थ्यमिति भावः ॥ ११ ॥

अवभृथनाम्ना सौमिकधर्मातिदेशः । अधि० ४ ।

तथा ऽवभृथः सोमात् ॥ १२ ॥

चातुर्मास्ये तुषैश्च निष्कासेन चावभृथमवयन्तीति श्रुतम् । दर्शपूर्णमासात्प्राप्ते प्राच्यां दिशीति दिगुत्सेके तुषनिष्कासौ विधीयेते उतावभृथशब्दः सौमिकावभृथधर्मप्रापक इति संशये पूर्वाधिकरणसिद्धान्तातिदेशमाह । तथेति । तथा षडहातिदेशवत् । सोमात् सोमावभृथाद्धर्मप्राप्त्यर्थं वाक्यम् ॥ १२ ॥

प्रकृतेरिति चेत् ॥ १३ ॥

पूर्वपक्षमाह । प्रकृतेरिति । प्रकृतेः दर्शपूर्णमासयोः प्राप्तदिगुत्सेकस्य गुणत्वेन विधिः तुषनिष्कासयोः । दिगुत्सेके अवभृथशब्दप्रवृत्तिः कथमिति चेत् । एष वै दर्शपूर्णमासयोरवभृथ इत्यर्थवादे व्यवहारदर्शनात् ॥ १३ ॥

न भक्तित्वात् ॥ १४ ॥

दूषयति । नेति । न पूर्वपक्षः । अर्थवादे दिगुत्सेके ऽवभृथशब्दस्य भक्तित्वात् स्तावकत्वात् । अतः सौमिकावभृथधर्मातिदेशः ॥ १४ ॥

लिङ्गदर्शनाच्च ॥ १५ ॥

लिङ्गदर्शनात् । नायुर्दां जुहोति न साम गायतीति सौमिकावभृथधर्माणां केषां चिन्निषेधदर्शनात् । प्राप्तिं विना निषेधासंभवादिति भावः ॥ १५ ॥

वारुणप्राघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वम् । अधि० ५ ।

द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥

तत्रैव सौमिकावभृथधर्मातिदेशमङ्गीकृत्य यागसाधनत्वेन पुरोडाशप्राप्तिर्नामातिदेशेन वचनेन तुषविमोकौ प्राप्तौ । तयोर्मध्ये कतमो

वाह्य इति विचारे सिद्धान्तमाह । द्रव्येति । उक्तरीत्या द्रव्ययोरादेशे प्राप्तौ सत्यां तद्‌द्रव्यः तुषनिष्कासद्रव्यकः श्रुतिसंयोगात्प्रत्यक्षश्रुत्या विधानात् । अनादेशे प्रत्यक्षश्रुत्या अप्राप्तौ पुरोडाशः द्रव्यं सा प्रकृतिर्यस्य तत्त्वात् ॥ १६ ॥

वैष्णवशब्दादातिथ्यायां धर्मानतिदेशः । अधि० ६ ।

## गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ १७ ॥

आतिथ्यायां नवकपालो वैष्णवो भवतीति, तथा राजसूये वैष्णवस्त्रिकपाल इति । अत्र वैष्णव इति नामातिदेशार्थं गुणविधिर्वेति संशये धर्मातिदेशार्थमिति पूर्वपक्षे सिद्धान्तमाह । गुणेति । न गृह्णीयादातिथ्या धर्मान् । किं तु गुणविधिः । देवतारूपगुणविधिः देवताबोधकतद्धितस्योभयत्र समत्वात् तुल्यत्वात् ॥ १७ ॥

निर्मन्थ्यादिशब्दैर्धर्मानतिदेशः । अधि० ७ ।

## निर्मन्थ्यादिषु चैवम् ॥ १८ ॥

अग्नीषोमीयपशौ निर्मन्थ्यो ऽग्निराम्नातः । अग्नौ निर्मन्थ्येनेष्टकाः पचन्तीति । एवं दर्शपूर्णमासयोः बर्हिः संस्कृतमाम्नातम् । तथा पशौ बर्हिषा यूपावटं स्तृणातीति । अत्र तथा, केवलमथितो ऽग्निः केवलं कुशाश्च गुणत्वेन विधीयन्ते न नाम्ना धर्मातिदेशः उभयोरविशेषात् सिद्धान्तः ॥ १८ ॥

द्वयोः प्रणयन्तीत्यनेन सौमिकधर्मानतिदेशः । अधि० ८ ।

## प्रणयनं तु सौमिकमवाच्यं हीतरत् ॥ १९ ॥

चातुर्मास्ये श्रूयते, द्वयोः प्रणयन्ति तस्माद् द्वाभ्यां यन्तीति । प्रणयनं विहितं प्रणयनं सौमिकमङ्गकलापयुक्तं दार्शपूर्णमासिकप्रणयनम् अथर्ममनेन वाक्येन कतमं प्रणयनं विधीयतइति विचारे पूर्वपक्षमाह । प्रणयनमिति । अस्मिन्वाक्ये श्रूयमाणं प्रणयनं सौमिकम् । हि यतः इतरद् दार्शपूर्णमासिकं प्रणयनमवाच्यमविधेयम् । चोदकशास्त्रेणैव प्राप्तत्वात् । सौमिकत्वे तद्धर्मप्राप्त्यर्थं विधानं सार्थकमिति भावः ॥ १९ ॥

## उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥

साधकान्तरमाह । उत्तरवेदीति । उत्तरवेदिप्रतिषेधः । न वैश्वदेव-उत्तरवेदिमुपकिरति न शुनासीरीयइति उत्तरवेदिप्रतिषेधश्च तद्वत्सौमिकप्रणयनपरत्वनिर्णायकः । दार्शपूर्णमासिकप्रणयनपरत्वे तत्रोत्तरवेद्यभावेन निषेधासंभव इति भावः ॥ २० ॥

## प्राकृतं वा ऽनामत्वात् ॥ २१ ॥

सिद्धान्तमाह । प्राकृतमिति । प्राकृतं दार्शपूर्णमासिकं प्रणयनम् । अनामत्वात् प्रणयनमिति सौमिकप्रणयननामत्वाभावेन नामातिदेशासंभवादिति भावः ॥ २१ ॥

## परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २२ ॥

वाक्यवैयर्थ्यं त्रिभिः पक्षैः परिहरति । परीति । श्रवणं वाक्यश्रवणम् । गुणार्थं गुणस्य प्रागुद्देशनयनरूपगुणार्थं परिसंख्यार्थं वैश्वदेवशुनासीरीययोः प्रणयननिवृत्त्यर्थं वा अर्थवादो वा तस्माद् द्वाभ्यां यन्तीति स्तुत्यर्थं प्रणयनानुवाद इति भावः ॥ २२ ॥

द्वयोः प्रणयन्तीत्यनेन मध्यमयोर्द्वयोः प्रणयनम् । अधि० ६ ।

## प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ २३ ॥

इदं प्रणयनं चतुर्षु पर्वसु मध्ये कुत्र कार्यमिति संशये पूर्वपक्षमाह । प्रथमेति । प्रथमान्त्ययोः प्रणयनं तयोरुत्तरवेदिप्रतिषेधात् । प्रतिषेधवचनं दर्शितं पूर्वम् । उत्तरवेद्यामग्निं निदधातीति श्रवणात् । यत्रेदं प्रणयनं तत्रोत्तरवेदिप्राप्तौ तन्निषेधः सार्थक इति भावः ॥ २३ ॥

## मध्यमयोर्वा गत्यर्थवादात् ॥ २४ ॥

सिद्धान्तमाह । मध्येति । मध्यमयोः प्रणयनम् । ऊरू वा एते यज्ञस्य यद्वरुणप्रघासः साकमेधश्चेति गतिसाधनोरुप्रतिपादकार्थवादात् , ऊरुत्वेन तयोः संस्तवात् । तस्माद् द्वाभ्यां यन्तीत्यर्थवादाच्च मध्यमयोरिति भावः ॥ २४ ॥

## औत्तरवेदिको ऽनारभ्यवादप्रतिषेधः ॥ २५ ॥

ननु पूर्वोक्तनिषेधस्य का गतिरत आह । औत्तरेति । उत्तरवेद्यामग्निं निदधातीति एकमपि पश्वनारभ्य श्रुतम् । अतः पशुचतुष्टये ऽविशेषेणोत्तरवेदिप्राप्तौ औत्तरवेदिकप्रतिषेधः अनारभ्य पठितवचनप्राप्तोत्तरवेदिप्रतिषेधार्थं इति भावः* ॥ २५ ॥

स्वरसामादिशब्देन धर्मातिदेशः । अधि॰ १० ।

## स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ २६ ॥

गवामयने अभितो दिवाकीर्त्यं त्रयः स्वरसामान इति । अस्यार्थः । दिवाकीर्त्यनामकं मुख्यमहः, तस्याभितः पार्श्वद्वये त्रयः त्रयः स्वरसामनामकानि अहानि इत्यर्थः । तेषु स्वरसामसु सप्तदशः स्तोमो भवतीति सप्तदशस्तोमः प्रत्यक्षवचनेन विहितः । एवं षडहनामके क्रत्वन्तरे पृष्ठ्यः षडहो द्वौ स्वरसामानाविति श्रुतम् । अत्र स्वरसामशब्दो गवामयनस्थस्वरसामशब्दश्च स्वातन्त्र्येण स्वरसाममात्रप्रापकौ न तदतिरिक्तसप्तदशस्तोमप्रापकः पूर्वोक्तवैष्णवशब्दवदिति पूर्वपक्षे सिद्धान्तमाह । स्वेरति । स्वरसाम स्वरसामशब्दः क्रत्वन्तरे श्रूयमाणः धर्माणां गवामयनसंबन्धिस्वरसामधर्माणां सप्तदशस्तोमानां ग्राहकः । लिङ्गदर्शनात् । तथा हि । षडहे षट्सु अहःसु क्रमेण त्रिवृत्पञ्चदशः सप्तदश एकविंशः त्रिणवः त्रयस्त्रिंशश्चेति चोदकेन प्राप्ताः । एवं सति षष्ठे ऽहनि त्रयस्त्रिंशस्थाने सप्तदशस्तोमो विहितः, यत्तृतीयं सप्तदशमहः तत्त्रयस्त्रिंशस्थानमभिपर्यावर्ततइति । तत उत्तरं तस्यैवार्थवादः श्रुतः, त्रयाणां सप्तदशानाम-

* वार्त्तिककारस्तु प्रणयनं तु सौमिकमित्यारभ्य औत्तरवेदिको ऽनारभ्यवादप्रतिषेध इत्यन्तानां सप्तानां सूत्राणामेकाधिकरणपरत्वमुक्तवान् । तत्र त्रेधा संशयः । द्वयोः प्रणयन्तीति किं प्राकृतं प्रणयनमुत सौमिकमुतापूर्वमिति । तत्र प्राकृतस्यातिदेशतः प्राप्तत्वेन वचनवैयर्थ्यभिया सौमिकं प्रणयनं विधीयतइति पूर्वपक्षः । सौमिकप्रणयननामत्वाभावेन नामातिदेशासंभवादपूर्वमिदं प्रणयनं विधीयते । प्रणयनमात्रश्रवणे ऽपि शाखान्तरे द्वावग्नी प्रणयत इति वचनात्तदेकार्थत्वादनेन वचनेनापि प्राकृतप्रणयनोत्तरकालमाहवनीयादग्न्यन्तरप्रणयनं पशुबन्धवद्विधीयते । तच्च गत्यर्थवादवशान्मध्यमयोर्भवति । परिसंख्यार्थमित्यादिसूत्रत्रयं त्रयाणामपि पक्षाणां यथाक्रमं प्रयोजनकथनार्थम् । उत्तरवेदिप्रतिषेधस्तु उपात्र वपन्तीत्यस्य सामान्यविषयस्य पर्युदासार्थं इति शा॰ दी॰ विस्तरः ।

नवानतायादृति । अनवानतायै अव्यवधानार्थम् । तत्राव्यवधानं षष्ठस्याह्नः उक्तवचनेन सप्तदशस्तोमत्वे तदुत्तरं स्वरसामद्वयस्य स्वरसामशब्दवाच्यसप्तदशस्तोमत्वे सप्तदशस्तोमानां षष्ठसप्तमाष्टमानामह्नां सप्तदशस्तोमत्वात्तत्सांतत्यमुपपन्नम् । केवलं साममात्रप्रापकत्वे सप्तदशस्तोमस्य स्वरसाम्नोरभावात् सांतत्यं नोपपद्यतइति भावः । तथा वैश्वदेवपर्वणि द्यावापृथिव्यमेककपालं तद्धर्माश्च प्रतिपादिताः । तथा आग्रयणे द्यावापृथिव्यमेककपालं विहितम् । तत्रापि आग्रयणे यत्सर्वहुतं करोतीत्यर्थवादेन निःशेषपुरोडाशहवनस्तुत्या वैश्वदेवपर्वसंबन्धिन एककपालस्य धर्मप्राप्तिः । तथा वैश्वदेवपर्वणि वैश्वदेव्यामिक्षा विहिता । तस्या धर्माश्च विहिताः । अन्यत्र मैत्रावरुण्यामिक्षेति विधाय न वाजिनेन प्रचरतीति वाजिननिषेधानुपपत्त्या वैश्वदेवधर्मप्रापक आमिक्षाशब्दो ज्ञेयः* ॥ २६ ॥

वासआदिशब्दानामाकृतिनिमित्तत्वम् । अधि० ११ ।

## कर्मजे कर्म यूपवत् ॥ २७ ॥

वासो ददातीति श्रुतम् । अत्र वासःशब्दः क्रियानिमित्तः जातिनिमित्तो वेति संशये पूर्वपक्षमाह । कर्मजइति । कर्मजे तुरीवेमादिसंयोगादिरूपक्रियाजन्ये द्रव्ये तत्तच्छब्दप्रवृत्तिनिमित्तं पूर्वोक्तं कर्म, यथा यूप शब्दप्रवृत्तिनिमित्तं तक्षणादिक्रिया । तथा च तुरीवेमादिक्रियया पटमुत्पाद्य दातव्यमिति भावः ॥ २७ ॥

## रूपं वा ऽशेषभूतत्वात् ॥ २८ ॥

सिद्धान्तमाह । रूपमिति । रूपं जातिरेव निमित्तं क्रियायाः अशेषभूतत्वात् । अङ्गत्वेनाविहितत्वात् । यूपं तक्षतीति क्रियाकलापविधानाद्वैषम्यम् ॥ २८ ॥

गर्गत्रिरात्रे लौकिकाग्नेरुपनिधानम् । अधि० १२ ।

## विशये ऽलौकिकः स्यात्सर्वार्थत्वात् ॥ २९ ॥

गर्गत्रिरात्रे स्तोत्राङ्गतया अग्निमुपनिधाय स्तुवीतेति श्रुतम् ।

* इत उत्तरं, चोदनासामान्याद्वा, इति सूत्रमधिकं शाबरभाष्ये व्याख्यातं दृश्यते ।

अयमग्निर्वैदिको लौकिको वेति विशये संशये ऽलौकिकः वैदिकः आधानसंस्कृतः स्यात् तस्य वैदिकसर्वकर्मार्थत्वात् ॥ २९ ॥

## न वैदिकमर्थनिर्देशात् ॥ ३० ॥

सिद्धान्तमाह । नेति । न वैदिकम् । तस्य वैदिकाग्नेः यदाहवनीये जुहोतीत्यर्थस्य होमरूपस्य शास्त्रेणैव निर्देशादीदृशं न कार्यं वैदिकाग्नेरिति भावः ॥ ३० ॥

## तथोत्पत्तिरितरेषां समत्वात् ॥ ३१ ॥

नन्वाग्नीध्रादिधिष्ण्येषु विहृता अग्नय उक्तकार्यार्थे इत्यन्तामत्राह । तथेति । इतरेषां धिष्ण्याग्नीनामुत्पत्तिरपि न तथा न सर्वार्था । समत्वाद्धिष्ण्यान्व्याघारयतीति कार्यनिर्देशस्य समत्वात् ॥ ३१ ॥

उपशये यूपो भवतीत्यादौ यूपशब्दस्य संस्काराप्रयोजकत्वम् । अधि॰ १३ ।

## संस्कृतं ऽस्यात्तच्छब्दत्वात् ॥ ३२ ॥

एकादशिन्यां श्रूयते, उपशयो यूपो भवतीति । उपशये यूपसंस्काराः सन्ति न वेति संशये पूर्वपक्षमाह । संस्कृतमिति । संस्कृतमुपशयद्रव्यं स्यात् । तच्छब्दत्वात् । सः यूप इति शब्दो यस्य तत्त्वात् । यूपशब्देन यूपधर्मातिदेश इति भावः ॥ ३२ ॥

## भक्त्या वा ऽयज्ञशेषत्वाद्गुणानामभिधानात् ॥ ३३ ॥

उपशये न यावन्तः संस्काराः अयज्ञशेषत्वात् । यज्ञानङ्गत्वात्तत्र पशुनियोजनरूपद्वाराभावादिति भावः । तर्हि यूपशब्दनिर्देशः कथमिति चेद्भक्त्या गौण्या वृत्त्या, आदित्यो यूप इतिवत् । ननु आदित्यवृत्तिचाकचक्यादिगुणो यूपे इति गौणी वृत्तिः संभवति, इह कथं भक्त्येत्यत आह । गुणानां तूष्णींछेदनादिरूपाणां केषां चिदभिधानं यत्र तत्त्वात् ॥ ३३ ॥

पृष्ठैरुपतिष्ठतइत्यादौ पृष्ठशब्दस्य ऋग्द्रव्यवाचित्वम् । अधि॰ १४ ।

## कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ॥ ३४ ॥

अग्नौ श्रूयते, पृष्ठैरुपतिष्ठतइति । अत्र पृष्ठशब्दः कर्मवाचकः, सप्तदशानि पृष्ठानीत्यत्र पृष्ठैः स्तुवतइत्यत्र सिद्धः, तद्धर्मातिदेशार्थं प्रयुक्त उत ऋद्गाचप्राप्त्यर्थमिति संशये पूर्वपक्षमाह । कर्मण इति । पृष्ठै-

रूपदधातीत्यत्र पृष्ठशब्दः स्तोत्ररूपकर्मणः वाचकः पृष्ठशब्दः स्यात् । तथाभूतेन तादृशशब्देन उपदेशात् । निर्देशात् । हिङ्कारादिधर्मैः पृथिवीं मनसा ध्यायेदित्यादिभिश्च धर्मैः सहितं पृष्ठसदृशं कर्म कर्तव्यमिति भावः ॥ ३४ ॥

## अभिधानोपदेशाद्वा विप्रतिषेधाद् द्रव्येषु पृष्ठशब्दः स्यात् ॥ ३५ ॥

सिद्धान्तमाह । अभिधानेति । द्रव्येषु रूपद्रव्येषु पृष्ठशब्दः स्यात् । आत्मनेपदेन अभिधानोपदेशात् । तथा हि । उपान्मन्त्रकरणे इति पाणिनीयसूत्रम् । अस्यार्थः । मन्त्रकरणे वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं स्यात् । मन्त्रकरणं यस्याः क्रियायाः तादृशे तिष्ठत्यर्थे । तादृशो धात्वर्थः अभिधानं स्वाभिमुखे पुरुषे स्वाभिप्रायज्ञापनं, तादृशक्रियायाः शब्दसाध्यत्वान्मन्त्रस्य शब्दरूपत्वान्मन्त्रकरणत्वम् । ईदृशाभिधानोपदेशाद् विप्रतिषेधाद् आत्मनेपदविरोधादिति फलितो ऽर्थः ॥ ३५ ॥

इति श्रीमज्जैमिनिसूत्रवृत्तौ सप्तमाध्यायस्य तृतीयः पादः ॥ ३ ॥

सौर्ये चरौ इतिकर्तव्यतावत्त्वम् । अधि० १ ।

## इतिकर्त्तव्यता ऽविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥

गतो नामातिदेशः । इदानीमानुमानिको ऽतिदेशश्चिन्त्यते । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र किं केनेत्याकाङ्क्षापूरकशब्दो स्तः कथमित्याकाङ्क्षापूरकशब्दो नास्ति । तथा ऽप्यनुमानेनोपसिद्धिः तस्य भवति । तथा हि । सौर्ययागरूपं करणं व्यापारापेक्षं करणत्वात्कपालवदिति । इममेवार्थं प्रथमसूत्रेणाह । इतीति । इतिकर्तव्यतायाः श्रूयमाणवाक्ये अविधे यजतेः सौर्यादियागस्य पूर्ववत्त्वमन्यत्र कॢप्ता ये धर्मास्तद्वत्त्वं व्यापारं विना फलासंभवादिति भावः ॥ १ ॥

## स लौकिकः स्याद् दृष्टप्रवृत्तित्वात् ॥ २ ॥

एवं सौर्ययागस्येतिकर्तव्यतासिद्धौ स धर्मः लौकिकः स्यात्पार्वणस्थालीपाके दृष्टो यः स स्यात् । दृष्टप्रवृत्तित्वात् । पार्वणधर्माणां सर्पबल्यादिसंस्थासु दृष्टा प्रवृत्तिः अतिदेशो येषां तत्त्वात् ॥ २ ॥

## वचनात्तु ततो ऽन्यत्वम् ॥ ३ ॥

इदमपि न सर्वत्रेत्याह । वचनेति । गृहमेधीयादौ वचनात् । आज्यभागौ यजतीत्यादिवचनात्ततः पार्वणधर्मार्थत्वम् ॥ ३ ॥

## लिङ्गेन वा नियम्येत तद्गुणत्वात् ॥ ४ ॥

दर्शपूर्णमासधर्मातिदेश इति सिद्धान्तमाह । लिङ्गेति । सौर्यचरौ दर्शपूर्णमाससंबन्धिप्रयाजानुवादेन प्रयाजे प्रयाजे कृष्णलं जुहोतीति लिङ्गेन नियम्येत लिङ्गस्य प्रयाजादेः तद्गुणत्वात् । वैदिकापूर्वसाधनत्वात् । सौर्ययागापूर्वं प्रयाजादिजन्यं वैदिकापूर्वत्वाद्दर्शपूर्णमासापूर्ववद् , इत्यनुमानेन नियमसंभवादिति भावः ॥ ४ ॥

## अपि वा ऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥

पूर्वपक्षं दूषयति । अपि वेति । नैतेन लिङ्गेन नियन्तुं शक्यम् । अन्यायपूर्वत्वात् । सन्न्यायपूर्वत्वाभावात् । हेतोरदुष्टत्वाभावात् । हेतौ दोषमेवाह । यत्रेति । यत्र प्रयाजाः क्लृप्ताः तत्रैव कृष्णलविधिरिति वक्तुं शक्यत्वात् । तथा महापितृयज्ञे, नार्षेयं वृणीते न होतारमिति, पितृयज्ञे कदा ऽपि आर्षेयप्राप्त्यभावेन नित्यानुवादरूपत्वमित्यप्याह । नित्यानुवादवचनानि स्युः । इत्थं च सौर्ययागः दर्शपूर्णमासधर्मकः दर्शपूर्णमासाङ्गभूतप्रयाजाङ्गत्वादित्यनुमानं स्वरूपासिद्धमिति भावः ॥ ५ ॥

## मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ६ ॥

पुनः प्रथमपक्षमुत्थापयति । मिथ इति । मिथः परस्परं प्रतिषेधात् । विरोधात् । अयं भावः । पार्वणधर्माः पार्वणेन प्रयाजादयश्च दर्शपूर्णमासाभ्यां संबद्धौ । सौर्ययागे धर्माकाङ्क्षायामेकेन धर्मेण चरितार्थमपरधर्मप्राप्तौ निराकाङ्क्षं प्रतिषिद्धमिति । एवं सति यथार्थकल्पना ये धर्माः सर्पबल्यादौ उपक्रान्तत्वेनान्यार्थाः तथा कल्पना स्यात् । स्मार्तधर्माणामेव कल्पनमिति भावः ॥ ६ ॥

भागित्वात्तु नियम्येत गुणानामभिधानत्वात्संबन्धादभिधानवद्यथा धेनुः किशोरेण ॥ ७ ॥

न स्मार्तधर्माणामतिदेशः, वैदिक्येवेति नियम्यते। गुणानां प्रयाजादीनां भागित्वाद्वैदिकापूर्वसंबन्धभाक्त्वात्। अभिधानवद् अग्निहोत्रनामवत्। गुणानां प्रयाजादीनामभिधानत्वात्सौर्यचरौ प्रयाजे कृष्णलं जुहोतीति प्रयाजादीनामभिधानं यत्र तत्त्वात्। यथा नाम्ना ऽतिदेशो नियम्यते तथा गुणाभिधानेनापि दर्शपूर्णमासगुणा नियम्येरन्निति भावः। यत्तु पार्वणधर्माणामन्यत्रातिदेशप्रवृत्तिर्दृष्टेत्युक्तं, तत्परिहरति। यथा धेनुः धेनुशब्दः गवि दृष्टप्रवृत्तिरपि प्रमाणान्तरसहकारेण किशोरेण अश्वधेन्वा ऽपि संबध्यते तथोक्तलिङ्गेन अदृष्टातिदेशानामपि प्रयाजादीनां संबन्धः विकृतौ कल्प्यतइति भावः ॥ ७ ॥

उत्पत्तीनां समत्वाद्यथाधिकारं भावः स्यात् ॥ ८ ॥

प्रयाजस्य सौर्ययागे श्रुतत्वादङ्गत्वमास्तां शेषाणामनूयाजादीनां सौर्ययागे प्राप्तौ न किंचिन्मानमिति शङ्कते। उत्पत्तीनामिति। प्रयाजानूयाजादीनामुत्पत्तीनां समत्वाद्यथाधिकारं यत्र यत्र ये ये धर्माः श्रुताः तेषां भावः सत्त्वं स्याद् न त्वन्येषाम्। अयं भावः। प्रयाजाः प्रधानम् इतराणि तदङ्गानि यदि स्युः, तर्हि प्रयाजप्रवृत्तौ प्रधानानुयायीन्यङ्गान्यपि स्युः, नत्वेवं, सर्वेषां समत्वादिति प्रयाजातिरिक्तप्रापकमानाभावः। पार्वणधर्माणां भूयःसु स्थलेषु अङ्गत्वेन संबन्धो दृष्टः। अनूयाजादीनां सकृदेव दर्शपूर्णमासे दृष्टम्। अतः स्मार्तानां यावतां श्रुतस्य प्रयाजस्य चाङ्गत्वं सौर्ययागइति ॥ ८ ॥

उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥

ननु अनितिकर्तव्यताकप्रधानयागासंभवात् सेतिकर्तव्यताकं प्रधानं प्रधानविधिरेव विधत्ते। वेदेन विहितत्वाद्वैदिक्येवेतिकर्तव्यता गृह्यतामित्यत्रोत्तरमाह। उत्पत्तीति। एकस्मिन्वाक्ये प्रधानोत्पत्तिः शेषाणामङ्गानां वचनं विधिश्च विप्रतिषिद्धं विरुद्धमसंभवीति यावत्। यदि

निर्वपेदित्यनेन अङ्गान्यपि विधीयेरन् तुल्यत्वेन तेषामपि फलसंबन्धः स्यात् । अङ्गत्वमेव भज्येतेति भावः ॥ ९ ॥

## विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथा हि लिङ्गदर्शनम् ॥ १० ॥

सिद्धान्तमाह । विध्यन्तो वेति । प्रकृतिवद् दर्शपूर्णमासवद् इतिशब्दयोजना चोदनायां सौर्यविधौ प्रवर्तेत संबध्येत । तेन विध्यन्तः निखिलपौरोडाशिकधर्मः तत्र प्रवर्तते । अयं भावः । सर्वा ऽपि भावना अंशत्रयमाकाङ्क्षति किं केन कथमिति । तत्र यागः करणत्वेन ब्रह्मवर्चसं भाव्यत्वेनेत्याकाङ्क्षाद्वयनिवृत्तौ कथंभावाकाङ्क्षायां पार्वणधर्मस्य न काष्ठादीतिकर्तव्यतावत्प्रत्यक्षेण प्राप्तिः । न भूयोदर्शनगम्यव्याप्तिज्ञानेन । गणहोमादौ व्यभिचारात् । नाप्युपमानेन । सादृश्याभावात् । दर्शपूर्णमासधर्मस्य तु उक्तप्रयाजादिलिङ्गेन उपस्थितौ तद्बोधकं पदं कल्पयित्वा प्रकृतिवदिति तेनैवाकाङ्क्षा पूरणीयेति भावः । हि यतः तथा लिङ्गदर्शनं दर्शपूर्णमासधर्मप्रापकप्रयाजादिलिङ्गदर्शनम् ॥ १० ॥

## लिङ्गस्य हेतुत्वादलिङ्गे लौकिकं स्यात् ॥ ११ ॥

नन्वस्तु सौर्ययागे प्रयाजादिलिङ्गदर्शनेन तद्वाक्ये प्रकृतिवद् इति योजनम् । प्रजासाधनैन्द्राग्नेष्ट्यां प्रयाजादिलिङ्गाभावात् पार्वणधर्मा इत्याशङ्कते । लिङ्गेति । लिङ्गस्य प्रयाजादिवाचकशब्दश्रवणरूपलिङ्गस्य हेतुत्वात् । दर्शपूर्णमासधर्मप्राप्तिहेतुत्वात् । अलिङ्गे तादृशलिङ्गशून्ये लौकिकं स्यात् ॥ ११ ॥

## लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन ॥ १२ ॥

आशङ्कां निराकुरुते । लिङ्गस्येति । लिङ्गस्य प्रयाजलिङ्गस्य पूर्ववत्त्वात् । सौर्ययागादौ प्रयाजादिधर्मप्राप्तौ स्वभिन्नकारणान्तरसत्त्वात् । तदेव दर्शयति । चोदनाशब्दसामान्यात् कर्मः । एकविधेर्लिङ्गवतो ऽलिङ्गवतो वा तुल्यत्वात् । अयं भावः । न केवलं लिङ्गं धर्मप्रापकम् । किं तु विधि-

प्रत्ययश्रवणे कथं कुर्यादित्याकाङ्क्षापूरकशब्देनैव दर्शपूर्णमासवदिति पार्वणवदिति वा विधिवाक्य योज्यमिति। संशये दर्शपूर्णमासवदित्येवेति लिङ्गं नियामकमात्रं तादृशविधेस्तुल्यत्वात्। ननु नियमोऽपि यत्र लिङ्गं तत्रैव भविष्यति अन्यत्र कथं तत्राह। एकेनापि लिङ्गदर्शनेन सर्वत्र निश्चयेत जानीयात्। यदा स्थालीपुलाकेन तुल्यपाकानां स्थाल्यां पुलाकानामेकत्र दृष्टे सर्वदृष्टिर्भवति तथा ॥ १२ ॥

गवामयने ऐकाहिकेतिकर्तव्यतानुष्ठानम्। अधि० २।

## द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत् ॥ १३ ॥

इदानीमानुमानिकनामातिदेशयोः प्रबलदुर्बलभावश्चिन्त्यते। गवामयने ज्योतिर्गौरायुरिति त्र्यहानि। एवं ज्योतिर्गौरायुरिति स्वतन्त्रा एकाहविशेषाः। गवामयनसंबन्धिज्योतिरादौ द्वादशाहाच्चतद्विधा आनुमानिकातिदेशेन ज्योतिरादिनाम्ना सहस्रदक्षिणा च प्राप्ता। तत्र कतमो विधेय इति संशये पूर्वपक्षमाह। द्वादशेति। अहर्गणे उक्तस्थले द्वादशाहिकं द्वादशाहधर्माः तत्प्रकृतित्वाद् द्वादशाहप्रकृतित्वात्। ऐकाहिकमेकाहसंबन्धि समाख्यानं ज्योतिर्गौरायुरिति। अधिकागमात् ज्योतिष्टोमादधिकस्तोत्रशस्त्राद्यागमात् तावन्मात्रेण चरितार्थं, यथा स्वतन्त्रैकाहः तथा ॥ १३ ॥

## लिङ्गाच्च ॥ १४ ॥

लिङ्गेति। लोमावद्यन्तीत्यर्थवादेन द्वादशोपसत्त्वं द्वादशाहधर्मप्रापकं लिङ्गम् ॥ १४ ॥

## न वा प्रत्यक्षत्वात्क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १५ ॥

सिद्धान्तमाह। न वेति। न द्वादशाहधर्मप्राप्तिः किं तु क्रत्वभिधानात् क्रतुनाम्नः धर्मप्राप्तिः द्वादशाहातिदेशत्वेन नामधेयस्य प्रत्यक्षविधित्वेन प्रबलत्वादिति भावः। अधिकस्तोत्रशस्त्रप्रापकतया नाम

चरितार्थमित्युक्तं, तत्परिहरति । अधिकारानां स्तोत्रशस्त्रादीनामशब्दत्वं नाम्ना अविहितत्वं, तत्र वचनादधिकारागमो, न नामधेयेनेति भावः ॥ १५ ॥

लिङ्गं संघातधर्मः स्यादर्थापत्तेर्द्रव्यवत् ॥ १६ ॥

लिङ्गं साधकमुक्तं, तत् पूर्वपक्षिणा आपाततः परिहरति । लिङ्गमिति । यद् द्वादशोपसद्विधानं तत्संघातस्य द्वादशाहे ऽहःसमुदायधर्मः स्यात् । तस्य गवामयने अर्थेन कार्यवशेनापत्तेः प्राप्तेः । अयं भावः । द्वादशाहः फलमुद्दिश्य विहितः । गवामयनमपि फलमुद्दिश्य विहितं सद् द्वादशाहस्थानापन्नम् । तत्स्थानापन्नः तद्धर्मं लभतइति न्यायेनैव द्वादशोपसल्लाभः न चोदकशास्त्रेणेति तत्र लिङ्गमिति । द्रव्यवद्, यथा व्रीह्यभावे प्रतिनिधिभूतनीवारेषु अवहननादयः तथा ॥ १६ ॥

न वा ऽर्थधर्मः स्यात्संघातस्य गुणत्वात् ॥ १७ ॥

इमं पक्षं दूषयति । न वेति । न वा पूर्ववदुक्तलिङ्गपरिहारे इदं समाधानम् । कुतः, द्वादशोपसत्तामर्थस्य प्रधानस्य धर्मत्वादङ्गत्वात् । संघातस्य समुदायत्वस्य अहर्गुणत्वात् । द्वादशत्वविशिष्टस्याह्नो ऽङ्गं द्वादशोपसदः, विशिष्टमुद्दिश्य विधीयमानं न विशेषणाङ्गम् । राजपुरुषमानयेत्युक्ते न राजानमानयति । अतः लिङ्गं संघातधर्मः स्यादित्यसंगतं पूर्वोक्तमिति भावः ॥ १७ ॥

अर्थापत्तेर्द्रव्येषु धर्मलाभः स्यात् ॥ १८ ॥

द्रव्येषु प्रतिनिधित्वेन प्राप्तनीवारादिषु अर्थे व्रीहिकार्ये पुरोडाशनिर्माणे आपत्तेः व्रीहिधर्मलाभः स्यात् । इह तु संघातकारणं नोपसद इत्युक्तं प्राक् । अतो वैषम्यमिति भावः ॥ १८ ॥

प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥

भवत्वेवं, तथा ऽपि गवामयने चोदकशास्त्रेण न प्राप्तिरित्याह । प्रवृत्त्येति । प्रवृत्त्या मुख्यप्रवृत्त्या गवामयने नियतस्य लिङ्गदर्शनं भवति । अयं भावः । गवामयने द्वादशाहिकप्रथममहः प्रायणीयमहः तस्य धर्मा द्वादशोपसदः । षडुपसदो जघन्यानामह्नामङ्गं ज्योतिर्गौरायुर्नामकानाम्

उभयोर्गवामयने सन्निपाते प्रथमातिक्रमे मानाभावाद् द्वादशोपसदो नियता न चोदकशास्त्रेणेति, न चोदकप्राप्तौ लिङ्गमिति ॥ १९ ॥

## विहारदर्शनं च शिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात् ॥ २० ॥

विहारदर्शनमिति । विहारस्य एकादशपशुप्रचारस्य द्वादशाङ्गकस्य गवामयने दर्शनं तदपि तत्रैव शिष्टस्य तत्रैव विहितस्य दर्शनं न त्वतिदेशशास्त्रेण दर्शनम् । अनारभ्यवादानामप्रकृत्य पठितानां प्रकृत्यर्थत्वात् प्रकृतिगामित्वात् । अयं भावः । आग्नेयमेव प्रथमे ऽहन्यालभेरन् सारस्वतीं मेषीं द्वितीये सौम्यं बभ्रुं तृतीये वारुणमन्ततो ऽथ पुनः पर्यावर्त्याग्नेयमेव प्रथमे ऽहन्यालभेरन् सारस्वतीं मेषीं द्वितीये सौम्यं बभ्रुं तृतीये वारुणमन्तत इति। इदमनारभ्याधीतं सर्वप्रकृतित्वाज् ज्योतिष्टोमं प्रवेष्टुं गतं तत्र द्वितीयतृतीयाद्यह्नामभावात् ततः परावृत्य अपरां प्रकृतिं द्वादशाहमगमत् । तत्रापि विधिवाक्यश्रुतपर्यावर्तानां ज्योतिर्गौरायुरिति अहःसु प्रसिद्धानामभावाद् गवामयनमगमदिति गवामयनार्थं उक्तविधिर्नातिदेशशास्त्रविषय इति ॥ २० ॥

इति श्रीजैमिनिसूत्रवृत्तौ सप्तमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्च सप्तमाध्यायः ॥ ७ ॥



विशेषातिदेशप्रतिज्ञा । अधि० १ ।

## अथ विशेषलक्षणम् ॥ १ ॥

एतदध्यायप्रतिपाद्यार्थं प्रतिजानीते । अथेति । अथ सामान्यातिदेशनिरूपणानन्तरं विशेषस्य विशेषातिदेशस्य लक्षणं निरूपणं क्रियते ॥ १ ॥

विशेषकर्मणो धर्मातिदेशः । अधि० २ ।

## यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

अध्यायप्रतिपाद्यमर्थं संक्षेपेण प्रथमतो दर्शयति । यस्येति । यस्य विध्यन्तस्य लिङ्गं किं चिच्छब्दगतं अर्थगतं वा वैकृतकर्मचोदनायां तदनुवाक्ये वा दृश्यते तत्र स विध्यन्तः स्यात् । अर्थस्य तस्य लिङ्गस्य तेन विध्यन्तेन संयोगात् संबन्धात् । अभिधानवत् । अग्निहोत्रादिनामवत् । अयं भावः । सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यत्र कथंभावाकाङ्क्षाशान्त्यर्थं वाक्ये प्रत्यक्षशब्दाभावाद्विधिवाक्ये निर्वपतिलिङ्गमोषधिद्रव्यलिङ्गमेकदेवतालिङ्गं स्वसंबन्धिनमाग्नेयविध्यन्तं स्मारयति । तद्विध्यन्तस्मृतौ तद्वाचकशब्दस्मृतिर्भवति । ततः तमेव शब्दं वाक्ये योजयति, सौर्यं चरुमाग्नेयवन्निर्वपेदिति, आकाङ्क्षात्रयपूरकं वाक्यं संपन्नम् । एवं सोमादौ पश्वादौ च योज्यम् । अनेनैव निखिलाध्यायार्थसिद्धौ उत्तरप्रपञ्चः शिष्यबुद्धिवैशद्यार्थः ॥ २ ॥

सोमे ऐष्टिकधर्मानतिदेशः । अधि० ३ ।

## प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥ ३ ॥

सोमे इष्टिधर्माः सन्ति न वेति संशये पूर्वपक्षमाह । प्रवृत्तत्वादिति । सोमे इष्टेः इष्टिधर्माणां प्रवृत्तिः स्यात् । प्रवृत्तत्वात् सोमाङ्गभूतदीक्षणीयादिषु प्रवृत्तत्वात् ॥ ३ ॥

## लिङ्गदर्शनाच्च ॥ ४ ॥

लिङ्गेति । तस्यैकशतं प्रयाजानुयाजा इत्यैष्टिकधर्माः सोमे दृश्यन्ते अतोऽपि तथा ॥ ४ ॥

## कृत्स्नविधानाद्वाऽपूर्वत्वम् ॥ ५ ॥

सिद्धान्तमाह । कृत्स्नेति । कृत्स्नस्य संपूर्णस्य स्रुक्कलापस्य विधानाद् अपूर्वत्वं धर्मानपेक्षत्वम् ॥ ५ ॥

### स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥ ६ ॥

ननु सोमे यदीष्टिधर्माः न स्युः तर्हि घृतं वै देवा वज्रं कृत्वा सोममघ्नन् स्रुचौ बाहू तस्मात्स्रुचि सोमहविर्नासाद्यते न सोममाज्येनाभिघारयन्तीति निषेधो ऽनुपपन्नः प्राप्तिपूर्वकत्वान्निषेधस्य तत्राह । स्रुगिति । स्रुचा हविरधारणमाज्येनाभिघारणाभावस्च नित्यानुवादः ॥ ६ ॥

### विधिरिति चेत् ॥ ७ ॥

ऐष्टिकधर्मं सोमे ऽङ्गीकृत्य स्रुग्धारणाभिघारणयोः प्राप्तौ तन्निवृत्त्यर्थमेवेदं वचनं किं न स्यादित्याशङ्कते । विधिरिति । निषेधविधिः ॥ ७ ॥

### न वाक्यशेषत्वात् ॥ ८ ॥

विधिपक्षं निराकुरुते । नेति । अस्य वाक्यस्यार्थवादरूपत्वात् । अवधिषुर्वा एतत्सोमं यदभिषुण्वन्ति यदस्य स्रुचौ बाहू कुर्वन्ति यच्चाज्यमन्तिकमकार्षुः यदाह अंशुरंशुष्टे देव सोमाप्यायतामितिमन्त्रशेषार्थवादरूपत्वात् ॥ ८ ॥

### शङ्कते चानुपोषणात् ॥ ९ ॥

इष्टिधर्माभावे साधकान्तरमाह । शङ्कते इति । यदनुपोष्य प्रयायाद्दीवबद्धमेनममुष्मिँल्लोके निनीयेरन्नित्यनुपोषणं शङ्कते । इदमैष्टिकधर्मत्वे इष्टावुपोषणस्य नियतत्वेन अनुपोषणशङ्का ऽनुपपन्नेति भावः ॥ ९ ॥

### दर्शनमैष्टिकानां स्यात् ॥ १० ॥

एकशतं प्रयाजानुयाजा इत्यस्य गतिं चिन्तयति । दर्शनमिति । ऐष्टिकानां प्रयाजानुयाजदर्शनं तत्सोमाङ्गभूतदीक्षणीयाद्यवभृथान्तानां प्रयाजपरिगणनं स्यात् ॥ १० ॥

ऐन्द्राग्नादौ ऐष्टिकधर्मातिदेशः । अधि० ४ ।

### इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥

काम्येष्टयः नैमित्तिकाः अन्याश्चेष्टयः तासु दर्शपूर्णमासधर्मप्राप्तिः स्यात् । लिङ्गं प्रथमाधिकरणे दर्शितम् ॥ ११ ॥

अग्नीषोमीयपशौ दार्शिकधर्मातिदेशः । अधि॰ ५ ।

## पशौ च लिङ्गदर्शनात् ॥ १२ ॥

पशौ अग्नीषोमीयपशौ च दर्शपूर्णमासधर्माः लिङ्गानामेकादश-प्रयाजानूयाजानां दर्शनात् ॥ १२ ॥

सवनीयादिपशौ अग्नीषोमीयधर्मातिदेशः । अधि॰ ६ ।

## दैक्षस्य चेतरेषु ॥ १३ ॥

दैक्षस्य अग्नीषोमीयपशोः धर्मा इतरेषु तद्भिन्नपशुयागेषु । आल-भतिचोदनाचोदितत्वादिलिङ्गादिति पूरणीयम् ॥ १३ ॥

ऐकादशिनेषु सवनधर्मातिदेशः । अधि॰ ७ ।

## ऐकादशिनेषु सौत्यस्य द्वैरशन्यदर्शनात् ॥ १४ ॥

ऐकादशिनाः पशव उदाहरणं, तेषु सौत्यस्य सवनीयपशोर्धर्माः । द्वैरशन्यस्य दर्शनात् । ऐकादशिनेषु द्वे द्वे रशने परिव्ययतीति, सवनीयेऽपि रशनाद्वयमिति रशनाद्वयलिङ्गात् ॥ १४ ॥

पशुगणेषु ऐकादशिनधर्मातिदेशः । अधि॰ ८ ।

## तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥

त्रीन्वृषभानालभेतेत्यादिपशुगणेषु तत्प्रवृत्तिः ऐकादशिनधर्मप्रवृत्तिः स्यात् । प्रतिपशु सोत्रामण्याम् आश्विनं धूम्रमालभते सारस्वतं मेषमैन्द्रमृषभमिति यागे यत्रिषु यूपेष्वालभेत बहिर्धास्मादिन्द्रियं वीर्यं दध्यादिति प्रतिपशु यूपमनूद्य दोषकथनदर्शनात् । यद्यग्नीषोमधर्मस्तत्र एकयूपस्य नियतत्वेन तस्यैव नियमेन प्राप्तत्वेन यूपत्रयस्याप्राप्त्या तत्पक्षे दोषदानं विरुद्धम् । ऐकादशिने प्रत्येकं यूपस्य सत्त्वेन तद्धर्मप्राप्तौ तत्र दोषकथनं युक्तमिति लिङ्गेन पशुगणे ऐकादशिनधर्मा इति भावः ॥ १५ ॥

अव्यक्तयागे सौमिकधर्मातिदेशः । अधि॰ ९ ।

## अव्यक्तासु तु सोमस्य ॥ १६ ॥

विश्वजिता यजेतेति द्रव्यदेवतोभयवाचकपदरहितवाक्यप्रतिपाद्ययागेषु सोमस्य धर्माः । सोमेन यजेतेत्यत्राप्युभयवाचकपदाभावात् । सोमरूपद्रव्यसत्त्वेऽपि देवतावाचकपदाभावेनोभयाभावस्याचतत्वात् ॥ १६ ॥

अहर्गणेषु द्वादशाहिकधर्मातिदेशः । अधि० १० ।

## गणेषु द्वादशाहस्य ॥ १७ ॥

गणेषु अहर्गणेषु सोमस्य धर्माः द्विनगणसाध्यत्वदशोपसत्त्वलिङ्गात् ॥ १७ ॥

संवत्सरसत्रेषु गवामयनधर्मातिदेशः । अधि० ११ ।

## गव्यस्य चैतदादिषु ॥ १८ ॥

एतदादिषु आदित्यानामयनं तपस्विनामयनमित्यादिषु संवत्सरसाध्यक्रतुषु गव्यस्य गवामयनस्य धर्माः संवत्सरसाध्यत्वेन सादृश्यात् ॥ १८ ॥

निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशः । अधि० १२ ।

## निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १९ ॥

साहस्राः साद्यस्का इति एकनामकाः अहःसंघाः श्रूयन्ते । तेषां निकायिन इति संकेतः । तेषामह्नां मध्ये उत्तरेष्वहःसु पूर्वस्याह्नो धर्मप्रवृत्तिः स्यात् ॥ १९ ॥

फलादीनामनतिदेशः । अधि० १३ ।

## कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ २० ॥

प्रकृतिवत्कर्त्तव्यमिति सौर्ययागवाक्ये पूरणमित्युक्तं प्राक् । तथा सति आग्नेयादिषण्णां प्रधानानां स्वर्गरूपफलस्य यावज्जीवहवननियमस्य कर्तुः स्वर्गकामकर्तृकत्वस्य च प्राप्तौ तावत्सौर्ययागान्निवारयति । कर्मणस्त्विति । सौर्ययागे कर्मणः प्रधानस्याकाङ्क्षाभावेनाप्रवृत्तत्वात् । अनतिदिष्टत्वात् फलादीनां त्रयाणां प्रधानेन सह बन्धनं संबन्धो येषां तत्त्वात्प्रधाननिवृत्तौ फलनियमकर्तृसमुदायस्यानन्वयः अप्रवृत्तिः ॥ २० ॥

## प्रवृत्तावपि तादर्थ्यात् ॥ २१ ॥

सौर्ययागे प्रधानकर्मणः उपकारकाकाङ्क्षामात्रमस्ति नान्यत् । यच्च प्रकृतौ प्रधानोपकारकत्वेन क्लृप्तं तस्यैवाकाङ्क्षया ग्रहणं वक्तव्यम् । एवं सति फलं पुरुषोपकारकं तथा यावज्जीवनियमो ऽपि पुरुषार्थः तथा

कर्मापि स्वर्गकामार्थं न स्वर्गकामः कर्मार्थः तथा प्रधानकर्मापि फलार्थम-मीषां मध्ये कस्यापि क्रत्वर्थत्वाभावादतिदिष्टमपि व्यर्थमेव स्यादित्याह । प्रवृत्ताविति । तादर्थ्याद् उक्तानां पुरुषार्थत्वात् । प्रवृत्तौ अतिदेशेन प्राप्तावपि, विफलं स्यादिति शेषः ॥ २१ ॥

## अश्रुतित्वाच्च ॥ २२ ॥

ननु मासाग्निहोत्रे प्रधानातिदेशवदत्राप्यस्त्वित्यत आह । अश्रुतीति । अश्रुतित्वात् । अत्र प्रधानातिदेशस्याशास्त्रत्वात् । अग्निहोत्रवदिति साङ्गप्रधानातिदेशो नाम्ना, अत्र दर्शपूर्णमासोपकारवत्सौर्योपकारं संपादयेदित्येव, अतः प्रधानातिदेशोऽश्रुत इति भावः ॥ २२ ॥

गुणकामानामप्यनतिदेशः । अधि॰ १४ ।

## गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥ २३ ॥

प्रधानफलातिरिक्तपश्वादिसाधनानां गोदोहनादीनां सौर्ययागे अतिदेशोऽस्ति न वेति संशये पूर्वपक्षमाह । गुणकामेष्विति । गुणाङ्गोदोहनात्कामः पश्वादीच्छायां सत्यां गोदोहनादेः प्रवृत्तिः स्यात् । आश्रितत्वात्प्रणयनाश्रितत्वात् । आश्रयसत्त्वे आश्रितसत्त्वमावश्यकं पटसत्त्वे पटाश्रितचित्रसत्त्वं तथा ॥ २३ ॥

## निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥

सिद्धान्तमाह । निवृत्तिरिति । निवृत्तिरिति । गोदोहनस्य विकृतौ निवृत्तिः कर्मभेदात् । चमसगोदोहनयोः फलभेदात् । चमसः क्रत्वर्थः गोदोहनं पुरुषार्थः क्रत्वर्थस्यैवाकाङ्क्षाऽत्रेति भावः ॥ २४ ॥

## अपि वाऽतद्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥

ननु खादिरं वीर्यकामस्य यूपं कुर्यादिति श्रुते खादिरप्रवृत्तिरपि विकृतौ न स्यादत आह । अपि वेति । खादिरप्रवृत्तिर्युक्ता अतद्विकारत्वात् । क्रत्वर्थो यः तद्विकारो यः, तद्विकारत्वं च क्रत्वर्थत्वाभावे सति क्रत्वर्थकार्यकारित्वं, यथा गोदोहनादेः चमसकार्यकारित्वं, तद्भिन्नत्वाद् अस्य खादिरत्वस्य क्रत्वर्थत्वाच्च ॥ २५ ॥

सौर्ये चरौ आभिमर्शनद्वयस्य विकल्पः। अधि० १५।

## एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

चतुर्होत्रा पौर्णमास्यां हवींष्यासादयेत् पञ्चहोत्राऽमावस्यायामिति प्रकृतौ श्रुतम्। इदं सौर्ययागे अतिदेशेन प्राप्तं, तद्यथा प्रकृतौ कालद्वये मन्त्रद्वयं नियतं तथैव सौर्ययागेऽपि नियतमिति पूर्वपक्षे सिद्धान्तमाह। एककर्मणीति। हि यतः सौर्ययागस्याविभागः भेदाभावः अविभागे हेतुः चोदनैकत्वात्। एकविधिविहितत्वात्। अत एककर्मणि विकल्पः। चतुर्होत्रा पौर्णमासीमिति वाक्ये पौर्णमासीशब्दो न कालपरः किंतु कर्मपरः। तत्र दर्शपूर्णमासयोः कर्मणोर्भिन्नत्वाद्व्यवस्था युक्ता। इह आग्नेरुभयत्र सत्त्वेन मन्त्रद्वयस्याप्याग्नेयधर्मत्वादत्रोभयोः प्राप्तौ एकार्थास्तु विकल्पेरन्निति विकल्प इति भावः॥ २६॥

सौर्ये आग्नेयधर्मातिदेशः। अधि० १६।

## लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ ॥

सौर्ययागे आग्नेयाग्नीषोमीयधर्मयोर्विकल्पेन प्राप्तिरिति पूर्वपक्षमाह। लिङ्गेति। उभयत्र लिङ्गसाधारण्यात्। ओषधिद्रव्यस्य तुल्यत्वाद्विकल्पः॥ २७॥

## ऐकार्थ्याद्वियिनियम्येत पूर्ववत्त्वाद्विकारो हि ॥ २८ ॥

सिद्धान्तमाह। ऐकार्थ्यादिति। हि यतः सौर्ययागः विकारः विकृतिः भवति पूर्ववत्त्वात्प्रकृतिधर्मसापेक्षत्वात्तत्रैकार्थ्यात्। एकदेवताकत्वात्। नियम्येत आग्नेयविध्यन्तो नियम्येत॥ २८॥

## अश्रुतत्वान्नेति चेत् ॥ २९ ॥

सौर्यमिति तद्धितान्तेन पदेन सूर्यो देवताऽस्येति सूर्या इति वा नियन्तुमशक्यत्वादश्रुतमेकदेवताकत्वमित्याशङ्कते। अश्रुतत्वादिति॥ २९॥

## स्याल्लिङ्गभावात् ॥ ३० ॥

अमुमेवादित्यं स्वेन भागधेयेनोपधावतीत्यर्थवादे सूर्यपर्यायादि-

त्यपदोत्तरमेकवचनलिङ्गम् एकदेवताकत्वनियामकमित्याह । स्यादिति । लिङ्गभावात् । उक्तलिङ्गसत्त्वात् ॥ ३० ॥

## तथा चान्यार्थदर्शनम् ॥ ३१ ॥

अन्यस्मिन्, उदुत्यं, चित्रमिति मन्त्रद्वये अर्थस्य एकवचनस्य दर्शनम् ॥ ३१ ॥

हविर्देवतयोर्विकल्पे हविःसामान्यस्य बलीयस्त्वम् । अधि॰ १७ ।

## विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥

ऐन्द्रमेकादशकपालं निर्वपेदिति श्रुतम् । अत्र देवतालिङ्गेन पयोधर्माः एकादशकपालादिलिङ्गेन पुरोडाशधर्माः इति विरोधे कथमनुष्ठानमिति चिन्तायां सिद्धान्तमाह । विप्रतिपत्ताविति । उक्तरीत्या विप्रतिपत्तौ विरोधे हविषा हविःसादृश्यादेव नियम्येत कर्मणः तदुपाख्यत्वाद् अन्तरङ्गत्वात् । कर्मोत्पत्तिवाक्येन कर्मणि बोध्ये कर्मबोधकपदेन साकं संनिहितं द्रव्यवाचकं पदम् । तथा हि, निर्वपतिधातुवाच्यं कर्म, द्रव्यवाचकः तद्धितः । तेन व्यवहितं देवतावाचकम् । अव्यवहितश्च तद्धितः । अतो देवता बहिरङ्गं द्रव्यं यागस्यान्तरङ्गं, विरोधे द्रव्यलिङ्गेन देवतालिङ्गं बाध्यतइति भावः ॥ ३२ ॥

## तेन च कर्मसंयोगात् ॥ ३३ ॥

तेनेति । तेन हविषा संयुज्य कर्म चोद्यते, सोयं चरुमैन्द्रमेकादशकपालं निर्वपेदिति । हविः कर्मणि साक्षात्मकारः, देवता च हविर्द्वारा, अतो ऽपि हविर्लिङ्गं प्रबलम् ॥ ३३ ॥

## गुणत्वेन देवताश्रुतिः ॥ ३४ ॥

गुणत्वेन देवताश्रुतिः हविषो विशेषणत्वेन देवताश्रुतिः । तद्धितार्थे प्रकृत्यर्थो विशेषणं, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् । विशेषणापेक्षया विशेष्यस्य प्रबलत्वादिति भावः ॥ ३४ ॥

शतकृष्णलाख्यहिरण्ये औषधधर्मातिदेशः । अधि॰ १८ ।

## हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥ ३५ ॥

प्राजापत्यं शतकृष्णलं चरुन्निर्वपेदिति । शतकृष्णलं सुवर्णशकलशतम् । सुवर्णे आज्यधर्माः पुरोडाशधर्मा वेति संशये पूर्वपक्षमाह । हिरण्यमिति । आज्यधर्मः तेजस्त्वात् । प्रतिबिम्बाधिष्ठानाद् उभयोः सादृश्यमिति ॥ ३५ ॥

## धर्मानुग्रहाच्च ॥ ३६ ॥

धर्माणां यजमानपत्न्याद्यवेक्षणादिरूपाणामाज्यधर्माणामनुग्रहात् । अबाधात् । पुरोडाशधर्मत्वे वितुषीभावरूपद्वारलोपेनावहननादीनां बाध एव स्यादिति भावः ॥ ३६ ॥

## औषधं वा विशदत्वात् ॥ ३७ ॥

सिद्धान्तमाह । औषधमिति । ओषधिसंबन्धिनो धर्माः विशदत्वात् कठिनत्वात् ॥ ३७ ॥

## चरुशब्दाच्च ॥ ३८ ॥

चरुशब्दाच्चेति । चरुशब्दश्चौषधिधर्मप्रापकः । आज्ये चरुव्यवहाराभावादिति भावः ॥ ३८ ॥

## तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥

तस्मिंश्चेति । तस्मिंश्चाज्ये श्रपणश्रवणात् । न हि आज्यधर्मः श्रपणं किं त्वोषधिधर्म इति भावः ॥ ३९ ॥

मधूदके उपांशुयाजीयाज्यधर्मातिदेशः । अधि० १६ ।

## मधूदके द्रवसामान्यात्पयोविकारः स्यात् ॥ ४० ॥

चित्रायागे, दधि मधु घृतमापो धाना इति । अत्र मधूदकयोः पयोधर्मा आज्यधर्मा वेति संशये पूर्वपक्षमाह । मध्विति । मधूदके पयोविकारः पयोधर्मः स्याद् द्रवसामान्यात् । द्रवत्वेन साजात्यात् ॥ ४० ॥

## आज्यं वा वर्णसामान्यात् ॥ ४१ ॥

सिद्धान्तमाह । आज्यमिति । आज्यमाज्यधर्मा एतयोः । वर्णेन साम्यात् ॥ ४१ ॥

## धर्मानुग्रहाच्च ॥ ४२ ॥

अपरं साधकमाह । धर्मेति । आज्यधर्माणां बहूनामनुग्रहो भवति । पयोधर्मत्वे दोहनादिबहुधर्माणां बाधः स्याद् इति भावः ॥ ४२ ॥

## पूर्वस्याविशिष्टत्वात् ॥ ४३ ॥

पूर्वपक्षसाधकहेतुरस्मदनुमत इत्याह । पूर्वस्येति । पूर्वस्य पूर्वपक्षयुक्तस्य द्रवत्वेन सादृश्यस्य अविशिष्टत्वात् । आज्ये ऽपि सत्त्वाद् अविरोध इति भावः ॥ ४३ ॥

इति श्रीजैमिनिसूत्रवृत्तौ अष्टमाध्यायस्य प्रथमः पादः ॥ १ ॥

चातुर्मास्यसौत्रामण्योरैष्टिकधर्मातिदेशः । अधि० १ ।

## वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥

चातुर्मास्ये वाजिभ्यो वाजिनमिति श्रुतम् । तथा सौत्रामण्यां सुराग्रहाः आश्विनं ग्रहं गृह्णातीति । अत्रोभयत्र ऐष्टिको विधान्त उत सौमिक इति संशये पूर्वपक्षमाह । वाजिनइति । सौत्रामण्यां वाजिने च सोमपूर्वत्वं सोमधर्मत्वम् । ताच्छब्द्यात् । सोमो वै सुरा सोमो वै वाजिनमिति शब्दात् । नात्र वाजिनसुरयोः सोमाभेदः प्रत्यक्षविरोधात् । अतः सोमपदस्य सोमधर्मके लक्षणेति भावः ॥ १ ॥

## अनुवषट्काराच्च ॥ २ ॥

वाजिनस्याग्ने वीहीति सुराया वीहीति, अनुवषट्कारो ऽपि सोमधर्मप्राप्तौ लिङ्गमित्याह । अन्विति । स्पष्टम् ॥ २ ॥

## समुपहूय भक्षणाच्च ॥ ३ ॥

शेषं समं विभज्य समुपहूय भक्षयन्तीति समुपहूय भक्षणमपि लिङ्गमित्याह । समुपहूयेति । समुपहूय अध्वर्य उपहूयस्व ब्रह्मन्नुपहूयस्वेत्यादिमन्त्रैरुपह्वानमन्त्रेणाहूय ॥ ३ ॥

## क्रयणश्रपणपुरोरुगुपयामग्रहणासादनवासोपनहनं च तद्वत् ॥ ४ ॥

किं च क्रयादयः सोमधर्माः सुरायां दृश्यन्ते । अतो ऽपि सोमप्रकृतिक इत्याह । क्रयणेति । यथा सोमस्य क्रयः एवं सुरायाः, सीसेन क्लीबा-

च्छष्पाणि श्रीणातीति श्रूयते। मैत्रावरुणं पयसा श्रीणातीतिवदाश्विनं सक्तुभिः श्रीणातीति श्रपणम्। एका पुरोरुक् एका याज्यैव न पुरोनुवाक्या। उपयामगृहीतो ऽस्यच्छिद्राय त्वेति उपयामयुक्तमन्त्रवत्त्वम्। आश्विनं ग्रहं गृह्णातीति ग्रहणलिङ्गम्। गृहीत्वा ऽऽसादयतीत्यासादनलिङ्गम्। त्रिरात्रं संहता वसन्ति क्षौमे वासस्युपनिबद्धा इति वासोपनहनम्। एतानुशलिङ्गानि सोमप्रकृतिकत्वमुपोद्बलयन्तीति भावः ॥ ४ ॥

## हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥

सिद्धान्तमाह। हविषेति। हविषा हविःसादृश्येन नियम्येत ऐष्टिकधर्मा नियम्येत। तस्य दर्शपूर्णमासिकहविषः विकारौ सुरावाजिने। सुरा ओषधिद्रव्यविकारः। वाजिनं सान्नाय्यविकारः। अतः हविषा नियम्येत ॥ ५ ॥

## प्रशंसा सोमशब्दः ॥ ६ ॥

ननु सोमो वै सुरेति वाक्यस्य का गतिरत्राह। प्रशंसेति। सोमशब्दः प्रशंसा स्तुत्यर्थः। अमात्ये राजशब्दवत् ॥ ६ ॥

## वचनानीतराणि ॥ ७ ॥

वचनानीति। एवं द्रव्यसादृश्येन ऐष्टिकविध्यन्ते सिद्धे आमनहोमादिवद् विशेषधर्मत्वेन इतराणि क्रयादीनि तानि वाचनिकानि विधीयन्त। न हि वचनस्यातिभारो ऽस्तीति भावः ॥ ७ ॥

## व्यपदेशश्च तद्वत् ॥ ८ ॥

व्यपदेशः इति। शष्पैरेव दीक्षणीयामाप्नोति तोक्मभिः प्रायणीयां सिंहलोमभिरातिथ्यामिति व्यपदेशो ऽपि तद्वत्। सोमशब्दवत् स्तुतिरूपः ॥ ८ ॥

## पशुपुरोडाशस्य च लिङ्गदर्शनात् ॥ ९ ॥

लिङ्गं च दर्शयति। पशुवति। नैतेषां पशूनां पुरोडाशा भवन्ति ग्रहपुरोडाशा ह्येतद्त्यनेन पुरोडाशप्रतिषेधं कृत्वा ग्रहपुरोडाशा ह्येतद्त्यनेन ग्रहाणां पुरोडाशधर्मत्वेन पुरोडाशकार्यं ग्रहा एव कुर्युः इति स्तुतिः लिङ्गमिति भावः ॥ ९ ॥

पशौ सान्नाय्यधर्मातिदेशः । अधि० २ ।

## पशुः पुरोडाशविकारः स्याद् देवतासामान्यात् ॥ १० ॥

अग्नीषोमीयः पशुः पुरोडाशधर्मा वा सान्नायधर्मा वेति संशये पूर्वपक्षमाह । पशुरिति । पशुः पशुयागः पुरोडाशविकारः स्याद्देवतासामान्यात् । अग्नीषोमीयदेवतासादृश्यात् ॥ १० ॥

## प्रोक्षणाच्च ॥ ११ ॥

अग्नयेत्वौषधीभ्यो जुष्टं प्रोक्षामीति पशुं प्रोक्षतीति प्रोक्षणस्य पुरोडाशधर्मस्य श्रवणमपि तथात्वे लिङ्गमित्याह । प्रोक्षणाच्चेति । स्पष्टम् ॥ ११ ॥

## पर्यग्निकरणाच्च ॥ १२ ॥

पर्यग्नीति । व्याख्यातम् ॥ १२ ॥

## सान्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥

सिद्धान्तमाह । सान्नाय्यमिति । सान्नाय्यं सान्नायधर्मः स्यात् । तत्प्रभवत्वात् । पशुप्रभवत्वसाजात्यात् ॥ १३ ॥

## तस्य च पात्रदर्शनात् ॥ १४ ॥

तस्य चेति । तस्य पशोः पात्रस्य कुम्भ्याः, कुम्भ्यां श्रपयतीति दर्शनात् ॥ १४ ॥

पशौ पयोधर्मातिदेशः । अधि० ३ ।

## दध्नः स्यान्मूर्तिसामान्यात् ॥ १५ ॥

सान्नाय्यमध्ये दध्नो धर्माः पयसो वेति संशये पूर्वपक्षमाह । दध्न इति । दध्नो धर्मः स्यान्मूर्तेः घनीभावस्य सामान्यात् सादृश्यात् ॥ १५ ॥

## पयो वा कालसामान्यात् ॥ १६ ॥

सिद्धान्तमाह । पय इति । कालसामान्यात् । एकाहसाध्यत्वरूपकालसामान्यात् ॥ १६ ॥

## पश्वानन्तर्याच्च ॥ १७ ॥

पश्वानन्तर्यात् पशुप्रभवमध्ये प्रथमं पयः पश्चाद्दधीति पयः पशोरन्तरङ्गमिति भावः ॥ १७ ॥

## द्रवत्वं चाविशिष्टम् ॥ १८ ॥

द्रवत्वं, पशुरपि द्रवति पयो ऽपि द्रवतीत्यविशेषं द्रवत्वेनापि साजात्यम् ॥ १८ ॥

आमिक्षायां पयोधर्मातिदेशः । अधि० ४ ।

## आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥

सा वैश्वदेव्यामिक्षेति श्रुतो यागः पयोदध्युभयधर्मः स्यादुभयभाव्यत्वात् । पयोदध्युभयजन्यत्वात् ॥ १९ ॥

## एकं वा चोदनैकत्वात् ॥ २० ॥

द्वितीयपक्षमाह । एकमिति । एकं वा विकुर्यात् । एकविधिविहितत्वात् । एकविध्यन्तेन निराकाङ्क्षत्वान्नोभयमिति भावः ॥ २० ॥

## दधि संघातसामान्यात् ॥ २१ ॥

पक्षान्तरमाह । दधिधर्मः । संघातसामान्याद् घनीभावेन तुल्यत्वात् ॥ २१ ॥

## पयो वा तत्प्रधानत्वाल्लोकवद्दध्नः तदर्थत्वात् ॥ २२ ॥

सिद्धान्तमाह । पयो वेति । पयः पयोधर्माः तत्प्रधानत्वात् । पयसो भूयस्त्वात् । लोके पयसो घनीभावार्थं दध्यातञ्चनं क्रियते तद्वत्प्रकृते ऽपि दध्नः दधिनिक्षेपस्य तदर्थत्वात् पयसो घनीभावार्थत्वात् ॥ २२ ॥

## धर्मानुग्रहाच्च ॥ २३ ॥

धर्मा एकाहसाध्यत्वादिधर्माः आमिक्षायागे लिङ्गान्तरेणान्तिमसूत्रे दर्शयिष्यमाणेन क्लृप्ताः । तदनुग्रहश्च भवति ॥ २३ ॥

## सद्योभावं च दर्शयति ॥ २४ ॥

सद्योभावमिति । सद्योभावमेकाहसाध्यत्वं दर्शयति, जुषन्तां युज्यं पय इति देवतायाः पयः सेवनं दर्शयति । इदं लिङ्गं दधिधर्मत्वे द्व्यहसाध्यदध्नः सेवनं न पयस इति लिङ्गं बाध्येत । अतः एकाहसाध्यत्वं लिङ्गं द्रढयति ॥ २४ ॥

द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशः । अधि॰ ५ ।

## सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २५ ॥

अस्ति द्वादशाह इति क्रतुः । तस्य रूपद्वयं सत्रमहीनश्चेति । तयो-रूपयोर्धर्मभेदः । सत्रे ये यजमानास्तऋत्विज इति । सर्वे ऽपि दीक्षेर-न्निति । अहीनस्य धर्मा द्वादशोपसत्त्वादयः । द्विरात्राद्यहीनानां गवाम-यनादिसत्राणां च द्वयो द्वादशाहः प्रकृतिरितिरिति पूर्वमुक्तम् । एवं सति द्विरात्रादिषु अहीनेषु गवामयनादिसत्रेषु च प्रत्येकमुभयधर्माः प्रवर्तन्तउत सत्रे सत्रधर्मा अहीने अहीनधर्मा इति संशये पूर्वपक्षमाह । सत्रमिति । द्वादशाहः सत्रमहीनश्चेत्युभयस्वभावः । तस्य द्वादशाहधर्मस्य उभयथा उभयप्रकारैः प्रत्येकं प्रवृत्तिः । ऐककर्म्यात्कर्मण एकत्वात् ॥ २५ ॥

## अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात् प्रकृत्या तुल्यशब्दत्वात् ॥ २६ ॥

सिद्धान्तमाह । अपि वेति । यत्र यजतिः तत्र अहीनभूतस्य धर्मस्य प्रवृत्तिः स्यात् । प्रकृतौ द्वादशाहेन प्रजाकामं याजयेदिति यजतिश्रुतेः प्रकृत्या तुल्यशब्दत्वात् । य एवं विद्वान् द्विरात्रेण यजतइति प्रकृतिसदृ-शशब्दत्वात् । अहीनधर्मे अहीने क्लृप्ते तुल्यन्यायेन सत्रधर्मा अपि सत्रे इति सिद्धम् ॥ २६ ॥

## द्विरात्रादीनामेकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २७ ॥

अहर्गणमध्ये कियतामहीनत्वं सत्रत्वं कियतां तद्व्यवस्थामाह । द्विरात्रेति । द्विरात्रे द्विरात्राद्येकादशरात्रान्तानामहीनत्वं यजतिधातुपाठः तेन चोदनाद् विधानात् ॥ २७ ॥

## लिङ्गाच्च ॥ २८ ॥

अग्निष्टोमो वै प्रजापतिः स उत्तरानेकाहानसृजत तमेनं द्विरात्रा-दयो ऽहर्गणा ऊचुः त्वमस्मान्मा हासीरिति तदेषामहीनत्वमिति द्विरा-त्रादीनामहीनत्वे लिङ्गमित्याह । लिङ्गेति ॥ २८ ॥

पञ्चदशरात्रादिषु सत्रधर्मातिदेशः । अधि० ६ ।

## अन्यतरतो ऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वदर्शनात् ॥ २६ ॥

पञ्चदशरात्रः कुण्डपायिनामयनं च अहीनः सत्रं वेति संशये पूर्वपक्षमाह । अन्यतरेति । पञ्चदशरात्रस्य कुण्डपायिनामयनस्य चाहीनत्वमन्यतरतः आद्यन्तयोर्मध्ये अन्यतरद्देशे अतिरात्रसंज्ञकस्य सत्त्वात् । तद्भूतेषु अन्यतरस्मिन् अतिरात्रवत्सु तेषु अहीनत्वदर्शनात् । यदन्यतरतो ऽतिरात्रास्तेनाहीना इति श्रवणात् ॥ २९ ॥

## अहीनवचनाच्च ॥ ३० ॥

उक्तवाक्ये अहीन इति प्रत्यक्षवचनाच्च ॥ ३० ॥

## सत्रे चोपैयिचोदनात् ॥ ३१ ॥

सिद्धान्तमाह । सत्रइति । ते उभे सत्रे उपेयिचोदनात् । उपेयुरिति उपघटितेन पञ्चदशरात्रमुपेयुरिति वाक्येन विधेः ॥ ३१ ॥

## सत्रलिङ्गं च दर्शयति ॥ ३२ ॥

कुण्डपायिनामयने सत्रलिङ्गं गृहपतिः सुब्रह्मण्यः सुब्रह्मण्य इति गृहपतिलिङ्गं, सत्रएव गृहपतिरिति व्यवहारो नान्यत्र । अतः सत्रलिङ्गमिति भावः ॥ ३२ ॥

इति जैमिनिसूत्रवृत्तौ अष्टमाध्यायस्य द्वितीयः पादः ॥ २ ॥

शुचिदेवते आग्नेयस्याग्नावैष्णवे चाग्नीषोमीयस्य धर्मातिदेशः । अधि० १ ।

## हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरिति । तथा ऽग्नये पवमानायाष्टाकपालमग्नये पावकायाग्नये शुचयइति । आग्नावैष्णवयागस्याग्नेययागः प्रकृतिः उताग्नीषोमीय इति संशये पूर्वपक्षमाह । हविरिति । हविर्गणे द्वितीये उक्तोदाहरणे उत्तरस्याग्नेः पावकस्य पर उपांशुयागः प्रकृतिः तथा प्रथमोदाहरणे प्रथ-

मस्य प्रथममिति पूर्वीयम् । आग्नावैष्णवयागस्य आग्नेयः प्रकृतिरिति तदर्थः । देवसामान्यात् । प्रथमस्य प्रथमः द्वितीयस्य द्वितीय इति स्थानसादृश्यात् ॥ १ ॥

### देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥

सिद्धान्तमाह । देवतयेति । देवतया देवतासादृश्येन नियम्येत प्रकृतिर्नियम्येत । शब्दवत्त्वात् । देवतावाचकस्य आग्नावैष्णवे अग्निः पावक इति प्रत्यक्षशब्दवत्त्वादितरस्य स्थानवाचकशब्दस्याश्रुतत्वात् ॥ २ ॥

जनकसप्तरात्रे त्रिवृत्स्वहःसु द्वादशाहधर्मातिदेशः । अधि० २ ।

### गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥

जनकसप्तरात्रे श्रूयते, चत्वारि त्रिवृन्त्यहानि भवन्तीति । तत्र प्रथमस्याह्नः त्रिवृत्स्तोमत्वात् तस्यैवावृत्तिर्विधीयते उत नाना ऽह्नां द्वादशाहिकानामह्नां स्तोमो विधीयत इति संशये पूर्वपक्षमाह । गणेति । गणचोदनायामुक्तोदाहरणे यस्य प्रथमस्याह्नो लिङ्गं त्रिवृत्त्वं तस्य प्रथमस्याह्नः आवृत्तिः प्रतीयेत आग्नेयविध्यन्ताभ्यासवत् । अयं भावः । अग्नये पवमानायाग्नये पावकायाग्नये शुचये देवतैक्याच्चोदनासादृश्याच्च यथा ऽऽग्नेयविध्यन्ताभ्यासस्तथेति ॥ ३ ॥

### नाना ऽहानि वा संघातत्वात्प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥

सिद्धान्तमाह । नानेति । द्वादशाहसम्बन्धीनि नाना ऽहानि संघातत्वात् चत्वार्यहानीति संख्यया अह्नां समुदायविधानात् । ननु चत्वारि त्रिवृन्त्यहानीत्यस्य का गतिरत आह । प्रवृत्तिलिङ्गेन द्वादशाहिकाहश्चतुष्टयानुवादेन चोदनात् त्रिवृत्त्वविधानाद्वचनस्य चारितार्थ्यमिति भावः ॥ ४ ॥

### तथा चान्यार्थदर्शनम् ॥ ५ ॥

उक्तार्थसाधकं लिङ्गमाह । तथा चेति । तेषामग्निष्टोमः प्रथमो न अग्निष्टोमा इतर इत्यनेन भिन्नधर्मकत्वमह्नां सूचितम् ॥ ५ ॥

षट्त्रिंशद्रात्रे षडहधर्मातिदेशः । अधि० ३ ।

## कालाभ्यासे च बादरिः कर्मभेदात् ॥ ६ ॥

षट्त्रिंशद्रात्रे श्रूयते, षडहा भवन्तीति पठित्वा चत्वारः षडहा भवन्तीति । अनेन षडहकालाभ्यासः उत षडहरूपकर्माभ्यास इति संशये पूर्वपक्षरूपं बादरिमतमाह । कालेति । कालाभ्यासे वाक्यं बादरिर्मनुते । तथा च चतुर्विंशतिरहानि । तथा चाहर्गणसाध्यत्वाद् द्वादशाहधर्मप्रवृत्तिरिति भावः ॥ ६ ॥

## तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसंख्यत्वात् ॥ ७ ॥

सिद्धान्तमाह । तदिति । तदावृत्तिं षडहावृत्तिं जैमिनिर्मनुते अह्नां चतुर्विंशतिसंख्याविशिष्टानामह्नामप्रत्यक्षसंख्यत्वात् । आनुमानिकसंख्याकत्वात् । अयं भावः । प्रथमं षडहं ज्ञात्वा तत्र चतुष्ट्वसंख्याज्ञानेन चतुर्विंशतिसंख्याऽनुमेया । ततः प्रथमज्ञातषडहसाध्यकर्मण एवात्र चतुष्ट्वसंख्याऽन्वये तदभ्यासेन संख्यापूरणमिति षडहधर्मप्रवृत्तिरिति ॥ ७ ॥

## तस्मात्षडहाभ्यासः ॥ ८ ॥

उक्तार्थमुपसंहरति । तस्मादिति ॥ ८ ॥

संस्थागणेषु द्वादशाहिकधर्मातिदेशः । अधि० ४ ।

## संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ९ ॥

शतोक्थ्यं भवति शतातिरात्रं भवतीति, किं ज्योतिष्टोमस्याभ्यासः किं वा संस्थाविशिष्टस्याह्न इति संशये पूर्वपक्षमाह । संस्थेति । संस्थागणेषु विधीयमानेषु तदभ्यासः ज्योतिष्टोमाभ्यासः प्रतीयेत यतः ज्योतिष्टोमस्यैव उक्थ्यः अतिरात्र इति नाम अतः कृतलक्षणस्य कृतनाम्नः ज्योतिष्टोमस्यैव ग्रहणात् ॥ ९ ॥

## अधिकाराद्वा प्रकृतिः तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥ १० ॥

सिद्धान्तमाह । अधीति । तद्विशिष्टा उक्थ्यादिसंस्थाविशिष्टा प्रकृतिः द्वादशाहसंबन्धीनि अहानि विधीयन्ते अधिकारात् । चोदक

शास्त्रेण अधिकृतत्वादिति शेषः । प्राप्तत्वादित्यर्थः । उक्थ्यादिशब्दाः ज्योतिष्टोमनामानीति यदुक्तं तत्राह । अभिधानस्य उक्थ्यादिनाम्नः तन्निमित्तत्वात् । यत्साम्ना क्रतुसमाप्तिस्तन्निमित्तत्वात् । तथा च द्वादशाहिकाहर्गणेष्वपि तन्निमित्तस्याबाधादिति भावः ॥ १० ॥

शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयः । अधि० ५ ।

## गणादुपचयः तत्प्रकृतित्वात् ॥ ११ ॥

शतोक्थ्यं भवतीत्यत्र द्वादशाहसंबन्धिदशरात्रावृत्तिरिति पूर्वाधिकरणे स्थितम् । तानि च द्वादशाहदशाहानि च प्रायेणोक्थ्यसंस्थानि । तत्रोक्थ्यस्तोत्रे ज्योतिष्टोमोक्थ्यस्तोत्राद् अधिकाः के चन धर्मा आम्नाताः । इत्थं च शतोक्थ्ये स्तोत्रे द्वादशरात्रोक्थ्यधर्मा उत ज्योतिष्टोमोक्थ्यस्तोत्रधर्मा इति संशये पूर्वपक्षमाह । गणादिति । गणाद् द्वादशाहगणादुपचयः धर्मप्राप्तिः तस्य शतोक्थ्यस्य प्रकृतित्वाद् द्वादशाहस्य ॥ ११ ॥

## एकाहाद्वा तेषां समत्वात्स्यात् ॥ १२ ॥

सिद्धान्तमाह । एकाहाद्वेति । एकाहाज् ज्योतिष्टोमाद् धर्मग्रहणम् । तेषां शतोक्थ्यानां द्वादशाहिकानामह्नां च समत्वात् । भिक्षुकत्वेन तुल्यत्वात् । अयं भावः । द्वादशाहसंबन्धीन्यहान्यपि स्तोत्रशस्त्राणां स्वधर्माणां भिक्षामन्यत इच्छन्ति, शतोक्थ्यान्यप्यन्यत एव भिक्षामिच्छन्तीति तुल्यम् । ज्योतिष्टोमसमीपे तेषां पठितत्वेन ज्योतिष्टोमो न हि भिक्षामपेक्षतइति अभिक्षुकः । तथा च न हि भिक्षुको भिक्षुकं याचते अभिक्षुके सतीति लोकन्यायेन ज्योतिष्टोमधर्मा इति भावः ॥ १२ ॥

गायत्रमेतदहर्भवतीत्यादौ उत्पत्तिगायत्रीणामागमः । अधि० ६ ।

## गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात्संख्यात्वादग्निष्टोमवद्व्यतिरेकात्तदाख्यत्वम् ॥ १३ ॥

वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति श्रुते बृहस्पतिसवे गायत्रमेतदहर्भवतीति श्रुतम् । अत्र ज्योतिष्टोमादागतत्रिष्टुबनुष्टुबादिच्छन्दस्कानामृचामक्षरलोपं कृत्वा सर्वासां गायत्रीत्वं संपाद्यमुत दाशतयीभ्यः

गायत्रच्छन्दस्कानामृचां ग्रहणमिति संशये पूर्वपक्षमाह । गायत्रीति । गायत्रीषु श्रूयमाणासु प्रकृतीनां त्रिष्टुब्जगत्यादीनां अवच्छेदः चाधिकाक्षरलोपः प्रकृत्यधिकारात् प्रकृतिचोदनानुग्रहात् । गायत्र्यक्षराणां चतुर्विंशतिसंख्यत्वात् । कथमेतज्ज्ञायतइत्यत्राह । अव्यतिरेकात् । गायत्रीत्वस्य चतुर्विंशतिसंख्याऽव्यभिचारात् तत्संख्यत्वं गायत्र्याख्यत्वं चतुर्विंशतिसंख्यायाः । अग्निष्टोमवत् । पूर्वाधिकरणसिद्धान्तवत् । यथा शताग्निष्टोमः कार्य इत्युक्ते द्वादशाहगतोक्थ्यस्य लोपः तथा ॥ १३ ॥

## नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १४ ॥

चतुर्विंशतिसंख्याया गायत्रीपदप्रवृत्तिनिमित्तत्वे साधकान्तरमाह । नित्यवदिति । गायत्र्यपेक्षया पृथक्सतीषु भिन्नासु जगतीषु, ये हि द्वे गायत्र्यौ सैका जगतीति नित्यवच्च तद्वचनं गायत्रीवचनं संगच्छते । द्वे गायत्र्यौ अष्टचत्वारिंशत्संख्या भवन्ति । जगत्यपि तावत्संख्याकेति गायत्रीशब्दस्य ऋक्परत्वे द्वे गायत्र्यौ जगतीति वचनमनुपपन्नं द्वयस्य जगतीत्वाभावात् ॥ १४ ॥

## न विंशतौ दशेति चेत् ॥ १५ ॥

शते पञ्चाशदितिवत् जगत्यामष्टाचत्वारिंशत्संख्यायां चतुर्विंशतिसंख्याऽस्त्येवेति जगत्यामृचि कार्ये कृते तदन्तर्वर्तिगायत्र्यामपि कृतं भवतीति नाक्षरलोप इत्याशङ्क्य दूषयति । नेति । विंशतौ दश यथा तथा जगती गायत्रीतीति चेत् ॥ १५ ॥

## ऐकसंख्यमेव स्यात् ॥ १६ ॥

एवं सति परार्धसंख्या एकैव स्यात् । इतरासां यावत्संख्यानां परार्धान्तःपातित्वादिति समाधत्ते । ऐकेति ॥ १६ ॥

## गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥ १७ ॥

पक्षान्तरमुत्थापयति । गुणादिति । गुणात्पृथक्संख्यारूपगुणात्पृथग्द्रव्यशब्दः द्रव्यवाचकशब्दः चतुर्विंशतिवर्णपरः स्यात् । असर्वविषयत्वात् । यावच्चतुर्विंशतिसंख्याऽविषयत्वात् । यदि केवलं यावच्चतुर्विंशति-

संख्यापरः तर्हि घटवृत्तिचतुर्विंशतिसंख्यायामपि गायत्रीति व्यवहारः स्यादिति भावः ॥ १७ ॥

गोत्ववच्च समन्वयः ॥ १८ ॥

ननु द्रव्यपरत्वे ऽप्येव दोष इत्यत आह । गोत्ववदिति । यथा गच्छतीति गौरिति गमनकर्तृत्वनिमित्तस्य पुरुषादौ सत्त्वे ऽपि सास्नादिमति रूढिशक्तिं स्वीकृत्य सास्नादिमत्येव समन्वयो नान्यत्रेति, तथा द्रव्यसामान्ये गायत्रीशब्दप्रवृत्तिनिमित्तचतुर्विंशतिसंख्यासत्त्वे ऽपि तत्संख्याविशिष्टवर्णमात्रे समन्वयो न तु घटादाविति भावः ॥ १८ ॥

संख्यायाश्च शब्दवत्त्वात् ॥ १९ ॥

किं च, संख्यायाश्चतुर्विंशतिरित्येकं नाम व्यवहारसंपादकमस्ति गायत्रीति तस्यैव नामान्तरत्वे निष्फलमित्याह । संख्याया इति । संख्यायाः उक्तसंख्यायाः शब्दवत्त्वात् । चतुर्विंशतिरिति शब्दवत्त्वात् ॥ १९ ॥

इतरस्याश्रुतित्वाच्च ॥ २० ॥

इतरस्य रूपद्रव्यस्य अश्रुतित्वाद् नामरहितत्वात् । रूपे गायत्रीति नाम सार्थकमिति भावः ॥ २० ॥

द्रव्यान्तरे ऽनिवेशादुक्थ्यलोपे विशिष्टं स्यात् ॥ २१ ॥

यदुक्तमग्निष्टोमवदिति तस्य उत्तरमाह । द्रव्येति । अग्निष्टोमशब्दस्य द्रव्यान्तरे ऽनिवेशात् । द्वादशाहिके अहर्गणे चरमस्तोत्रे उक्थ्यलोपं कृत्वा अग्निष्टोमसाम्ना क्रतुसमाप्तौ कृतायामेव विशिष्टमग्निष्टोमनामविशिष्टं स्यात् ॥ २१ ॥

अशास्त्रलक्षणत्वात् ॥ २२ ॥

अशास्त्रलक्षणत्वादुक्थ्यस्य यथा शताग्निष्टोम इत्यत्र अग्निष्टोमान्तत्वस्य प्रत्यक्षशास्त्रगम्यत्वं तथोक्थ्यस्यानुमानिकत्वेन प्रत्यक्षशास्त्रागम्यत्वादुक्थ्यबाधो युक्त इति भावः ॥ २२ ॥

उत्पत्तिनामधेयत्वाद्भक्त्या पृथक्सतीषु ॥ २३ ॥

यदुक्तं द्वे गायत्र्यौ एका जगतीति लिङ्गमुक्तं तदुत्तरमाह । उत्-

त्रीति । ऋचः गायत्रीति उत्पत्तिनामधेयत्वात् स्वभावसिद्धनामत्वात् । पृथक्स्तीषु जगत्यवयवेषु भक्त्या लक्षणया गायत्रीशब्दप्रयोगः ॥ २३ ॥

## वचनमिति चेत् ॥ २४ ॥

अनुवादे लक्षणा युक्ता, इह तु द्वाभ्यां गायत्रीभ्यां वैश्यस्य क्रियते जगत्यैव कृतं भवतीत्यत्र विध्यंशे लक्षणा अयुक्तेति शङ्कते । वचनमिति । कथमिति पूरणीयम् । लक्षणया वचनं विधिः कथमिति चेत् ॥ २४ ॥

## यावदुक्तम् ॥ २५ ॥

समाधत्ते । यावदिति । यावद्भिः समयैर्वृत्तिभिः उक्तं विधानं भवति । अत एव पृष्ठैरुपतिष्ठतइत्यत्र पृष्ठशब्दार्थस्य मन्त्रस्य विधेयत्वेऽपि लक्षणा पृष्ठशब्दस्य ॥ २५ ॥

## अपूर्वे च विकल्पः स्याद्यदि संख्याभिधानम् ॥ २६ ॥

गायत्रीशब्दस्य संख्यापरत्वे दूषणान्तरमाह । अपूर्वेति । अपूर्वे प्रकृतौ दर्शपूर्णमासे जगत्या परिदध्यादित्युक्त्वा गायत्र्या परिदध्यादित्युक्तं, जगत्या अक्षरलोपेन गायत्रीत्वसंपादनम् । आजुहोतादुवस्यतेति ऋग् अनयोर्विकल्पः स्याद् यदि संख्याभिधानम् ॥ २६ ॥

## ऋग्गुणत्वान्नेति चेत् ॥ २७ ॥

पञ्चदशानुब्रूयादिति ऋचां पञ्चदशानां विहितत्वाद्गायत्र्या परिदध्यादिति परिधानस्य ऋग्धर्मत्वात् जगत्या अक्षरलोपे ऋगेकदेशस्य ऋक्त्वाभावात्परिधानस्य ऋग्धर्मत्वं भज्येत अतः आजुहोतादुवस्यतेत्यनेनैव परिधानं न विकल्प इत्याशङ्कते । ऋगिति । परिधानस्य ऋग्गुणत्वाच्च विकल्पः ॥ २७ ॥

## तथा पूर्ववति स्यात् ॥ २८ ॥

बृहस्पतिसवेऽपि तुल्यमित्याह । तथेति । पूर्ववति विकृतौ बृहस्पतिसवेऽपि तथा स्याद् गानादिकार्यऋग्गुणः स्यात् । ज्योतिष्टोमे ऋक्ष्वेव गानस्य क्लृप्तत्वेन चोदकशास्त्रेण तथैव प्राप्तौ गायत्रीछन्दःसु कृते चोदकशास्त्रमनुगृहीतं भवतीति भावः ॥ २८ ॥

## गुणावेशश्च सर्वत्र ॥ २९ ॥

किं च गुणस्य चतुर्विंशतिसंख्याया आवेशः समावेशः सर्वत्र ग्रहचमसादावपि स्यात् । ग्रहचमसादिवृत्तिसंख्यायामपि गायत्रीव्यवहारः स्यादिति भावः ॥ २९ ॥

## निष्पन्नग्रहान्नेति चेत् ॥ ३० ॥

यादृशसंख्यायां रूढिः गायत्रीशब्दस्य तस्यैव गायत्रीशब्देन ग्रहणमिति उक्तदोषं परिहरति । निष्पन्नेति । निष्पन्नस्य रूढ्यर्थस्य ग्रहणमिति चेत् ॥ ३० ॥

## तथेहापि स्यात् ॥ ३१ ॥

यथा ऽक्षरगणनायामेव संख्यायां गायत्रीव्यवहारः तथा जगतिर्विक्ते गायत्रीव्यवहाराभावात्संख्याविशिष्टा ऋक् तद्वाच्येत्युत्तरयति । तथेति ॥ ३१ ॥

## यदि वा ऽविशये नियमः प्रकृत्युपबन्धनाच्छरेष्वपि प्रसिद्धः स्यात् ॥ ३२ ॥

यदीति । अविशये ऽपि गायत्रीशब्दस्य संख्याविशिष्टऋगर्थत्वे ऽसंशये ऽपि प्रकृत्युपबन्धनाच्चोदकानुग्रहाद् नियमः गायत्र्यां गायत्रीशब्दार्थरूपनियमः यदि वा, तर्हि शरमयं बर्हिरित्यत्र शरशब्दः कुशेष्वपि प्रसिद्ध इति कल्प्यतां प्रकृत्यनुग्रहात् ॥ ३२ ॥

## दृष्टः प्रयोग इति चेत् ॥ ३३ ॥

द्वे गायत्र्यौ एका जगतीति संख्यायां व्यवहारो दृष्टः शरस्य कुशे व्यवहारो नास्तीत्याशङ्कते । दृष्ट इति ॥ ३३ ॥

## तथा शरेष्वपि ॥ ३४ ॥

शरवणमेवेदं कुशवनमिति व्यवहारो ऽत्राप्यस्तीत्याह । तथेति ॥ ३४ ॥

## भक्त्येति चेत् ॥ ३५ ॥

शरशब्दस्य दर्शितस्थले लक्षणेत्याह । भक्त्येति ॥ ३५ ॥

तथेतरस्मिन् ॥ ३६ ॥

गायत्रीशब्दस्याप्युक्तस्थले लक्षणेति समाधत्ते । तथेति । इतरस्मिन् गायत्रीशब्दे ऽपि तथा लक्षणा ॥ ३६ ॥

अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥ ३७ ॥

अर्थस्येति । अक्षरलोपे वाक्यघटकीभूतपूर्वपदसाकाङ्क्षाणामुत्तरपदानां लुप्तत्वेन अर्थस्य वाक्यस्य असमाप्तत्वाच्छाब्दबोधोपधायकत्वाभावात् । तासां प्रकृतर्चामेकदेशे गानादि न स्यात् । किं तु चतुर्विंशत्यक्षराणामन्यर्चामेव ग्रहणमिति ॥ ३७ ॥

इति श्रीजैमिनिसूत्रवृत्तौ अष्टमाध्यायस्य तृतीयः पादः ॥ ३ ॥

दर्विहोमशब्दस्य नामधेयत्वम् । अधि० १ ।

दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

यदेकया जुहुयाद्दर्विहोमं कुर्यादित्यत्र दर्विहोम इत्यत्र दर्विरूपगुणविधिः कर्मनाम वेति चिन्तायां गुणविधिरिति पूर्वपक्षे सिद्धान्तमाह । दर्वीति । दर्विहोमशब्दः यज्ञाभिधानं यागनाम होमसंयोगात् होमशब्दार्थेन साकमभेदसंबन्धात् ॥ १ ॥

दर्विहोमशब्दस्य लौकिकवैदिकोभयकर्मनामधेयत्वम् । अधि० २ ।

स लौकिकानां स्यात्कर्तुस्तदाख्यत्वात् ॥ २ ॥

एवमपरिपूर्णे अधिकरणे इदं नाम स्मार्तकर्मण एव उत स्मार्तवैदिकानामिति संशये पूर्वपक्षमाह । स इति । स शब्दः लौकिकानां स्थालीपाकादिकर्मणां स्यात्कर्तुः दर्विहोमकर्तुः तदाख्यत्वात् । शिनीनां दार्विहोमिको ब्राह्मण इति स्मृतत्वात् ॥ २ ॥

सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥

सिद्धान्तमाह । सर्वेषामिति । सर्वेषां श्रौतस्मार्तानां संज्ञा स्यात् । वास्तुहोमे वैदिके यदेकया जुहुयाद्दर्विहोमं कुर्यादिति प्रयोगदर्शनात् ॥ ३ ॥

दर्विहोमशब्दस्य होमनामधेयत्वम् । अधि० ३ ।

जुहोतिचोदनानां वा तत्संयोगात् ॥ ४ ॥

सर्वेषां संज्ञा चेदपि जुहोतिचोदनाचोदितानामेव सा संज्ञा न यजतिचोदनाचोदितानाम् । दर्विहोम इति नाम्नि जुहोतिधातुयोगात् ॥ ४ ॥

द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥ ५ ॥

पूर्वमपर्यवसितं स्थितमधिकरणशेषं समापयन् पूर्वोक्तसिद्धान्तमाक्षिपति । द्रव्येति । द्रव्योपदेशात् । दर्विरूपद्रव्योपदेशात् । गुणाभिधानं गुणस्य दर्विरूपस्य विधिः ॥ ५ ॥

न लौकिकानामाचारग्रहणत्वाच्छब्दवतां
चान्यार्थविधानात् ॥ ६ ॥

दूषयति । नेति । न दर्विरूपगुणविधिः लौकिकानां स्मार्तकर्मणां स्मृत्या त्वभिमतया मूलदण्डया दर्व्या जुहोतीत्याचारग्रहणत्वात् । आचारेण ग्रहणं यत्र तत्त्वात् । शब्दवतां वैदिकानामन्यार्थस्य स्रुवेण जुहोति स्रुचा नारिष्ठान् जुहोतीति जुह्वादेर्विधानात् ॥ ६ ॥

दर्शनाच्चान्यपात्रस्य ॥ ७ ॥

दर्शनाच्चेति । भूतेभ्यस्त्वा स्रुचमुद्गृह्णातीति पात्रान्तरदर्शनात् ॥ ७ ॥

तथा ऽग्निहविषोः ॥ ८ ॥

ननु मा ऽस्तु पात्रविधिः तथा ऽपि दर्व्यां होम इति अधिकरणकारकविधानम् । यद्वा, होमद्रव्यत्वेन दर्विविधानमत्राह । तथेति । अग्नेः आहवनीयादेः हविषश्च पुरोडाशादेः श्रुतानां दर्व्या विधानम् ॥ ८ ॥

उक्तश्चार्थे ऽसंबन्धः ॥ ९ ॥

अग्निकार्ये दाहादौ दर्व्या असंबन्धः असामर्थ्यमतो ऽप्यग्निकार्ये दर्व्या न विधानमित्याह । उक्त इति । अर्थे अग्निकार्ये ॥ ९ ॥

दर्विहोमशब्दस्यापूर्वत्वम् । अधि० ४ ।

तस्मिन्सोमः प्रवर्तेताव्यक्तत्वात् ॥ १० ॥

दर्विहोमनामके कर्मणि धर्माः कस्मादानेया इति विचिकित्सायां पूर्वपक्षमाह । तस्मिन्निति । तस्मिन्दर्विहोमे सोमः सोमधर्मः प्रवर्तेत अव्यक्तत्वात् ॥ १० ॥

न वा स्वाहाकारेण संयोगाद्वषट्कारस्य च निर्देशा-
त्तत्रे तेन विप्रतिषेधात् ॥ ११ ॥

सिद्धान्तमाह । न वेति । दर्विहोमस्य स्वाहाकारेण संयोगात् । अग्नये स्वाहा सोमाय स्वाहेति, तत्र सोमादितन्त्रे वषट्कारस्य निर्देशात्तेन स्वाहाकारेण सह वषट्कारस्य विप्रतिषेधाद् विरोधात् ॥ ११ ॥

शब्दान्तरत्वात् ॥ १२ ॥

शब्दान्तरत्वात् । सोमेन यजेतेति यजतिधातुचोदितत्वं सोमस्य, नारिष्टाञ् जुहोतीतिजुहोतिचोदनाचोदितत्वं चेति शब्दभेदात् ॥ १२ ॥

लिङ्गदर्शनाच्च ॥ १३ ॥

सोमघृतेन द्यावापृथिवी आपृणेथामित्यौदुम्बर्यां जुहोतीति औदुम्बरीहोमे आम्नानाद्वसात्रयति भूमिगते स्वाहा करोतीति, यदि जुहोतिचोदनाचोदिते दर्विहोमे सौमिका विध्यन्तः तर्हि वषट्कारमेव विदध्याद् न भूमिगते स्वाहा करोतीति ब्रूयादिति भावः ॥ १३ ॥

उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्राविप्रति-
षिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात्पशुवत् ॥ १४ ॥

यदुक्तमौदुम्बरीहोमे लिङ्गदर्शनं स्वमतसाधकं तदाक्षिपति । उत्तरेति । स्वाहाकारः स्वाहाकारविधिः उत्तरार्थः प्रकृतिभिन्नार्थः यथा साप्तदश्यम् । यथा ऽनारभ्यपठितं सप्तदशानुब्रूयादिति वाक्यं पर्णमयीन्यायेन दर्शपूर्णमासं प्रति गतं तत्र श्रूयमाणपाञ्चदश्येन प्रकरणपठितेन बलवता निवारितं सद् विकृतिभूतेषु पशुमित्रविन्दादिषु सप्तदश सामिधेनीरन्वाहेति श्रूयमाणसाप्तदश्यकेषु निविशते, तथा स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविर्दीयतइति वाक्ये स्वाहाकारेण दानविधिः प्रकृतिभूतदर्शपूर्णमाससोमयोर्वषट्कारावरुद्धयोरनिविशमानः यत्र स्वाहाकारेण होमः श्रुतः तत्रोपसंहारं प्राप्नोति । इत्थं च प्रवृत्तिलिङ्गात् स्वाहाकारप्रवृत्तिलिङ्गात् पूर्वोक्तात्सौमिकधर्मस्य अविप्रतिषेधः अविरोधः । पशुवत् । पशौ सप्तदश सामिधेनीरन्वाहेति साप्तदश्यविधाने ऽपि यथा दर्शपू-

र्णमासधर्माः प्रयाजानुयाजादयो न विरुध्यन्ते तथा स्वाहाकारविधाने ऽपि न सोमधर्मविरोध इति भावः ॥ १४ ॥

**अनुत्तरार्थौ वा अर्थवत्त्वादानर्थक्याद्धि प्राकृतस्योपरोधः स्यात् ॥ १५ ॥**

अस्योत्तरं दृष्टान्तवैषम्येण दर्शयति । अनुत्तरेति । स्वाहाकारप्रदानविधिः अनारभ्याधीतः अनुत्तरार्थः दर्शपूर्णमासरूपप्रकृत्यर्थः नारिष्टपार्वणहोमादौ निवेशसंभवेन प्रकृतार्थत्वात् सफलत्वात् । साप्तदश्यस्य आनर्थक्यात् कुत्रापि निवेशासंभवेन निष्फलत्वात् प्राकृतस्य पाञ्चदश्यस्य उपरोधः निवारकत्वं स्यात् । यतो न प्रकृतावानर्थक्यमतः नोत्तरार्थं, न चेदुत्तरार्थं तर्हि सोमधर्माभावे लिङ्गं सुदृढम् ॥ १५ ॥

**न प्रकृतावपीति चेत् ॥ १६ ॥**

द्वयोरो वषट्कार एष वै सप्तदशः प्रजापतिरिति दर्शपूर्णमासप्रकरणे ऽनुवषट्कारविधानप्रकरणेन साङ्गप्रधानार्थत्वेन नारिष्टहोमादिष्वपि वषट्कारस्य निवेशे तत्रापि स्वाहाकारसमावेशो न संभवतीति शङ्कते। नेति। प्रकृतौ नारिष्टहोमादिष्वपि न स्वाहाकार इति चेत् ॥ १६ ॥

**उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥**

एतद्दूषणं परिहरति । उक्तमिति । दश ते तनुवो यज्ञयज्ञिया इति नारिष्टहोममन्त्रे यजमानो मृतो ऽभूत्स्वाहेति मन्त्रे समवाये प्रकरणेन वषट्कारः प्राप्तः। स्वाहाकारपाठेन शेषवाक्येण स्वाहाकारः एकवाक्यतामापन्न इति वाक्येन स्वाहाकारप्राप्तिः । एवं प्रमाणद्वयेन उभयोः समवाये प्राप्ते पारदौर्बल्यं वाक्यात्परस्य प्रकरणस्य दौर्बल्यमुक्तं तृतीये । तस्मात्स्वाहाकार एवेति भावः ॥ १७ ॥

**तच्चोदना वेष्टेः प्रवृत्तत्वात्तद्विधिः स्यात् ॥ १८ ॥**

पक्षान्तरमुत्थापयति । तदिति । तच्चोदनाः नारिष्टहोमचोदनाः नारिष्टधर्माः दर्विहोमेषु अग्निहोत्रादिषु प्रवर्तेरन् । इष्टेः दर्शपूर्णमासादीष्टिसामान्ये यावत्पशुयागेषु च बहुषु प्रधानोपकाराय प्रवृत्तत्वात् ।

ननु अग्निहोत्रादौ तत्प्रापको विधिर्नेत्यत आह । तद्विधिः अग्निहोत्रादौ नारिष्टादिधर्मप्रवर्तको विधिः स्यादेव । अयं भावः । यः राजधान्यां स्थित्वा बहूनामुपकारं करोति इति नूतनो जानाति स्वस्याप्ययमुपकारं करिष्यतीति निश्चयं संपादयति इति लोकानुभवः, तथा इष्टिपश्वादीनुपकुर्वन् अग्निहोत्रादिकमप्युपकुर्यादित्येवं विधिः कल्प्यते ॥ १८ ॥

## शब्दसामर्थ्याच्च ॥ १९ ॥

शब्दसामर्थ्यात् । जुहोतिचोदनाचोदितत्वसामर्थ्यात् । यथा निर्वपतिचोदनाचोदितत्वसामर्थ्यान्निर्वापादयः सौर्ययागे प्रवर्तन्ते तथा नारिष्टाञ्जुहोति अग्निहोत्रं जुहोतीति चोदनासाम्यादपि तद्धर्माणां प्रवृत्तिरिति भावः ॥ १९ ॥

## लिङ्गदर्शनाच्च ॥ २० ॥

लिङ्गेति । दर्शपूर्णमासयोः परिधयः अन्तर्वेदिश्च साङ्गप्रधानाङ्गमिति तृतीये स्थितम् । तथा च परिधिरन्तर्वेदिश्च नारिष्टानामप्यङ्गम् । सत्यं चाग्निहोत्रे यत्कीटावपन्नेन जुहुयात् अथवा अपशुर्यजमानः स्यादिति कीटयुक्तहविषा होमे होमसुत्वा मध्यमेन पर्णेन द्यावापृथिव्ययर्चा ऽन्तःपरिधि निनयेदिति हविषो ऽन्यत्र विनियोगविधौ अन्तःपरिधिदेशविधानात्परिधयः क्लृप्ताः इति नारिष्टधर्मप्राप्तौ लिङ्गम् । एवमग्नौ अन्तर्वेदि तिष्ठन् साग्निहोत्राणि जुहोतीति । यदि नारिष्टप्रकृतिकत्वं दर्विहोमे न स्यात् तर्हि अन्तःपरिधि निनयति अन्तर्वेदि तिष्ठन्नित्यसंगतं स्यात् । अन्तर्वेदिपरिध्योरप्राप्तिरिति भावः ॥ २० ॥

## तत्राभावस्य हेतुत्वाद्गुणार्थे स्याददर्शनम् ॥ २१ ॥

उत्थापितपक्षान्तरं दूषयति । तत्रेति । गुणार्थे अग्निहोत्रे नारिष्टगुणसाधनार्थे साधनविषये यद्दर्शनं हेतुरुक्तः प्रवृत्तत्वादिति । तद्दर्शनमसाधकम् । तत्र उक्तहेतुरसाधक इति प्रतिज्ञावाक्ये अभावस्य क्व चिन्नारिष्टधर्माणामिध्माबर्हिषामभावस्य हेतुत्वात् । अयं भावः । चातुर्मास्ये महापितृयज्ञानन्तरं त्र्यम्बकेष्टिं चतुष्पथे जुहोतीति दर्विहोमत्वेन विधा-

य तस्मिन् नेध्माबर्हिर्भवति न प्रयाजा इज्यन्ते नानूयाजा इत्यप्रतिष्ठित इत्यादित्यं चरुं पुनरेत्य निर्वपेदिति दोषमुद्भाव्यादित्येष्टिरुक्ता । इध्माबर्हिषोरङ्गप्रधानार्थत्वेन इध्माबर्हिषोरभावेन हेतुना त्र्यम्बकया अप्रतिष्ठितत्वं यत उक्तमतः त्र्यम्बके इध्माबर्हिषोर्नारिष्टधर्मयोरभावः । चतुष्पथे जुहोतीति जुहोतिचोदनया दर्विहोमत्वमस्ति । अतो न नारिष्टहोमप्रकृतिकत्वं दर्विहोमानामिति ॥ २१ ॥

विधिरिति चेत् ॥ २२ ॥

ननु यथा निर्वपतिचोदनाचोदितत्वेन लिङ्गेन प्रकृतिवत्प्राप्ते प्रयाजानां प्राप्तौ न प्रयाजा इज्यन्त इत्यनेन निवृत्तिः तथा नारिष्टधर्माणां जुहोतिचोदनया प्राप्तौ तदङ्गानामिध्माबर्हीरूपाणां निवृत्त्यर्थमेवेदं वचनमित्याशङ्कते । विधिरिति । निवर्तकविधिः ॥ २२ ॥

न वाक्यशेषत्वाद्गुणार्थे च समाधानं नानात्वेनोपपद्यते ॥ २३ ॥

समाधत्ते । नेति । न विधिः किं त्वादित्ययागस्तावकवाक्यशेषत्वाद् अर्थवादत्वात् । चतुर्विंशत्यक्षरा गायत्रीत्यत्र यथा गायत्र्या चतुर्विंशतिवर्णाः । क्लृप्तस्यैवानुवादो ऽयं क्लृप्तत्वादेव नारिष्टधर्माभावसाधक इति भावः । ननु उक्तरीत्या प्राप्तयोरिध्माबर्हिषोर्निवर्तक एवास्त्वित्यत आह । गुणार्थेति । गुणार्थे उक्तवाक्यस्य गुणविध्यर्थत्वे तत्पतद्रूपकं समाधानं नानात्वेन नानावाक्यत्वेन समुपपद्यते शक्यते । यदीध्माबर्हिषोरभावरूपगुणविध्यर्थमेवेदं वाक्यमिति वदेत्, तर्हि इध्माबर्हिर्निषेधकवाक्यमेकं, न प्रयाजा इत्येकं, नानुयाजा इत्येकम्, आदित्यं चरुं निर्वपेदित्येकं, नानावाक्यानि स्युः । अर्थवादत्वे त्वादित्ययागविध्येकवाक्यतापत्ते सत्येकं वाक्यं भवतीति अर्थवाद एव युक्त इति भावः ॥ २३ ॥

एषां वा ऽपरयोर्होमस्तेषां स्यादविरोधात् ॥ २४ ॥

ननु उक्तदोषान्नारिष्टधर्मान् भजन्तु दर्विहोमाः तथा ऽपि गार्हपत्यदक्षिणाग्निहोमधर्मान् लभन्तां, तयोर्होमे इध्माबर्हिषोरनङ्गत्वेन उक्त-

दोषाभावादित्याशङ्कते । एषामिति । एषां यागानां पत्नीसंयाजपिष्टलेपफलीकरणहोमरूपाणामपरयोर्गार्हपत्यदक्षिणाग्न्योर्होमस्तेषां धर्मप्राप्तिः स्यात् पूर्वोक्तप्रवृत्तत्वहेतोः ॥ २४ ॥

## तत्रौषधानि चोद्यन्ते तानि स्थानेन गम्येरन् ॥ २५ ॥

इममपि पक्षं दूषयति। तत्रेति। तत्र दर्विहोमविशेषत्रौषधानि ओषधिद्रव्याणि व्रीह्यादीनि चोद्यन्ते विधीयन्ते, यथा त्र्यम्बके प्रतिपूरुषमेककपालान्निर्वपतीति पुरोडाशविधिः। तानि व्रीह्यादिद्रव्याणि स्थानेन तद्धर्मान् लभेरन्। यथा सौम्यं श्यामाकं चरुमिति विहितो व्रीहिस्थाने विहितो व्रीहिधर्मान् लभते निर्वापादीन्, तथा प्रकृतितः पत्नीसंयाजात् त्र्यम्बके तद्विकृतावाज्यप्राप्तौ तस्य स्थाने विहितः पुरोडाश आज्यधर्मान् प्राप्नुयात् । इदमयुक्तमतो न पत्नीसंयाजप्रकृतिकत्वं दर्विहोमानामिति भावः ॥ २५ ॥

## लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥

ननु मा ऽस्तु पत्नीसंयाजप्रकृतिकत्वं तथा ऽपि पिष्टलेपफलीकरणहोमधर्मं लभतामित्याशङ्कते । लिङ्गादिति । लिङ्गात् पिष्टलेपफलीकरणहोमौ जुहोतीति जुहोतिचोदनालिङ्गाच् शेषयोः उलूखलादौ प्रधानार्थं ग्रहणानन्तरमुर्वरितयोः होमयोः पिष्टलेपफलीकरणयोः, धर्माल्लँभन्तां दर्विहोमा इति पूरणीयम् । तयोरोषधिद्रव्यकत्वेन पूर्वोक्तदोषादिति भावः ॥ २६ ॥

## प्रतिपत्ती तु ते भवतस्तस्मादतद्विकारत्वम् ॥ २७ ॥

इममपि पक्षं परिहरति । प्रतिपत्ती इति । ते पिष्टलेपफलीकरणहोमकर्मणी प्रतिपत्ती गुणकर्मणी शेषद्रव्यसंस्काररूपौ यतो भवतः तस्मादतद्विकारत्वं तत्प्रकृतिकत्वाभाववान् दर्विहोमः । प्रतिपत्तिकर्मणो न क्वापि प्रकृतित्वं दृष्टं, तथा तद्धर्माणामतिदेशो ऽपि न दृष्टः अतः दर्विहोमा अपूर्वा एवेति भावः ॥ २७ ॥

## सन्निपाते विरोधिनांमप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद्वचनादतिदेशः स्यात् ॥ २८ ॥

उक्तार्थमुपसंहरति । सन्निपातइति । विरोधिनां दोषयुक्तानां पूर्वोक्तानां प्रवृत्तत्वादित्यादिहेतूनां सन्निपाते साधकत्वेनोपन्यासे ऽपि साध्यस्य नारिष्टहोमधर्मप्राप्तिरूपस्य अप्रवृत्तिः असिद्धिः इति प्रतीयेत ज्ञातव्यः । नारिष्टहोमतद्धर्मविधीनामुत्पत्तेः पाठस्य दर्शपूर्णमासप्रकरणएवेति व्यवस्थानान्नियमाद् दर्शपूर्णमाससन्निधिपठितानन्यधर्मान्विहाय केवलस्य अर्थस्य नारिष्टधर्मस्य अपरिणेयत्वाद् अनतिदेश्यत्वाद् दर्विहोमा अपूर्वाः। ननु राष्ट्रभृदादीनां ज्योतिष्टोमसंनिधौ पठितानां विवाहादौ कथमतिदेशो ऽत आह । वचनात् प्रत्यक्षवचनाज्, जयाभ्यातानान् राष्ट्रभृतश्च हुत्वेति वचनात् क्वचिदतिदेशः, न त्वानुमानिक इति भावः ॥ २८ ॥

इति श्रीजैमिनिसूत्रवृत्तौ अष्टमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्च अष्टमाध्यायः ॥ ८ ॥



अग्निहोत्रादिप्रयुक्तानां धर्माणामपूर्वप्रयुक्तत्वम् । अधि० १ ।

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु**
**संस्कारः तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥**

सप्तमाष्टमयोर्विचारितौ सामान्यविशेषातिदेशौ । इत्थमतिदेशे सिद्धे सौर्ययागे अग्नये जुष्टं निर्वपामीति मन्त्रस्यातिदेशेन प्राप्तौ अग्निपदस्थाने सूर्यपदस्योहः कार्यो न वेति जिज्ञासा अतिदेशमूलकत्वात्तदनन्तरं नवमे ऊहः चिन्त्यते । प्रयाजाद्यङ्गकलापः दर्शपूर्णमासयोर्विधौ पठितः यजिप्रयुक्त उतापूर्वप्रयुक्त इति । यजिप्रयुक्तत्वे यागत्वाविच्छिन्नमुद्दिश्याङ्गकलापविधानात्सर्वयागार्था इमे इति, यथा प्रकृतौ पाठस्तथैव यावद्यागे पाठो मनोतामन्त्रवत् । अपूर्वप्रयुक्तत्वे दर्शपूर्णमासापूर्वप्रयुक्तत्वस्य प्रकरणेन क्लृप्तत्वेनान्यापूर्वाप्रयुक्तत्वेन धर्माणामन्यत्राकाङ्क्षया ऽतिदेशादतिदेशमूलः ऊहो ऽपि सिध्यति, इति तच्चिन्तनमावश्यकम् । अत उक्तसंशये करणस्य व्यापाराकाङ्क्षत्वादाकाङ्क्षया यजिप्रयुक्ता धर्मा इति पूर्वपक्षे सिद्धान्तमाह । यज्ञेति । यज्ञस्य दर्शपूर्णमासयागस्य यत्कर्म कार्यमपूर्वं तत्प्रधानमतः तत्प्रयुक्ता धर्माः अपूर्वस्य प्राधान्ये हेतुमाह । तद्धीति । हि यस्मात्तदपूर्वं कर्तव्यं तथा चोदनाभूतं कार्यत्वेन विधिगम्यमतः प्रधानं यत्कर्तव्यत्वेन ज्ञातं तस्यैव केन कथमित्याकाङ्क्षा । यागकर्तव्यताया लोकतः अवगतत्वेन शास्त्रापेक्षाभावात् । यागेनापूर्वं कर्तव्यमित्युक्ते अपूर्वस्यातीन्द्रियतया तदितिकर्तव्यताया लोकतो ज्ञातुमशक्यतया भवत्याकाङ्क्षा शास्त्रेणैवेति । समिधो यजतीत्यादिवाक्यानां तत्परकत्वमतः तदपूर्वेणान्वये तत्रैव चरितार्थमतः अपूर्वान्तरं न प्रसरतीति तत्र चोदकशास्त्रेणैव तत्र प्राप्तिरिति सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यत्र ब्रह्मवर्चसापूर्वं सौर्ययागेनाग्नेययागवत्कर्तव्यमिति विधिवाक्ये आग्नेययागवदिति कल्प्यते । आग्नेययागतुल्यतया सौर्ययागानुष्ठानं प्राप्तमाग्नेययागे अग्नये जुष्टं निर्वपामीत्यत्र अपूर्वसंबन्धिदेवतास्मरणं देवतावाचकाग्निपदेनेति क्लृप्तं तस्यापि सौर्ययागे प्राप्तौ मन्त्रे तथाबोधकपदाभावेनागत्या ऊह एव शरणीकार्य इत्यूहविचार आवश्यक इति भावः । ननु अवहन-

नादीनां तण्डुलादिनिष्पत्तिद्वारा यागसाधनत्वं प्रत्यक्षगम्यं कथमपूर्वार्थं भवेदत्राह । तस्येत्यादि । तस्य अपूर्वस्य तदपूर्वसंबन्धिद्रव्येषु व्रीह्यादिषु संस्कारः अवहननादिसंस्कारः । सो ऽपि तत्प्रयुक्तः अपूर्वप्रयुक्तः, अवहननस्य तदर्थत्वात् । अपूर्वार्थत्वात् । अवहतव्रीहीणां फलं न वितुषीभावपूर्वकतण्डुलनिष्पत्तिः । तस्य लोकतो ज्ञातुं शक्यत्वात् । किं त्ववहतव्रीहीणामुद्देश्यतावच्छेदकमपूर्वसाधनत्वमवहतव्रीहिभिः अपूर्वसाधनमुत्पादयेदित्यपूर्वसाधनत्वेन रूपेणैवावघातोद्देश्यतावच्छेदकत्वम् । तस्य नैवारं चरुं निर्वपेदित्यत्र नीवारेष्वपि सत्त्वेनावघातादीनामूहः सिद्ध इति भावः ॥ १ ॥

प्रोक्षणस्यापूर्वप्रयुक्तत्वम् । अधि० २ ।

## संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥

प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति दर्शपूर्णमासयोः श्रुतम् । तत्र प्रोक्षणमवहननप्रयुक्तमपूर्वप्रयुक्तं वेति संशये पूर्वपक्षमाह । संस्कार इति । संस्कारे अवहननाख्यसंस्कारे युज्यमानानां जनकताख्यसंबन्धेन संबध्यमानानां प्रोक्षणादीनां तादर्थ्यादवहननार्थत्वात्तत्प्रयुक्तम् अवहननप्रयुक्तं प्रोक्षणं स्यात् । प्रोक्षिताभ्यां हन्तीति वाक्येन उलूखलमुसलद्वारा हन्त्यर्थत्वं प्रतीयमानं त्यक्तुमशक्यमिति तदर्थत्वे हन्तिप्रयुक्तत्वं सिद्धम् । इत्थं च राजसूये नैर्ऋतं चरुं परिवृत्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणेति कर्मणि नखविदलनस्य विहितत्वेनावहनननिवृत्तौ नखेषु प्रोक्षणनिवृत्तिरित्यभिप्रायः ॥ २ ॥

## तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्माद् यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥

सिद्धान्तमाह । तेनेति । तेनार्थेन अवहननरूपकार्येण यज्ञस्य अपूर्वस्य संयोगात् । अवहननस्यापि पूर्वोक्तन्यायेन अवहननसंस्कृतव्रीहिभिः तण्डुले अपूर्वजनकत्वं भावयेदिति अपूर्वेणैव संबन्धात् । तस्मादेव हेतोर्धर्मस्य उलूखलमुसलधर्मस्य प्रोक्षणस्य संबन्धः प्रयोगसंबन्धः प्रयोगे अनुष्ठानमिति यावत् । यज्ञप्रयुक्तमपूर्वप्रयुक्तं स्यात् । संस्कारस्य प्रोक्षणस्यापि अपूर्वार्थत्वात् । अयं भावः । प्रोक्षणस्य अवहननार्थत्वे प्रोक्षणं विना ऽपि

अग्निहोत्रादिधर्माणामपूर्वप्रयुक्तत्वम् । अधि· १ ।

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारः तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥**

सप्तमाष्टमयोर्विचारितौ सामान्यविशेषातिदेशौ । इत्यतिदेशे सिद्धे सौर्ययागे अग्नये जुष्टं निर्वपामीति मन्त्रस्यातिदेशेन प्राप्तौ अग्नि-पदस्थाने सूर्यपदस्योहः कार्यो न वेति चिन्तायां अतिदेशमूलकत्वात्तदन-न्तरं नवमे ऊहः चिन्त्यते । प्रयाजाद्यङ्गकलापः दर्शपूर्णमाससन्निधौ पठितः यजिप्रयुक्त उतापूर्वप्रयुक्त इति । यजिप्रयुक्तत्वे यागत्वावच्छिन्न-मुद्दिश्याङ्गकलापविधानात्सर्वयागार्था इमे इति, यथा प्रकृतौ पाठस्तथैव यावद्यागे पाठो मनोतामन्त्रवत् । अपूर्वप्रयुक्तत्वे दर्शपूर्णमासापूर्वप्रयुक्त-त्वस्य प्रकरणेन क्लृप्तत्वेनान्यापूर्वाप्रयुक्तत्वेन धर्माणामन्यत्राकाङ्क्षया ऽति-देशादतिदेशमूलः ऊहो ऽपि सिध्यति, इति तच्चिन्तनमावश्यकम् । अत्र उक्तसंशये करणस्य व्यापाराकाङ्क्षत्वात्स्वाकाङ्क्षया यजिप्रयुक्ता धर्मा इति पूर्वपक्षे सिद्धान्तमाह । यज्ञेति । यज्ञस्य दर्शपूर्णमासयागस्य यत्कर्म कार्य-मपूर्वं तत्प्रधानमतः तत्प्रयुक्ता धर्माः अपूर्वस्य प्राधान्ये हेतुमाह । तद्धि-ति । हि यस्मात्तदपूर्वं कर्तव्यं तथा चोदनामूलं कार्यत्वेन विधिगम्यमतः प्रधानं यत्कर्तव्यत्वेन ज्ञातं तस्यैव केन कथमित्याकाङ्क्षा । यागकर्तव्यताया लोकतः अवगतत्वेन शास्त्रापेक्षाभावात् । यागेनापूर्वं कर्तव्यमित्युक्ते अपू-र्वस्यातीन्द्रियतया तद्दितिकर्तव्यताया लोकतो ज्ञातुमशक्यतया भवत्या-काङ्क्षा शास्त्रेणैवेति । समिधो यजतीत्यादिवाक्यानां तत्परकत्वमतः तदपूर्वेणान्वये तत्रैव चरितार्थमतः अपूर्वान्तरं न प्रसरतीति तत्र चोद-कशास्त्रेणैव तत्र प्राप्तिरिति सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यत्र ब्रह्मवर्चसापूर्वं सौर्ययागेनाग्नेययागवत्कर्तव्यमिति विधिवाक्ये आग्नेयया-गवदिति कल्प्यते । आग्नेययागतुल्यतया सौर्ययागानुष्ठानं प्राप्तमाग्नेययागे अग्नये जुष्टं निर्वपामीत्यत्र अपूर्वसंबन्धिदेवतास्मरणं देवतावाचकाग्निप-देनेति क्लृप्तं तस्यापि सौर्ययागे प्राप्तौ मन्त्रे तथाबोधकपदाभावेनागत्या ऊह एव शरणीकार्य इत्यूहविचार आवश्यक इति भावः । ननु अवहन-

नादीनां तण्डुलादिनिष्पत्तिद्वारा यागसाधनत्वं प्रत्यक्षगम्यं कथमपूर्वार्थं भवेदत्राह । तस्येत्यादि । तस्य अपूर्वस्य तदपूर्वसंबन्धिद्रव्येषु व्रीह्यादिषु संस्कारः अवहननादिसंस्कारः । सो ऽपि तत्प्रयुक्तः अपूर्वप्रयुक्तः, अवहननस्य तदर्थत्वात् । अपूर्वार्थत्वात् । अवहतव्रीहीणां फलं न वितुषीभावपूर्वकतण्डुलनिष्पत्तिः । तस्य लोकतो ज्ञातुं शक्यत्वात् । किं त्ववहतव्रीहीणामुद्देश्यतावच्छेदकमपूर्वसाधनत्वमवहतव्रीहिभिः अपूर्वसाधनमुत्पादयेदित्यपूर्वसाधनत्वेन रूपेणैवावघातोद्देश्यतावच्छेदकत्वम् । तस्य नैवारं चरुं निर्वपेदित्यत्र नीवारेष्वपि सत्त्वेनावघातादीनामूहः सिद्ध इति भावः ॥ १ ॥

प्रोक्षणस्यापूर्वप्रयुक्तत्वम् । अधि० २ ।

## संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥

प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति दर्शपूर्णमासयोः श्रुतम् । तत्र प्रोक्षणमवहननप्रयुक्तमपूर्वप्रयुक्तं वेति संशये पूर्वपक्षमाह । संस्कार इति । संस्कारे अवहननाख्यसंस्कारे युज्यमानानां जनकताख्यसंबन्धेन संबध्यमानानां प्रोक्षणादीनां तादर्थ्यादवहननार्थत्वात्तत्प्रयुक्तम् अवहननप्रयुक्तं प्रोक्षणं स्यात् । प्रोक्षिताभ्यां हन्तीति वाक्येन उलूखलमुसलद्वारा हन्त्यर्थत्वं प्रतीयमानं त्यक्तुमशक्यमिति तदर्थत्वे हन्तिप्रयुक्तत्वं सिद्धम् । इत्थं च राजसूये नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणेति कर्मणि नखविदलनस्य विहितत्वेनावहनननिवृत्तौ नखेषु प्रोक्षणनिवृत्तिरित्यभिप्रायः ॥ २ ॥

## तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्माद् यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥

सिद्धान्तमाह । तेनेति । तेनार्थेन अवहननरूपकार्येण यज्ञस्य अपूर्वस्य संयोगात् । अवहननस्यापि पूर्वोक्तन्यायेन अवहननसंस्कृतव्रीहिभिः तण्डुले अपूर्वजनकत्वं भावयेदिति अपूर्वेणैव संबन्धात् । तस्मादेव हेतोर्धर्मस्य उलूखलमुसलधर्मस्य प्रोक्षणस्य संबन्धः प्रयोगसंबन्धः प्रयोगे अनुष्ठानमिति यावत् । यज्ञप्रयुक्तमपूर्वप्रयुक्तं स्यात् । संस्कारस्य प्रोक्षणस्यापि अपूर्वार्थत्वात् । अयं भावः । प्रोक्षणस्य अवहननार्थत्वे प्रोक्षणं विना ऽपि

अवहननस्योत्पत्त्या व्यभिचारेण तदर्थत्वासंभवेन श्रूयमाणमपि अवहननं परित्यज्य लक्षणया अवहननसाध्यतण्डुलनिष्ठापूर्वजनकत्वं प्रोक्षणस्यापि भाव्यमित्यगत्या वाच्यम् । तथा प्रोक्षिताभ्यामित्यस्य प्रोक्षितयादृशद्रव्यव्यापारेण तण्डुले अपूर्वजनकत्वं सिध्येत् तं व्यापारं कुर्यादिति । इत्थं च प्रोक्षणस्याप्यपूर्वप्रयुक्तत्वाद्राजसूयेष्टावपि तण्डुलवृत्त्यपूर्वजनकत्वस्य प्रोक्षणप्रयोजकस्य सत्त्वात्तत्रेषु प्रोक्षणस्येह आवश्यक इति ।

स्वरस्य दीक्षणीयापूर्वप्रयुक्तत्वम् । वर्णकान्तरम् ।

यद्वा ज्योतिष्टोमे दीक्षणीयासन्निधौ यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयादिति श्रुतम् । अयं धर्मः परमापूर्वप्रयुक्त उत दीक्षणीयापूर्वप्रयुक्त इति संशये पूर्वपक्षमाह । संस्कारइति । संस्कारे दीक्षणीयारूपे यजमानसंस्कारभूते कर्मणि युज्यमानानां विधीयमानानामुक्तस्वरविशेषाणां तादर्थ्यात्पारमापूर्वार्थ्यात् तत्प्रयुक्तत्वं परमापूर्वप्रयुक्तत्वं दीक्षणीयापूर्वद्वारा परमापूर्वसंबन्धाद्वरं साक्षादेव परमापूर्वसंबन्धकल्पनम् । तथा चाश्वमेधे दीक्षणीयाऽभावे ऽपि परमापूर्वरूपप्रयोजकसत्त्वात् तत्रापि स्वरविशेषस्य यावत्या वाचा कामयेतेत्यस्य प्रवृत्तिरिति भावः । इति पूर्वपक्षः । सिद्धान्तमाह । तेनेति । तेन दीक्षणीयापूर्वरूपेणार्थेन यज्ञस्य दीक्षणीयाऽपूर्वस्य संयोगाज्जन्यजनकभावसंबन्धात् । संस्कारस्य यजमानसंस्काररूपस्य दीक्षणीयारूपस्येति फलितम् । यो यज्ञः अपूर्वं तत्प्रयुक्तं स्यात् संस्कारस्य दीक्षणीयायास्तदर्थत्वात् । दीक्षणीयापूर्वार्थत्वात् । अयं भावः । स्वरस्य दीक्षणीयास्वरूपार्थता न संभवति । तेन विना ऽप्युपपत्तेः । अतः दीक्षणीयापदस्य दीक्षणीयापूर्वार्थे लक्षणां स्वीकृत्य स्वरविध्युद्देश्यत्वं, परमापूर्वार्थत्वपक्षे दीक्षणायापदेन दीक्षणीयापूर्वं लक्षणीयं, पुनश्च तस्य दीक्षणीयापूर्वजन्ये परमापूर्वं लक्षणेति लक्षितलक्षणाकल्पनं, तच्चायुक्तमतः दीक्षणीयापूर्वप्रयुक्तम् । अश्वमेधे तदभावाद् न स्वरोह इति भावः ॥ ३ ॥

फलदेवतासंबद्धधर्माणामप्यपूर्वप्रयुक्तत्वम् । अधि० ३ ।

## फलदेवतयोश्च ॥ ४ ॥

दर्शपूर्णमासयोः, अगन्म सुवः सुवरगन्मेति, अग्नेरहमुज्जितिमनूज्जेषमिति मन्त्रौ पठितौ । तत्र द्वाभ्यां मन्त्राभ्यां दर्शपूर्णमासजन्यस्वर्गस्य

तत्संबन्धिदेवतायाश्च प्रकाशो लिङ्गेन भवति । अनयोर्मन्त्रयोः स्वर्गयागीयदेवताप्रकाशप्रयुक्तत्वमुतापूर्वप्रयुक्तत्वमिति संशये पूर्वपक्षमाह । फलेति । फलदेवतयोः मन्त्रोच्चारणप्रयोजकत्वम् । तथा च सौर्ययागे स्वर्गरूपफलस्य अग्निरूपदेवतायाश्चाभावेन प्रयोजकाभावाद् मन्त्रनिवृत्तौ तत्रोहाप्रसक्तिरिति भावः ॥ ४ ॥

## न चोदनातो हि ताद्गुण्यम् ॥ ५ ॥

सिद्धान्तमाह । नेति । न मन्त्रोच्चारणस्य फलदेवतास्वरूपप्रकाशनं प्रयोजकं, स्वरूपतः तस्य प्रकाशस्य आनर्थक्यात् । किं तु अपूर्वस्य कर्तव्यतया चोदनातः फलदेवतास्वरूपप्रकाशद्वारा अपूर्वार्थत्वात्ताद्गुण्यमपूर्वाङ्गत्वम् । लिङ्गेन कल्पितमन्त्रविध्योः मन्त्राभ्यां फलदेवताप्रकाशनद्वारकमपूर्वं कुर्यादित्यर्थः संपन्नः । अपूर्वार्थत्वे विकृतावपि प्रयोजकापूर्वसत्त्वान्मन्त्रयोरतिदेशसिद्धौ अगन्म ब्रह्मवर्चसमित्याद्यूहसिद्धिरिति भावः ॥ ५ ॥

धर्माणां देवताप्रयुक्तत्वाभावः । अधि० ४ ।

## देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥

यदुक्तं फलस्य स्वरूपस्य स्मरणं व्यर्थमिति तदङ्गीकुर्मः । देवतायाः स्मरणं व्यर्थमिति वक्तुमशक्यं, सर्वस्य यागस्य तदर्थत्वेन मन्त्रस्य तदर्थत्वे किमु वक्तव्यमिति पूर्वाधिकरणसिद्धान्तमाक्षिपन् पूर्वपक्षमाह । देवता वेति । देवता इन्द्रादिः सर्वान्सांगप्रधानरूपान् कर्माणि प्रयोजयेत् । भोजनस्य देवताभोजनरूपस्य यागस्य तदर्थत्वाद् देवतार्थत्वात् । अतिथिवत् । यथा अतिथये दीयमानमन्नं तदर्थं, तथा कर्तुः प्रियतमं कर्म, संप्रदानं कर्मणः प्रियतमम् । तथा च यत्कर्तुः प्रियतमं तस्य प्रियतमं कर्तुरपि परम्परया प्रियतममेवेति तदर्थत्वं युक्तमिति भावः ॥ ६ ॥

## अर्थापत्त्या च ॥ ७ ॥

अर्थापत्त्या च अर्थानां निखिलफलानामापत्तिः स्वामित्वाद्देवतायाः । उक्तार्थं मन्त्रः प्रब्रूते । इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम् । इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्यइन्द्र

इति । सर्वाधिपत्यमिन्द्रे दर्शयति । यस्य स्वर्गादेः पतिरिन्द्रः तत्प्रसादं विना तल्लाभासंभवात्कर्मणो देवता प्रधानमिति भावः ॥ ७ ॥

**ततश्च तेन संबन्धः ॥ ८ ॥**

यतः सर्वफलानां स्वामी ततः देवतायाः सकाशादेव तेन स्वर्गादिना कर्तुः संबन्धः । देवताप्रसादेन तद्दत्तमेव फलं लभतइति भावः ॥ ८ ॥

**अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः ॥ ६ ॥**

सिद्धान्तमाह । अपि वेति । शब्दपूर्वत्वाद् एकपदश्रुतिगम्यत्वात् । यागेन स्वर्गं भावयेदित्येव बोधात् । यज्ञस्य यागस्य कर्म कार्यमपूर्वं प्रधानं तत्प्रति गुणत्वेन देवताश्रुतिः । अपूर्वप्रधानत्वेन तदर्थत्वं देवतानां युक्तमतः देवता अङ्गभूता न प्रधानमिति भावः ॥ ९ ॥

**अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वात् ॥ १० ॥**

यच्चोक्तमतिथिवदिति तत्परिहरति । अतिथाविति । अतिथौ भोजनादिदाने तत्प्रधानत्वमतिथिप्रधानत्वं तस्यातिथ्यस्य प्रीतिप्रधानत्वात् । प्रीतिप्रधानत्वस्य शब्दगम्यत्वात् । "अतिथिर्येन संतुष्टः तथा कुर्यात्प्रयत्नत" इतिवचनगम्यत्वात् । कर्मणि देवताप्रीतिविधानस्याभावोऽतो विषमो दृष्टान्तः । इतोऽधिकसाधनानि मत्कृतविहारवाप्यां द्रष्टव्यानि ॥ १० ॥

प्रोक्षणादीनामपूर्वप्रयुक्तत्वम् । अधि॰ ५ ।

**द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥**

दर्शपूर्णमासयोः व्रीहीन्प्रोक्षतीति । तथा त्रीन्परिधींऽस्त्रिः समिधः इति मन्त्रः । शूर्पेण जुहोति, तेन ह्यन्नं क्रियतइति । चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्राऽमावास्यामिति । एवं रीत्या श्रुतेषु वाक्येषु प्रथमवाक्ये व्रीहीनिति द्वितीयाश्रुत्या व्रीहीणां प्रोक्षणप्रयोजकत्वं त्रीन्परिधीनित्यत्र त्रित्वविशिष्टपरिधयः मन्त्रोच्चारणे । तृतीये शूर्पेणेत्यत्र शूर्प-

मिति विभक्तिविपर्यासाग्म इति शूर्पे होमेन संस्कुर्यादिति क्त्वाचिन्त्योदाहरणम् । तत्र शूर्पार्थो होमः । चतुर्थे दर्शत्रिकं पूर्णमासत्रिकं समुदायः अभिमर्शनप्रयोजक इत्यभिप्रायेण पूर्वपक्षमाह । द्रव्येति । द्रव्यं व्रीह्यादिः संख्या परिधिगतत्रित्वादिः होमे शूर्पगतमन्त्रहेतुत्वं चतुर्होत्रा ऽभिमर्शने पौर्णमासीयागगतं समुदायत्वं प्रयोजकं श्रुतिसंयोगात् । द्वितीयाश्रुतिसंयोगात् । यत्रोक्तानि प्रयोजकानि न सन्ति तत्र न तत्प्रयोज्यानां प्रवृत्तिरिति भावः ॥ ११ ॥

## अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १२ ॥

उक्तार्थे हेत्वन्तरमाह । अर्थेति । अर्थेन कारिते प्रयोजिते उक्तप्रोक्षणादिरूपे धर्मे सति द्रव्येण मैत्रावरुणग्रहणसंयुक्तसोमरसेन पयःसंयोगरूपव्यवस्था न स्यात् । मैत्रावरुणं पयसा श्रीणातीति वाक्ये पयसा श्रपणं प्रयोजकमपि तुल्ययुक्त्या अपूर्वसाधनत्वप्रयुक्तमपूर्वसाधनत्वं दशसु ग्रहेषु चमसेषु च तुल्यम् । तथा च सर्वत्र पयःसंयोगापत्तिरिति द्रव्यादीनामेव प्रयोजकत्वमिति भावः ॥ १२ ॥

## अर्थो वा स्यात् प्रयोजनमितरेषामचोदना-<br>त्तस्य गुणभूतत्वात् ॥ १३ ॥

सिद्धान्तमाह । अर्थो वेति । अर्थः अपूर्वं प्रयोजनम् उक्तधर्मप्रयोजकं स्यात् । इतरेषां द्रव्यादीनां कर्तव्यत्वेनाचोदनात् । यस्य कर्तव्यतया विधानं तस्य धर्माकाङ्क्षा नान्यस्य । अतः तस्य द्रव्यादेरपूर्वं प्रति गुणभूतत्वात् । अङ्गभूतत्वात् । इतरं प्रति गुणभूतस्य न प्रयोजकत्वसंभव इति भावः ॥ १३ ॥

## अपूर्वत्वाद् व्यवस्था स्यात् ॥ १४ ॥

यदुक्तमपूर्वार्थत्वपक्षे पयसा मैत्रावरुणं श्रीणातीति धर्मव्यवस्था न स्यादिति तदुत्तरमाह । अपूर्वत्वादिति । अपूर्वत्वाद् मैत्रावरुणसंबन्ध्यपूर्वत्वात् तदीयापूर्वत्वस्योद्देश्यतावच्छेदकत्वाद् व्यवस्था स्यात् । न हि मैत्रावरुणापूर्वत्वं ग्रहान्तरापूर्वे ऽस्ति यतो ऽव्यवस्था स्यादिति भावः ॥ १४ ॥

## तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥

अपूर्वप्रयुक्तत्वे यो ऽयमतिप्रसङ्गो दर्शितः स द्रव्यप्रयुक्तत्वे धर्मस्य प्रोक्षणादेः सर्व एवेत्याह । तदिति । तत्प्रयुक्तत्वे उक्तधर्माणां द्रव्यप्रयुक्तत्वे धर्मस्य प्रोक्षणादेः सर्वविषयत्वमापणस्थव्रीह्यादिसर्वव्रीहीणां प्रोक्षणविधिविषयत्वं स्यात् । आपणव्रीहीणामपि प्रोक्षणापत्तिरिति भावः ॥ १५ ॥

## तद्युक्तस्येति चेत् ॥ १६ ॥

पूर्वपक्षी स्वदोषं परिहरति । तद्युक्तस्येति । तद्युक्तस्य प्रकरणयुक्तस्योद्देश्यत्वमापणस्थाश्च न यागोद्देशेन परिगृहीता इत्यदोष इति भावः ॥ १६ ॥

## नाश्रुतित्वात् ॥ १७ ॥

सिद्धान्ती पुनर्दोषं दृढीकरोति । नेति । न प्रकृतव्रीहीणामेवोद्देश्यत्वमश्रुतत्वात् । तथा चोद्देश्यतावच्छेदकसंकोचे मानाभाव इति भावः ॥ १७ ॥

## अधिकारादिति चेत् ॥ १८ ॥

पुनः परिहरति । अधिकारादिति । अधिकाराद् यागाधिकाराद् अविशेषश्रवणे ऽपि यागाधिकाराद् यागीयव्रीहीणामेव प्रोक्षणमिति भावः ॥ १८ ॥

## तुल्येषु नाधिकारः स्यादचोदितश्च संबन्धः पृथक् सत्तां यज्ञार्थेनाभिसंबन्धस्तस्माद् यज्ञप्रयोजनम् ॥ १९ ॥

दूषयति । तुल्येष्विति । ये भोगार्थाः तएव यागार्था अपि भवितुमर्हन्तीति तुल्येषु अविशेषेषु नाधिकारः स्यात् । यतो यज्ञार्थत्वसंबन्धः अचोदितः शास्त्रेणानिर्दिष्टः पृथक् सत्तामुपभोगसाधनव्रीहिभ्यः पृथग् जातिं, लोकतो ऽपि नोपलभामहे इति योज्यम् । अतः सर्वेषां व्रीहीणां यज्ञेनाभिसंबन्धः । अतो यज्ञस्य यज्ञान्तःपातिप्रोक्षणस्य प्रयोजनम् उद्देश्यं सर्वे व्रीहयः स्युः । मन्मते पुरोडाशनिष्पादनद्वारा ऽपूर्वजनकत्वं येषु तेष्वेव प्रोक्षणं नान्यत्रेति भावः ॥ १९ ॥

अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वम् । अधि० ६ ।

## देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥

त्सरा वा एष यज्ञस्य तस्माद्यत्किं चित्प्राचीनमग्नीषोमीयात्तेनोपांशु प्रचरन्तीति । तत्र प्रागग्नीषोमीयाद्दीक्षणीयाद्यङ्गापूर्वं तत्प्रयुक्तमुपांशुत्वमुत परमापूर्वप्रयुक्तमिति संशये सिद्धान्तेनोपक्रमते । देशेति । अग्नीषोमीयात्प्राग् रूपो यो देशः तेन निबद्धमुपांशुत्वं तत्तेषां देशलक्षितदीक्षणीयादीनां स्यात् । तथा चाग्नीषोमीयात्प्राग् यानि प्रधानापूर्वस्यारादुपकारकाणि यच्च प्रधानद्रव्यसंस्कारकं तत्प्रयुक्तमिति फलितम् । श्रुतिनिर्देशाद् उक्तवाक्येन निर्देशात् । ननु देशेन कर्म कथं लक्ष्यं संबन्धाभावादत आह । तस्य कर्मणः तत्र देशे सत्त्वात् । आधाराधेयभावः शक्यसंबन्ध इति भावः ॥ २० ॥

## यज्ञस्य वा तत्संयोगात् ॥ २१ ॥

पूर्वपक्षमाह । यज्ञस्येति । यज्ञस्य प्रधानापूर्वस्य प्रयोजकत्वं स्यात् । तस्य च यज्ञशब्दस्य संयोगाद् वाक्ये सत्त्वात् । वाक्ये श्रूयमाणयज्ञशब्दस्य त्सरेत्यनेन संबन्धे अर्थवादघटकत्वं, यज्ञस्य प्राचीनमिति योजने विधिघटकत्वं, विधिवाक्यं प्रधानम् । अर्थवादः तच्छेषः । प्रधानसम्बन्धेच्छा सर्वेषामेवास्तीति विधिवाक्यघटकत्वमेव युक्तमिति कुण्डपायिनामयने प्रागग्नीषोमीयान् मासाग्निहोत्रादीनां सत्त्वात्तत्रापि उपांशुधर्मः ऊह्यः । तत्प्रयोजकपरमापूर्वसत्त्वादिति भावः ॥ २१ ॥

## अनुवादश्च तदर्थवत् ॥ २२ ॥

यज्ञस्येति षष्ठ्यन्तस्य अर्थवादकुक्षिप्रवेशमङ्गीकृत्यापि परमापूर्वप्रयुक्तत्वं साधयति । अन्विति । अनुवादश्च अर्थवादश्चेदपि यज्ञस्य त्सरेत्यन्वये ऽपीत्यर्थः । तदर्थवाक्यमर्थवत् परमापूर्वप्रयोजकत्वज्ञापकम् । तथा हि, त्सरा वा एष यज्ञस्येत्यत्र त्सराशब्दः छद्मगत्यर्थकः । पक्षिणः ग्रहणार्थमशब्दं पादं क्षिपति शकुनिग्राही सा त्सरा गतिः । तत्र मन्दं व्याधस्य

पादक्षेपः शकुनिग्रहार्थः सा शकुनेः त्वरा । अत्र शकुनिस्थानापन्नो यज्ञः तद्ग्रहमुपांशुत्वं यज्ञस्य त्वरा । अतो यज्ञार्थ इति भावः ॥ २२ ॥

वाङ्नियमस्यावान्तरापूर्वप्रयुक्तत्वम् । अधि· ७ ।

## प्रणीतादि तथेति चेत् ॥ २३ ॥

एवं स्थिते पूर्वपक्षे मध्ये विचारान्तरम् । यत्रं तनिष्पन्तावध्वर्युयजमानौ वाचं यच्छतः तां वाचं हविष्कृता विसृजेयातामिति । अत्र वाग्नियमः परमापूर्वप्रयुक्तो ऽवान्तरापूर्वप्रयुक्तो वेति संशये पूर्वपक्षमाह । प्रणीतादीति । प्रणीतादि प्रणीताप्रणयनादिसंबन्धिवाङ्नियमो ऽपि तथा परमापूर्वप्रयुक्तः यज्ञशब्दश्रवणात् ॥ २३ ॥

## न यज्ञस्याश्रुतित्वात् ॥ २४ ॥

सिद्धान्तमाह । नेति । न परमापूर्वप्रयुक्तः यज्ञस्याश्रुतित्वादविवक्षितत्वात् । वाङ्नियमस्योद्देश्यौ अध्वर्युयजमानौ तत्र विशेषणं यत्रं तनिष्पन्ताविति उद्देश्यविशेषणमविवक्षितमिति भावः । वाग्यमस्तुत्यर्थं पाठः ॥ २४ ॥

## तद्देशानां वा संघातस्याचोदितत्वात् ॥ २५ ॥

पूर्वस्थितस्य पूर्वपक्षस्योत्तरमाह । तदिति । सः अग्नीषोमीयप्रायूपः देशो येषां तेषां पूर्वोक्तानामुपांशुत्वप्रयुक्तत्वं न परमापूर्वप्राक्सङ्घातः तस्य सङ्घातस्याचोदितत्वात् । यदि यज्ञस्य प्राचीनः सङ्घातो यदर्थः, तदा बहुपदव्यवहितेन साकमन्वयः अग्नीषोमीयादिति पञ्चम्यन्तस्यानन्वयप्रसङ्गश्च । तस्मात्पूर्वपक्षो न युक्त इति भावः ॥ २५ ॥

इष्टकासु सकृद् विकर्षणाद्यनुष्ठानम् । अधि· ८ ।

## अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥ २६ ॥

अग्नौ श्रूयते, मण्डूकेनाग्निं विकर्षतीति । अत्र कर्षणं प्रतीष्टकमुत समुदायस्य सकृदिति संशये पूर्वपक्षमाह । अग्निधर्म इति । अग्निधर्मः कर्षणादिरूपं प्रतीष्टकं स्यात् । अग्निपदवाच्यस्य इष्टकासमुदायरूपत्वात् । पौर्णमासीवत् । यथा आग्नेयोपांश्वग्नीषोमीयसङ्घाते पौर्णमासशब्दः । सङ्घातस्तु न अवयवादतिरिक्त इति इष्टकानामेव प्राधान्यात्प्रतिप्रधानमङ्गावृत्तिन्यायेन कर्षणावृत्तिरिति भावः ॥ २६ ॥

अग्नेर्वा स्याद् द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २७ ॥

सिद्धान्तमाह । अग्नेरिति । अग्नेः इष्टकाभ्यो ऽतिरिक्तस्य इष्टकाभ्यो जातस्य अग्निपदवाच्यस्य कर्त्तव्यं संस्कारः स्यात् । द्रव्यस्य अग्निपदवाच्यस्यैकत्वात्सकृदेव कर्त्तव्यम् । नन्विष्टकाभ्यो ऽग्नेरतिरिक्तत्वे किं मानमित्यत्राह । इतरासामिष्टकानामग्न्यर्थत्वात् । यदिष्टकाभिरग्निं चिनुतइत्यत्र द्वितीयातृतीयाभ्यां साध्यसाधनभावप्रतीतेः तयोर्भेद आवश्यक इति भावः ॥ २७ ॥

चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात् ॥ २८ ॥

पौर्णमासीवदिति दर्शितदृष्टान्तं निराकरोति । चोदनेति । पौर्णमास्यां तथात्वं समुदायवाचकत्वं युक्तम् । चोदनानां विधीनां समुदायात् । यथा ऽवयवावयविनौ साध्यसाधकभावापन्नौ उक्तश्रुतिभ्यामवगतौ तथा ऽवयवावयविनोः तथात्वप्रतिपादकं मानमस्ति । अतो वैषम्यमिति भावः ॥ २८ ॥

उत्तमान्येवाह्नां पत्नीसंयाजान्तत्वम् । अधि० ६ ।

पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २९ ॥

द्वादशाहे श्रूयते, पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते । अत्र यावदह्नां पत्नीसंयाजान्तत्वमुत केषां चिदिति संशये पूर्वपक्षमाह । पत्नीति । स्पष्टो ऽर्थः ॥ २९ ॥

लिङ्गाद्वा प्रागुत्तमात् ॥ ३० ॥

सिद्धान्तमाह । लिङ्गादिति । प्रागुत्तमात् चरमदिनात्प्राग् अह्नां तथात्वं लिङ्गाद् अर्थवादस्थलिङ्गात् । पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते न बहिरनुप्रहरत्यसंस्थितो हि यज्ञ इति । असंस्थितः असमाप्तः । एतेन यस्मिन्नहन्यसंस्थितो यज्ञः तस्मिन्नहनि पत्नीसंयाजान्तत्वमिति सिद्धम् । इत्थं च चरमे ऽहनि यज्ञस्य संस्थितत्वात्तत्र न तथात्वमिति भावः ॥ ३० ॥

अनुवादो वा दीक्षा यथा नक्तं संस्थापनस्य ॥ ३१ ॥

उक्तलिङ्गमन्यथोपपादयन् सिद्धान्तमाक्षिपति । अनुवाद इति । अनुवादः असंस्थित इत्यर्थवादः यथा दीक्षा दीक्षोन्मोचनवचनं नक्तसंस्थाप-

नविध्यर्थवादः एवमेतद् द्रष्टव्यम् । वरुणपाशाभ्यां वा एष बध्यते यो दीक्षितः अहोरात्रे वै वरुणपाशौ यद्दिवा संस्थापयेदनुन्मुक्तो वरुणपाशाभ्यां स्याचक्तं संस्थाप्यो वरुणपाशाभ्यामेवोन्मुच्यतआत्मनो हिंसाया इति । अनुन्मुक्तः स वरुणपाशाभ्यां न तावद्दीक्षया मुच्यते । अवभृथो हि दीक्षोन्मोचनार्थः । अथ वोच्यते । वरुणपाशाभ्यामेव निर्मुच्यतइति बहवो नियमाः तदानीं विस्रज्यन्ते यानालोच्यैष वादो भवति । एवमिहापि चिरेण संस्थामालोच्यासंस्थितवचनं भवतीति । ननु यद्यप्ययमर्थवादः तथा ऽपि चरमे ऽहनि अवभृथाद्यनुष्ठाने तस्याह्नः संस्थितत्वादसंस्थित इति स्तुतिः निरालम्बना स्याद् इति चेन्न । द्वादशाहेन प्रजाकामं याजयेदिति वाक्येन द्वादशयागानां सह अनुष्ठानं सिद्धम् । तत्र सहानुष्ठानं नाम यत्र पूर्वोत्तराङ्गानां तन्त्रेणानुष्ठानं प्रधानमात्रस्य पृथगनुष्ठानं, तत्सहानुष्ठानं द्वादशाहे दीक्षणीयाद्यग्नीषोमीयान्तानां पूर्वाङ्गानामवभृथादीनामुत्तराङ्गानां तन्त्रेणानुष्ठानमिति मध्यतनानामभ्यासः । एवं सति इह अहर्भेदेन आग्नेयाद्यङ्गवद्धतिषड्गेणानुष्ठानासंभवात् कानि चिदुत्तराङ्गानि सहानुष्ठानसिद्ध्यर्थमेकादशस्वहःसु स्थापनीयान्येवेति अनियमेन कस्य चित् स्थापनप्राप्तौ पत्नीसंयाजान्तान्यहानि इति पत्नीसंयाजान्ते पूर्वस्याह्नो विरामनियमः । चरमे ऽहनि क्व चिद्विरामस्यानपेक्षितत्वान्निखिलानामनुष्ठानप्राप्तौ अपूर्वमेव पत्नीसंयाजान्तत्वं विधीयते । तेन पत्नीसंयाजोत्तरवर्तिनां हारियोजनग्रहान्तानां निवृत्तिः अवभृथादीनामुदवसानीयान्तानामनुष्ठानतन्त्रेण सहानुष्ठानं च सिध्यतीति । इत्थं च चरमे ऽहन्यपि केषां चित्पूर्वं दर्शितानां हारियोजनान्तानां लुप्तत्वात्तत्राप्यसंस्थितत्वापचारेण स्तुतिसंभवात् पत्नीसंयाजान्तान्यहानीति सामान्यश्रुतस्य सङ्कोचो ऽपि न कार्य इति पूर्वपक्षिणां भावः ॥ ३१ ॥

## स्याद्वा ऽनारभ्यविधानादन्त्ये लिङ्गविरोधात् ॥ ३२ ॥

उत्तमे ऽह्नि हारियोजनान्तनिवृत्तिपक्षं दूषयति । स्याद्विति । प्रागुक्तमात्पत्नीसंयाजान्तता स्यात् । अन्त्ये लिङ्गस्य असंस्थितत्वस्य विरोधात् । ननु अन्त्ये लिङ्गविरोधः परिहृतो ऽत्राह । अनारभ्येति । अनारभ्य

उत्तमाहमनारभ्य अनुद्दिश्य विधानात्तत्रापूर्वविध्यसंभवः। अयं भावः। उत्तमे ऽह्नि अपूर्वविधाने एकेनैव विधिना क्व चिन्नियमः क्व चिदपूर्वमिति विधिवैरूप्यं, किंचिदङ्गनिवृत्तेः फलमपूर्वं कल्पनीयं शेषनिवृत्त्यर्थं लक्षणा चेत्यनेकदोषग्रस्तत्वेन तस्य त्याज्यतया चरमात्प्रागिति सङ्कोच एव न्याय्य इति ॥ ३२ ॥

त्रिः प्रथमामन्वाहेत्यादिषु स्थानधर्मता। अधि० १०।

## अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् ॥ ३३ ॥

दर्शपूर्णमासयोः श्रुतं, सामिधेनीषु त्रिः प्रथमामन्वाह त्रिरुत्तमामिति। अयमभ्यासः ऋग्धर्म उत स्थानधर्म इति संशये प्रथमं वर्तमानायाः प्र वो वाजा इत्यृचो ऽभ्यासः स्त्रीलिङ्गेन ऋच एवोपस्थितेः इति पूर्वपक्षे सिद्धान्तमाह। अभ्यास इति। सामिधेनीनामभ्यासः स्थानधर्मः प्राथम्यात्। स्थानस्य प्रथममुपस्थितत्वात् स्थानस्याभ्यासासंभवेन लक्षणा यां स्थानसंबन्धित्वेन रूपेण लक्षणा न तु प्र वो वाजा इतिऋक्त्वेन। जहत्स्वार्थलक्षणायां शक्यार्थस्यात्यन्तं बाधापत्तेः। स्त्रीलिङ्गनिर्देशस्तु मत्पक्षे ऽप्यनुपपन्नो न। संबन्धित्वेन ऋच एव ग्रहणात्। तस्माद्या या प्रथमसंबन्धिनी ऋक् सा अभ्यसितव्येति भावः ॥ ३३ ॥

यावज्जीवदर्शपूर्णमासयोः आरम्भणीयेष्टेः सकृदनुष्ठानम्। अधि० ११।

## इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया ॥ ३४ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमान इति इष्टिः प्रतिप्रयोगमावर्तते उत सकृदिति संदेहे पूर्वपक्षमाह। इष्ट्यावृत्ताविति। इष्ट्यावृत्तौ दर्शपूर्णमासावृत्तौ आरम्भणीया आवर्तते प्रयाजवदङ्गत्वात् ॥ ३४ ॥

## सकृद्वा ऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥

सिद्धान्तमाह। सकृदिति। यावज्जीवप्रयोगाद् यावज्जीवं यक्ष्ये इति संकल्पात् प्राक् सकृदेव आरप्स्यमाण इति वाक्ये आरम्भसंयोगाद् आरम्भश्रवणात्। न प्रयाजादिवत्साक्षादङ्गं किं तु आरम्भद्वारा। स चारम्भः यावज्जीवसंकल्परूपः एकः न प्रतिप्रयोगमतः सकृदेवेति ॥ ३५ ॥

निर्वापमन्त्रे सवित्रादिशब्दानामनूहः । अधि॰ १२ ।

## अर्थाभिधानसंयोगाद् मन्त्रेषु शेषभावः स्यात्तत्राचोदितमप्राप्तं चोदिताभिधानात् ॥ ३६ ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति दर्शपूर्णमासे निर्वापमन्त्रः समाम्नातः । अत्र सवित्रादि देवतावाचका: ये शब्दाः ते कर्मसमवेतदेवताप्रकाशनार्था एते शब्दाः उत असमवेतस्वार्थद्वारं निर्वापमेव प्रशंसितं प्रकाशयन्तीति संशये स्यादित्यन्तेनार्धसूत्रेण पूर्वपक्षमाह । अर्थेति । मन्त्रेषु शेषभावः अङ्गत्वमर्थाभिधानमर्थप्रकाशनं तत्संबन्धात् । कर्मसमवेतार्थस्मारकतयैव मन्त्राणामङ्गत्वं यतोऽतः सवितुर्जुष्टं निर्वपामीत्येको मन्त्रः । एवमश्विनोर्जुष्टं निर्वपामीत्यादिनानावाक्यानि । मान्त्रवर्णिकलिङ्गेन सवित्रादिदेवताकत्वमपि कल्प्यते । तथा चाग्न्यादिभिः सह विकल्प एतेषां सवित्रादीनाम् । अस्य मन्त्रस्य सौर्ययागे प्राप्तौ सवितृपदस्थाने सूर्यपदप्रक्षेपरूप ऊहः कार्य इति भावः । शेषसूत्रेण सिद्धान्तमाह । तत्रेति । मन्त्रस्य चोदितार्थाभिधानाद् विधिविहितो यो ऽर्थः तत्प्रकाशनमिति नियमात् । तत्र दर्शपूर्णमासयोः सवितृदेवताकादियागः अचोदितः अत एवाप्राप्तः स इति । अयं भावः । प्रकृतौ मन्त्रलिङ्गेन कल्पितदेवताभिः सहाग्न्यादीनां विकल्प इति न शक्यते वक्तुम्, एकवाक्यताभङ्गात् । उत्पत्तिशिष्टाग्न्यादेः प्रबलत्वेन पक्षे ऽपि तेषां बाधासंभवादगत्या प्राशित्रभक्षणादौ अग्नेष्ट्वा ऽऽस्येन प्राश्नामीत्यादिवत् स्तावकत्वेनैव गतिश्चिन्त्या । विकृतावपि तैरेव शब्दैर्निर्वापस्तुतिसंभवात्तेषां नोह इति * ॥ ३६ ॥

अग्नये जुष्टमित्यग्निपदस्योहो विकृतौ । अधि॰ १३ ।

## गुणशब्दस्तथेति चेत् ॥ ३७ ॥

अस्मिन्नेव निर्वापमन्त्रे, अग्निपदं समवेतार्थप्रकाशकमुत सवित्रादिवत् स्तावकमितिसंशये पूर्वपक्षमाह । गुणेति । गुणशब्दः जुष्टशब्दार्थे

* ततश्चावचनं तेषामितरार्थं प्रयुज्यते, इति सूत्रमत्र न व्याख्यातं तद्व्याख्यानं भाष्ये द्रष्टव्यम् ।

गुणभूताग्न्यादिवाचकः शब्दः तथा सवित्रादिशब्दवत् स्तावकः । जुष-धातोः कर्मणि भूतार्थे निष्ठा विहिता । तथा च जुषधातोर्भक्षणमर्थः । अग्नये इति तादर्थ्ये चतुर्थी । अग्निकर्तृकभूतकालीनभक्षणकर्मीभूतहवि-ष्कर्मकनिर्वापं भावयामीति वाक्यार्थो वाच्यः । स च बाधितः । निर्वा-पकाले अग्निकर्तृकभक्षणस्य भूतत्वाभावादतः स्तुत्यर्थ इति विकृतौ तस्यापि नोह इति भावः ॥ ३७ ॥

## न समवायात् ॥ ३८ ॥

सिद्धान्तमाह । नेति । न स्तावकः समवायाद् अर्थस्याबाधित-त्वात् । अग्नये जुष्टमित्यस्य न पूर्वोक्तार्थः किं तु यथा अग्निना जुष्टं स्यात्तथा निर्वापेण करोमीत्यर्थः । अग्निसेवितत्वस्य निर्वापसाध्यत्वान्न पूर्वोक्तदोष इति भावः ।

तण्डुलावापमन्त्रे धान्यशब्दस्योहः । वर्णकान्तरम् ।

यद्वा दर्शपूर्णमासयोः धान्यमसि धिनुहि देवानिति कृणद्धि तण्डु-लानावपतीति मन्त्रः । तत्र धान्यशब्दः समवेतार्थकः उतासमवेतार्थक इति संशये पूर्वपक्षमाह । गुणेति । गुणशब्दः मन्त्रघटकधान्यशब्दः तथा ऽसमवेतार्थकः सवित्रादिशब्दवत् स्तावकः । धान्यशब्दस्य सतुषेषु व्रीहिष्वेव रूढत्वेन तण्डुलार्थत्वादसमवेतार्थत्वम् । इत्थं च शाक्यानाम-यने षट्त्रिंशद्वत्सरसाध्ये, संस्थिते ऽहनि गृहपतिर्मृगयां याति स तत्र यान्मृगान्हन्ति तेषां मांसानि तरसाः सवनीयाः पुरोडाशा भवन्तीत्यत्र धान्यमसीत्यत्र मांसमसीति नोहः, स्तावकत्वादिति भावः । नेति । ऊहेनैव तत्र मन्त्रपाठः समवायात् । अबाधितार्थत्वात् । यद्यपि धान्य-शब्दः शक्त्या व्रीहीन् ब्रूते तथा ऽपि शक्तितुल्यया निरूढलक्षणया तण्डु-लानपि बोधयति । काश्यां व्रीहीनेव भक्षयन्तीति व्यवहारात् । निरूढ-लक्षणया प्रतिपाद्यार्थस्थले ऽप्यूह इति भावः । इदं तु मांसस्य पेषणार्थ-मधिवापो ऽस्तीति कृत्वाचिन्तया विचारात्मकमधिकरणं ज्ञेयम् ॥ ३८ ॥

इडोपह्वानमन्त्रे यज्ञपतिशब्दस्यानूहः । अधि० १४ ।

## चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् ॥ ३९ ॥

दर्शपूर्णमासयोरिडाह्वानमन्त्रे, ये यज्ञपतिं वर्द्धानिति श्रुतम् अस्य सत्रे बहुयजमानके अतिदेशेन प्राप्तौ यज्ञपतिशब्दोत्तरं बहुवचनस्योहो न वेति संशये यजमानबहुत्वादूह इति पूर्वपक्षे सिद्धान्तमाह चोदितेति । यज्ञपतिशब्दे चोदिते ऽपि पठिते ऽपि परार्थत्वादिडास्तुत्यर्थत्वादविकारः अनूहः स्यात् । विधिवत् । यथा शुक्रं यजमानो ऽन्वारभतइत्यत्र एकान्वारम्भणेन चारितार्थ्यं तथा एकयजमानस्तुतिद्वारा ऽपि इडास्तुतिसंभवाद् इडास्तुत्यर्थं च ऋत्विजः यज्ञं वर्द्धान्यज्ञं वर्द्धयन्ति ये च यज्ञपतिं वर्द्धान् ते अध्वर्यवः अध्वर्युप्रभृत्यृत्विजः हे इडे त्वया उपहूताः आहूताः अतः तव सामर्थ्यं विलक्षणमिति यज्ञपतिशब्दः इडास्तावकः परार्थो ऽतः नोह इति निर्गलिततात्पर्यं बोध्यम् ॥ ३९ ॥

सूक्तवाके यजमानशब्दस्योहः । अधि० १५ ।

## विकारस्तत्प्रधाने स्यात् ॥ ४० ॥

दर्शपूर्णमासयोः सूक्तवाके, अयं यजमान आयुराशास्ते इत्यत्र अयं यजमानः आयूरूपफलं प्रति प्रधानत्वेनावगतः अतः सत्रे इमे यजमाना इत्याद्यूहो ऽस्तीति पूर्वापवादरूपं सिद्धान्तमाह । विकार इति । तत्प्रधाने यजमानप्रधाने उक्तमन्त्रे विकार ऊहः स्यात् ॥ ४० ॥

सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहः । अधि० १६ ।

## असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४१ ॥

ज्योतिष्टोमे सुब्रह्मण्याह्वाने इन्द्रागच्छ हरिव आगच्छ मेधातिथेः इत्यादिर्मन्त्र आम्नातः । अग्निष्टुन्नामके अयमतिदिष्टः । अत्राग्नेयी सुब्रह्मण्येति विधानेन इन्द्रपदस्थाने अग्नआगच्छेति प्राप्तम् । एवं हरिवत्पदमेधातिथ्यादिपदानामूहो ऽस्ति न वेति संशये सिद्धान्तमाह । असंयोगादिति । हरिवदादिशब्दानां हरिवदादिष्वर्थेष्वसंयोगादसंबन्धात्तेषामसमवेतार्थत्वादिति यावत् । तद्विशिष्टं हरिवदादिशब्दविशिष्टमेव विकृतौ प्रतीयेत, न रोहिताश्ववायुसखेत्याद्यूहः । हरिवदादिधर्माणामिन्द्रे सत्त्वे प्रमाणाभावेन अविद्यमानैरेव गुणैर्यथेन्द्रस्तुतिः तथा ऽग्नेरपि तैरेव स्तुतिसंभवाच्च तेषां पदानामूह इति भावः ॥ ४१ ॥

## कर्माभावादेवमिति चेत् ॥ ४२ ॥

सिद्धान्तमाक्षिपति । कर्मेति । कर्मणः हरिवदादिशब्दप्रयोगनिमित्तकर्मणः इन्द्रे अभावे सति हरिवदादिशब्दः असमवेतार्थकः स्यात्तदेव न । अहोरात्रे वा इन्द्रस्य हरी ताभ्यामेव सर्वं हरतीति अर्थवादप्रामाण्येन हरिवच्छब्दप्रवृत्तिनिमित्तक्रियाया इन्द्रे सिद्धौ पावकादिपदस्य पाककर्तरीवेन्द्रे इमे समवेतार्थका अग्नावसमवेतार्थका इत्यूह आवश्यकः । एवमेव मेधातिथ्यादीनामप्यर्थवादाः सन्ति । अतः ते सर्वे ऽप्यूह्या इति भावः ॥ ४२ ॥

## न परार्थत्वात् ॥ ४३ ॥

ऊहं निराकरोति । नेति । नोहः उक्तार्थवादस्य केवलेन्द्रस्तुत्यर्थत्वात् । यदग्नाविति चिन्वीतेतिवदसमवेतार्थकाः सन्त एव स्तावकाः अर्थवादा मन्त्रा हरिवदादयश्च । तथा विकृतावपि तथा स्तुतिसंभवान्नोह इति भावः ।

तस्यै घृतमिति मन्त्रे ऽनूहः । वर्णकान्तरम् ।

यद्वा ज्योतिष्टोमे सोमक्रयणे एकहायन्या गवा क्रीणातीति विधाय तत्संनिधौ इयं गौस्तया ते क्रीणामि तस्यै पयः तस्यै दधि तस्यै घृतमित्यादि । साद्यस्के त्रिवत्सः साण्डः सोमक्रयण इति । त्रिवत्सः त्रिवत्सर इत्यर्थः । अत्र पूर्वमन्त्रो ऽतिदेशेन प्राप्तः । तत्रेयं गौरिति स्थाने अयं वृषभ इत्येतावन्मात्रमूह्यम् उत तस्यै पय इत्यादिस्थाने तस्मै रेत इत्याद्यप्यूह्यमिति संशये सिद्धान्तेनोपक्रमते । असंयोगादिति । घृतादिभिरर्थैः एकहायन्या अप्यसंबन्धात् । न ह्येकहायन्यां गवि तत्काले पयोदध्यादिकमस्ति अतः केवलस्तावकत्वमेव । त्रिवत्से साण्डे तदर्थेषु पयोदध्यादिभिरर्थैरसंयोगे ऽपि स्तुतिसंभवात्तद्विशिष्टं गोवाचकपदभिन्नानि दधिपयःप्रभृतीनि पदानि तद्विशिष्टं वाक्यं प्रतीयेत, । गोवाचकपदानां तु लिङ्गविरोधात् तस्यै इत्यत्र तस्मादित्यूह इति भावः । सिद्धान्तमाक्षिपति । कर्मेति । एकहायन्यां कालत्रये ऽपि कर्माभावेन गोकार्यपयोदध्याद्यभावेन असमवेतार्थकः पयोदध्यादिशब्दः प्रकृतौ स्यात्तदेव न । भाविनि काले

तेष्वर्थेषु समवेतत्वात् । साण्डे कालत्रये ऽपि असमवायात् प्रकृतिवैष-म्यादस्त्यूह इति द्वितीयसूत्रस्य भावः । दूषयति । नेति । न ऊहः परार्थत्वात् स्तुत्यर्थत्वात् । एकहायनीकार्यं पयोदध्यादि कालान्तरे भविष्यति तर्हि साण्डस्यापि स्वसजातीयस्त्रीव्यक्त्यां स्त्रीव्यक्तिमुत्पाद्य तद्द्वारा पयोदध्यादीनां भाविकाले उत्पादकत्वसंभवादिति भावः ॥ ४३ ॥

सारस्वत्यां मेष्यामधिगुवचनाभावः । अधि० १७ ।

## लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४४ ॥

ये पाशुका धर्माः ते सर्वे पश्वर्था इति कृत्वाचिन्तयेदमधिकरणम् । अस्त्यग्नीषोमीयः पशुः । तत्र दैव्याः शमितार इत्याद्यधिगुप्रैषः समाम्नातः । स, सारस्वतीं मेषीमालभतइत्यत्र प्रवर्तते न वेति संशये सिद्धान्तमाह । लिङ्गेति । समानविधिषु पशुयागसामान्यमुद्दिश्य पशुधर्मविधिषु सत्सु प्रैषे प्रास्मा अग्निं भरतेति अस्माइत्यत्र पुल्लिङ्गनिर्देशात् । सारस्वती, मेषीद्रव्यकसरस्वतीदेवताको यागः अप्राप्ता अधिगुप्रैषमप्राप्ता स्त्रीत्वात् । मेष्याः स्त्रीत्वात् । न च पुंवचनः स्त्रियमभिवदितुमलम् । मेषीयागस्यापि प्रकृतित्वेन न प्रकृतावूह इति निषेधान्मन्त्रस्यैव निवृत्तिरिति भावः ॥ ४४ ॥

## पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ४५ ॥

पूर्वपक्षमाह । पश्विति । सारस्वत्यप्यधिगुप्रैषपठने पुंलिङ्गमविरुद्धम् । अग्नीषोमीयं पशुमालभेतेत्यत्र पश्वभिधानात् । तत्पशुपदं विधिघटकीभूतं प्रैषमन्त्रे अस्माइति पुंविषयं पुंलिङ्गान्तविशेष्यीभूतं पशुत्वं पशुत्ववाचकं पशवे इति पदम् । यथा पुरुषे ऽपि कदा चिदिदं वस्तु दुर्मिलमिति वस्तुतात्पर्येण इदमिति क्लीबेन निर्देशः, यथा व्यक्तितात्पर्येण स्त्रिया निर्देशः, इयं व्यक्तिरिति, तथा मेष्यामपि पशुत्वसत्त्वात् तत्तात्पर्येणास्माइति पुंलिङ्गनिर्देश इति भावः ॥ ४५ ॥

## विशेषो वा तदर्थनिर्देशात् ॥ ४६ ॥

पूर्वपक्षं दूषयित्वा प्रथमपक्षं व्यवस्थापयति । विशेष इति । विशेषः मेषी अध्रिगुप्रैषं लभतइति यः पूर्वसूत्रोक्तः पक्षः तस्माद्विशेषः तद्विरुद्धकल्पः, न लभते मेषीति फलितं, तदर्थस्य मेष्यामनूत्त्यर्थस्य पुंस्त्वस्य निर्देशात् । मन्त्रे इति शेषः ॥ ४६ ॥

## पशुत्वं चैकशब्द्यात् ॥ ४७ ॥

लिङ्गस्योपपत्तिर्द्वितीयसूत्रे दर्शितेति पूर्वपक्षी पुनः शङ्कते । पशुत्वमिति । पशुत्वं पशुत्ववाचकं पदं पशुपदं विशेष्यमैकशब्द्यात् पुंलिङ्गान्तत्वेनैकजातीयशब्दत्वात् ॥ ४७ ॥

## यथोक्तं वा सन्निधानात् ॥ ४८ ॥

इमां युक्तिं परिहरति । यथेति । यथोक्तम् । अध्रिगुप्रैषो मेषीं न प्राप्नोतीति यदुक्तं तथैव । सन्निधानात् । अनुष्ठानवेलायां विधिवाक्यगतशब्दस्यैव बुद्धौ परिवर्तित्वात् । स च मेषीशब्दो न पशुशब्द इति न स शब्दो विशेष्यं सर्वनाम्ना निर्देशः संभवति । तथा सति नीलो घटः तामानयेतिप्रयोगापत्तेरिति भावः ॥ ४८ ॥

यज्ञायज्ञीये गिरापदस्थाने इरापदस्यैव कर्तव्यत्वम् । अधि० १८ ।

## आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥ ४९ ॥

ज्योतिष्टोमे यज्ञायज्ञीयस्तोत्रे, न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयमिति श्रुतम् । अत्र इरापदगिरापदयोर्विकल्पः उतेरापदमेव नियमेन योज्यमिति संशये सिद्धान्तेनोपक्रमते । आम्नातादिति । अधिकारे एकाधिकारे आम्नातात्साम्नः योनिभूतायामृचि पठिताद् अन्यद्विकारः । ऋचि पठितवर्णानां नित्यं बाधकं स्यात् । वचनाद् विशेषविधानात् । ऋचि पठितवर्णबाधकत्वेन प्रयोगकाले विकारस्यैव पाठ इति भावः ॥ ४९ ॥

## द्वैधं वा तुल्यहेतुत्वात्सामान्याद्विकल्पः स्यात् ॥ ५० ॥

पूर्वपक्षमाह । द्वैधमिति । तुल्यहेतुत्वात् । ज्योतिष्टोमप्रकरणे गिरापदस्य योनिभूतायामृचि पाठो दृश्यते । अतः पठितवर्णानामपि

ज्योतिष्टोमापूर्वसाधकत्वमित्येको हेतुः । ऐरं कृत्वोद्गेयमिति विधेरपि तत्प्रकरणस्थत्वेन इरापदमपि तदपूर्वेण संबद्धमित्यपरो हेतुः । एवं तुल्यबलाभ्यां द्वाभ्यां हेतुभ्यामनुष्ठानं द्वैधं द्विप्रकारम् । एवं सति द्वयोरपि सामान्यात् । एकं सामान्यशास्त्रमपरं विशेषशास्त्रमिति वक्तुमशक्यत्वाद्विकल्पः स्यात् ॥ ५० ॥

## उपदेशाच्च साम्नः ॥ ५१ ॥

ननु गिरापदस्य पाठेन विधिरनुमेय, इरापदविधिः प्रत्यक्ष, इति प्रबलः । अतो न विकल्पः अत्राह । उपदेशादिति । साम्नः उपदेशाद् यज्ञायज्ञीयेन स्तुवीतेति विधानात् । अयं भावः । यज्ञायज्ञीयेन स्तुवीतेत्यस्य यज्ञायज्ञीयेन स्वयोनिभूतर्ग्वर्णाः यथासंस्कृताः स्युः तथा स्तुवीतेति तात्पर्यं, तस्यामृचि गिरेति वर्णाः पठिताः सन्ति । तत्संस्कारः यज्ञायज्ञीयेन स्तुवीतेति प्रत्यक्षविधिविषय इति तुल्यबलत्वमव्याहतमिति भावः ॥ ५१ ॥

## नियमो वा श्रुतिविशेषादितरत्साप्तदश्यवत् ॥ ५२ ॥

पूर्वपक्षं निराकरोति । नियम इति । नियमः इरापदनियमः श्रुतिविशेषात् । ऐरं कृत्वोद्गेयमिति श्रुतिविशेषात् । न हि केवलमैरं भवतीति । किं तु ऐरं कृत्वेति श्रूयते कर्तव्यतया । गिरापदस्य पाठमात्रं न तु कर्तव्यतया श्रुतिः । तथा सति यज्ञायज्ञीयेन स्तुवीतेत्यत्रेतिकर्तव्यताकाङ्क्षायां गिरापदस्थाने इरापदं कृत्वा स्तुवीतेति वाक्यैकवाक्यतायां न यज्ञायज्ञीयेन स्तुवीत्यनेन पूर्वोक्तरीत्या गिरापदघटितर्चा स्तुतिविधिः, किं तु पाठेन कल्प्या ऽतः प्रत्यक्षश्रुत्या तस्य नित्यं बाध इति भावः । ननु गिरापदपाठानर्थक्येन, आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन तुल्यबलत्वं स्यादत आह । इतरन्मन्त्रघटकं गिरापदं साप्तदश्यवत् प्रकृतित उत्कृष्टं सद् अन्यत्र निविशते । यथा सप्तदश सामिधेनीरन्वाहेत्यनारभ्यपठितं साप्तदश्यं प्रकृतौ निवेशार्थमागतं सत्प्रकरणपठितेन पाञ्चदश्येन प्रतिबद्धं सन्मित्रविन्दादौ निविशते, तथा ऐरं कृत्वोद्गेयमित्यनेनैकवाक्यतापन्नेन यज्ञायज्ञीयेन स्तुवीतेति विधिना यज्ञाय-

ज्ञीयस्तोत्रोद्देशेनैरापदघटितमन्त्रसिद्धौ अतिदेशेन विकृतिसामान्ये ऽपि यज्ञायज्ञीयस्तोत्रे तथैव प्राप्तौ गिरापदघटितमन्त्रस्तु महाग्निचयने गायत्रेण पुरस्तादुपतिष्ठते बृहद्रथन्तराभ्यां पक्षौ यज्ञायज्ञीयेन पुच्छमित्यत्र प्रविशति । इरापदस्य स्तोत्रोद्देशेन विधानेन उपस्थानस्य तदुद्देश्यतावच्छेदकानाक्रान्तत्वादिति भावः ॥ ५२ ॥

इरापदस्य प्रगीतत्वम् । अधि० १९ ।

## अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥ ५३ ॥

ऐरं कृत्वोद्गेयमिति विहितैरापदमप्रगीतमुत प्रगीतमिति संशये पूर्वपक्षमाह । अप्रेति । पाठेन श्रूयमाणशब्दाद् गिरापदाद् विधीयमानस्य इरापदस्यान्यत्वे सति अप्रगाणाद् अप्रगीतशब्दस्यैव तत्र विधानात् तथाभूतोपदेशः स्यात् । यथा विहितं तथा पठितव्यम् । यदि च इरापदं गानविशिष्टं विधितात्पर्यविषयः तर्हि गानशास्त्रपरिभाषया ईकारस्याईभावः । आईरेति प्रकृतितः वृद्धाच्छ इति छप्रत्यये आईरीयं कृत्वोद्गेयमिति पठेत् । ऐरं कृत्वोद्गेयमिति यतः पठितमतः गानरहितपाठ एवेति भावः ॥ ५३ ॥

## यत्स्थाने वा तद्गीतिः स्यात् पदान्यत्वप्रधानत्वात् ॥ ५४ ॥

सिद्धान्तमाह । यत्स्थाने इति । येषां वर्णानां स्थाने ये वर्णाः तेषु तद्वर्णवृत्तिगानं स्यात् । तत्स्थानापन्नस्तद्धर्मं लभत इति न्यायात् । ननु ऐरमित्यत्र तद्धितो विकारार्थे विहितः । साम्नो योनिभूतऋग्वर्णानां विकारश्च गानमेव । तथा च गानविशिष्टवर्णविधानात् कथं न्यायलभ्यत्वं गानस्येति शङ्कायामाह । पदान्यत्वप्रधानत्वाद्विधेः श्रूयमाणपदाद्गिरापदात्पदप्रतियोगिकमन्यत्वं भेदो यस्मिन् पदे तत्पदान्यत्वमिरेतिपदं तत्प्रधानत्वात् । विधितात्पर्यविषयत्वात् । न विशिष्टविधिरित्यर्थः । उपायान्तरलभ्ये ऽर्थे विधिसंबन्धासंभवादिति भावः । तथा च न्यायप्राप्तानुवादक एव तद्धित इति यावत् । गानस्यान्यलभ्यत्वेन विध्यभावादेव न छप्रत्ययापत्तिरपीति सारम् ॥ ५४ ॥

## गानसंयोगाच्च ॥ ५५ ॥

साधकान्तरं स्पष्टमाह । गानेति । क्व चित्तदीयग्रन्थे उद्गेयमा दूरा चा दाशासा इति दूरावर्णगानेन संयुक्तमपि दृश्यते । अतो ऽपि दूरापदं गानविशिष्टमेव प्रयोक्तव्यमिति भावः ॥ ५५ ॥

## वचनमिति चेत् ॥ ५६ ॥

नन्वीदृशगानप्रतिपादकशास्त्रसत्त्वे गानस्थानेन वचनेन विधिरेव किमिति नाङ्गीक्रियते । न्यायप्राप्तमिति कस्मादुच्यते इत्याशङ्कते । वचनमिति । वचनं विधिरित्यर्थः ॥ ५६ ॥

## न तत्प्रधानत्वात् ॥ ५७ ॥

विधिपक्षं दूषयति । नेति । न विधिः तत्प्रधानत्वात् । तस्य दूरापदस्य प्रधानत्वाद् विधितात्पर्यविषयत्वात् । अन्यलभ्ये विधिसंबन्धासंभवादिति भावः । ननु पक्षद्वये ऽपि प्रकृते गानमस्ति न अनुष्ठानवैषम्यं, तथा सति वचनमित्यादिसूत्रं किमित्यारब्धमिति चेत् । आरम्भफलं तन्त्ररत्ने स्पष्टम् । विस्तरभयान्नात्र लिख्यते ॥ ५७ ॥

इति जैमिनिसूत्रवृत्तौ नवमाध्यायस्य प्रथमः पादः ॥ १ ॥

गीतीनां सामनामता । अधि· १ ।

## सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥

सप्तमद्वितीयपादे साधितमर्थं वक्ष्यमाणसामोहापोह्वातरूपत्वात् पुनः स्मारयन्पूर्वपक्षसूत्रमाह । सामानीति । सामानि रथन्तरादिशब्दवाच्यानि मन्त्रं गानविशिष्टामृचं के चन आचार्याः प्राहुः । तत्र मानं प्रगीतमन्त्रः सामेति स्मृतिः । रथन्तरं पठेति गुरुणा नियुक्तः गुरूपदेशेन गानविशिष्टामृचं पठति च । अतः स्मृत्युपदेशाभ्यामुक्तार्थसिद्धिः ॥ १ ॥

## तदुक्तदोषम् ॥ २ ॥

सिद्धान्तमाह । तदिति । तत्पूर्वपक्षिणा उक्तं सप्तमद्वितीयपादे उक्ता दोषा यस्मिन्पक्षे तदुक्तदोषम् । स पक्षो निरस्तः किं तु गानविशेष एव रथन्तरादिवाच्य इति भावः ।

ऊहग्रन्थस्य पौरुषेयत्वम् । वर्णकान्तरम् ।

यद्वा सप्तमद्वितीयपादादन्य एवार्थो विचार्यते । तथा हि । कवतीषु कया नश्चित्र इत्यृचि रथन्तरपदवाच्यस्य गानविशेषस्य य ऊहः कया नश्चित्र आभुवो वा इति । किमयं नित्यः पौरुषेय इति संशये पूर्वपक्षमाह । सामानीति । मन्त्रं मन्त्रभूतानि सामानि ऊहितसामानि नित्यानीति एके आहुः । स्मृतिः मन्त्रभूतान्यार्षाणि नित्यानीति उपदेशः अभि त्वा शूरेत्यादौ गीयमानानि सामानि कया नश्चित्रेत्यत्र योजयेत्युपदेशस्ताभ्याम् । सिद्धान्तमाह । तदिति । तत् त्वदुक्तमुपदेशलिङ्गं त्वयैव दर्शितदोषकम् । योजयेति तूपदेशरूपो हेतुर्वर्णितः । युजधात्वर्थः पुरुषप्रयत्नजन्यत्वघटितः । तस्योपदेशे कथं नित्यत्वसिद्धिरिति । यथा सौर्ययागे निर्वापमन्त्रे सूर्यपदं योजयेत्युक्ते, पश्चात्तथा कृते मन्त्रे कथं नित्यत्वं सिध्येदिति भावः ॥ २ ॥

साम्नः ऋक्संस्कारकर्मत्वम् । अधि० २ ।

## कर्म वा विधिलक्षणम् ॥ ३ ॥

रथन्तरादिशब्दवाच्या गीतिः ऋचः प्रधानमुताङ्गमिति संशये पूर्वपक्षमाह । कर्मेति । द्वितीये प्रतिपादितयोर्गुणप्रधानकर्मणोर्मध्ये प्रधानकर्म आराादुपकारकम् । यतः रथन्तरं गायतीत्यत्र प्रयाजान्यजतीतिवत्प्रधानकर्मलक्षणं द्वितीयाश्रवणमतः ॥ ३ ॥

## तदृग्द्रव्यं वचनात् पाकयज्ञवत् ॥ ४ ॥

ननु प्रधानकर्मत्वे रथन्तरादिनिष्ठं यद् द्वितीयया श्रूयमाणं प्राधान्यं तत्किंनिरूपितमित्याशङ्कायामाह । तदिति । सा चासौ ऋक् चेति व्युत्पत्त्या तदृक्साम्नो योनिभूता ऋक् द्रव्यमिवेति तदृग्द्रव्यम् । मुखं चन्द्र इवेति मुखचन्द्र इतिवत् । सादृश्यं च गुणत्वेन । तथा च यथा द्रव्यनिरूपितं प्राधान्यं यागे तथा ऋङ्निरूपितं प्राधान्यं साम्नः किंप्रमाणमित्याकाङ्क्षायामाह । वचनात् । ऋचि साम गायतीति पाकयज्ञवत् । यथा पाकयज्ञेषु लाजैर्जुहोतीत्यादिवचनैर्द्रव्याणां यागाङ्गत्वम् । पाकयज्ञशब्दो ऽङ्गभूतयागमात्रपरः ॥ ४ ॥

## तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥ ५ ॥

ननु साम्नां रथन्तरादीनामभि त्वेत्याद्या: ऋचः यदि कारणं तर्हि तस्य रथंतरापूर्वसाधनत्वेन कार्यत्वं वाच्यम् । अभि त्वेत्यृचि रथंतरं साम गायतीति वाक्यस्यायमेवार्थः । अभि त्वेत्यृचा विना तेन रूपेणोत्पत्ति-र्नास्तीति नियमरूपो वाच्यः । तथा सति कवतीषु रथंतरं गायतीति कथा नश्चित्र इत्यृचि अतिदेशशास्त्रं बाधितं स्यात् । अभि त्वेत्यृचा विना तदपूर्वसाधनत्वेन रथन्तरसाम्न उत्पत्तेरभावस्य पूर्ववाक्येन दर्शित-त्वाद् इत्यत आह । तत्रेति । तत्र क्रतुविशेषे द्रव्यान्तरे ऋगन्तरे प्रदेशः अतिदेशशास्त्रं कवतीष्विति तन्मूलः व्यतिरेकः अभि त्वेत्यृगभावः । तदु-त्पत्तौ अविप्रतिषिद्धः अविरुद्धः । अभि त्वेत्यृचि रथंतरं गायतीति शास्त्रस्य सामान्यशास्त्रत्वेन कवतीषु क्रतुविशेषे रथन्तरमित्यस्य विशेषशास्त्रत्वेन कार्यतावच्छेदकसंकोचेन द्वयोः कारणयोः समावेशसंभवात् । तस्मात्प्र-धानकर्मत्वे न कोऽपि दोषः ॥ ५ ॥

## शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥

सिद्धान्तमाह । शब्दार्थेति । एवं प्रधानकर्मेति न स्यात् । गीति-रूपाणां रथन्तरादीनां शब्दार्थत्वात् । ऋगर्थत्वात् । ऋग्वर्णसंस्कारः वर्णाभिव्यक्तिः गीतिकार्ये दृष्टं फलं संभवति । एवं सत्यदृष्टकल्पनमन्या-य्यमिति भावः ॥ ६ ॥

## परार्थत्वाच्च शब्दानाम् ॥ ७ ॥

शब्दानामृचां परार्थत्वात् स्तुत्यर्थत्वात् । साम्ना गानरूपेणाक्ष-राभिव्यक्तिः ऋगक्षरैः देवतास्तुतिरिति उभयं दृष्टं फलं, परमते साम्नः फलकल्पनापत्तेः आज्यैःस्तुवते पृष्ठैः स्तुवते इति साम्नः ऋगक्षराभिव्य-क्तिद्वारा स्तोत्रार्थत्वं प्रतिपादितं विरुध्येतेष्टापत्तौ ॥ ७ ॥

## असंबन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ८ ॥

किं च कर्मणा स्तोत्ररूपकर्मणा साम्नः असंबन्धः स्याद् ऋचः अङ्गत्वे । पूर्वपक्षिमते रथन्तरं पृष्ठं भवतीति वाक्ये शब्दयोः रथन्तरपृष्ठश-

ब्दयोः पृथगर्थत्वात् । अयं भावः । रथन्तरं पृष्ठं भवतीत्यत्र रथन्तरशब्दस्य गीतिवाचकत्वं पृष्ठशब्दस्य स्तोत्रवाचकत्वेन भिन्नार्थयोरभेदान्वयो बाधितः पूर्वपक्षे । सिद्धान्ते रथन्तरशब्दस्य रथन्तरगुणके लक्षणा, ततः अभेदेनान्वयः । रथन्तरगुणकत्वं स्तोत्रसाधनभूतवर्णाभिव्यक्तिद्वारेति ॥ ८ ॥

## संस्कारश्चाप्रकरणेऽग्निवत्स्यात्प्रयुक्तत्वात् ॥ ९ ॥

साम्नः ऋगर्थत्वं स्वीकृत्य पश्चात्तमुत्थापयति । संस्कारेति । अप्रकरणे प्रयोगाद्बहिः अध्ययनकाले प्रयुक्तत्वात्संस्कारः संपन्नः न ज्योतिष्टोमप्रयोगमध्ये पुनः संस्कारः । यथाऽग्निः प्रयोगाद्बहिराधानेन संस्कृतः प्रयोगमध्ये न पुनस्तथा ॥ ९ ॥

## अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥

इमं पक्षं दूषयति । अकार्यत्वादिति । यदि प्रयोगाद् बहिः पठिता मन्त्राः गानेन संस्कृताः प्रयोगकाले अग्निवद्, उपलब्धेरग्निवत् इति सूत्रे पूरणीयं, तर्हि अकार्यत्वात् पूर्वसंस्कृतानां सत्त्वेनाकार्यत्वात्पुनरनुत्पाद्यत्वात्पुनः पाठे फलाभावाद् अप्रयोगः प्रयोगकाले पाठाभावः प्रतीयेत । तदेव न । अतः पुनः पठितव्यम् ॥ १० ॥

## आश्रितत्वाच्च ॥ ११ ॥

किं च औदुम्बरीं स्पृष्ट्वोद्गायेदिति विधिना ऽपि प्रयोगकाले पाठः सिध्यतीत्याह । आश्रितेति । आश्रितत्वाद् औदुम्बरीस्पर्शमाश्रित्य गानविधानादिति । प्रयोगाद्बहिरौदुम्बर्या अभावादिति भावः ॥ ११ ॥

## प्रयुज्यतइति चेत् ॥ १२ ॥

तर्हि प्रयोगाद्बहिः पाठो व्यर्थ इति शङ्कते । प्रयुज्यतइति । अत्र कुतः इति शेषः ॥ १२ ॥

## ग्रहणार्थं प्रतीयेत ॥ १३ ॥

बहिःपाठफलं दर्शयति । ग्रहणेति । अभ्यासार्थमित्यर्थः ॥ १३ ॥

तृचे प्रत्यृचं कृत्स्नसाम्नः समापनम् । अधि० ३ ।

## तृचे स्याच्छ्रुतिनिर्देशात् ॥ १४ ॥

ज्योतिष्टोमे, एकं साम तृचे क्रियतइति श्रुतम् । तत्र एकं साम

विभज्य त्रिषु गेयमुत प्रत्येकं परिसमाप्तिरिति संशये पूर्वपक्षमाह तृचे इति । तृचे विभज्य निर्देशः स्यात् । श्रुतिनिर्देशात् । एकसंख्यावच्छिन्नसाम्नः त्रित्वावच्छिन्ने विधानादित्यर्थः ॥ १४ ॥

## शब्दार्थत्वाद्विकारस्य ॥ १५ ॥

विकारस्य साम्नः शब्दार्थत्वाच्च श्रूयमाणावच्छेदकावच्छिन्नऋगर्थत्वात् । त्रिभ्यः एकमुद्रा देयेत्यत्रैकमुद्रायाः समग्राया दातुमशक्यतया विभज्यैव दीयते तथेति भावः ॥ १५ ॥

## दर्शयति च ॥ १६ ॥

उक्तार्थे लिङ्गं दर्शयति । दर्शयतीति । अर्थवादः विभज्य गानं दर्शयति । ऋक्सामेवाच मिथुनीसंभवावेति सो ऽब्रवीन्न वै त्वं ममालमसि जायार्थं, ततस्ते द्वे भूत्वोचतुः संभवामेति सो ऽब्रवीन्न युवां ममालमिति ततः तिस्रो भूत्वोचुर्मिथुनीसंभवामेति सो ऽब्रवीत्संभवामेति । तस्मादेकं साम तृचे क्रियतइत्येका साम्नः संभोगाय नालमिति विभज्य गाने लिङ्गम् ॥ १६ ॥

## वाक्यानां तु विभक्तत्वात्प्रतिशब्दं समाप्तिः स्यात्संस्कारस्य तदर्थत्वात् ॥ १७ ॥

सिद्धान्तमाह । वाक्यानामिति । प्रतिशब्दं प्रत्यृचं समाप्तिः साम्नः स्यात् साम्ना संस्कारस्याक्षराभिव्यक्तिरूपस्य तदर्थत्वाद् ऋगर्थत्वात् । ऋग्रूपवाक्यानां विभक्तत्वाद् भिन्नत्वात् । ऋचो भिन्नत्वेन स्तोत्रस्यापि भेदः । न हि तिसृभिर्ऋग्भिरेकं स्तोत्रं लोके क्व चित्प्रसिद्धम् । ऋचा स्तुतिर्निर्वर्तते अक्षराभिव्यक्तिद्वारा सामोपकारकं विभज्य स्तुतौ सामावयवः स्तोत्रउपकारकः स्यान्न साम । अतः प्रत्यृचं परिसमाप्तिरिति भावः ॥ १७ ॥

## तथा चान्यार्थदर्शनम् ॥ १८ ॥

साधकान्तरमाह । तथा चेति । तथा च प्रत्यृचं साम्नः परिसमाप्तिसिद्धौ च अन्यार्थस्य अष्टाक्षरेण प्रथमायामृचि स्तौति द्व्यक्षरेणोत्तर-

योरिति प्रस्तावभेददर्शनमुपपन्नम् । प्रस्तावो नाम साम्नः भक्तिराद्या । स तु एकस्यैकः यदि एकस्यैव साम्नो विभज्य विनियोगस्तदा प्रस्तावभेदविधानमनुपपन्नमिति भावः ॥ १८ ॥

## अनवानोपदेशश्च तद्वत् ॥ १९ ॥

अनवानं गायतीत्यप्यस्मन्मते उपपन्नमित्याह । अनवानेति । न हि तिसृषु विभज्य गाने अनवानतोपपद्यतइति भावः ॥ १९ ॥

## अभ्यासेनेतरा श्रुतिः ॥ २० ॥

या च तिसृषु गायतीति श्रुतिः पूर्वपक्षिणा दर्शिता सा गानस्य संपूर्णस्याभ्यासेनाप्युपपन्नेत्याह । अभ्यासेनेति । इतरा श्रुतिः तिसृष्विति श्रुतिः । यथा त्रिषु गृहेषु देवदत्तो भोज्य इत्यत्राभ्यासः तथेति भावः ॥ २० ॥

समास्वेव तिसृषु ऋक्षु गानम् । अधि॰ ४ ।

## तदभ्यासः समासु स्यात् ॥ २१ ॥

एकं साम तृचे क्रियतइत्यत्र ऋक्त्रयं समाक्षरमिति नियमः उतानियम इति संशये नियमे मानाभाव इति पूर्वपक्षे सिद्धान्तमाह । तदिति । तस्य साम्नो ऽभ्यासः समासु समच्छन्दस्कासु । संशरविलेशदोषात् । यत्र योनिभूता ऋगधिकाक्षरा उत्तरे न्यूनवर्णे तत्र अधिकाक्षरे गीयमानसाम्नः अल्पाक्षरे गानासंभवेन शेषसाम्नो लोपः कार्यः स्यादयं संशरदोषः । यत्र योनिभूता ऋचः अल्पाक्षराः उत्तरे अनल्पाक्षरे तत्र अल्पाक्षरसाम्नः बह्वक्षरायामृचि मध्ये परिसमाप्तत्वेन शेषाक्षराण्यसंस्कृतानि स्युः अयं विलेशदोषः ॥ २१ ॥

## लिङ्गदर्शनाच्च ॥ २२ ॥

उक्तार्थे लिङ्गमप्याह । लिङ्गेति । स्याल्यां शक्त्यमवधीयतइत्याहुर्यद्बृहद् गायत्रीषु क्रियते ऋत्वेनानुरुजतीति अल्पाक्षरासु बह्वक्षरासंग्रन्थिगाने दोषश्रवणं लिङ्गम् ॥ २२ ॥

उत्तरयोर्गायतीत्यत्र उत्तराग्रन्थपठितयोरेव ऋचोर्ग्रहणम् । अधि० ५ ।

## नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत ॥ २३ ॥

सामगानां ग्रन्थद्वयं छन्द उत्तरा चेति । छन्दसि निखिलसाम्नां योनिभूता ऋचः पठिताः । उत्तरायां सूक्तानि पठितानि । एवं सति यद्योन्यां तदुत्तरयोर्गायतीत्यत्र उत्तरयोरित्यनेन द्वयोरन्यतरस्मादिच्छया ग्राह्यमुतोत्तराग्रन्थे योनिभूतऋगुत्तरयोरेव ग्रहणमिति संशये नियामकाभावादिच्छयेति पूर्वपक्षे सिद्धान्तमाह । नैमित्तिकं त्विति । नैमित्तिकं यद्योन्यां तदुत्तरयोरिति वचनप्राप्तमुत्तरात्वमुत्तरापदग्राह्यत्वमुत्तराग्रन्थसमधीतासु प्रतीयेत । आनन्तर्याद् उत्तराशब्दोपस्थितेः शब्दश्रवणानन्तर्यात् । अयं भावः । उत्तरशब्दः एकः कालदेशान्यतरवाचकः । एकः संज्ञारूपः घटादिवत् । यदि कालवाचको देशवाचको गृह्यते कस्मादित्यवधिवाचकपदान्तरमपेक्ष्योपस्थितिं जनयेत् । छन्दोग्रन्थस्थयोन्युत्तरासु गृह्यमाणासु उत्तराग्रन्थे उत्तराशब्दस्य घटादिवत्सङ्केतरूपत्वेन उत्तरयोरिति श्रवणेन अव्यवहितोत्तरक्षणे स्वसंबन्धिसंबन्धिद्वयमुपस्थापयतीति लाघवादुत्तराग्रन्थस्थयोर्ऋचोर्ग्रहणं नान्ययोरिति ॥ २३ ॥

## ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

उक्तार्थं पुनर्द्रढयति । ऐकेति । तासु उत्तरासंज्ञन्यिकासु त्रिषु अभ्यासः ऐकार्थ्यात् । एकापूर्वार्थत्वेन पाठात् । अन्यथा च तिसृणामेकत्र पाठवैयर्थ्यादिति भावः ।

अतिजगत्यामभ्यस्यमानायां त्रैशोकगानम् । वर्णकान्तरम् ।

यद्वा तदभ्यासः इत्यारभ्य सूत्रचतुष्टयात्मकमेकमधिकरणम् । तथा हि द्वादशाहे चतुर्थेऽहनि त्रैशोकं नाम साम विहितम् । तदतिजगत्यामुत्पन्नमुत्तराग्रन्थे योनिभूताया ऋचः उत्तरे द्वे बृहत्यौ । एवं स्थिते एवं सति अतिजगत्यामुत्पन्नत्वादुत्तरे द्वे अपि अन्यत आनेये उत पठिते एव ते ग्राह्ये इति संशये पूर्वपक्षमाह । तदिति । सूत्रार्थस्तु पूर्ववत् । लिङ्गेति । अतिजगतीषु स्तुवन्तीति विधिवाक्ये बहुवचनं लिङ्गम् । यथोक्तपाठे अतिजगत्या ऋच एकत्वाद् बहुवचनं बाध्येतेति भावः ।

सिद्धान्तमाह । नैमित्तिकमिति । आनन्तर्याद् अव्यवहितपाठात् । शेषं पूर्ववत् । एकार्थ्यादिति । एकदेवताके त्रैशोके तृचइति शब्दस्वारस्याच्च । ननु बहुवचनस्य पूर्वोक्तस्य का गतिरत आह । तदभ्यासः त्रैशोकसाम्नः एकविंशतिकृत्वोऽभ्यासः तत्रैव विहितः । एवं सति तासां तिसृणामृचामेकविंशतित्वसंपत्तये सप्तवारमावृत्तिः कार्या । तासामावृत्तौ अतिजगत्या अपि सप्तवारमावृत्तिरिति तत्र बहुत्वान्वय उपपन्न इति भावः ॥ २४ ॥

बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानम् । अधि० ६ ।

## प्रागाथिकं तु ॥ २५ ॥

ज्योतिष्टोमे माध्यन्दिनसवने बृहद्रथंतरमिति सामनी विहिते । उभे अपि बृहतीछन्दस्कयोरुत्पन्ने । रथंतरयोनिः अभि त्वा शूरेति । उत्तरा न त्वावाँ अन्यः इति पङ्क्तिच्छन्दस्का । बृहतो योनिर्बृहत्येव त्वामिद्धि हवामहइति । उत्तरा पङ्क्तिः स त्वन्नश्चित्रेति । तत्रैवमाम्नायते । न वै बृहद्रथंतरमेकछन्दो यच्चैतयोः पूर्वा बृहती ककुभाउत्तरे इति । अस्यार्थः । बृहद्रथंतरे सामनी ये तदीयास्तिस्र ऋचः एकच्छन्दस्का न, किं तु बृहतीछन्दस्का पूर्वा उत्तरे ककुप्छन्दस्के इति । अत्र स्वतःसिद्धककुप्छन्दस्के उत्तरग्रंठितपङ्क्तिच्छन्दस्के अपहाय तत्स्थाने योज्ये उत पूर्वोत्तरयोः प्रग्रथनेन ककुभौ संपाद्य तयोर्गानमिति संशये उत्पत्तावेव ककुभौ योज्यौ । अन्यथा ककुप्छन्दस्कर्चामुत्पत्तेर्निरर्थकत्वं स्यादिति पूर्वपक्षे सिद्धान्तमाह । प्रेति । प्रागाथिकं प्रथमाया ऋचः अविकृतं गानं ततः प्रथमर्चपादमीशानमिन्द्रेति पुनरुपादाय उत्तरायाः पङ्क्तेः पूर्वार्द्धेन, न त्वावाँ अनेन मेलनेन अष्टाविंशत्यक्षरा त्रिपाद् भवति । सा चैका ककुप्संपन्ना । तथा न त्वामित्यत्यस्या द्वितीयपादः, न जात इत्यष्टाक्षरः । अश्वायन्त इति पङ्क्त्युत्तरार्द्धेन योजने सा ऽप्येका ककुबिति । एवं प्रागाथिकं कृत्वा, गातव्यमिति शेषः ॥ २५ ॥

## स्वे च ॥ २६ ॥

एवं कृते स्वे ककुभि, गानं कृतं भवतीति शेषः ॥ २६ ॥

## प्रगाथे च ॥ २७ ॥

प्रगाथे पूर्वपामृग्वर्णानां पुनर्ग्रहणे, प्रगाथशब्दप्रयोगो ऽप्युपपन्न इति शेषः। उपपत्तिश्चेत्थं, प्रकर्षेण गानं प्रगाथः। प्रकर्षश्च तेषां वर्णानां पुनः पुनर्गानमेव। अन्यासामौत्पत्तिकानां ककुभामानयने पुनः पुनर्गानानुपपत्तिरिति भावः॥ २७॥

लिङ्गदर्शनाच्च्यतिरेकाच्च॥ २८॥

लिङ्गदर्शनस्य, एषा वै प्रतिष्ठिता बृहती यत्पादं पुनरारभते इति बृहत्यर्थवादे पुनः पादारम्भलिङ्गदर्शनस्य अव्यतिरेकात्। गत्यन्तराभावात्।

बृहतीविष्टारपङ्क्त्योः प्रग्रथनेन रौरवयौधाजयसाम्नोर्गानम्। द्वितीयवर्णकम्।

यद्वा क्व चिद् रौरवयौधाजयौ बार्हते तृचे भवत इति। रौरवयौधाजयौ सामविशेषौ बार्हते बृहतीछन्दस्के तृचे भवत इत्यर्थः। तयोः पूर्वा बृहती उत्तरा विष्टारपङ्क्तिः। तत्र पूर्ववत्पूर्वपक्षे सिद्धान्तमाह। प्रागाथिकं कार्यं, बार्हतः प्रगाथ इति स्मृतेः। स्वे च। समीपपठिते गीतं भवति। तृतीयसूत्रार्थः पूर्ववत्। लिङ्गदर्शनं षष्टिः त्रिष्टुभ इति। त्रिष्टुभः माध्यन्दिनसवनसंबन्धिनः ऋचः षष्टिसंख्याका इति। इदं संख्यारूपलिङ्गदर्शनं तस्य अव्यतिरेकाद् अनन्यगतिकत्वात्। प्रग्रथने षष्टिसंख्याकं भवति स्वाभाविकबृहतां योजने अधिकसंख्याकं भवतीति भावः। यथा ऽधिकसंख्या भवति तद्विस्तारो भाष्यादवगन्तव्यो विस्तरभयान्नेह लिख्यते।

अनुष्टुब्गायत्र्योः प्रग्रथनेन श्यावाश्वान्धीगवयोर्गानम्। तृतीयवर्णकम्।

यद्वा क्व चिच्छ्रूयते श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवत इति। योनिभूता ऽनुष्टुब् उत्तरे गायत्री पाठक्रमे स्तः। गायत्री अपहाय अनुष्टुभावानेयाविति पूर्वपक्षे सिद्धान्तमाह। प्रेति। प्रागाथिकमनुष्टुभः पादं योजयित्वा गायत्र्यां प्रागाथिकं कार्यमानुष्टुभः प्रगाथ इति स्मृतेः। द्वितीयं स्वे चेति सूत्रं प्रगाथे चेति तृतीयं पूर्ववत्। लिङ्गेत्यत्र संख्याविशेषविरोधस्य विस्तरो भाष्ये ऽस्ति तत एवावगन्तव्यः।

पादप्रग्रथनेन ब्रह्मसामगानम्। चतुर्थवर्णकम्।

यद्वा गवामयने चतुःशतमैन्द्राबार्हताः प्रगाथा इति श्रुतम्। चतुःशतं चतुरुत्तरं शतम्। पठितेष्वेव ऋक्षु प्रथममेकस्मिन् तृचे गानं कृत्वा

पश्चात्पूर्वतृचसंबन्धिनीमेकामुत्तरे द्वे । एवमृक्प्रग्रथनं कृत्वा चतुःशतं संपादनीयमुत पादं पुनरारभतइति न्यायेन पूर्ववदेव ग्रथनमिति संशये ऋक्प्रग्रथनेनापि प्रगाथविध्युपपत्तेः ऋक्प्रग्रथनमेव कार्यमिति बहिः पूर्वपक्षे सिद्धान्तमाह । प्रागाथिकं पादयोजनया प्रागाथिकं कार्यम् । तत्र हेतुः । स्वे च । पठितसर्वर्तु प्रगाथः संभवति । ऋक्प्रगाथे तिसृणां पूर्वऋचामेकस्या एव प्रगाथः संभवति न द्वयोरिति भावः । प्रगाथे च । पादग्रथने एव याज्ञिकानां व्यवहारः अतो ऽपि सः । लिङ्गदर्शनम्, अन्या अन्या ऋचो भवन्तीति । पादग्रथने पूर्वऋचः पादमुत्तरऋचो ऽर्धमुभयोर्योजने संपन्ना ऋक्, पठितऋचो अन्या भवतीति । पूर्वतृचात् संपूर्णाया ऋच उत्तरत्र ग्रहणे पठितान्या न भवतीति पादग्रथनलिङ्गमनन्यगतिकमिति भावः ॥ २८ ॥

गीतिसंपादकानामक्षरविकारादीनां विकल्पः । अधि॰ ७ ।

## अर्थैकत्वाद्विकल्पः स्यात् ॥ २९ ॥

सामवेदे गीत्युपाया बहवः सन्ति ते समुच्चिता इति पूर्वपक्षे सिद्धान्तमाह । अर्थेति । अर्थैकत्वात् कार्यैकत्वात् ॥ २९ ॥

साम्ना स्तुवते इत्यस्यैव विधित्वम् । अधि॰ ८ ।

## अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥

ऋचा स्तुवते साम्ना स्तुवते यदृचा स्तुवते तदसुरा अन्ववायन्यत्साम्ना स्तुवते तदसुरा नान्ववायन् इति । अत्रोभयमृचा स्तुवते साम्ना स्तुवतइति तुल्यविधिः उत साम्ना स्तुवतइत्येव विधिः शेषो ऽर्थवाद इति संशये पूर्वपक्षमाह । अर्थेति । तदर्थत्वात्तुल्यतया स्तुत्यर्थत्वश्रवणात् । शेषं स्पष्टम् ॥ ३० ॥

## वचनाद्विनियोगः स्यात् ॥ ३१ ॥

सिद्धान्तमाह । वचनादिति । वचनाद् एकवाक्यत्वाद् विनियोगः साम्न एव नियमेन विनियोगः । असुरा अन्ववायन् इति निन्दया साम्नः स्तुतिसंभवादर्थवादत्वमिति भावः ।

अयं सहस्रेति ऋचा प्रगीतयैवोपस्थानम् । द्वितीयवर्णकम् ।

यद्वा अयं सहस्रमानव इत्येतया ऽऽहवनीयमुपतिष्ठतइति श्रुतम् । सामवेदे इयं ऋक् प्रगीता अप्रगीता च पठिता ऽस्ति । एवं सति अर्थैकत्वाद् उपस्थानरूपकार्यैकत्वाद्विकल्पः । ऋग् अप्रगीता साम प्रगीता तयोः द्वयोरुपस्थानार्थत्वाद् इति पूर्वपक्षसूत्रार्थः । वचनाद् उपस्थानविधिवाक्ये एतयेति सन्निहितबोधकवचनात् । प्रगीतमन्त्रस्यैव विनियोगः सिद्धान्तसूत्रार्थः । प्रगीतमन्त्रस्यैव सन्निहितत्वादिति भावः ।

अग्निर्मूर्धेत्यादियाज्यादीनां तानेन विनियोगः । तृतीयवर्णम् ।

यद्वा निखिलवेदे उदात्तानुदात्तादिस्वरविशेषा दृश्यन्ते एकस्वरता ऽपि दृश्यते । अत्र ऋक्सामयोरिति वेदमात्रोपलक्षकम् । तदर्थत्वाद् यज्ञार्थत्वात् स्वरयोरपि तदर्थत्वादेकार्थ्याद्विकल्प इति पूर्वपक्षसूत्रार्थः । वचनात् । यज्ञकर्मण्यजपन्यूङ्खसामस्विति पाणिनीयवचनान्नियमेन स्वरविनियोग इति सिद्धान्तसूत्रार्थः ॥ ३१ ॥

रथंतरमुत्तरयोर्गायतीत्यादौ उत्तरावर्णवशेन गानम् । अधि० ६ ।

## सामप्रदेशे विकारस्तदपेक्षत्वाच्छास्त्रकृतत्वात् ॥ ३२ ॥

एवं सामोहापोहाद्यतं समाप्य साम्न ऊहविचारमारब्धवान् । यद्योन्यां तदुत्तरयोर्गायतीति श्रुतः ऋगन्तरे सामातिदेशः अतिदेशेन प्राप्यमाणं साम ऋगन्तरे ऊह्यं न वेति संशयः । तत्र पुनः संशयः । उत्तरस्यामृच्यतिदिश्यमानं साम योनिवर्णानुसारेण गेयम् उतोत्तरावशेनेति । तत्र पूर्वपक्षमाह । सामेति । सामप्रदेशे सामातिदेशे विकारः आईभावादिलक्षणो विकारस्तदपेक्षः योन्यपेक्षः स्याच् शास्त्रकृतत्वात् । यद्योन्यां तदुत्तरयोरिति शास्त्रेण प्रतिपादितत्वात् । यत्र योनिभूता का चिद् ऋक् तत्र चतुर्थवर्णो इति तत्र एकारस्थाने आईभावः क्रियते । एवमेवोत्तरस्यामृचि ओ इति चतुर्थाक्षरम् । तत्र चतुर्थाक्षरोत्तरमोकारलोपं कृत्वा तत्रापि आईभावो योज्यः । एवं सति योनिवद्गानं भविष्यति । तथा च प्रकृतिवदेव गानं नोहप्रसक्तिरिति भावः ॥ ३२ ॥

## वर्णे तु बादरिर्यथा द्रव्यं द्रव्यव्यतिरेकात् ॥ ३३ ॥

सिद्धान्तमाह । वर्णेति । बादरिराचार्यः वर्णे उत्तरायामृचि यत्र एकार आयाति एकाररूपवर्णएव आईभावं मनुते । तथा क्रियमाणे वर्णव्यतिरेकाद् वर्णस्य एकारस्यव्यतिरेकाद् आई इति वर्णस्य सन्धिरूपत्वात् यथाद्रव्यं सन्धिरूपस्य पूर्ववर्णस्य विकारो कृतं भवति । अयं भावः । एकारः अवर्णमिवर्णं चाश्रित्य संहितारूपः तत्स्थाने प्रवृत्तः । यथेपेन्द्र इत्यत्र प्रकृतिरूप इन्द्र इति तथा ऋच्यपि एकारो यत्र तत्र तत्प्रकृतिभूतौ अकारेकारौ ऋचो घटकौ साम्नः स्ववर्णाभिव्यक्तिफलत्वात् । उत्तरत्रापि यत्र एकारः तत्र आई इत्यूहः । न तु पूर्वस्यांच यस्मिन्देशे आईभावः तत्र उत्तरत्रापि तस्मिन्नेव देशइति न नियमः । अतः सामोहः सिद्ध इति ॥ ३३ ॥

उत्तरयोः स्तोभातिदेशः । अधि० । १० ।

## स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४ ॥

क्व चिद् योनिभूतायामृचि स्तोभरूपा वर्णाः सन्ति ते उत्तरर्चे अतिदिश्यन्ते न वेति संशये पूर्वपक्षमाह । स्तोभस्येति । द्रव्यान्तरे उत्तरस्यामृचि स्तोभस्य निवृत्तिमेके आचार्या आहुः । ऋग्वत् ऋगक्षरवत् ॥ ३४ ॥

## सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात् ॥ ३५ ॥

सिद्धान्तमाह । सर्वेति । सर्वातिदेशः स्तोभसहितस्य साम्नः अतिदेशः स्यात् । सामान्यात् स्तोभस्वरकालाभ्यासविशिष्टे सामान्यात् । लोकव्यवहारात् । ननु ऋक्शब्दार्थैरसंबध्यमानाः स्तोभवर्णाः किमित्युच्चार्येयुरुत्तरस्यामृचीत्याशङ्कायामाह । लोकवद्विकारः स्यात् । यथा लोके गायकैः मध्ये गानशोभार्थमनर्थकवर्णा अपि प्रयुज्यन्ते तथोत्तरर्च्यपि स्तोभवर्णप्रक्षेपरूपो विकारः स्यात् ॥ ३५ ॥

## अन्वयं चापि दर्शयति ॥ ३६ ॥

अन्वयमिति । स्तोभाक्षराणामुत्तरर्च्यन्वयं दर्शयति वाक्यविशेषः । स्तोभा गेष्णाश्चानुयन्तीति । गेष्णाः स्वराः स्तोभाश्च अनुयन्ति उत्तरत्रानुवर्तन्तइति ॥ ३६ ॥

## निवृत्तिर्वा ऽर्थलोपात् ॥ ३७ ॥

सिद्धान्तमाक्षिपति। निवृत्तिरिति। निवृत्तिरनिष्टपतीत्येवंजातीयकानां स्तोभानाम्। शीतकर्मा हीन्द्रो वाक्यशेषउपलभ्यते। अतः अर्थस्य शीतकर्मणः लोपाद् एवंजातीयकानां निवृत्तिः ॥ ३७ ॥

## अन्वयो वा ऽर्थवादः स्यात् ॥ ३८ ॥

सिद्धान्तं व्यवस्थापयति। अन्वय इति। एवंजातीयकानामपि स्तोभानामन्वयः अनुवृत्तिर्न निवृत्तिः। शीतकर्मा हीन्द्र इत्यर्थवादो न स्वार्थे न प्रमाणं यतो ऽर्थलोपः स्यात्। न हि वयमिन्द्ररूपं प्रत्यक्षमुपलभामहे। अतः स्तोत्रमात्रस्यानुवृत्तिः ॥ ३८ ॥

स्तोभलक्षणम्। अधि० ११।

## अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥

स्तोभलक्षणमाह। अधिकमिति। ऋगक्षरेभ्यो ऽधिकं विवर्णं च ऋक्पाठदशायामविद्यमानं च वस्तु स्तोभपदवाच्यं स्तोभशब्दत्वात्। देवदत्तेन सभायां प्रलपता बहुस्तोभं कथितमिति निरर्थकशब्द एव स्तोभशब्दव्यवहारात् ॥ ३९ ॥

नीवारादिषु प्रोक्षणावघातादिधर्मानुष्ठानम्। अधि० १२।

## धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥

क्वचिन्नैवारं चरुं निर्वपेद् इति। तत्र नीवारे प्रोक्षणमस्ति न वा। तथा संस्थिते षडहे मध्वाशयेद् घृतं वेत्यत्र मध्वाशने षडहधर्माः सन्ति न वा। तथा क्वचिन्नखनिर्भिन्नचरुर्विहितः। तत्र नखेषु प्रोक्षणमस्ति न वा। क्वचित्परिधौ पशुं नियुञ्जीतेति। तत्र परिधौ यूपधर्माः सन्ति न वा। तथा न गिरागिरेति ब्रूयाद् ऐरं कृत्वोद्गेयमित्यत्रैरापदे गिरावर्णधर्माः सन्ति न वेत्यादिषु संशयेषु पूर्वपक्षस्य शिथिलत्वाद् उपेक्ष्य सिद्धान्तमाह। धर्मस्येति। द्रव्ये नीवारादौ गुणे च मध्वशनादौ विकारे नखादौ व्यतिक्रमे परिध्यादौ प्रतिषेधे प्रतिषिध्य विहितैरापदादौ चोदनानुबन्धः विधीयमानप्रोक्षणादिधर्मसंबन्धः स्यात्। समवायाद् व्रीह्यादिस्थानसंबन्धात्।

धर्मस्य च प्रोक्षणादेः अर्थः व्रीह्यादौ अपूर्ववचनसामर्थ्यरूपं कार्यं तत्कृतत्वात् तत्प्रयोज्यत्वात् । नीवारादौ सर्वत्र तत्प्रयोजकसत्त्वाद् उक्तस्थलेषु स्थानिनो धर्मा अनुष्ठेया इति भावः ॥ ४० ॥

परिधौ यूपधर्मानुष्ठानम् । अधि० १३ ।

## तदुत्पत्तेस्तु निवृत्तिः तत्कृतत्वात् स्यात् ॥ ४१ ॥

पूर्वाधिकरणे परिधौ यूपधर्माः कार्या इत्युक्तं सिद्धान्ते । तदाक्षेपरूपं पूर्वपक्षमाह । तदिति । परिधेः तदुत्पत्तेः आहवनीयपरिधानार्थमुत्पत्तेः निवृत्तिः यूपधर्माणां निवृत्तिः स्यात् । यूपधर्माणां तत्कृतत्वात् केवलपशुनियोजनार्थं यदुत्पन्नं तत्प्रयोज्यत्वात् । निवृत्तिः यूपधर्माणां निवृत्तिः स्यात् ॥ ४१ ॥

## आवेश्येरन्वा ऽर्थवत्त्वात् संस्कारस्य तदर्थत्वात् ॥ ४२ ॥

सिद्धान्तमाह । आवेश्येरन्निति । यूपधर्माणां तदर्थत्वात् पशुबन्धनरूपकार्ये नियुक्तं यत्तदर्थत्वात् । अर्थवत्त्वात् पशुनियोजनरूपकार्यवत्त्वात् । यूपधर्माः परिधौ आवेश्येरन् अनुष्ठीयेरन् ॥ ४२ ॥

## आख्या चैवं तदावेशाद् विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥

ननु यूपधर्मे ऽयाञ्जनस्य वेलायां प्रकृतौ यूपायाज्यमानायानुब्रूहीति प्रैषो ऽस्ति । तत्र यूपपदस्थाने परिधिपदस्य ऊहः कार्य इत्यत्राह । आख्येति । आहवनीयशब्दवद् यूपशब्दस्यापूर्वत्वात्संस्कारनिमित्तत्वाद् विहितपरिव्याणाञ्जनादिसंस्काराणामेव यूपपदशक्यतावच्छेदकत्वात् । परिधौ संस्काररूपशक्यतावच्छेदकसत्त्वाद् एवं प्रकृतिवत् आख्या यूपशब्दः परिधौ प्रवर्तेत । तथा च परिधये इति नोह इत्यर्थः ॥ ४३ ॥

श्रुतादौ प्रणीताधर्मानुष्ठानम् । अधि० १४ ।

## परार्थे न त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥

यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद् ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं ये ऽणिष्ठास्तान् विष्णवे शिपिविष्टाय

शृते चरुमिति । अत्र दधिशृतयोः देवतोद्देशेन प्रधानार्थत्वमिति षष्ठे व्यवस्थितम् । अत्र दधिशृतयोः प्रणीताधर्मा उत्पवनादयः कार्या न वेति संशये पूर्वपक्षमाह । परेति । परार्थे प्रधानयागार्थे दध्नि शृते च न प्रणीताधर्माः यतः । अर्थसामान्यं न, प्रणीताकार्यकारित्वं न, अतः संस्कारस्य उत्पवनादेः तदर्थत्वाद् हविःश्रपणार्थत्वात् ॥ ४४ ॥

## क्रियेरन्वा ऽर्थनिर्वृत्तेः ॥ ४५ ॥

सिद्धान्तमाह । क्रियेरन्निति । तद्धर्माः तयोः क्रियेरन् प्रधानार्थत्वे ऽपि अर्थस्य हविःश्रपणस्यापि निर्वृत्तेः ताभ्यामुत्पत्तेः । एकेन कार्यद्वयसाधने बाधकाभावादिति भावः ॥ ४५ ॥

बृहद्रथंतरयोर्धर्मव्यवस्था । अधि० १५ ।

## एकार्थत्वादविभागः स्यात् ॥ ४६ ॥

ज्योतिष्टोमे बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवतीति । अनयोरेकार्थत्वाद्विकल्प इति स्थितं, तथा ऽपि रथन्तरे स्तूयमाने संमीलयेद् बृहति स्तूयमाने समुद्रं ध्यायेद् इत्यादिधर्माः उभयत्र समुच्चयेन कार्याः उत तत्रैवेति नियम्यन्तइति संशये पूर्वपक्षमाह । एकेति । एको ऽर्थः कार्यं पृष्ठस्तोत्ररूपं ययोः तौ एकार्थौ बृहद्रथन्तरे तत्त्वाद् धर्मयोर्विभागेन अनुष्ठानं न ॥ ४६ ॥

## निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥

सिद्धान्तमाह । निर्देशादिति । वाक्ये स्वस्वोद्देश्यतावच्छेदकानां रथन्तरत्वादीनां निर्देशाद् व्यवतिष्ठेरन् तद्धर्मास्तस्यैवेति नियम्येरन् ॥ ४७ ॥

काण्वरथन्तरे बृहद्रथन्तरधर्मसमुच्चयः । अधि० १६ ।

## अप्राकृते तद्विकाराद् विरोधाद् व्यवतिष्ठेरन् ॥ ४८ ॥

वैश्यस्तोमे पृष्ठस्तोत्रत्वेनं कण्वरथन्तरं विहितम् । तत्र बृहद्रथन्तरयोर्धर्मद्वयं समुच्चीयते उत विकल्प इति संशये विकल्प इति पूर्वपक्षे सिद्धान्तमाह । अप्राकृतइति । अप्राकृते कण्वरथन्तरे तयोः बृहद्रथन्तरयोः विकाराद् उभयोः स्थानापन्नत्वाद् उभयधर्माः स्युः । ननु

नोच्चैर्गेयमिति रथन्तरधर्मः, उच्चैर्गेयमिति बृहद्धर्मः । एवं विरुद्धयोः कथं समावेशः अत्राह । विरोधाद् व्यवतिष्ठते अन्यतरधर्म इति कल्प्यते ॥ ४८ ॥

द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्था । अधि॰ १७ ।

## उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४९ ॥

संसवादिक्रतौ पृष्ठस्तोत्रे उभे अपि बृहद्रथन्तरे समुच्चयेन विहिते तत्र प्रत्येकमुभयधर्मप्राप्तिर्न वेति संशये पूर्वपक्षमाह । उभयसाम्नीति । उभयसाम्नि संसवादौ एवं कण्वरथन्तरवत् प्रत्येकं धर्मद्वयमुभयोरपि एकार्थे पृष्ठस्तोत्ररूपैककार्ये आपत्तेः प्राप्तत्वात् ॥ ४९ ॥

## स्वार्थत्वाद्वा व्यवस्था स्यात् प्रकृतिवत् ॥ ५० ॥

सिद्धान्तमाह । स्वेति । उक्तधर्माणां स्वार्थत्वाद् बृहद्रथन्तरादिरूपसामार्थत्वाद् व्यवस्था रथन्तरे तद्धर्मः बृहति बृहद्धर्म इति व्यवस्था स्यात् । यथा प्रकृतौ ज्योतिष्टोमे सामप्रयुक्ता व्यवस्था तथैवात्रापि धर्माणां पृष्ठस्तोत्रार्थत्वे प्रकृतावपि धर्मसांकर्यापत्तेरिति भावः ॥ ५० ॥

सौर्यादिषु पार्वणहोमाद्यननुष्ठानम् । अधि॰ १८ ।

## पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि ॥ ५१ ॥

दर्शपूर्णमासयोः स्रुवेण पार्वणौ होमावित्यस्ति, स सौर्ययागादावतिदिश्यते न वेति संशये सिद्धान्तेनोपक्रमते । पार्वणेति । वैकृतकर्मसु पार्वणहोमयोरप्रवृत्तिः समुदायः दर्शत्रिकं पौर्णमासत्रिकं तद्रूपो यः अर्थः तेन संबन्धात् । तदभीज्या तं समुदायमुद्दिश्य इज्या यागः । अयं भावः । पार्वणावित्यत्र तद्धितो देवतावाचकः पर्वशब्दः प्रत्येकं त्रिकद्वयवाचकः । पयवद्धपुरोडाशयागवत्त्रिकसमुदायसंस्कारात्मको होमः समुदायोपकारकः । सौर्ययागे न त्रिकं, न वा सौर्ययागोऽसौ समुदायविकारः, किंतु केवलाग्निविकारः । तत्र समुदायोपकारकधर्मप्राप्तिप्रसक्तिर्नेति ॥ ५१ ॥

## कालस्येति चेत् ॥ ५२ ॥

ननु पर्वशब्दः कालवाचको ऽपि पर्वसु चोभयोरुपवास इति व्यवहारात् कालदेवताकः प्रयाजादिवदारादुपकारकः । तस्यातिदेशो भविष्यतीत्याशङ्कते । कालस्येति । वाचकः पार्वणशब्द इति योज्यम् ॥ ५२ ॥

## नाप्रकरणत्वात् ॥ ५३ ॥

दूषयति । नेति । कालस्याप्रकरणत्वात् । यथा सैन्धवशब्दस्य नानार्थत्वे ऽपि भोजनादिप्रकरणं लवणादितात्पर्यग्राहकं तथा यागत्रिके तात्पर्यग्राहकं प्रकरणं, कालस्य न प्रकरणमिति भावः ॥ ५३ ॥

## मन्त्रवर्णाच्च ॥ ५४ ॥

ऋषभं वाजिनं वयं पूर्णमासं यजामहे इति मन्त्रलिङ्गात् ॥ ५४ ॥

## तदभावे ऽग्निवदिति चेत् ॥ ५५ ॥

यद्यपि एतत्त्रिकं सौर्ययागे नास्ति तथा ऽपि अन्या एतत्संज्ञिका देवता भविष्यन्ति । अथ वा असंनिहितो ऽपि अग्न्यादिसमुदायः सौर्ययागोपकारं किमिति न जनयेदिति शङ्कते । तदिति । तदभावे सौर्ययागे अग्न्यादित्रिकाभावे सति असंनिहितो ऽपि समुदायः उपकरोत्विति पूरणम् । अग्निवत् । यथा अग्निमग्न आवहेति संनिहितः असंनिहितो वा ऽग्निर्यागार्थमावाह्यते तथा ॥ ५५ ॥

## नाधिकारिकत्वात् ॥ ५६ ॥

अयं पक्षो न युक्त इत्याह । नेति । पार्वणहोमस्य प्रकृतत्रिकसंस्काररूपत्वमेव । त्रिकर्माधिकृत्य पठितत्वात् । इत्थं च यस्याधिकारः तस्यैव गुणं विदधाति नेतरस्येति भावः ॥ ५६ ॥

दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्था । अधि· १९ ।

## उभयोरविशेषात् ॥ ५७ ॥

इमौ पार्वणहोमौ दर्शे पूर्णमासे च समुच्चितौ उत लिङ्गेन व्यवस्थिताविति संशये पूर्वपक्षमाह । उभयोरिति । उभयोर्दर्शपूर्णमासयोः होमद्वयं समुच्चितमविशेषाद् नियामकाभावात् ॥ ५७ ॥

## यदभीज्या वा तद्विषयौ ॥ ५८ ॥

सिद्धान्तमाह । यद्धिति । यद्भीज्या यन्नामकयागो यत्र तद्गुणयो तदुपकारकौ । तथा च पौर्णमास्यां पौर्णमासत्रिकस्मरणात्मकसंस्कारार्थं त्वात्पूर्णमासाय स्वाहेति । तथैवामावास्यायै स्वाहेति अमावास्यायामेवेति व्यवस्थेति भावः ॥ ५८ ॥

समिदादीनां यागनामता । अधि॰ २० ।

## प्रयाजे ऽपीति चेत् ॥ ५९ ॥

दर्शपूर्णमासयोः समिधो यजति तनूनपातं यजतीत्यादिवाक्यैः समिदादिदेवता उद्दिश्य यागः संस्काररूपो विधीयते उतायमारादुपकारक इति संशये पूर्वपक्षमाह । प्रयाजे ऽपीति । संस्काररूपत्वं पार्वणवदिति सूत्रे पूरणीयम् ॥ ५९ ॥

## नाचोदितत्वात् ॥ ६० ॥

सिद्धान्तमाह । नेति । अचोदितत्वात् । यथा अग्न्यादियागत्रयं प्रत्येकवाक्यैर्विहितं तत्समुदायस्य समुदायस्मरणमेवं समिदादीनां देवतानां पूर्वमविहितत्वेन तदनुवादेन संस्कारार्थं यागविध्यसंभवात् ॥ ६० ॥

इति जैमिनिसूत्रवृत्तौ नवमाध्यायस्य द्वितीयः पादः ॥ २ ॥

विकृतौ मन्त्रागतव्रीह्यादिशब्दानामूहः अधि॰ १ ।

## प्रकृतौ यथोत्पत्तिवचनमर्थानामुत्तरस्यां तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥

प्रकृतौ अग्नये जुष्टं निर्वपामीति मन्त्रः स सौर्ययागे ऊहितव्यो न वेति संशये तत्प्रकृतित्वादित्यन्तेन अर्धसूत्रेण पूर्वपक्षमाह । प्रकृताविति । प्रकृतौ दर्शपूर्णमासयोः यथोत्पत्तिः यत्पदघटिततया मन्त्राणामुत्पत्तिः तत्पदघटितैरेव मन्त्रैः अर्थानामग्न्यादिदेवतानां वचनमभिधानमुत्तरस्यां सौर्यादीष्टौ तथा तत्प्रकृतित्वात् तस्याः प्रकृतिवद्विकृतिः कार्येति चोदकशास्त्रबलादित्यर्थः । शेषसूत्रेण सिद्धान्तः, अर्थे सूर्यप्रकाशनरूपे कार्ये प्रकृतिपठिताग्निपदघटितमन्त्रस्य अकार्यत्वाद् असमर्थत्वात् सूर्यपदस्य ऊह आवश्यक इति चकारेण दर्शितः ॥ १ ॥

## लिङ्गदर्शनाच्च ॥ २ ॥

अन्यं हेतुमाह । लिङ्गेति । न माता वर्धते न पिता न भ्राता न स्वसेति । न वर्धते नोहं प्राप्नोतीति तदर्थः । इत्थं च एतेषां पदानामूहो नास्तीत्युक्ते अर्थादितरेषामूह इति ॥ २ ॥

पौण्डरीकेषु हविःप्रस्तरणमन्त्रस्योहः । अधि० २ ।

## जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥

अपर्यवसिते ऽधिकरणे विचारान्तरं जातीति । सौद्धं चरुं निर्वपेच्च श्रीकाम इतीष्ट्यां पौण्डरीकं बर्हिर्भवतीति श्रुतम् । प्रकृतौ बर्हिस्तरणमन्त्रः दर्भैः स्तृणीतं हरितैः सुपर्णैरिति अतिदेशेन प्राप्तः । तत्र दर्भस्थाने पुण्डरीकैरित्यूहः क्लृप्तः । तथा हरितैरिति स्थाने रक्तैरित्यप्यूहं न वेति संशये सुब्रह्मण्यानिगदे इन्द्रविशेषणहरिवेत्यादेराग्नेयी सुब्रह्मण्येत्यनूहपाठ इवात्राप्यनूहेनैव पाठ इति बर्हिः पूर्वपक्षे सिद्धान्तमाह । जातीति । जातौ जातिवाचकदर्भशब्दे नैमित्तिकं विशेषणभूतं हरितैरिति पदं तत् यथास्थानं यथायोग्यमूह्यं तत्स्थाने रक्तैरिति प्रयोक्तव्यम् । इन्द्रे हरिवादिगुणसत्त्वे मानाभावेन ते केवलमदृष्टार्थाः अत्र दर्भेषु हरिद्वर्णः प्रत्यक्षगम्यः तत्प्रकाशनं दृष्टं फलमतो वैषम्यमिति भावः ॥ ३ ॥

## लिङ्गदर्शनाच्च ॥ ४ ॥

लिङ्गेति । क्व चिदुक्तपशौ विशेषणवाचकपदोत्तरवचनानामूहेनैव मन्त्रपाठो दृश्यते । विश्वेषां देवानामुस्राणां छागानां वपानां मेदसो ऽनुब्रूहीति । इदं लिङ्गम् ॥ ४ ॥

## अविकारमेके ऽनार्षत्वात् ॥ ५ ॥

प्रथमसूत्रे अर्धसूत्रेण अनूह इति पूर्वपक्षो यः स्थितः तं दृढीकरोति । अविकारमिति । अविकारमनूहं प्रकृतिवदेव पठितव्यमिति एके आहुः । अनार्षत्वान्मन्त्रस्य अपौरुषेयत्वात् । ऊहे मन्त्रत्वं भज्येतेति भावः ॥ ५ ॥

## लिङ्गदर्शनाच्च ॥ ६ ॥

लिङ्गेति । क्व चिदाग्नेये पशौ अग्नये छागस्य वपाया मेदसो ऽनुब्रूहीति । यद्यूहः स्याद् ऊहेनैवैतन्मन्त्रस्वरूपसिद्धौ अग्निपदघटितमन्त्रपाठो व्यर्थ इति भावः ॥ ६ ॥

## विकारो वा तदुक्तो हेतुः ॥ ७ ॥

इमं पक्षं दूषयति । विकार इति । विकार ऊहः कार्यः तत तत्र उक्तो हेतुः प्रथमसूत्रे अकार्यत्वादिति । मन्त्रत्वं भज्येतेत्यत्र दृष्टापत्तिरेवेति भावः ॥ ७ ॥

## लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ८ ॥

ननूक्तलिङ्गस्य का गतिरत्राह । लिङ्गमिति । मन्त्रचिकीर्षया अत्र मन्त्रत्वमास्तामितीच्छया अग्नये छागस्येति मन्त्रपाठ इति भावः ॥ ८ ॥

## नियमो वोभयगामित्वात् ॥ ९ ॥

ननु अग्नये छागस्येति मन्त्रपाठफलं दर्शितं तथा ऽपि यद्यूपमुपस्पृशेद्, एष ते वायो इति ब्रूयाद्यदि द्वौ एतौ ते वायू इति ब्रूयादित्यत्र ऊहेनैव द्विवचनान्तसिद्धौ एतौ इति ब्रूयादिति वाक्यं व्यर्थं सद् ऊहाभावं ज्ञापयतीत्याशङ्कायामाह । नियम इति । एतद्विध्यभावे एकवचनद्विवचनान्तमन्त्रमात्रपाठे एकयूपस्य स्पर्शस्य उभयभागित्वात् विकल्पेन मन्त्रद्वयभागित्वाद् अनेन विधिना नियमः क्रियते । एकयूपस्पर्शे एकवचनान्तमपरं यूपद्वयस्य स्पर्शे इति विधिः न व्यर्थ इति भावः ॥ ९ ॥

अग्नीषोमीयपशौ लौकिकयूपस्पर्शे प्रायश्चित्तम् । अधि० ३ ।

## लौकिके दोषप्रसङ्गाद् अपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ॥ १० ॥

अयं यूपस्पर्शः वैदिको लौकिकश्च निमित्तं मन्त्रपाठे उत लौकिक इति संशये अविशेषादुभयमिति पूर्वपक्षे सिद्धान्तमाह । लौकिकइति । लौकिके स्पर्शे अयं मन्त्रः दोषसंयोगात् यदि यूपं स्पृशेत्प्रतिष्ठायाश्च्यवेतेति दोषसंयोगात् । अपवृक्ते निषिद्धे स्पर्शे निमित्ते अयं मन्त्रः चोद्यते विधीयते प्रकृते क्रत्वर्थस्पर्शे निषेधस्याभागित्वात् । अप्राप्तत्वात् न स्यात् न मन्त्रपाठः स्यात् ॥ १० ॥

द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तपदयोर्द्विवचनान्तेनोहः । अधि० ४ ।

## अन्यायस्त्वविकारेण दृष्टप्रतिघातित्वाद् अविशेषाच्च तेनास्य ॥ ११ ॥

अग्नीषोमीयपशौ अदितिः पाशं प्रमुमोक्त्वेतं नमः इत्येको मन्त्रः अदितिः पाशान्प्रमुमोक्त्वेतं नम इति एकवचनान्त बहुवचनान्तं मन्त्रद्वयं पठितम् । प्रकरणादुभयोरपि तत्रैव निवेश इति अग्रिमाधिकरणे सिद्धम् । एवं सति मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च संधावन्नकाम इति । तत्र द्विपशुके कथं पठितव्यमिति विचारे प्रथमपक्षमाह । अन्याय इति । अन्यायः प्रकृतौ एकपाशे प्रयोक्तुमयोग्यो बहुवचनान्तो मन्त्रः द्विपशुके अविकारेण प्रयोक्तव्यः । ननु रशनाद्वये बहुवचनप्रयोगो बाधितार्थस्स्यादत्राह । दृष्टप्रतिघातित्वात् । प्रकृतौ एकपशौ दृष्टः प्रतिघातः बाधितार्थः यस्य तत्त्वात् । तेनाग्नीषोमीयैकरशनया अविशेषाद्द्विबहुसंख्यात्वेन । यथा प्रकृतौ निर्वाहस्तथा ऽत्रापि भविष्यतीति भावः ॥ ११ ॥

## विकारो वा तदर्थत्वात् ॥ १२ ॥

पक्षान्तरमाह । विकार इति । विकारः एकवचनान्तमन्त्रस्यातिदेशं कृत्वा स द्विवचनान्त ऊहः । तदर्थत्वात् । वचनबोध्यसंख्यायाः प्रकृत्यर्थपरिच्छेदार्थत्वात् । प्रकृतौ एकवचनान्तमन्त्रः पाशपरिच्छेदकतया समवेतार्थः तस्यैव विकृतावतिदेशे एकवचनेन द्वित्वबोधासंभवात् द्विवचनान्त ऊह्यः । बहुवचनान्तमन्त्रः निरर्थकवचनः पाठवैयर्थ्यभिया प्रकृतिमात्रे वर्ततइति भावः ॥ १२ ॥

## अपि त्वन्याय्यसंबन्धात् प्रकृतिवत्परेष्वपि यथार्थं स्यात् ॥ १३ ॥

पक्षान्तरमाह । अपि त्विति । प्रकृतिवत् परेष्वपि विकृतिष्वपि अन्याय्यस्य बहुवचनान्तस्य अनूहेन संबन्धः एकवचनान्तस्य यथार्थमर्थाबाधेन प्रयोगाद्द्विवचनान्त ऊहितव्यः द्वयोरपि विकल्पेनातिदेश इति भावः ॥ १३ ॥

## यथार्थं च न्यायस्याचोदितत्वात् ॥ १४ ॥

सिद्धान्तमाह । यथार्थमिति । मन्त्रद्वयस्यापि यथार्थमर्थाबाधेन द्विवचनान्तेन पाठः अन्याय्यस्य प्रकृतिवदनूहपाठस्य अचोदितत्वात् । अशास्त्रत्वात् । यथा एकपाशे बहुवचनप्रयोगो दृष्टः प्रकृतौ तथा पाशद्वये अदृष्टः अतः तस्याप्यूह आवश्यक इति भावः ॥ १४ ॥

## छन्दसि तु यथादृष्टम् ॥ १५ ॥

ननु प्रकृतौ एकरशनायां बहुवचनान्तं किमिति प्रयुक्तमत्राह । छन्दसीति । यथादृष्टं यथा पठितं तथैव पठनीयं, न तत्र कुतर्कावसर इति भावः ॥ १५ ॥

## अन्याय्यस्याचोदितत्वात् ॥ १६ ॥

ननु प्रकृतितोऽर्थबाधस्य अतिदिष्टत्वादूहे क्रियमाणे तद्बाध इत्यत आह । अन्याय्यस्यार्थबाधस्य अचोदितत्वात्प्रकृतावविहितत्वाद्विहितस्यैव अतिदेश इति भावः ॥ १६ ॥

अग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाधायिमन्त्रयोर्विकल्पः । अधि॰ ५ ।

## विप्रतिपत्तौ विकल्पः स्यात् तत्समत्वाद्गुणे त्वन्यायकल्पनैकदेशत्वात् ॥ १७ ॥

अग्नीषोमीयप्रकरणे पठितौ पूर्वोक्तमन्त्रौ प्रकृतावेव निविशेते उत बहुवचनविरोधेन बहुवचनान्तमन्त्रः बहुपशुके उत्कृष्यतइति संशये सिद्धान्तेनोपक्रमते । विप्रतिपत्ताविति । विकल्पः न उत्कर्षः समत्वादुभयोरेकबहुवचनान्तयोः मन्त्रयोः प्रकरणपाठस्य तुल्यत्वात् । प्रकृतौ पाशस्य एकत्वान्मन्त्रस्य बहुत्वाभिप्रायत्वाद् विप्रतिपत्तौ विरोधे सति एकदेशत्वादप्रधानत्वाद्गुणेऽप्रधाने बहुवचने अन्यायस्य विवक्षाभावस्य कल्पनं युक्तम् । न तु अङ्गानुसारेण प्रधानस्य प्रातिपदिकार्थस्य उत्कर्ष इति भावः ॥ १७ ॥

## प्रकरणविशेषाच्च ॥ १८ ॥

प्रकरणाविशेषात् पशुप्रकरणस्य उभयोस्तुल्यत्वात् । इदं प्रथमसूत्रे समत्वादित्यत्र हेतुभूतम् ॥ १८ ॥

## उत्कर्षो वा द्वियज्ञवत् ॥ १९ ॥

पूर्वपक्षमाह । उत्कर्ष इति । बहुपशुके उत्कर्षः द्वियज्ञवत् । यथा तृतीये युवं हि स्थः स्वःपती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादित्यत्र मन्त्रे स्वःपती इति यजमानगतद्वित्वस्य प्रकृतौ असंभवादेतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति कुलायनामके द्वियजमानयागे उत्कर्ष इत्युक्तं, तथा ऽत्रापीति भावः ॥ १९ ॥

## अर्थाभावात्तु नैवं स्याद्गुणमात्रमितरत् ॥ २० ॥

उक्तदृष्टान्तवैषम्यमाह । अर्थेति । अर्थस्य द्वित्वविशिष्टरूपार्थबोधकविधेः प्रकृते अभावाद् गुणमात्रं वचनबोध्यसंख्याविशेषणमात्रमितरद् युवं हि स्थः स्वःपती इति मन्त्रः नैवं स्यात् । विनियोजकविधिहीनो न, अतो वैषम्यं युवं हि स्थः स्वःपती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादिति विधिर्न स्यात् तत्रापि नोत्कर्षो भवेदिति भावः ॥ २० ॥

## द्यावोस्तथेति चेत् ॥ २१ ॥

ननु मा ऽस्तु यज्ञदृष्टान्तः दर्शपूर्णमासप्रकरणपठितं यदनुमन्त्रणं द्यावापृथिव्योरहं देवयज्यया वृत्रहा भूयासमिति तस्योत्कर्षस्तृतीये व्यवस्थापितः तद्दृष्टान्तेन प्रकृते बहुवचनान्तमन्त्रस्योत्कर्ष इत्याशङ्कते । द्यावोरिति । द्यावोः द्यावापदघटितमन्त्रस्य यथा तथा ॥ २१ ॥

## नोत्पत्तिशब्दत्वात् ॥ २२ ॥

अत्रापि वैषम्यं दर्शयति । नेति । प्रकृते रशनया यूपं परिव्ययतीति पाशस्य उत्पत्तेः शब्दो यस्य तत्त्वात् । पाशस्य प्रातिपदिकार्थस्य अङ्गत्वप्रतिपादकः शब्दो ऽस्ति द्यावापृथिव्योः दर्शपूर्णमासे तथा शब्दो ऽस्ति अतः प्रातिपदिकार्थो ऽपि तत्र बाधित इति भावः ॥ २२ ॥

दर्शपूर्णमासयोर्द्विपत्नीके प्रयोगे पत्नीं संनह्येतिमन्त्रस्यानूहः । अधि० ६ ।

## अपूर्वे त्वविकारो ऽप्रदेशात्प्रतीयेत ॥ २७ ॥

दर्शपूर्णमासयोः पत्नीं सनह्याज्येनोदेहीति मन्त्रो ऽस्ति बहुपत्नीकदर्शपूर्णमासप्रयोगे पत्नीशब्दो बहुवचनान्त ऊहितव्यो न वेति

संशये एकत्वबाधादूह इति पूर्वपक्षे सिद्धान्तमाह । अपूर्वइति । अपूर्वे प्रकृतौ अविकारः अनूहः प्रतीयेत अप्रदेशाद् धर्माणामतिदेशेन प्राप्त्यभावात् अतिदेशस्थले एव ऊहप्रसक्तेरिति भावः ॥ २७ ॥

द्विपत्नीके विकृतियागे ऽपि मन्त्रस्यानूहः । अधि० ७ ।

## विकृतौ चापि तद्वचनात् ॥ २८ ॥

अयमेव मन्त्रः बहुपत्नीकसौर्ययागे ऊह्यो न वेति संशये विकृतावूहे बाधकाभावाद् ऊह्य इति पूर्वपक्षे सिद्धान्तमाह । विकृतौ चेति । विकृतावप्यनूहः तद्वचनात् पत्नीमात्रतात्पर्यकवचनात् । प्रकृतौ संख्याया अविवक्षितत्वाद् विकृतावपि तथैव संभवान्नोह इति भावः । ननु द्विपशुके पाशमन्त्रस्य बहुवचनान्तस्य द्विवचनान्ततया ऊहः कथमुक्त इति चेदुच्यते । द्विपत्नीके बहुपत्नीके प्रकृतौ एकवचनान्तो वैदिकः प्रयोगो दृष्टः द्विपशुके तथा बहुवचनान्तः वैदिकः प्रयोगो न दृष्ट इति वैषम्यम् ॥ २४ ॥

सवनीयपशूनां समानविधानत्वे प्रास्माअग्निमिति मन्त्रे ऽनूहः । अधि० ८ ।

## अध्रिगुः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ २५ ॥

अध्रिगुप्रैषो ऽपि सवनीयेषु संस्थापशुषु तद्वत् पत्नीं सन्नह्येतिवत् पशुधर्माः समानविधानाश्चेदित्यनेन क्त्वाचिन्ता सूचिता । तृतीये समानविधानत्वस्य दूषितत्वात् ॥ २५ ॥

नीवाराणां व्रीहिप्रतिनिधित्वे व्रीहिशब्दस्यानूहः । अधि० ९ ।

## प्रतिनिधौ चाविकारात् ॥ २६ ॥

यत्र व्रीह्यलाभे व्रीहिसदृशा नीवारा गृह्यन्ते प्रकृतौ तादृशे प्रतिनिधौ तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति मन्त्रस्योहः नीवाराणां मेधेऽस्ति न वेति संशये सिद्धान्तमाह । प्रतिनिधाविति । प्रतिनिधौ नीवारादौ अविकाराद् अनूहेन पाठः ॥ २६ ॥

## अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ॥ २७ ॥

पूर्वपक्षमाह । अनाम्नानादिति । मन्त्रे व्रीहिशब्दस्य अनाम्नानाद् अपाठात् । मन्त्रे यदि व्रीहिशब्दस्य पाठो न स्यात्तदा ऊहो न स्यादिति

फलितम् । मन्त्रे व्रीहिशब्दपाठेन उक्तकल्पस्याभावात् । इतरस्य नीवारस्य अशब्दत्वं व्रीहिशब्दावाच्यत्वमत ऊहः स्यात् ॥ २७ ॥

## तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् ॥ २८ ॥

सिद्धान्तं द्रढयति । तादर्थ्यादिति । संस्कारैः प्रोक्षणावहननादिव्रीहिसंस्कारैः अविशिष्टत्वाद् अन्यूनानतिरिक्तत्वात् । व्रीहिसंबन्धियावत्संस्कारयुक्तत्वादिति भावः । तादर्थ्यात् तेषां व्रीहीणामर्था अवयवाः येषां नीवाराणां तत्त्वात् । उभयोरवयवयोरैक्यादिति भावः । तदाख्यं नीवारद्रव्यमपि तदाख्यं स्याद् व्रीहिशब्दनामकं स्यात् । अतो नोहः ॥ २८ ॥

## उक्तं च तत्त्वमस्य ॥ २९ ॥

ननु नीवाराणां व्रीह्यवयवत्वे किं मानमत आह । उक्तमिति । अस्य उभयोरेकावयवत्वस्य तत्त्वं प्रमाणमुक्तं षष्ठे ॥ २९ ॥

द्विपशुयागे सूर्यं चक्षुर्गमयतादिति मन्त्राणामनूहः । अधि॰ १० ।

## संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ ३० ॥

अध्रिगुप्रैषे सूर्यं चक्षुर्गमयताद् इति श्रुतम् एकवचनान्तं बहुपशुके विकृतौ बहुवचनान्ततयोह्यं न वेति संशये पाशन्यायेनोह्यमिति पूर्वपक्षे सिद्धान्तमाह । संसर्गिष्विति । संसर्गिषु शरीरसंसर्गिचक्षुःप्राणप्रभृतिषु नोहः अर्थस्य तेजोरूपार्थस्य अस्थितपरिमाणत्वात् । अत्र परिमाणपदं संख्यावाचकं नानात्वेन अस्थितं परिमाणं येषां तत्त्वात् सर्वत्र एकसंख्यात्वात् । अत्र चक्षुःपदं न गोलकपरं किं तु तेजोविशेषपरं, तच्च बहुपशूनामप्येकमेवेत्येकवचनाविरोध इति भावः ॥ ३० ॥

## लिङ्गदर्शनाच्च ॥ ३१ ॥

लिङ्गेति । न माता वर्धते न मज्जा न नाभिर्न प्राण इति । वर्धते ऊह्यते । चक्षुषो ऽपि तत्सदृशत्वात् ॥ ३१ ॥

द्विपशुयागे ऽध्रिगुप्रैषे एकधेति शब्दस्याभ्यासः । अधि॰ ११ ।

## एकधेत्येकसंयोगादभ्यासेन अभिधानं स्यादसर्वविषयत्वात् ॥ ३२ ॥

अध्रिगुप्रैषे एव एकधा ऽस्य त्वचमाच्छ्यतादित्यस्ति । अस्य बहुपशुके ऽतिदेशे अस्येत्यत्रैषामित्यूहो निर्विवादः ।

एकधेति शब्दस्याभ्यासः कार्यं उत सकृदिति संशये सिद्धान्तेनोपक्रमते । एकधेति । एकधेत्यस्य अभ्यासेन अभिधानं स्यात् । एकसंयोगात् । सकृदुच्चारणाद् अभ्यासं विना असर्वविषयत्वात् । यावत्पशुविषयत्वासंभवात् ॥ ३२ ॥

## अविकारो वा बहूनामेककर्मवत् ॥ ३३ ॥

पूर्वपक्षमाह । अविकारः एकधाशब्दस्य न अभ्यासः एकधा इत्यस्य एककाले इत्यर्थं संपाद्य एककाले बहूनां त्वचां बहुभिः कर्तृभिः एकीकरणासंभवात् । बहूनामेककर्मवत् । यथा एकधा एक एव पुरुष एकदा बह्वीः गाः पाययति तत्रैकधा गाः पाययतीति प्रयोगः तथा ॥ ३३ ॥

## सकृत्त्वं चैकध्यं स्याद् एकत्वात्त्वचो ऽनभिप्रेतं तत्प्रकृतित्वात्परेष्वभ्यासेनैव विवृद्धावभिधानं स्यात् ॥ ३४ ॥

ऐकध्यं सकृत्त्वमेकप्रयत्नसाध्यत्वं न कालः । प्रकृतौ त्वच एकत्वाद् एककालस्य सिद्धत्वेन अनभिप्रेतं व्यर्थं स्यात् । अतः प्रकृतौ सफलत्वाय एकप्रयत्नसाध्यत्वं बहुपशुकयागस्य तत्प्रकृतित्वादेकप्रयत्नसाध्यत्वं न संभवत्यतः परेषु विकृतिषु वृद्धौ पशुवृद्धौ अभ्यासेन अभिधानं स्यात् ॥ ३८ ॥

द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणाहः । अधि० १२ ।

## मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् तस्यान्यायनिगदत्वात्सर्वत्रैवाविकारः स्यात् ॥ ३५ ॥

अध्रिगुप्रैषएव आशासाना मेधपतिभ्यां मेधमिति । क्व चिद् द्विवचनान्तम् । क्व चिच्छाखायाम् आशासाना मेधपतये मेधमित्येकवचनान्तम् । विकृतौ द्वित्वादिपशुगणे कथं प्रयोक्तव्यमिति विचारे प्रथपक्षमाह । मेधेति । अत्र मेधः पशुगतं सारभूतं वस्तु तत्पतित्वं प्रकृतौ-

त्रिषु । स्वामिनि यजमाने प्रथमं देवतस्य अग्नीषोमयोः प्रदानानन्तरं पश्चात्ताविति त्रिषु समवायात् । त्रिषु स्वामित्वस्य विद्यमानत्वात् । ननु पतिशब्दः स्वामित्ववाचकः कथं तत्राह । सर्वत्र सर्वेषु देशेषु प्रयुक्तत्वात् । व्यवहृतत्वात् । इत्थं च मेधपतिषु त्रिषु सत्सु त्रयाणामेकवचनघटितेन द्विवचनघटितेन वा बोधयितुमशक्यत्वेन प्रकृतावेव अन्यायनिगदत्वाद् बाधितार्थकमन्त्रत्वात् सर्वत्र प्रकृतौ पशुगणविकृतौ चाविकारः अनूहः स्यात् पत्नीं सन्नह्येतिवत् ॥ ३५ ॥

## अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् ॥ ३६ ॥

द्वितीयपक्षमुत्थापयति । अपि वेति । द्विसमवायः द्विवचनान्तमन्त्रयोगः अर्थान्यत्वे अन्यार्थतात्पर्ये देवताबोधतात्पर्ये । एवं सति एकवचनान्तं यजमानतात्पर्ये उभयोरपि तात्पर्याधीनः प्रकृतावेव समावेशः उभयोरप्यबाधितार्थत्वम् । अस्य पशुगणे अतिदेशे यथासंख्यं देवतान्वयतात्पर्ये देवतावृद्धौ द्विवचनान्तमन्त्रस्य बहुवचनान्तः एकवचनान्तमन्त्रस्य यजमानवृद्धौ एवं यथासंख्यं प्रयोगः पाठः स्यात् ॥ ३६ ॥

## स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात्पत्न्या द्वितीयशब्दः स्यात् ॥ ३७ ॥

तृतीयं पक्षमुत्थापयति । स्वामिन इति । वाक्यद्वये ऽपि मेधपतिशब्देन स्वामिनः यजमानस्य ग्रहणम् । ऐकशब्द्यात् एकार्थप्रतिपादकशब्दत्वात् । ननु द्विवचनस्य का गतिरत्राह । पत्न्या सह द्वितीयशब्दः द्विवचनं स्यात् । ननु देवतावचनमेव किं न स्यादत आह । देवतायां वाच्यायां द्विवचनघटितमन्त्रस्य उपपत्तावपि एकवचनान्तस्य उत्कर्षः विकृतावेकदेवताके स्यात् । मम तु केवलयजमानं गृहीत्वैकं पत्नीं गृहीत्वा ऽपरमिति द्वयोः प्रकृतौ निवेश इति तथा च स्वामिवृद्धावेव ऊह इति भावः ॥ ३७ ॥

## देवता तु तदाशीष्ट्वात्संप्राप्तत्वात्स्वामिन्यनर्थिका स्यात् ॥ ३८ ॥

सिद्धान्तमाह देवतेति । मेधपतिशब्दवाच्या देवता तदाशिष्टात् मेधस्य देवतायै भवत्विति देवतोद्देश्यकेच्छाविषयत्वात् मेधं मेधपतिभ्यामाशासानेति वाक्यं संगतम् । स्वामिपरत्वे यजमानस्वत्वस्य मेधे संप्राप्तत्वात् आशासानेत्यनर्थिका स्यात् । तस्माद्देवताबहुत्वएव ऊह इति भावः ॥ ३८ ॥

## उत्सर्गाच्च भक्त्या तस्मिन्पतित्वं स्यात् ॥ ३९ ॥

किं च देवताया एव पतित्वं स्वरसमिद्धमित्याह । उत्सर्गादिति । यजमानेन देवतोद्देशेन उत्सर्गात्तस्मिन् यजमाने भक्त्या अमुख्यवृत्त्या पतित्वं स्यात् । यथा एकस्य ग्रामस्य पूर्वं स्वामी स्थितः तदनन्तरं अन्यः स्वामी भूत्वा गतः तत्र ग्रामवासिनः पूर्वस्वामिनं गौणं नवीनस्वामिनं मुख्यमामनन्ति तदीयस्वत्वस्य विनाशोन्मुखत्वात् तथेति भावः ॥ ३९ ॥

## एकस्तु समवायात् तस्य तल्लक्षणत्वात् ॥ ४० ॥

नन्वस्मिन्पक्षे एकवचनमन्त्रस्य विकृतावुत्कर्षापत्तिरत आह । एक इति । एकवचनान्तमेधपतिशब्दवाच्यो यो देवतागणः समवायात् । तत्रैकत्वसंबन्धात् । तस्य गणस्य तल्लक्षणत्वात् एकत्वरूपगुणविशिष्टत्वात् तत् एकत्वं लक्षणं गुणो यस्य तत्त्वात् ॥ ४० ॥

## संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् ॥ ४१ ॥

तस्माद्देवतापरत्वे बाधकाभावात् संसर्गित्वादुभयोः प्रकृतिसंबन्धित्वात् एकार्थत्वाच्च द्वयोर्मन्त्रयोः विकल्पः स्यात् ॥ ४१ ॥

## एकत्वेऽपि न गुणापायात् ॥ ४२ ॥

एकवचनान्तेन गुणरूपार्थविवक्षां विना ऽपि मन्त्रस्य प्रकरणे निवेशं पक्षद्वयेनाह । एकत्वइति । एकत्वे विवक्षिते ऽपि एकवचनस्य अर्थवत्त्वे ऽपीत्यर्थः । न प्रकरणात् उत्कर्षः । प्रत्येकस्मिन् एकत्वसत्त्वेन तदनुवादसंभवात् । गुणस्य एकत्वस्य अपायादविवक्षया ऽपि नोत्कर्ष इति ॥ ४२ ॥

बहुदेवत्यपशावपि एकवचनान्तमेधपतिशब्दस्य विकल्पः । अधि· १३ ।

**नियमो बहुदेवते विकारः स्यात् ॥ ४३ ॥**

एवं देवतापरो मेधपतिशब्द इति स्थिते यत्र बहुदेवताका विकृतिः वैश्वदेवीं बहुरूपामालभेतेति तत्रातिदेशेन उभयोः प्राप्तिरुत द्विवचनान्तस्यैवेति संशये पूर्वपक्षमाह । नियम इति । नियमः द्विवचनान्तस्यैव अतिदेश इति नियमः । तस्य प्रकृतौ समवेतार्थत्वात् विकार ऊहः बहुवचनान्त ऊहश्च स्यात् ॥ ४३ ॥

**विकल्पो वा प्रकृतिवत् ॥ ४४ ॥**

सिद्धान्तमाह । विकल्प इति । प्रकृतौ यथा विकल्पेन समावेशस्तथा ऽत्रापि द्विवचनान्तस्य बहुवचनान्ततया ऊह इत्येतावान्विशेषः ॥ ४४ ॥

एकदशिन्यामेकवचनान्तमेधशब्दस्योहः । अधि· १४ ।

**अर्थान्तरे विकारः स्यात् देवतापृथक्त्वात् एकाभिसमवायात्स्यात् ॥ ४५ ॥**

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्य इत्यादिपश्वेकादशिनी विहिता अत्रैकवचनान्तस्य ऊहो ऽस्ति न वेति संशये प्रकृतिवदेवात्रापि गणे एकत्वान्वय इति बहिः पूर्वपक्षे सिद्धान्तमाह । अर्थान्तरइति । अर्थान्तरे भिन्नदेवताके यागसमुदाये तद्धितवाच्यदेवतात्वस्य एकाभिसमवायात् । एकैकस्मिन्नेव पर्याप्तेः देवतानां पृथक्त्वात् भेदात् एकतद्धितवाच्यदेवतापर्याप्त्यधिकरणगणस्य अभावात् प्रकृतिवैषम्यादिति भावः । एकवचनान्तमन्त्रस्याप्यूहेनैव बहुवचनान्त ऊहः स्यात् ॥ ४५ ॥

इति जैमिनिसूत्रवृत्तौ नवमाध्यायस्य तृतीयः पादः ।

षड्विंशतिरस्य वङ्क्रय इत्यादौ समस्योहः । अधि· १ ।

**षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसंबन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥**

ज्योतिष्टोमे अग्निषोमीये श्रूयते षड्विंशतिरस्य वङ्क्रय इति । अयं मन्त्रः श्वेतमालभेत वायव्यं कृष्णमित्यत्र द्विपशुके अतिदेशेन प्राप्तः तत्र संदेहः षड्विंशतिरस्येति समग्रं द्विवारं पठितव्यमुताहोस्विदेव पाठः उत वचनमात्रस्योह उतास्येत्यस्याभ्यास उत समस्यवचनमिति तत्र प्रथमपूर्वपक्षमाह । षड्विंशतीति । पशुगणे द्विपश्वादियागे षड्विंशतिशब्दः अभ्यासेन आवृत्त्या पठितव्य इति शेषः । अत्र हेतुमाह । तत्प्रकृतित्वादिति गुणस्य प्रविभक्तत्वात् । तत्प्रकृतित्वात् अग्नीषोमीयप्रकृतित्वात् पशुगणस्य । नन्वेतावता ऽभ्यासासिद्धिः कथमिति चेत् प्रकृतौ एकपशोः षड्विंशतिवङ्क्र्यभिधानमिह षड्विंशतिरूपो गुणः प्रतिपशु विभक्तः अत आवृत्त्या प्रकृतिवत्संपादनीयमिति भावः । नन्वविकारेण प्रकृतिवत्सकृदेव पाठो ऽस्त्वत आह । अविकारे त्विति । अविकारे प्रकृतिवत्पाठे तासां वङ्क्रीणामकार्त्स्न्येन एकदेशेन अभिसंबन्धः मन्त्रजन्यज्ञानेन संबन्धः स्यात् । अयं भावः पशुद्वये मिलित्वा द्विपञ्चाशद्वङ्क्रयः विकृतौ प्रकृतौ एकस्मिन्पशौ यावन्तो वङ्क्रयः तावद्विषयं मन्त्रजन्यज्ञानमिह द्विपञ्चाशन्मध्ये सकृत्पाठपक्षे षड्विंशतिवङ्क्रीणामेव मन्त्रज्ञानविषयत्वात्कृत्स्नास्ता वङ्क्रयः ज्ञानेनासंबन्धा इति । ननु कृत्स्नवङ्क्रीसंबन्धार्थं द्विपञ्चाशद्वङ्क्रयः इत्यूहो ऽस्त्वत आह । न समासः स्यात् समासः पशुद्वयवङ्क्रीरेकीकृत्य मिलितसंख्यावाचकपदोच्चारणं न विकारात् प्रकृतौ श्रूयमाणशब्दादत्यन्तविलक्षणशब्दत्वात्सर्वाभिर्वङ्क्रीभिः असंयोगात् असंबन्धात् । अयं भावः प्रकृतावस्येति पशुं निर्दिश्य षड्विंशतिवङ्क्रीणामभिधानमिहापि तथैव प्राप्तं द्विपञ्चाशद्वङ्क्रीभिरित्युक्तेन केनापि पशुना संबन्धं भवेत् । किं तु द्वित्वविशिष्टपशुना तथा च प्राकृतधर्मस्यात्यन्तबाध इति ॥ १ ॥

## अभ्यासे ऽपि तथेति चेत् ॥ २ ॥

अभ्यासपक्षे ऽप्येष दोष इति शङ्कते । अभ्यास इति । तथा चप्राकृतत्वमभ्यासस्यापि प्रकृतावभावादिति भावः ॥ २ ॥

## न गुणादर्थकृतत्वाच्च ॥ ३ ॥

समाधत्ते नेति । अभ्यासे नैव दोषः अर्थेन कृत्स्नवङ्क्रीसंबन्धलाभफलेन कृतत्वात् अभ्यासस्य । समासस्य तदर्थत्वे ऽपि तत्पक्षे दोषमाह गुणात् गुणत्वात् । अयं भावः प्रकृतौ षड्विंशतिरिति शब्दो धर्मी प्रधानमभ्यासः तद्धर्मः गुणः एवं च तत्र मते प्राकृतप्रधानीभूतशब्दबाधः मन्यते प्रधानं रक्षित्वा तत्राप्राकृतगुणयोजनमिति ॥ ३ ॥

## समासे ऽपि तथेति चेत् ॥ ४ ॥

शब्दस्य मुख्यं प्रयोजनमर्थस्मृतिः तच्च द्विपञ्चाशच्छब्दप्रयोगे ऽपि कृत्स्नवङ्क्रीस्मरणमुपपन्नं प्राकृतशब्दबाधस्य सूर्याय जुष्टं निर्वपामीत्यादौ दृष्टत्वादित्यभिप्रायेण शङ्कते । समासेति । समासे ऽपि पशुद्वयसंबन्धिवङ्क्रीगतसंख्यायाः मिलितायाः पाठे ऽपि तथा कार्त्स्न्येन वङ्क्यन्तइति चोदकशास्त्रानुग्रहो भवतीति ॥ ४ ॥

## नासंभवात् ॥ ५ ॥

आशङ्कां निरस्यति नेति । असंभवात् । समस्य कथनासंभवात् । अयं भावः समस्य वचने प्रयोगवचनो ऽनुगृहीतः मम तु चोदको ऽनुगृहीतः प्रयोगवचनचोदकयोः मध्ये चोदकस्य पूर्वप्रवृत्तत्वेन बलवत्त्वात्प्रयोगवचनस्यैव निवृत्तिरिति ॥ ५ ॥

## स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥

साधकान्तरमाह । स्वाभिरिति । प्रकृतावग्नीषोमीये स्वाभिः स्वसंबन्धिवङ्क्रीभिः वचनं विशेषितत्त्वं पशोः दृश्यते तथेह स्यात् अभ्यासपक्षे । अयं भावः प्रकृतौ एकपशौ षड्विंशतिवङ्क्रीः विशेषणत्वेन दृश्यन्ते अभ्यासपक्षे तदनुग्रहः समासपक्षे समुदायस्य विशेष्यत्वेन एकपशुप्राधान्यबाध इति ॥ ६ ॥

## वङ्क्रीणां तु प्रधानवत्त्वात् समासेनाभिधानं स्यात्प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥

सिद्धान्तमाह वङ्क्रीणामिति । वङ्क्रीणां प्राधान्यमध्रिगौ तदर्थत्वात् । वङ्क्युद्धरणार्थत्वात् । अयं भावः । अभ्यासपक्षे अस्येति पदषड्विंशतिपदयोः संबन्धः प्रधानं स च पदद्वयसमभिव्याहारलभ्यः एकवा-

रमुच्चारणे एकप्रधानलाभः अपरप्रधानलाभार्थं पुनरुच्चारणमित्यभ्यास-सिद्धिर्वाच्या स पक्षो न संबन्धप्रतीतेरदृष्टार्थतापत्तेः । सिद्धान्ते वङ्क्री-प्राधान्ये तेन साकं संख्यैतच्छब्दार्थयोरन्वये एतत्पशुसंबन्धिन्यः षड्विंश-तिसंख्यावङ्क्र्य इति ज्ञाने तदुद्धरणसौकर्यं दृष्टार्थमतो वङ्क्रीणामेव प्राधा-न्यमिति । अतः उक्तरीत्या प्रधानत्वात् वङ्क्रीणां बाधकाभावात् । समा-सेनाभिधानम् । अदृष्टार्थत्वदूषणेन सर्वे पक्षाः निरस्ताः द्वितीयपक्षे दृष्टा-र्थत्वं स्पष्टम् । तृतीयपक्षे संख्याप्राधान्यमेतत्पशुसंबन्धि वङ्क्रीवृत्तिः षड्-विंशति संख्येति तत्राप्यदृष्टार्थता चतुर्थपक्षे पशुप्राधान्यं तत्प्रतीतये अस्येति शब्दमात्रस्य अभ्यासः षड्विंशतिसंख्याकवङ्क्रीकः पशुरिति तत्पक्षे पशुप्रत्यायनस्यादृष्टार्थत्वमेवेति तेन दूषणेन सर्वे पराहता बोध्याः॥ ७ ॥

## तासां च कृत्स्नवचनात् ॥ ८ ॥

अत्रैव साधकान्तरमाह । तासामिति । उत्तरवाक्यमेवं, ता अनु-ष्ठोच्यावयतादिति । ताः प्रयत्नेन उद्धर्तव्या इति तासां वङ्क्रीणां कृत्स्न-वचनात् कार्त्स्न्येन उद्धरणवचनात् वङ्क्रीणां प्राधान्यं यदि वङ्क्र्यो न प्रधानं तर्हि ता इत्यनेन वङ्क्रीग्रहणं न स्यात् । सर्वनाम्नां प्रधानपरामर्शकत्वा-दिति भावः ॥ ८ ॥

## अपि त्वसन्निपातित्वात् पत्नीवदाम्नातेन अभिधानं स्यात् ॥ ९ ॥

द्वितीयपूर्वपक्षमुत्थापयति । अपि त्विति । अयं पक्षान्तरज्ञापकः आम्नातेन प्राकृतरूपेणैव अभिधानं पशुगणेऽपि स्यात् । असन्निपाति-त्वात् । मन्त्रस्मारितक्रियाया असन्निकृष्टत्वात् । अयं भावः । जीवति पशौ अध्रिगुप्रैषः । वङ्क्र्युद्धरणं च पशुसंज्ञपनानन्तरम् । इत्थं च मन्त्रेण स्मृत्वा व्यवहितोत्तरमनुष्ठानासंभवात् प्रकृतावेवास्या दृष्टार्थत्वं क्लृप्तम् । यथा पत्नीं सन्नह्येति मन्त्रस्य बहुपत्नीकप्रयोगे अविवक्षितमेकवचनमदृ-ष्टार्थं प्रयुज्यते तद्वदिहाप्यदृष्टार्थं मन्त्रपाठः प्रकृतौ विकृतावपि तथैव पाठ इति ॥ ९ ॥

## विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ १० ॥

अविकृतपक्षं दूरीकरोति । विकार इति । विकारः ऊहः प्रदेशत्वात् शमितुः ज्ञानजनकशब्दे मध्यप्रदेशश्रुतित्वात् । यथा प्रकृतौ यजमान हविर्निर्वप्स्यामीत्येकवचनान्तं कुलाययज्ञादौ द्वियजमानके यजमानौ हविर्निर्वप्स्यामीति यजमानसामान्यस्य ज्ञानार्थत्वं तथा ॥ १० ॥

## अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥

यच्च पत्नीं सन्नह्येति दृष्टान्तेन मन्त्रस्य अदृष्टार्थत्वमुक्तं तत्रोत्तरमाह । अपूर्वेति पत्न्यां पत्नीशब्दात्तरैकवचनप्रयोगे अपूर्वत्वात् । अपूर्वार्थत्वात् यथा ऊहाभावः । अयं भावः पत्नीशब्दस्य एकवचनान्तस्य दर्शपूर्णमासप्रकरणे पाठेन यावद्दर्शपूर्णमासाङ्गत्वं कृत्स्नं तदनुसारेण पाशाधिकरणन्यायेन वचनस्याविवक्षितत्वात् न केवला प्रकृतिः प्रयोक्तव्येति शास्त्रादृदृष्टार्थफलं तदुच्चारणम् । इह तु शमितुः कृत्स्नाङ्गस्य दुरवज्ञानरूपदृष्टफलसंभवात्तल्लाभस्याह मन्त्रात ऽभावादूहः । यथा लोके राजाज्ञां श्रुत्वा तमर्थं कालान्तरे स्मृत्वा करोति तथा कालान्तरानुष्ठाने ऽपि उक्तवाक्यज्ञानस्य उपयोगसंभवादिति ॥ ११ ॥

## आम्नातस्त्वविकारात्संख्यासु सर्वगामित्वात् ॥ १२ ॥

तृतीयपक्षमुत्थापयति । आम्नात इति । प्रकृतौ प्रातिपदिकशब्दो यथा ऽऽम्नातस्तथा विकारादनूहेन पठितव्यः । ननु छन्दोवदङ्ग्यभिधानं नेत्यत आह । संख्यासु संख्यावाचकपदेषु एकवचनादिषु विकार इति दशमसूत्रादनुवृत्तिः मण्डूकप्लुत्या इत्थ च षड्विंशतिरस्य वङ्क्रय इति एवमूहेनापि सर्वाङ्गगामित्वात् कात्स्न्यंलाभः ॥ १२ ॥

## संख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥

इमं पक्षं दूषयति । संख्येति । एवं वचनोहपक्षे संख्याप्रधानं स्यात् न चैतदिष्टं वङ्क्रीणां तु प्रधानत्वादिति सूत्रे वङ्क्र्यतिरिक्ते प्राधान्यनिरासं कृत्वा पुनः वङ्क्रयः प्रधानमित्युक्तम्* ॥ १३ ॥

---

* अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः, इदं सूत्रं शाबरभाष्ये ऽधिकं दृश्यते । तद्व्याख्यानं तत एवावगन्तव्यम् ।

### अभ्यासो वा विकारात्स्यात् ॥ १४ ॥

चतुर्थपक्षमुत्थापयति । अभ्यास इति । अभ्यासः केवलमयं पदाभ्यासः स्यात् । अविकारात् प्राकृतषड्विंशतिशब्दस्य प्रत्यक्षविशिष्टस्याविकारात् प्रकृतौ अयमाम्नवर्णानामबाधादिति भावः ॥ १४ ॥

### पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्तस्मात्समासशब्दः स्यात् ॥ १५ ॥

इमं पक्षं दूषयन् सिद्धान्तमुपसंहरति । पशुरिति । एवमयं पदाभ्यासपक्षे पशुः प्रधानमयमर्थमिति अभ्यासे यो यः पशुः षड्विंशतिवङ्क्रीकइति वाक्यार्थः अभ्यासस्य अयंपदाभ्यासस्य पशुनिमित्तत्वाद्यावत्पशुबोधार्थत्वात् । तत्र पशोः प्राधान्यं वाच्यम् । तस्मात् अस्यापि पक्षस्य अदृष्टार्थताक्षपदूषणेन पूर्वमेव दूषितत्वात् समासशब्दः द्विपञ्चाशच्छब्दः स्यात् ॥ १५ ॥

चतुस्त्रिंशद्वाजिन इत्यनेन आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रि-रूपविशेषवचनम् । अधि· २ ।

### अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १६ ॥

सन्त्यश्वमेधे त्रयः पशवः सवनीयाः अश्वस्तूपरो गोमृग इति । तत्र वङ्क्रीः अश्वस्य चतुस्त्रिंशत् तूपरगोमृगयोः षड्विंशतिः एवं स्थिते तत्र संदेहः अश्वस्य चतुस्त्रिंशद्वचनं तूपरगोमृगयोः पूर्ववत्समस्यवचनमुत त्रयाणां समस्यवचनमिति तत्र भाष्यानुसारेण पूर्वपक्षमाह । अश्वस्येति वचनात् चतुस्त्रिंशच्छब्दस्य वङ्क्रय इति पृथक् तूपरगोमृगयोस्तु समस्यद्विपञ्चाशदिति ॥ १६ ॥

आश्वमेधिकसवनीयाश्वस्य, न चतुस्त्रिंशदित्यनेन समस्तानां एव ऋचो निषेधः अधि· ३ ।

### तत्प्रतिषिध्य प्रकृतिः नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १७ ॥

सिद्धान्तमाह । तदिति । न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयादिति वचनेन तद्वैशेषिकं चतुस्त्रिंशदिति वचनं प्रतिबध्य

प्रकृतिः चोदकशास्त्रविहितं समस्यकथनं नियुज्यते विधीयते । अयं भावः प्रकृतौ पार्श्वेनुयत्स्तीन्यत्यौनि समस्य षड्विंशतिशब्देनोक्तं तथाऽपि पशुत्रयासम्राम्ब्यासस्य अयंपदाभ्यासस्य पशुनिमित्तत्वादभावत्पशुबोधार्थत्वात्समासेन षडशीतिरेषां वङ्क्रय इति वक्तव्यमिति । सा प्रकृतिः प्राकृतशब्देन नियुज्यमानोऽपि पक्षे इति शेषः चतुस्त्रिंशतः संख्याविशेषस्य वाच्यत्वं यस्मिन्पदे तत् चतुस्त्रिंशत्पदसंख्याविशेषनिरूपितशक्तिमत्पदमिति फलितम् । तस्माद्वारयतीति शेषः । चोदकशास्त्रं वैशेषिकशब्दं पक्षे निवर्तयति न नित्यमिति सूत्रतात्पर्यम् ॥ १७ ॥

## ऋग्वा स्यात् आम्नातत्वाद् अविकल्पश्च न्यायः ॥ १८ ॥

पक्षान्तरमाह । ऋगिति । प्रतिषेधानन्तरं या वैशेषिकी प्राप्तिः सा समस्य न प्रयोजयति । षडशीतिरिति । किं तु तत्स्थाने उक्तनिखिला ऋगेव विधीयते आम्नातत्वात् । प्रकरणपाठात् अस्मिन्पक्षे विकल्पो नास्ति बहुदोषः अतः विकल्पो न्यायः ॥ १८ ॥

## तस्यां तु वचनादैरवत्पदविकारः स्यात् ॥ १९ ॥

ऋचो विधिमङ्गीकृत्य उक्तनिषेधस्य तद्घटकचतुस्त्रिंशत्पदमात्रनिषेधपरत्वमाह । तस्यामिति । तस्यामृचि वचनात् उक्तनिषेधवचनात् पदविकारः चतुस्त्रिंशत्पदस्थाने षड्विंशतिपदप्रक्षेपः स्यात् । गिरापदस्थानऐरवत् । चतुस्त्रिंशत्पदेन ग्रहणे चतुस्त्रिंशत्पदवति लक्षणापत्तेर्न ऋचो निषेधः पदमात्रनिषेध इति भावः ॥ १९ ॥

## सर्वप्रतिषेधो वा संयोगात्पदेन स्यात् ॥ २० ॥

ऋचोऽपि निषेधसंभवादाह । सर्वेति सर्वस्या ऋचः प्रतिषेधः स्यात् । पदेन ऋचः प्रथमपदेन संयोगात् । निषेधवाक्येन ग्रहणात् । सर्वत्र आदिपदेन प्रतीकग्रहणेन सर्वग्रहणं लक्षणां विनैव संभवति । गिराशब्दस्य ऋगादित्वाभावात्प्रतीकरूपत्वं न संभवतीति भावः ॥ २० ॥

अग्नीषोमीयपशावुरुकशब्देन द्रव्याभिधानम् । अधि० ४ ।

## वनिष्ठुसन्निधानादुरूकेण वपाभिधानम् ॥ २१ ॥

तत्रैव वनिष्ठुमस्य मारादित्युल्कं मन्यमान इति श्रुतं तत्रोल्क-शब्दस्य उलूकार्थत्वमुत वपार्थत्वमिति संशये रत्नयोरैक्यस्य रोमाणि लोमानीत्यत्र दर्शनादुलूकार्थत्वमिति पूर्वपक्षे सिद्धान्तमाह । वनिष्ठुरिति । उल्केण उल्कशब्देन वपाभिधानं वनिष्ठोः पश्ववयवस्य सन्निधानादु-पायाः । अयं भावः । उलूकपरत्वे उलूकं मन्यमान इत्यनेन उलूकसादृ-श्यबुद्धिप्रतिषेधो वाच्यः तथा सति अदृष्टार्थः प्रतिषेधः वपापरत्वे वपा-वनिष्ठ्वोः सन्निधानात् वपाभ्रान्त्या वपोद्धरणवेलायां वनिष्ठोरपि छेदनं कुर्यात् । भ्रान्तिनिवृत्तिरूपदृष्टफलं संभवतीति ॥ २१ ॥

अघिगो प्रशंसा बाहू इत्यत्र प्रशंसाशब्दस्य प्रशंसापरत्वम् । अधि० ५ ।

## प्रशंसा ऽस्यभिधानम् ॥ २२ ॥

तत्रैव प्रशसा बाहू इति श्रुतं तत्र प्रशंसाशब्दो ऽसिपरः प्रशंसा-परो वेति संशये पूर्वपक्षमाह । प्रशंसेति पदेन असेरभिधानमसिं शास-मावदतइति ब्राह्मणवचनात् ॥ २२ ॥

## बाहुप्रशंसा वा ॥ २३ ॥

सिद्धान्तमाह । बाहुरिति । प्रशसा प्रशस्तौ इति बाहुविशेषणम् । न तृतीया बाहुप्रशंसा स्तुतिरनेन क्रियते ॥ २३ ॥

अघिगो श्येनमस्येत्यादौ श्येनादिशब्दानां कार्त्स्न्यवचनत्वम् । अधि० ६ ।

## श्येनशलाकश्यपकवषोरुस्रेकपर्ण्यश्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ २४ ॥

तत्रैव श्येनमस्य वक्षः कृणुतादिति श्येनपदस्य सादृश्यमर्थ उत कार्त्स्न्यमित्यत्र पूर्वपक्षमाह । श्येनेति । मन्त्रस्थश्येनादिपदेष्वाकृतिवचन-माकृत्यर्थकत्वम् । इत्थं च वक्षःकर्तनादिसाधनेन श्येनाकृति यथा स्यात् तथा कृणुतात् छिन्नतामिति मन्त्रार्थः । एवमग्रे ऽपि प्रसिद्धेन श्येना-दिपदेन सन्निधानात् वक्षःपदस्य सन्निधानाच्च श्येनवक्षसोः साक्षादभेदा-संभवादिति भावः । शलाकाकश्यपकवषादिपदानामपि बोध्यम् ॥ २४ ॥

## कार्त्स्न्यं वा स्यात् तथाभावादध्रिगोश्च तदर्थत्वात् ॥ २५ ॥

सिद्धान्तमाह कार्त्स्न्यमिति । श्येनवदं कुर्वादर्थकं लक्षणया कृत्स्नं वक्षः कुर्वादिति तदर्थः कृत्स्नवक्षश्छेदने सति तथा श्येनाकृतिर्भावात् स्थितत्वात् अधिगोः शमितुः तदर्थत्वात् । कृत्स्नावयवोद्धरणज्ञानार्थ-त्वात् श्येनादिशब्दानाम् । अयं भावः । गात्रं गात्रमस्यानूनं कृणुतादि-त्यनेन प्राप्तं यदुद्धरणं तस्य लक्षणरूपं श्येनेति यदि वक्षः उद्धृतं सच् श्येनाकृतिः दृश्येत तदा कृत्स्नवक्षं भवति अतः श्येनाकृति यथा तथा कृणुतादिति तस्य ज्ञानार्थत्वादिति ॥ २५ ॥

दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानम । अधि० ७ ।

## प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात् तदर्थो हि विधीयते ॥ २६ ॥

आधानादिसंस्कृतस्याहवनीयस्य सर्वकर्मार्थं नित्यं धारणं च विहितं गतश्रियो नित्यं धार्य इति तस्य लोपे पूर्वोक्तेष्टिरनुष्ठेया न वेतिसंशये सर्वार्थत्वादग्निहोत्रस्यापि सर्वकर्ममध्ये सत्त्वात्तदर्थमपि धारणमिति निमित्तसत्त्वात् नैमित्तिकेष्टिरनुष्ठेयेति पूर्वपक्षे सिद्धान्त-माह ॥ २६ ॥

धार्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानम् । अधि० ८ ।

## धारणे च परार्थत्वात् ॥ २७ ॥

धारणइति । पूर्वसूत्रात् प्रायश्चित्तं न विद्यतइत्यनुवर्तते उक्तार्थे हेतुमाह । परार्थत्वात् उद्धरणस्य सर्वक्रत्वर्थत्वात् । केवलमग्निहोत्रार्थ-मुद्धृताग्न्यनुगमनमेव निमित्तमिति भावः । यद्वा धारणं सर्वार्थं भवतु उद्धरणाङ्गमेवेति ॥ २७ ॥

## क्रियार्थत्वादितरेषु कर्म स्यात् ॥ २८ ॥

नन्वियमिष्टिरनावेवादृष्टविशेषं जनयन् अग्नेः संस्कारः एवं सति अग्निहोत्रार्थमनुद्धृते ऽग्नौ पर्युक्षणपरिसमूहनादिरूपसंस्कारस्तथा ऽयमपि स्यादेवेत्यत आह । क्रियेति इतरेषु पर्युक्षणादिषु क्रियार्थत्वात् क्रियानिमित्तः अग्निसंस्कारः तदर्थत्वात् कर्मानुष्ठानं स्यात् । अयं भावः पर्युक्षणादिकर्मणां नित्यवच्छ्रुतत्वेन अनित्यमनुष्ठानं युक्तम् ।

अस्य तु उपरागे निमित्ते स्नानेनात्मसंस्कारवत् नैमित्तिकत्वेन निमित्ता-भावे अनुष्ठातुमशक्यत्वादिति भावः ॥ २८ ॥

दर्शार्थोद्धरणस्यामन्त्रकत्वम् । अधि० ९ ।

## न तूत्पन्ने यस्य चोदना अप्राप्तकालत्वात् ॥ २९ ॥

अग्निहोत्रे वाचा त्वा होत्रेति नित्योद्धरणमन्त्रः यत्र दर्शार्थ-मुद्धरणं तत्रैव अग्निहोत्र तादृशप्रणयने मन्त्रः प्रयोज्यो न वेति संशये अग्निहोत्रस्य तत्र क्रियमाणत्वात्तदङ्गमन्त्रः पठनीय इति पूर्वपक्षे सिद्धा-न्तमाह । न त्विति । उत्पन्ने परार्थमुत्पन्ने ऽग्नौ यस्याग्निहोत्रस्य चोद-नाविधिः तत्र स तु मन्त्रो न । अप्राप्तकालत्वात् । उक्तमन्त्रेण उद्धरणम् अधिकृत्यपूर्वं उक्तप्रणयनस्य तद्भिन्नकालत्वात् ॥ २९ ॥

प्रायणीयचरौ प्रदानधर्माणामननुष्ठानम् । अधि० १० ।

## प्रधानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात्संसर्गाच्च मधूदकवत् ॥ ३० ॥

ज्योतिष्टोमे श्रूयते, आदित्यः प्रायणीयः पयसि चरुरिति अत्र पयः प्रदेयद्रव्यं तच्चरुवत् देवतासंबद्धमुत श्रपणार्थमेव पय इति संशये पूर्वपक्षमाह । प्रधानेति । श्रपणे पयसि श्रपणे ऽपि प्रधानदर्शनं यथा चरोः देवतोद्देशेन प्रदानं दृश्यते तद्वत् पयसो ऽपि प्रदानदर्शन-मस्ति पयसा विभज्य चरुः न प्रदीयतइति भावः अतः मधूदकवत् चित्रायागे दधिमधुपयसां यथा संसर्गस्तद्वच्चरुपयसोः संसर्गात् मिलि-तत्वात् भोजनार्थत्वात् यागार्थत्वात् तद्धर्मे इन्द्राय प्रदेयद्रव्यं प्रकृतौ पयः तस्य ये धर्माः वत्सापाकरणादयः तद्वत्पयः ॥ ३० ॥

## संस्कारप्रतिषेधश्च तद्वत् ॥ ३१ ॥

उक्तार्थे लिङ्गमप्याह । संस्कारेति । संस्कारप्रतिषेधः केषां चित्प्र-देयसंस्काराणां निषेधः तद्वत् उक्तार्थसाधकः अयजुषा वत्सानपाकरोति अपवित्रवति गां दोहयतीति ॥ ३१ ॥

## तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३२ ॥

साधकान्तरमाह । तदिति तत्प्रतिषेधे तस्य पयसः प्रदेयत्वप्रतिषेधे च तथाभूतस्य पयोमिश्रितस्य द्रव्यान्तरस्य वर्जनात् । अयं भावः सर्वे ऽपि द्रव्यविधयो नियमार्था इति सिद्धान्तः चरुणैव याग इति विधाने पयसः प्रतिषेधः सिद्धः यत्प्रतिषेधः तत्संयुक्तस्यापि प्रतिषेध इति यथा नित्यं पयसा सहौदनं भुङ्क्ते तत्र व्याध्यादौ निमित्ते भिषजा पयःसेवनं मा कुर्वित्युक्ते पयःसंसृष्टमोदनं त्यजति यथा ब्रह्मचारिणो मधुप्रतिषेधे मधुश्रितचरोरपि प्रतिषेधमिच्छन्ति तथा पयोयुक्तचरोरपि प्रतिषेधः स्यादिति ॥ ३२ ॥

## अधर्मत्वमप्रदानात्प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३३ ॥

सिद्धान्तमाह । अधर्मत्वमिति । अधर्मत्वं प्रदेयद्रव्यधर्मत्वं नास्ति अप्रदानात् प्रदेयत्वेन विध्यभावात् । पयसीति सप्तम्या प्रणीताकार्ये विधानात् प्रणीताधर्म एवेति भावः । दधि मधु घृतमापो धाना इत्यनेनातुल्यत्वादसंसर्गः दधि मधु घृतमापो धाना इत्यत्र सर्वं प्रथमान्तमिति सर्वेषां प्रदेयत्वं संसृष्टत्वं च इह तु पयसीति सप्तम्या चर्वधिकरणत्वं पयसः प्रतीयतइति वैषम्यमिति भावः ॥ ३३ ॥

## परो नित्यानुवादः स्यात् ॥ ३४ ॥

अयज्ञियेत्यादिपरो ऽर्थवादो नित्यानुवाद इत्याह । पर इति ॥ ३४ ॥

## विहितप्रतिषेधो वा ॥ ३५ ॥

अथ वा शाखान्तरे यजुषा वत्सानपाकरोतीति विहितप्रतिषेध इत्याह । विहितेति ॥ ३५ ॥

## वर्जने गुणभावित्वात् तदुक्तप्रतिषेधात् स्यात्कारणात्केवलाशनम् ॥ ३६ ॥

पयसः प्रतिषेधे पयोयुक्तौदनपरित्यागदृष्टान्तं परिहरति । वर्जनइति । उक्तप्रतिषेधात् । पयो मा भुङ्क्ष्वेति प्रतिषेधात् वर्जने पयः संसृष्टान्नवर्जने पयसो गुणभावित्वात् अप्रधानत्वात् कारणात् केवलाशनं केवलौदनाशनं स्यात् भोजने ओदनं प्रधानं पयो हि गुणः नित्यमोद-

नस्य गुणत्वेन पयसः प्राप्तौ निषेधोऽपि गुणभूतस्यैवेति इह चरुणा सह प्रदेयद्रव्यत्वेन प्राप्तं तुल्यत्वं निषिध्यते अप्रधानत्वेन संसृष्टत्वे बाधकाभाव इति भावः ॥ ३६ ॥

## व्रतधर्माच्च लेपवत् ॥ ३७ ॥

ननु ब्रह्मचारिव्रतलोपो मधुलिप्तदर्व्यादिना परिवेषणे यथा भवति तथा निषिद्धपय:संयुक्तचरुहोमे अदृष्टलोपः स्यादेवेति शङ्कते । व्रतधर्माद्विति व्याख्यानप्रायमवतरणिकायाम् ॥ ३७ ॥

## रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ३८ ॥

पुरुषधर्मत्वात्तु पुरुषधर्मः रागः तेन मधोः प्राप्तत्वात् । रसप्रतिषेधः अयं मधुरस इति यावता उपलब्धिः तावता लेपस्यापि निषेधः पयसः पयसि चरुमिति शास्त्रप्राप्तस्य संयोगस्य न निषेध इति भावः ॥ ३८ ॥

अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानम् । अधि ११ ।

## अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात् ॥ ३९ ॥

अभ्युदयेष्टौ शृते चरुं दधन्यश्चरुमिति सप्तमीश्रवणात् प्रदेयधर्मो न पूर्ववदिति पूर्वपक्षे सिद्धान्तमाह । अभ्युदयइति । अभ्युदये चन्द्रोदये निमित्ते दोहात् दधिशृतरूपद्रव्यात् अपनयः पूर्वदेवताविभागमात्र देवतान्तरसंबन्धश्च विधीयते यतः अतः प्रवृत्तत्वात् यागार्थं पूर्वमेव प्रवृत्तत्वात् स्वधर्मा स्यात् प्रदेयद्रव्यधर्मा स्यात् ॥ ३९ ॥

## शृतोपदेशाच्च ॥ ४० ॥

उक्तार्थे लिङ्गमप्याह । शृतोपदेशाच्चेति । शृते पाकाश्रये इति सिद्धवन्निर्देशः प्रदेयद्रव्यएव अवकल्पते अन्यथा पयसीत्येव ब्रूयात् न संस्कारविशिष्टमिति भावः ॥ ४० ॥

पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानम् । अधि० १२ ।

## अपनयो वा अर्थान्तरे विधानाच्चरुपयोवत् ॥ ४१ ॥

अस्ति पशुकामेष्टिः यः पशुकामः स्यात्सोऽमावास्यायामिष्ट्वा ये चोदिष्ठास्तानग्नये सनिमते ऽष्टाकपालं निर्वपेत् ये मध्यमाः तानिन्द्राय

प्रदाने दधश्चरुं ये ऽणिष्ठाः तान्विष्णवे शिपिविष्टाय शृते चरुमिति अत्रापि प्रदेयधर्माः पूर्ववत्स्युरिति पूर्वपक्षे सिद्धान्तमाह । अपनयो वेति । चरुपयोवत् आदित्यः प्रायणीयः पयसि चरुरितिवत् । अर्थान्तरे अपण-रूपकार्यान्तरे विधानात् अपनयः इज्याधर्माभावः[1] ॥ ४१ ॥

ज्योतिष्टोमे अपणानां प्रदेयधर्माननुष्ठानम् । अधि॰ १३ ।

## अपणानां तु अपूर्वत्वात् प्रदानार्थविधानं स्यात् ॥ ४२ ॥

पयसा मैत्रावरुणं श्रीणातीत्यत्र पयसि इज्याधर्माः सन्ति न वेति संशये पूर्वपक्षमाह । अपणानामिति । अपणानां पयःप्रभृतीनां प्रदा-नार्थं यागार्थं विधानमपूर्वत्वात् । अपणमनूद्य पयः विधीयतइति न सो-मयागस्य अपूर्वत्वात् । तस्मादिज्याद्रव्यधर्मा इति भावः ॥ ४२ ॥

## गुणो वा अपणार्थत्वात् ॥ ४३ ॥

सिद्धान्तमाह । गुण इति । सोमरसस्य गुणः पयः न तुल्यं अप-णार्थत्वात् । अपणं मिश्रणं तदर्थत्वात् ॥ ४३ ॥

## अनिर्देशाच्च ॥ ४४ ॥

अनिर्देशाच्चेति हेत्वन्तरं द्रव्येण देवतासंबद्धस्य मैत्रावरुणं पय इति अनिर्देशात् ॥ ४४ ॥

## श्रुतेश्च तत्प्रधानत्वात् ॥ ४५ ॥

श्रुतेः सोममिति द्वितीयाश्रुतेः तस्य सोमस्य प्रधानत्वात् ॥ ४५ ॥

## अर्थवादश्च तदर्थत्वात् ॥ ४६ ॥

अर्थवादः पयसैव मे सोमं श्रीणात्वित्यर्थवादः तदर्थः पयसो ऽप्रा-धान्यरूपो ऽर्थस्तद्वत् यदि पयः सोमतुल्यं तर्हि पयो मे देहीति वा याचेतेति भावः ॥ ४६ ॥

## संस्कारं प्रति भावाच्च तस्मादप्यप्रधानम् ॥ ४७ ॥

संस्कारं प्रति संस्कारविधिसंनिधिं प्रति भावात् गतत्वात् याद्दृ शस्यते संस्कारा एव विधीयन्ते तन्मध्यश्रुतित्वादस्य वाक्यस्य संस्कारा र्थत्वमेवेति भावः तस्मात्पयो ऽप्रधानं स्यात् ॥ ४७ ॥

[1] इत उत्तरं तच्चणार्था घृतश्रुतिः, इति सूत्रं मात्रभाष्ये ऽधिकं दृश्यते ।

अश्वमेधे ईशानाय परस्वत इत्यनेन यागान्तरविधानम् । अधि० १४ ।

पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ४८ ॥

अश्वमेधे श्रूयते । ईशानाय परस्वत आलभत इति तं पर्यग्निकृतमुत्सृजतीति अत्रालभतिधातोः केवलस्पर्शार्थत्वमस्त्या आद्यमवाक्ये विहितोत्सर्गार्थत्वमुत प्रथमवाक्ये यागविधिरुत्तरवाक्येन शेषाङ्गनिवृत्तिविधिरिति संशये पूर्वपक्षमाह । पर्यग्नीति । उत्तरवाक्येन विहिते पर्यग्निकृतानामुत्सर्गे सति तादर्थ्यमुत्सर्गार्थत्वमालम्भस्य यथा चरुमुपदधातीति चरोरुपधानार्थत्वं तथा ॥ ४८ ॥

शेषप्रतिषेधो वा ऽर्थाभावादिडान्तवत् ॥ ४९ ॥

सिद्धान्तमाह शेषेति । शेषस्य पर्यग्निकरणोत्तरकालीनप्राकृताङ्गस्य प्रतिषेधः अर्थाभावात् उत्तरवाक्ये निष्फलत्वापत्तेः । त्रिधेयांशस्य इतराङ्गनिषेधादन्यस्याभावादिति भावः । इडान्तवत् । आतिथ्यायामिडान्ता भवतीति इतरनिवर्तकं तथेति ॥ ४९ ॥

पूर्वत्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५० ॥

यदि च द्वितीयवाक्यस्य वैयर्थ्यभिया यागप्रतिषेधपरत्वम् । इत्थं च पर्यग्निकरणान्तं संस्कारं कृत्वा द्रव्यस्य परित्याग इति पक्षे दूषणमाह । प्रवृत्तेरिति प्रवृत्तेः द्रव्ये संस्कारप्रवृत्तेः यज्ञहेतुत्वात् देवताद्रव्यकद्रव्यत्यागरूपप्रधानयागजन्यापूर्वकारणत्वात् तत्कारित्वात् प्रधानानुष्ठानपूर्वानुष्ठितत्वात् । प्रतिषेधे प्रधानक्रियाप्रतिषेधे संस्काराणामकर्म अननुष्ठानं स्यात् । यथा गृहमेधीये न प्रयाजा इज्यन्ते इति प्रयाजप्रतिषेध आज्यस्याग्रहणं प्रयाजार्थत्वेन यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदित्यनेन प्राप्तग्रहणस्याननुष्ठानं तथा ॥ ५० ॥

क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥ ५१ ॥

एवं परमते दण्डं प्रक्षिप्य स्वमते उपपत्तिं साधयति क्रिया वेति । अत्र वाकारः स्वमते उपपत्तिद्योतकः । प्रथमं हेतुत्वेन पूर्वोक्तमनुवदन् स्वमतं व्यवस्थापयति । अकर्म प्रधानानुष्ठानं सर्वस्य क्रियामात्रहानम-

नुष्ठापकं स्यादतः अतो हेतोरवच्छेदात्पर्यग्निकरणोत्तराङ्गमात्रस्य व्यवच्छेदात् द्वितीयवाक्येन प्रथमवाक्येन विहितदेवतोद्देश्यकद्रव्यत्यागरूपप्रधानस्य पर्यग्निकरणप्राक्कालिकद्रव्यसंस्कारस्य च क्रिया अनुष्ठानम् ॥ ५१ ॥

आज्येन शेषं संस्थापयतीत्यनेन कर्मान्तरविधानम् । अधि० १५ ।

## आज्यसंस्थाप्रतिनिधिः स्यात् द्रव्योत्सर्गात् ॥ ५२ ॥

त्वाष्ट्रं पात्नीवतमालभते पर्यग्निकृतं पात्नीवतमुत्सृजति आज्येन शेषं संस्थापयतीति किमाज्यं पूर्वकर्मणि प्रतिनिधिभूतमुत कर्मान्तरमिति संशये पूर्वपक्षमाह । आज्येति । आज्यसंस्था आज्येन समाप्तिः प्रतिनिधिः स्यात् पूर्वद्रव्यपरित्यागात् ॥ ५२ ॥

## समाप्तिवचनात् ॥ ५३ ॥

लिङ्गमप्याह । समाप्तीति । आज्येन शेषं समापयेदिति वचनात् । यदि कर्मान्तरं स्यात् आज्येन कर्मारभेदिति स्यादिति भावः ॥ ५३ ॥

## चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् ॥ ५४ ॥

सिद्धान्तमाह । चोदनेति । चोदना अपूर्वकर्मविधिः कर्मोत्सर्गात् पूर्वकर्मसमाप्तेः । पूर्वाधिकरणयुक्त्या द्वितीयवाक्यस्य शेषनिवर्तकत्वादिति भावः ।

ननु यागार्थकं पदं नास्तीत्यत आह । अन्यैरविशिष्टत्वात् एतद्रूपयां सौर्यं चरुं निर्वपेत् यदाग्नेयो भवतीत्यादावपि सत्त्वेन तैर्वाक्यैरविशेषात् तत्र यथा लक्षणा तथेति भावः ॥ ५४ ॥

## अनिज्यां च वनस्पतेः प्रसिद्धान्तेन दर्शयति ॥ ५५ ॥

लिङ्गमपि दर्शयति । अनिज्येति । अत्रैवैना वष्टौ विद्यादिति वचनमङ्गान्तरेण अनुग्रहं ब्रुवन् प्रसिद्धेनान्तेन चरमावयवेन वनस्पतेः दशमप्रयाजस्यानिज्यां यागाभावं दर्शयति अत एव शेषनिवृत्तिं जानीयात् ॥ ५५ ॥

## संस्था तद्देवतात्वात्स्यात् ॥ ५६ ॥

समाप्तिवचनात् इत्याक्षेपस्य उत्तरमाह । संस्थेति । संस्था समाप्तिवचनम् । तद्देवतात्वात् पत्नीवद्देवताकत्वात्स्यात् । अयं भावः आज्येन शेषमिति कर्मान्तरमिति पक्षे ऽपि देवताश्रवणात् सन्निहित-

पत्नीवद्दैवताया एव पशुपुरोडाशवद्ग्रहणम् । इत्थं च तद्दैवताकत्वेन पूर्वोत्तरकर्मणोः साजात्यात् पत्नीवद्दैवताकं कर्म तन्त्रारब्धमनेन कर्मणा समाप्तमिति साजात्यं गृहीत्वोपपन्नमिति ॥ ५८ ॥

इति श्रीजैमिनिसूत्रवृत्तौ नवमस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

विकृतौ लुप्तार्थानां प्राकृतानां बाधः ।

## विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥

*तत्र भगवाञ्जैमिनिः षड्भिरध्यायैः प्रकृतिविचारं समाप्य सप्तमाष्टमाभ्यामतिदेशं विचार्य विकृतावतिदेशशास्त्रप्राप्तानां प्राकृतरूपेणैव प्राप्तिरुत वैरूप्येणापीत्याशङ्कायां क्वचिद्वैरूप्येणापि प्राप्त्यर्थं नवमेनोहं विचिन्त्य चोदकप्रमाणप्राप्तानां प्राकृतानां विकृतौ सर्वेषां प्राप्तिरुत कस्य चिद्बाध इति संशये पूर्वपक्षमारभते । विधेरिति । अतिदेशलक्षणेनास्योपजीव्योपजीवकभावसंगतिः सामान्यतोऽतिदेशसिद्धावेव तद्विशेषचिन्तावसरः । अतोऽतिदेशविशेषचिन्ता सामान्यातिदेशव्यवस्थामपेक्षते । ऊहेन साकमवसरसंगतिः । विधेः प्राकृतविधेः प्रकरणान्तरे विकृतौ प्रकृतिवत्कर्तव्यमित्यविशेषेणातिदेशात्सर्वं प्राकृतं कर्म विकृतौ स्यात् । इत्थं च बाधस्यावसर एव नास्तीति बाधाध्यायो नारम्भणीय इति पूर्वपक्षसूत्राभिप्रायः । यथा मैत्राबार्हस्पत्यहविषि राजसूये स्वयं दितं बर्हिः स्वयंकृत इध्म इत्यत्र प्रकृतौ यदश्वपरश्वादिसंपादनं तस्य यत्कार्यं कुशभेदनादि तदनेन प्रत्यक्षश्रुतिवाक्येन बाध्यतां तथाऽपि वचनप्राप्तस्य निवृत्त्यसंभवादश्वपरश्वादिसंपादनस्यादृष्टमेव फलं कल्पनीयम् । तथा च प्रयाजादिवदारादुपकारकत्वमेव कल्पनीयमिति भावः ॥ १ ॥

## अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥

सिद्धान्तमाह । अपि वेति । पूर्वव्यावर्तकोऽपिवाशब्दः । स्वयं दितं बर्हिरित्यत्रैव अभिधानेन देवस्य त्वेत्यादिमन्त्रैः संस्काररूपः

* चिन्मयहुतवरजनेतां वाग्देवीं नौमि तत्कृपादृष्ट्या । लब्धस्फूर्तिः कुर्वे राघेशो बाधलक्षणव्याख्याम् ॥ १ ॥ इति मङ्गलाचरणं गोविन्दाख्यगुरुपुस्तके दृश्यते।

आदानादिक्रियाकलापो यत्र ईदृशमश्वपरश्वादिद्रव्यमर्थं तदीयपुरुषप्रय-त्नसाध्यच्छेदनक्रियायां सत्यां क्रियेत तत्प्रयोगे योजयेत् । कुतः प्रकृतौ अश्वपरश्वा बर्हिश्छिनत्तीति इति तृतीयाश्रुत्या तादर्थ्यात् तत्कार्यार्थत्वेन रूपेण ज्ञापितत्वात् । इत्थं च प्रकृतौ यस्य द्रव्यस्य यत्कार्यं क्लृप्तं तस्मि-न्कार्ये विकृतौ सत्येव तद् द्रव्यं योज्यं प्रमाणान्तरेण कार्यबाधे द्रव्यस्य समन्त्रसंस्काररूपक्रियस्य बाध इति तदभिप्रायः ॥ २ ॥

## तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

ननु प्राकृतं कार्यं तस्य मा भवतु । वचनबलाददृष्टद्वारा परमा-पूर्वं प्रति प्रयाजादिवदारादुपकारकं कुतो न भवेदित्याशङ्कां परिहरति । तेषामिति । तेषां मन्त्रसंस्कारक्रियाद्रव्याणामप्रत्यक्षेण आनुमानिकशा-स्त्रेण शिष्टत्वात् । अङ्गत्वात् । अयमभिप्रायः भावनायामंशत्रयाकाङ्क्षायां किं केन कथमिति प्रकृतौ तित्रणामपि परिपूरकं प्रत्यक्षं शास्त्रमस्ति । विकृतौ सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र फलं करणं च श्रूयते कथं-भावाकाङ्क्षापूरकः शब्दो नास्ति तदाकाङ्क्षायां द्वारमित्यादौ प्रकरणा-दिना पिधानादिवत् निर्वपतिचोदनाचोदितत्वादिसादृश्यलिङ्गेनाग्नेया-गव्यापारसदृशव्यापारकेण यागेन ब्रह्मवर्चसं भावयेदिति व्यापारप्रति-पादकं शास्त्रमानुमानिकम् । तत्र कथंभावाकाङ्क्षा न द्रव्यविषयिणी भवितुमर्हति किं तु क्रियारूपव्यापारविषयिणी । दृष्टं चैतत्कुठारेण छिन्द्यादित्युक्ते छेदनाऽनभिज्ञः कुठारेण कथं छिन्द्यादिति कुठारवृत्ति-क्रियाज्ञानमेव मुख्यत्वेनापेक्षते न तु द्रव्यम् । तत्पूरकतया उद्यमननिप-तनसंबद्धकुठारेण छिन्द्यादितिनिर्णीते तादृशव्यापारनिर्वाहाय दण्डह-स्तादिद्रव्यमपेक्षते न तु स्वतन्त्रम् । तथा प्रकृतेऽपि सौर्ययागे कथंभा-वाकाङ्क्षायां प्रथमं यादृशव्यापारसंबन्धो यागः ब्रह्मवर्चसं जनयेत्तादृशव्या-पारमपेक्षते तन्निर्वाहाय पश्चाद् द्रव्यापेक्षा तथा सति प्रकृतौ तादृश-व्यापारनिर्वाहार्थं प्राकृतद्रव्यशास्त्रमपि अनुमेयं तादृशव्यापारस्यैव बल-वता प्रमाणेन निवृत्तौ तदुपजीव्यस्य अदृष्टरूपफलान्तरं द्वारीकृत्य तत्प्र-वृत्तिर्न शास्त्रमन्तरा भवितुमर्हति । शास्त्रे च प्रमाणं द्विविधं प्रत्यक्षम-

नुमानं वा । यथा स्वयं छिन्नं बर्हिरित्यश्वपरश्वादिजन्यच्छेदननिवर्तकमुपलभ्यते प्रत्यक्षेण तथा ऽश्वपरश्वादिप्रापकं प्रत्यक्षप्रमाणगम्यं शास्त्रं न । अनुमानासंभवस्तु दर्शित एव तस्मादभिधानसंस्काराद्रव्यमश्वपरश्वादि मैत्रावार्हस्पत्ययागे निवर्तत एवेति । एवं प्रकृतितः अतिदिश्यमानपदार्थेषु केषांचिद्बाधस्य सत्त्वात्तज्ज्ञानार्थं बाधाध्याय आरम्भणीय इति भावः ॥ ३ ॥

एवं वा भवतु मैत्रावार्हस्पत्ययागे आनुमानिकत्वादश्वपरश्वादीनां निवृत्तिः तथा ऽपि अस्ति प्राजापत्ययागः प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्काम इति विहितः । तत्र प्राजापत्यं शतकृष्णलं निर्वपेदित्यनेनैव द्रव्यदेवताविशिष्टयागलाभे चरुमिति व्यर्थं सत् चरुधर्मके लक्षितं सत् प्रात्यक्षिकश्रुत्यैव चरुधर्मान्प्रापयति । तथा सति पूर्वोदाहरणविषमत्वादत्र कृष्णलेषु वितुषीभावरूपद्वारलोपे ऽपि प्रत्यक्षश्रुत्या प्राप्तत्वादपूर्वद्वारा तदङ्गमिति मत्वा, विधेः प्रकरणान्तरे इति सूत्रमत्र प्रवर्तते इत्याह । विधेः अवहननादिविधेः प्रकरणान्तरे प्राजापत्ययागे नाम्नेति शेषः । अग्निहोत्रनामवत् चरुनाम्ना ऽतिदेशात् सर्वकर्म अवहननादियावच्चरुकर्म कर्तव्यमिति पूर्वपक्षे सिद्धान्तं पूर्वाधिकरणस्थमतिदिशति । एवं वेति । वाकारः सिद्धान्तद्योतनार्थः । एवं, यथा आनुमानिकातिदेशे द्वारं पुरस्कृत्यैव पदार्थानामतिदेशः तथा नामातिदेशे ऽपि प्रकृतौ यद्यदर्थं यस्य यस्य पदार्थस्य प्राप्तिः तत्तदर्थं ते ते पदार्था इत्यविशेषेणैवातिदेशात् । किं च द्वारलोपे ऽपि यदि पदार्थानामतिदेशः तर्हि विक्लित्तिरूपद्वारलोपे ऽपि पाकस्यातिदेशेनैव प्राप्तौ घृते श्रपयतीति विधिर्व्यर्थः स्यात् । तस्मान्नामातिदेशे ऽपि पूर्ववदेव । तर्हि पाकस्य कथमपूर्वार्थत्वमिति नाशङ्कनीयम् । प्रथमं चोदकशास्त्रेण प्राप्तः पाकः द्वारलोपान्निवृत्तः पुनर्वचनेनापूर्वार्थं विधीयते । वचनवैयर्थ्यभिया तथा कल्पनात् । अत एव विधिरसायने अप्पय्यदीक्षितैः प्राप्तापोदितपुनर्विधित्वेनोदाहृतम् । न हि वचनस्यातिभारो ऽस्ति । एवं वा । एवं स्थलविशेषे अधिकाशङ्कानिरासाय, यथा वैश्वदेवं चरुं निर्वपेद्ग्रामकामः तं बर्हिषदं कृत्वा शम्यया स्फ्येन वा कूर्चे-

दिदमहममुं च व्यूहामीति यं द्विष्मस्तं ध्यायति यदथो ऽवमृज्येत् विष्णवे उरुक्रमायावद्योदिति। अस्यार्थः। स्फ्येन चेत्यतः स्पष्टः । चतुर्धाकरणकाले प्रकृतौ हस्तेन पुरोडाशभेदनमस्ति । अत्र वचनाच्छम्यया स्फ्येन वा भेदने कृते यदि चरुः भूमौ पतेत् स्फ्येन वा संलग्नं भवेत् तदुभयं गृहीत्वा तेन उरुक्रमाय विष्णवे यागं कुर्यादिति । अत्र वैश्वदेवयागायावहनकाले विष्णोरुरुक्रमस्याप्यावाहनं कर्तव्यं न वेति संशये प्राकृतविधेः प्रकरणान्तरे विष्णोरुरुक्रमस्य यागे ऽतिदेशात् सर्वकर्म आवाहनादि सर्वकर्म स्याद् वैश्वदेवीयावाहनसमयएव । न चात्र द्वारलोपोऽस्ति । आवाहनेन देवतासंस्कारः । स चादृष्टरूपो ऽपेक्षित एव । तदर्थमावाहनकाले तस्याप्यावाहनमिति पूर्वपक्षमुद्भाव्य अत्रापि सिद्धान्तमतिदिशति । द्वितीयम् एवं वेति । अस्मिन् पक्षे अभिधानेन विष्णुमुरुक्रममावहेति मन्त्रेण देवतास्मरणरूपसंस्कारः द्रव्यं चेति द्वन्द्वसमासः । समाहारैकवद्भावः । मन्त्रेण संस्कारः द्रव्यं वा कार्यं सत्येव क्रियेतेत्यर्थः । ननु संस्कारस्यापूर्वं कार्यं तत्रास्तीति ज्ञातुमशक्यमिति चेत्, सत्यम् । वैश्वदेवीयावाहनकाले यदि उरुक्रमविष्णुयागः प्राप्तः स्यात् तदङ्गदेवतासंस्कारो ऽपि युक्तः । तस्य यागस्य चरुभेदनकाले भूमिपतनादि निमित्तम् । निमित्तानन्तरं हि तद्यागप्राप्तिः यदि निमित्तं न स्यात्तदा यागोऽपि नेति यागप्राप्तेः पाक्षिकत्वेन यदा यागप्राप्तिः तदैवावाहनं पौरोडाशिकाज्यभागन्यायेन । प्रयाजादीनां प्रसङ्गसिद्धिः । तस्माद् वैश्वदेवावाहनकाले न विष्णोरुरुक्रमस्यावाहनमिति भावः ॥ ३ ॥

दीक्षणीयादिषु आरम्भणीयाबाधः ।

## इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥

सन्ति ज्योतिष्टोमे दर्शपूर्णमासप्रकृतिकाः तदङ्गभूता दीक्षणीयादयः । तत्र निखिलदर्शपूर्णमासाङ्गकलापेन सहान्वारम्भणीया ऽतिदिश्यते न वेति संशये प्रथमसूत्रोक्तयुक्त्या ऽतिदिश्यतइति तत्र पूर्वपक्षे सिद्धान्तमाहेष्टिरिति । आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासा-

वारप्स्यमान इत्यत्र आरम्भसंयोगात् । आरम्भशब्दसत्त्वात् । आरम्भाङ्गम् । आरम्भो नाम प्रधानोद्देश्यिका प्रथमा कृतिः कृतौ प्राथम्यं च स्वसजातीयकृतिध्वंसानधिकरणकालवृत्तित्वम् । साजात्यं च साक्षात्परम्परया तत्प्रधानोद्देश्यकत्वेन । अत ईदृशारम्भो न दीक्षणीयायामस्ति तस्या ज्योतिष्टोमाङ्गत्वाद् यतः इष्टिरारम्भाङ्गं स चारम्भः प्रधानेन संयुक्तो यतः प्रधानोद्देश्यक इति यावत् । तादृशारम्भस्य अङ्गभूतदीक्षणीयायामभावात् द्वारलोपेनाङ्गभूतात् दीक्षणीयात इष्टिः अन्वारम्भणीया निवर्तते ॥ ४ ॥

अनुयज्ञादिषु आरम्भणीयाबाधः ।

## प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥ ५ ॥

राजसूये सोमेष्टिपशवः समप्रधाना इति व्यवस्थापितं प्राक् । राजसूयारम्भः इष्ट्यात्मकप्रधानार्थो ऽपि भवति अन्वारम्भणीयायाः इष्ट्यात्मकप्रधानारम्भो द्वारमिति पूर्वाधिकरणे स्थितम् । तत्र ईदृशद्वारसत्त्वाद्राजसूयान्तर्गतेषु अन्वारम्भणीया ऽतिदिश्यत इति पूर्वपक्षे सिद्धान्तमाह । प्रधानाच्चेति । अन्येन सोमादिरूपेण प्रधानेन युक्तं यदिष्टिरूपं प्रधानं तस्मादिष्टिरिति पूर्वसूत्रादनुवर्तते । अन्वारम्भणीयारूपेष्टिः निवर्तेत कुतःसर्वारम्भात् । सर्वार्थो मान्तो यतः तस्मात् केवलेष्टेरनङ्गं यतः तस्मात् । प्रकृतौ केवलस्वविषयः आरम्भः । अन्वारम्भणीयाद्वारं राजसूये य आरम्भः केवलेष्ट्यर्थो न सोमाद्यर्थो ऽपीति प्राकृतकार्याभावात्तन्निवृत्तिरिति सूत्रार्थः फलितः ॥ ५ ॥

आरम्भणीयायामारम्भणीयाबाधः ।

## तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥

अन्वारम्भणीयारम्भाङ्गभूतमन्वारम्भणीयान्तरमस्तीति पूर्वपक्षमुत्थापयति । तस्यामिति । तस्यामन्वारम्भणीयायामिष्टिरित्यनुषज्यते । इष्टिरन्वारम्भणीया स्यात् प्रयाजवदित्यत्र, चातिदेशादिति शेषः । यथा प्रयाजा अन्वारम्भणीयायामतिदिष्टाः तथा अस्या अप्यतिदेशे बाधकाभावादिति भावः । प्रायः तुशब्दः पूर्वपक्षनिवर्तको ऽप्यत्र संशयव्यावर्तकः । अन्वारम्भणीयातिदेशे संशयो नास्तीति पूर्वपक्षाशयोक्तिः ॥ ६ ॥

न वाङ्गभूतत्वात् ॥ ७ ॥

सिद्धान्तमारभते । न वेति । वाशब्दः सिद्धान्तज्ञापकः तस्यां स्यादिति पूर्वसूत्रादनुवर्तते । तेन पदसमूहेन ईदृशसम्बन्धे तस्यामन्वारम्भणीया न वर्ततइति फलितम् । कुतः । अङ्गभूतत्वात् । अस्य हेतोरयमभिप्रायः । यज्ञे आरम्भः पूर्वोक्तः ऋत्विग्वरणम् । आरम्भो वरणं यज्ञइति शास्त्रात् । स आरम्भः प्रधानस्यैव क्रियते । यथा ज्योतिष्टोमे प्रधानार्थं कृता एवाङ्गेषु न पृथक् । एवमेवात्रापि अन्वारम्भणीया दर्शपूर्णमासाङ्गभूतारम्भाङ्गत्वेन दर्शपूर्णमासारम्भेणैवाङ्गारम्भस्य प्रसङ्गसिद्धौ न तस्यामारम्भो ऽस्ति येन हेतुना ऽन्वारम्भणीया ऽऽपाद्यतइति । इत्थं च पूर्वपक्षिणो बाधकाभावादिति हेतुः स्वरूपासिद्ध इति भावः ॥ ७ ॥

एकवाक्यत्वाच्च ॥ ८ ॥

ननु ज्योतिष्टोमारम्भेण दीक्षणीयाद्यारम्भाणां प्रसङ्गसिद्धिवदिति विषमो दृष्टान्तः । तथा हि । दीक्षणीयादिप्रयोगाणां ज्योतिष्टोमप्रयोगान्तःपातित्वात्प्रधानारम्भेण प्रसङ्गो युक्तः इह तु दर्शपूर्णमासावारप्स्यमान इति ल्टा दर्शपूर्णमासारम्भस्य भावित्वसूचनात् तत्प्रयोगबहिर्भूतत्वं क्लृप्तम् । बहिर्भूतप्रसङ्गासंभवाद्वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यत्रेव पृथगारम्भः सिद्धः । तथा च द्वारलोपो न संभवतीति अस्मिन् दूषणे अपरितोषेण दूषणान्तरमाह । एकवाक्यत्वाच्चेति । अयमभिप्रायः । दर्शपूर्णमासयोरङ्गत्वेन विहितारम्भाङ्गत्वेन विधायकमिदमेकमेव वाक्यं न द्वितीयमस्ति । तथा सति अस्या आरम्भाङ्गत्वेन ज्ञानवेलायां यथा दर्शपूर्णमासे क्लृप्तप्रयाजादिव्यापारसहितेनाग्नावैष्णवयागात्मककरणेन दर्शपूर्णमासारम्भं भावयेदितिवद्दर्शपूर्णमासक्लृप्तान्वारम्भसहितया अन्वारम्भणीयया ऽऽरम्भं भावयेदिति वाच्यम् । इदं न संभवति यदीदं विधायकमस्मात्पूर्वमक्लृप्तमित्यतिदेशो न संभवतीति एतदीयकथंभावाकाङ्क्षापूरकत्वेनान्वारम्भणीया प्रवेष्टुं नार्हति । प्रयाजस्य तूत्पादकं वाक्यं भिन्नम् । तेन क्लृप्तमन्वारम्भणीयोत्पत्तिवाक्यार्थे प्रविशते तथा स्वोत्पत्तिवा-

क्यार्थघटकतया स्वप्रवेशासंभवात् एकस्मिन्वाक्ये विहितवदपेक्षणत्या-
विहितवद्विधानस्यासंभव इति सूत्रभावरहस्यं ज्ञेयम् ॥ ८ ॥

खलेवाल्यां यूपाहुतिबाधः ।

## कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥

ज्योतिष्टोमे यूपसंस्कारप्रकरणे यूपमाच्छेत्स्यता परेणावहनीय-
माज्यं चाग्निं च आदाय यूपस्यान्तिके ऽग्निं मथित्वा उरु विष्णो विक्र-
मस्वेति यूपाहुतिं जुहोतीति । इयमाहुतिः साद्यस्के खलेवाली यूपो
भवतीति यूपकार्यविहितायां खलेवाल्यां सत्यां भवितुमर्हति यूपाहुतेर-
दृष्टार्थत्वेन द्वारलोपासंभवादिति पूर्वपक्षे सिद्धान्तमाह । कर्म चेति ।
चकारस्त्वर्थे सिद्धान्तद्योतकः कर्म यूपाहुतिरूपयूपपदवाच्यं यत् प्रकृ-
ष्टशरीरं द्रव्यं तत्संयोगः तदुत्पत्तिः सैवार्थः प्रयोजनं यस्येदृशं हेतुगर्भ-
मिदं कर्मणि विशेषणमर्थाभावात् खलेवाल्यामीदृशादृष्टशरीरयूपपदवा-
च्यद्रव्योत्पत्तेरभावादाहुतिरूपं कर्म निवर्तते । तादर्थ्यं यूपोत्पत्त्यर्थमिति
कथं ज्ञातमत्राह । श्रुतिसंयोगादिति । अत्र श्रुतिपदं श्रुतिवाक्यप्रापिताङ्ग-
त्वार्थकं लक्षणया तत्संयोगात् । तदुक्त्वात् यद्वा अङ्गत्वस्येतिशेषः ।
श्रुत्या श्रुतिवाक्येन संयोगात् ज्ञानादिति यूपमाच्छेत्स्यतेत्यनेन यूपमा-
प्तुमुत्पादयितुमिच्छया गच्छता होतव्यमिति वाक्येन श्रौतेनाङ्गत्वनिर्ण-
यादिति तदभिप्रायः ॥ ९ ॥

साद्यस्के स्थाण्वाहुतिबाधः ।

## स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥

वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोतीति स्थाण्वाहुति-
र्विहिता सा खलेवाल्यां कर्तव्या नेति संशये पूर्वपक्षमाह । स्थाणा-
विति । अत्रापि तुशब्दः संशयव्यावर्तकः स्थाणौ त्विति देशमात्रत्वादि-
त्यनेनाहवनीयबाधपूर्वकाहुतिदेशनियममात्रम् । यतो देशमात्रनियमः
क्रियते । अतः खलेवाल्यां स्थाण्वाहुतेरनुवृत्तिः प्रतीयेत ज्ञायेतेति ।
अयमभिप्रायः । इयमाहुतिः यूपे सन्निपत्योपकारिका न भवति । यूपस्य

स्थाणोर्विभक्तत्वेन तत्राहुत्या तद्विभक्तयूपसंस्कारासंभवात् । संबन्धे क्रियमाणं संबन्धिन्युपकुर्यात् । न त्वन्यथा । अतो ऽग्नीषोमीयापूर्वस्याराद्‌उपकारकमिति वाच्यम् । तथा सति तद्‌द्वारस्य पश्वपूर्वस्यात्रापि सत्त्वात् आव्रश्चने जुहोतीति देशं नियमयन् वलेवाल्यामस्तीति ॥ १० ॥

## अपि वा शेषभूतत्वात्संस्कारः प्रतीयेत ॥ ११ ॥

सिद्धान्तमाह । अपि वेति । अपिवेति पूर्वपक्षव्यावर्तकं यूपस्येति शेषः । यद्वा कर्म चेत्यस्मान्मण्डूकप्लुत्या द्रव्यस्येत्यनुवर्तते । यूपस्य शेषभूतत्वादङ्गभूतत्वात् तस्य यूपस्य संस्कारः प्रतीयेत ज्ञातव्यः । अङ्गत्वसाधकं यूपावान्तरप्रकरणम् । तथा हि वैष्णव्यर्चा यूपमच्छेतीति यूपसंस्कारः अये ऽप्यष्टाश्रिर्भवतीत्यपि यूपस्यैव मध्यमं वृष्टम् आव्रश्चने जुहोतीति होमः कथं न तदङ्गं भवेत् । यच्चे क्तं संबद्धे क्रियमाणमेव संबन्धिनि कार्यं जनयतीति तच्च । गुरौ अर्पितकुसुमादीनां तद्वियोगे ऽपि शिरसि धारणेन गुरोः गौरवापादनेन व्यभिचारात् ॥ ११ ॥

## समाख्यानं च तद्वत् ॥ १२ ॥

यूपाङ्गत्वे प्रमाणान्तरमाह । समाख्यानमिति । यथा ऽवान्तरप्रकरणं यूपाङ्गत्वसाधकम् । तद्वत्समाख्यानं श्रुतिलिङ्गादिषु षष्ठं प्रमाणमङ्गत्वे मानमित्यर्थः । अयमभिप्रायः शाखान्तरे स्थाणौ स्थाणवाहुतिं जुहोतीति श्रूयते । तत्र स्थाणोराहुतिरिति षष्ठीतत्पुरुषो न सप्तमीतत्पुरुषः शौण्डादिगणपाठाभावात् । सा ऽपि षष्ठी कर्मणि । कर्म च ईप्सिततममपेक्षितम् । न हि स्थाणुसंस्कारानङ्गीकारे स्थाणोरीप्सिततमत्वं संभवति अतः स्थाणवाहुतिसमाख्या बाध्येतातः स्थाणुसंस्कारद्वारा यूपसंस्कार इति ॥ १२ ॥

## मन्त्रवर्णश्च तद्वत् ॥ १३ ॥

अङ्गत्वे समाख्यामुक्त्वा लिङ्गमप्याह । मन्त्रेति । तद्वत् समाख्यावत् मन्त्रवर्णमपि मन्त्रवर्णलिङ्गमपि अङ्गत्वे प्रमाणम् । स्थाणवाहुतेर्मन्त्र एवं श्रूयते वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयं रुहे-

मेति । हे वनस्पते हे यूपसंबन्धिवृक्ष यतो मया वृक्णः अतस्त्वं शतवल्शः शतकाण्डः सन् विरोह वर्धस्वेत्यर्थः । यदि स्वाणावितिदेशनियमः तर्हि स्वच्छेदनापराधनिवृत्तये आहुत्या वर्धस्वेति प्रार्थनमनुपपन्नम् । अतो ऽपि सन्निपत्योपकारकमिति भावः ॥ १३ ॥

उत्तमप्रयाजस्य संस्कारकर्मता ।

## प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥

अस्ति दर्शपूर्णमासयोरुत्तमः प्रयाजः स्वाहाकारं यजतीति विहितः सो ऽपि प्रथमादिप्रयाजवत् प्रधानकर्म भवितुमर्हति प्रयाजत्वात् । इत्थं च विकृतौ स्वाहा ऽग्निमित्यादेरविकृतः पाठ इति पूर्वपक्षे सिद्धान्तमाह । प्रयाजे चेति । प्रयाजे च उत्तमप्रयाजे ऽपि तन्न्यायत्वात् । अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेतेति विचारे यः प्रतिज्ञाहेतूदाहरणसमुदायरूपो न्यायः तत्त्वात् । अयमभिप्रायः । स्वाहाकारो न प्रधानकर्म तद्यागे मन्त्रलिङ्गे या वक्ष्यमाणा अन्यादिदेवताः तासामेवोपलब्धेः यागेन तत्संस्काररूपे फले संभवति आरादुपकारकल्पनस्यान्याय्यत्वात् । न च माता पुत्रेषु समेत्यपुत्रपदसमभिव्याहाराज्जननीमुपस्थापयति । माता समं धान्यं मिमीते इत्यत्र स एव मातृशब्दो ऽन्यं धान्यमातारमुपस्थापयति तथा स एवाग्न्यादिशब्दः स्वाहाकारसंनिधानात् स्वाहाग्निमित्यादिना ऽन्यमेवाग्निमुपस्थापयतीति वाच्यम् । मातृशब्दो रूढ्या जननीमुपस्थापयति धान्यमातारं योगेनोपस्थापयति तथा स्वाहाकारसांनिध्यादग्निशब्दस्यान्यदेवतोपस्थापकत्वे अग्निशब्दस्य तत्र स्वातन्त्र्येण शक्तिः कल्पनीया । तत्र प्रमाणे सति सिध्येत् तदेव नास्ति एकार्थान्तरं स्यात् । तस्माद्यथा स्वाणवाहुतिः यूपद्वारा सन्निपत्योपकारकमेवमेवोत्तमप्रयाजो ऽपि वक्ष्यमाणाग्न्यादिसंस्कारद्वारोपकारक इति भावः ॥ १४ ॥

## लिङ्गदर्शनाच्च ॥ १५ ॥

सन्निपत्योपकारे साधकान्तरमाह । लिङ्गदर्शनाच्चेति । अयमभिप्रायः । चातुर्मास्ये संमतिपच्चदेवताको निगदः स्वाहा ऽग्निं स्वाह-

सोमं स्वाहा सवितारं स्वाहा सरस्वतीं स्वाहा पूषणमिति श्रूयते स देवतासंस्कारपक्षे अवकल्पते । अतिदेशशास्त्रेण प्राकृतनिगदप्राप्तौ अस्य पाठवैयर्थ्यात् । न हि दृष्टे संभवति अदृष्टार्थत्वकल्पनं न्याय्यं यागोत्पत्तिवाक्योदितदेवतापाठः निगदे तद्देवतास्वरूपं कार्यं ज्ञापयतीति ॥ १५ ॥

अग्नियागस्यारादुपकारकत्वम् ।

## तथा ऽऽज्यभागाग्निरपीति चेत् ॥ १६ ॥

उत्तमप्रयाजसिद्धान्तसाधकहेतुना आज्यभागाग्नेययागस्य सन्निपत्योपकारकत्वं पूर्वपक्षी साधयति । तथेति । तथा उत्तमप्रयाजवत् आज्यभागान्तर्गताग्नियागः सन्निपत्योपकारकः । चेदिति पूर्वपक्षसमाप्तिद्योतकम् ॥ १६ ॥

## व्यपदेशाद्देवतान्तरम् ॥ १७ ॥

सिद्धान्तमारभते । व्यपदेशादिति । व्यपदेशादित्यस्मात् प्राक् भेदेनेत्यादिः । व्यपदेशात् निर्देशात् । निगदेष्विति शेषः । देवतान्तरं प्रधानदेवतातः भिन्नम् । निगदश्चैवं द्विवारं श्रूयते । अग्निमग्नआवह सोममावह । अग्निमावहेति लोके ऽपि ब्राह्मण आगतः । शूद्र आगतः । ब्राह्मण आगत इति श्रुत्वा अग्निमवाक्यवैयर्थ्यभिया ब्राह्मणद्वयागमनं प्रत्येति तस्मादाज्यभागाग्निः सन्निपत्योपकारकः तेन न विकृतावग्निबाधः ॥ १७ ॥

## समत्वाच्च ॥ १८ ॥

हेत्वन्तरमाह । सेति । समत्वात् आरादुपकारकपङ्क्तिनिविष्टत्वात् । तदेवम् अभीषू वा एतौ यज्ञस्य यदाघारौ चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियतइति तस्मादारादुपकारकम् ॥ १८ ॥

मधुपुरोडाशयागस्य देवतासंस्कारकत्वम् ।

## पश्चावपीति चेत् ॥ १९ ॥

अग्नीषोमीयपशौ श्रूयते अग्नीषोमीयवपया प्रचर्याग्नीषोमीयं पुरोडाशमनुनिर्वपतीति अत्र पशुपुरोडाश आरादुपकारकः उत पशुयागदेवतासंस्कारार्थ इति संशये प्रयाजाधिकरणपराहतमपि आरादुपकारकत्वं हेत्वन्तरेण उज्जीवयितुं पूर्वपक्षमाह । पशाविति । अपिशब्दः यथाऽऽज्यभागाग्नेरारादुपकारत्वं तथा पशावपीति दृष्टान्तसंगतिं ज्ञापयति यद्वा पशौ पशुपुरोडाशे आरादुपकारत्वमिति शेषः । हेत्वाकाङ्क्षायां व्यपदेशादिति मण्डूकप्लुत्या ऽनुषज्यते । अत्राप्यग्नीषोमीयमिति द्विरभ्यासादिति तत्रापिशब्दयोगेन हेत्वन्तरं सूचितं तच्चेत्थम् अर्थवादेन देवताभेदप्रतिपादनादिति अर्थवादश्चैवं श्रूयते । यदग्नीषोमीयं पशुमालभतइत्येतत्सविधौ आ सोमं वहन्त्यग्निना प्रतितिष्ठतइति अनेन पशुयागस्याग्नीषयोनिः सोमलता च देवतापुरोडाशयागस्य सादृश्यात्प्राकृताग्नीषोमाविति देवताभेदात्संस्कारासंभवादारादुपकारक इति भावः ॥ १९ ॥

## न तद्भूतवचनात् ॥ २० ॥

इमं पक्षं निराकरोति । नेति । तद्देवतयोरभेदः तस्य यद्भूतं भवनं सत्ता तदभेदः तत्प्रतिपादकवचनस्य सत्त्वादित्यर्थः तद्वचनं चेत्थं यद्देवत्यः पशुः तद्देवत्यः पुरोडाश इति ॥ २० ॥

## लिङ्गदर्शनाच्च ॥ २१ ॥

तथा ऽपि साध्यात्र स्वपक्षासिद्धिरतः लिङ्गमपि साधकमाह । लिङ्गेति । इन्द्राय वज्रिणे ललामं प्राश्रृङ्गमालभेतेति यागे याज्यानुवाक्यायुगलमिन्द्रं स्तुहि वज्रिणᳪस्तोमपृष्ठमिति स्तुहि शूरं वज्रिणमप्रतीतमिति चैकदेवतालिङ्गे समाम्नातम् । नैतद्देवताभेदे लिङ्गमुपपन्नमिति भावः । अस्तु वा देवतैक्यमित्यङ्गीकृत्य तथा ऽपि पशुयागदेवता न पुरोडाशे प्रधानमिति ॥ २१ ॥

## गुणो वा स्यात्कपालवद् गुणभूतविकाराच्च ॥ २२ ॥

पुनः पूर्वपक्षमुत्थापयति । गुणो वेति । वाकारः पूर्वविरुद्धकोटिकथनद्योतकः । तथा वा एकमेव कपालं हविःश्रपणे तुषोपवपने चाङ्गं

तथा एकैव देवता यागद्वयेऽङ्गमित्यर्थः । तत्रैव हेत्वन्तरमाह । गुणभूतेति । अयं पशुपुरोडाशयागः प्राकृताग्नीषोमीयविकारः । प्रकृतौ आग्नीषोमीयदेवता अङ्गम् । अत्र प्रधानत्वं संस्कारपक्षे वाच्यम् । तथा च विसदृशत्वादतिदेशस्तद्धर्माणामत्र च स्यादतो ऽव्यङ्गं देवतेत्यर्थः । चकारेण दूषणान्तरं सूचितं यदि देवतासंस्कारः स्यात् तदा सौत्रामण्यां भिन्नदेवताकत्वेन देवतासंस्कारासंभवाद् द्वारान्तराभावात्पशुप्रयोगात्पूयानुमन्त्रणवत्क्रियेरन् आराडुपकारकपक्षे तत्रैवानुष्ठानं संभवतीति ॥ २२ ॥

## अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात् ॥ २३ ॥

उक्तं पक्षं व्यावर्तयति । अपि वेति । तत्संस्कारः देवतासंस्कारः प्रतीयेत । कुतः शेषभूतत्वात् । भागस्य देवताङ्गत्वात् । तत्संस्कारः देवतासंस्कारः प्रतीयेत । अङ्गभूतत्वं कथमित्याकाङ्क्षायां हेतुमाह । प्रयाजवदिति । प्रयाजवत् उत्तमप्रयाजादिवदङ्गानामर्थेन फलेन संयोगात् । अयमभिप्रायः यथा उत्तमप्रयाजे देवतासंस्कारद्वारा संभवति गुणकर्मत्वे प्रधानकर्मत्वमनुचितमेवमत्रापीति ॥ २३ ॥

## व्यृद्धवचनं च विप्रतिपत्तौ तदर्थत्वात् ॥ २४ ॥

संस्कारपक्षे हेत्वन्तरमाह । व्यृद्धमिति । एवं हि श्रूयते यद्वै सौत्रामण्यै व्यृद्धं तदस्यै समृद्धमिति । आराडुपकारकत्वपक्षे व्यृद्धत्वमनुपपन्नम् । व्यृद्धत्वं हि व्यङ्गत्वम् । तस्मिन् पक्षे अङ्गलोपाभावाः दिति भावः ॥ २४ ॥

## गुणे ऽपीति चेत् ॥ २५ ॥

संस्कारपक्षे वा किमङ्गं लुप्यते येन व्यृद्धशब्दस्य स्वारस्यं संपाद्यतइति समो दोष इति शङ्कते । गुणे ऽपीति । गुणे ऽपि इत्यस्य पुरोडाशयागे देवतां प्रति गुणेपीत्यादिः समो दोष इति शेषः ॥ २५ ॥

## नासंहानात्कपालवत् ॥ २६ ॥

वैषम्यं प्रतिपादयति । नेति । आरादुपकारकपक्षे इति शेषः । यथा एकेन कपालेन तुषोपवापे क्रियमाणे अन्यस्य हानिर्नास्ति । तथा ऽन्यदेवतया पुरोडाशयागे क्रियमाणे पशुयागदेवताया असंहानात् । हान्यभावात् । अयमभिप्रायः सूत्राद्बहिर्निष्कास्यः । स्वमते पशुदेवतायाः संस्काररूपपुरोडाशयागे ऽन्यदेवतायागे स्मरणरूपसंस्कारलोपाद्रूढशब्द-स्वरस इति भावः ॥ २६ ॥

## ग्रहाणां च संप्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २७ ॥

संस्कारपक्षे उपोद्बलकं लिङ्गान्तरमाह । ग्रहाणामिति । ग्रहाणां सुराग्रहाणां संप्रतिपत्तौ समदेवताकत्वविषयकं तद्वचनम् । नैतेषां पशूनां पुरोडाशा भवन्ति । ग्रहपुरोडाशा ह्येते इति वचनम् । उपपन्नमिति शेषः तत्र हेतुः तदर्थत्वादिति । अयं भावः । पशुदेवतासंस्काररूपतद्देवताकपुरोडाशाभावाद्व्यङ्गमिति शङ्कानिवारकं हि इदं वाक्यं ग्रहपुरोडाशा इति असंस्कारपक्षे नावकल्पत इति ॥ २७ ॥

## ग्रहाभावे तद्वचनम् ॥ २८ ॥

लिङ्गान्तरं च दर्शयति । ग्रहाभावेति । सौत्रामण्याम् आश्विन-सारस्वतैन्द्रान्पशुयागान् त्रीन् विधाय तेषां ग्रहपुरोडाशांश्च विधाय बार्हस्पत्यः चतुर्थपशुयागो विहितः । तत्र पुरोडाशवानेव पशुर्भवतीति । न ह्येतस्य ग्रहं गृह्णातीति श्रुतम् । अस्मिन्वाक्ये ग्रहाभावे पुरोडाशवत्त्वं हेतुत्वेन कथितं तद्वचन लिङ्गमिति शेषः । एतेन पुरोडाशग्रहान्यतरसंस्कृतदेवतायाः पशुयागाङ्गत्वं नान्यथेति भावः ॥ २८ ॥

## देवतायाश्च हेतुत्वे प्रसिद्धं तेन दर्शयति ॥ २९ ॥

अथ लिङ्गान्तरमाह देवताया इति । अग्निभ्यः कामेभ्यः पशव आलभ्यन्ते कामाय वा अग्नये पुरोडाशा भवन्ति इति श्रूयते । अत्र उत्तरवाक्ये वै इत्यनेन यतः पुरोडाशयागे अग्निः कामो देवता अतः पशावपि सैव देवतेति हेतुत्वं प्रसिद्धं तेन वै इत्यनेन दर्शयति । इदमपि संस्कारार्थत्वे लिङ्गम् ॥ २९ ॥

## अविरुद्धोपपत्तिरर्थापत्तेः श्रुतवद्गुणभूतविकारः स्यात् ॥ ३० ॥

अथ यदुक्तं गुणभूतयोर्धर्मः प्रधानभूतदेवताकयागे नानुवर्ततइति तद्दोषं परिहरति । अविरुद्धेति । अविरुद्ध इत्यनन्तरमङ्गभूतयोरग्नीषोमयोः धर्माणामिति शेषः । अर्थस्य तत्तद्द्वारस्य आपत्तेः प्राप्तत्वात् । यथा ऽभ्युदयेष्टौ प्रधानद्रव्यसंस्कारार्थं क्रियमाणायाः प्रणीतायाः तद्धर्माः श्रुते प्रधाने एव भवन्ति तद्वत् । गुणभूतस्य प्राकृताग्नीषोमीयस्य विकारः पशुयागो भवितुमर्हति ॥ ३० ॥

## स ह्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ ३१ ॥

गुणो वा स्याद्धिति सूत्रे चकारेण सूचितं दूषणं परिहरति । स ह्यर्थ इति । सः पशुपुरोडाशो ह्यर्थः द्विप्रयोजनः । देवतासंस्कार एकः छिद्रापिधानमेकमुभयोरपि कार्ययोः श्रौतत्वात् । संस्कारस्य श्रौतत्वं दर्शितम् । अथो पशोरेव छिद्रमपिदधातीति वाक्यादन्यत् । इत्थं चाविप्रतिपत्तौ भिन्नदेवताके अन्यदेवताकत्वेन देवतासंस्काररूपकार्याभावे ऽपि छिद्रापिधानरूपतादर्थ्याद्विकारत्वं तदङ्गत्वमतः प्रकृतयागात् पूषानुमन्त्रणवदोत्कर्ष इति भावः । तस्यार्थवादत्वमित्यग्रिमसूत्रावतरणिकारूपम् । तदित्थम् । अथो पशोरेवेति वाक्यं तस्यार्थवादरूपत्वात्फलबोधकत्वं न संभवति । तथा च कार्याभावात्पूषानुमन्त्रणवदुत्कर्षे प्राप्ते अग्रिमं समाधानम् ॥ ३१ ॥

## विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥

अथो पशोरित्यस्यार्थवादत्वे पुरोडाशोत्कर्षापत्तिं परिहरति विप्रतिपत्ताविति । विप्रतिपत्तौ पशुपुरोडाशयागवपायागदेवताबोधकशब्दयोर्भिन्नानुपूर्वीकत्वे ऽपीत्यर्थः । यथा पशुयागोत्पादकवाक्यम् आश्विनं धूम्रमालभते सारस्वतं मेषमैन्द्रमृषभमिति पुरोडाशयागोत्पादकवाक्यं च ऐन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशक-

पालमिति तासां देवतानां समाख्या विकारः पशुयागदेवतानाम्ना एवं पुरोडाशदेवताया आभासः । यथा गोशब्दस्य गावीतिवत् ऐन्द्रशब्दस्तु उभयत्राविकृतः । वचनेनेन्द्रः पुरोडाशानां प्रथम इत्यनेन स्थानभेदमात्रं सारस्वतमित्यत्र सकारवकारादिकतिपयवर्णघटितत्वात्सावित्रस्य तदाभासत्वम् । आश्विनेत्यत्रत्यवकारादिवर्णचतुष्टयघटितत्वात्तदाभासत्वम् । इत्थं च पुरोडाशवाक्यस्थशब्दरूपैराभासैरपि पाशुका एव देवता बुध्यन्तइति न कश्चनानुपपत्तिगन्ध इति भावः ॥ ३२ ॥

## अभ्यासो वा प्रयाजवदेकदेशो ऽन्यदेवत्यः ॥ ३३ ॥

उक्तसमाधाने अपरितोषात्समाधानान्तरमाह । अभ्यासेति । अभ्यासः प्रकृतितः प्राप्तो ऽयं पुरोडाशयागः तस्यावृत्तिः एकदेशो यह-यागः पशुदेवत्य एव । तद्भिन्नांशस्तु अन्यदेवत्यः पुरोडाशः यथा एका-दशप्रयाजे पशौ प्राकृतप्रयाजा एव अभ्यस्यन्तइति सिद्धान्तितं प्राक् । तथा चैकदेशे पञ्चपर्यन्तं प्राकृतदेवतासंबन्धः तद्भिन्नैकदेशे उर उषासा नक्तेत्येवमादयो भिन्नदेवता एव संबध्यन्ते तद्वत् । अयमभिप्रायः प्रकृतितः चोदकशास्त्रेण पुरोडाशद्रव्यकः पशुयागदेवताकः यागः प्राप्तः अत्राश्विनं ग्रहं गृह्णातीति देवतासंबन्धं द्रव्यं विहितं तस्य यागाकाङ्क्षायां यागबोधकाभावात्प्राकृतेनैव संबध्यते तदंशेन देवतासंस्कारः संभवति । तच्चैवैन्द्रमेकादशकपालं निर्वपतीति प्राकृतद्रव्यविशिष्टयागमनूद्यते देवताविधिरिति अभ्यास उपपन्न इति ॥ ३३ ॥

सौर्ययागे चरुशब्दस्यौदनवाचित्वम् ।

## चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥

पञ्चदशसूत्रमिदमधिकरणम् । सौम्यं चरुं निर्वपेदिति श्रुतम् । अत्र चरुः कपालविकार उत हविर्विकारः । यदा हविर्विकारः तदा ऽपि पुरोडाशकार्यं स्थाली करोति उतौदन इति संशये तत्र सिद्धान्तमाह । चरुरिति । चरुः चरुपदवाच्यः हविर्विकारः प्रकृतपुरोडाशकार्यकारी स्यात् । कुतः यागसंयोगात् । प्रकृतौ पुरोडाशे यागसंबन्धो ऽस्ति प्रकृते ऽपि तद्वत् ॥ ३४ ॥

## प्रसिद्धग्रहणत्वाच्च ॥ ३५ ॥

एवं स्थिते पूर्वपक्षमाह । प्रसिद्धेति । लोके चरुशब्दः स्थाल्यां प्रसिद्धः तद्ग्रहणत्वात् । तस्यैव ग्रहीतुं योग्यत्वात् । स्थाल्येव पुरोडाशकार्यकारीत्यर्थः ॥ ३५ ॥

## ओदनो वा ऽन्नसंयोगात् ॥ ३६ ॥

इमं पक्षं दूषयति । ओदनेति । ओदनः पुरोडाशकार्यकारी । अन्नस्य अदनयोग्यस्य यागेनेति शेषः । संयोगात् । संबन्धात् । अदनीयेनैव द्रव्येण शिष्टा यागं कुर्वन्ति नान्येनेति भावः ॥ ३६ ॥

## न द्व्यर्थत्वात् ॥ ३७ ॥

नेति । ओदनो हविर्विकारो न द्व्यर्थत्वात् चरुशब्दस्य नानार्थत्वापत्तेः ॥ ३७ ॥

## कपालविकारो वा विशये ऽर्थोपपत्तिभ्याम् ॥ ३८ ॥

हविर्विकारपक्षे पक्षद्वये ऽपि दोषात्कपालविकारो ऽस्त्विति शङ्कते । कपालेति । प्राकृतपुरोडाशस्य प्रकृतिवत्कपाले न श्रपणं किं तु स्थाल्यां तथा च पूर्वोक्तविषये संशये कपालविकारः । कुतः सौर्य इति तद्धितार्थस्य संबन्धस्य सूर्यादेश्यकहविराधारत्वरूपस्य उपपत्तेः । श्रपणयोग्यतायाश्च सत्त्वात् ॥ ३८ ॥

## गुणमुख्यविशेषाच्च ॥ ३९ ॥

अस्मिन्नेव पक्षे युक्त्यन्तरमाह । गुणेति । प्रकृतौ कपालं पुरोडाशः प्रधानं तयोरतिदेशः सौर्ययागे तत्र चरुशब्देनान्यतरस्य बाधे कर्तव्ये कपालबाधे अङ्गबाधो भवति । पुरोडाशबाधे प्रधानबाधो भवति प्रधानबाधादरमङ्गबाध इति गुणमुख्यविशेषभावादङ्गलोपः ॥ ३९ ॥

## तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ४० ॥

चरुशब्दस्य स्थालीपरत्वे हि पूर्वोक्तपक्षः संभवति । तदेव नेत्याह । तच्छ्रुताविति । प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इत्यत्र तच्छ्रुतौ चरुशब्दार्थे अन्यस्य विशेषणीभूता अन्यस्य शतकृष्णलस्य हविष्ट्वात् चरुरपि हविर्विकार इति भावः ॥ ४० ॥

## लिङ्गदर्शनाच्च ॥ ४१ ॥

लिङ्गान्तरमप्याह । लिङ्गेति । पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकाम इत्यत्र प्रैयङ्गवं प्रियङ्गुविकारम् इदं चरौ विशेषणम् । न हि स्थाली प्रियङ्गुविकारो भवितुमर्हतीति न कपालविकारश्चरुः ॥ ४१ ॥

## ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥

ओदनो वेति । अस्मात्सूत्राद्विशिष्य षट्चत्वारिंशे सूत्रे नेयं प्रयुक्तत्वादिति कपालविकारखण्डनमेव । प्रयुक्तत्वात् । तद्धितप्रयोगात् । यदि देवतातद्धितो न स्यात् तर्हि देवताया अलाभात् वशामालभेत वत्समालभेतेतिवत्प्रयोगो न स्यात् इति भावः ॥ ४२ ॥

## अपूर्वव्यपदेशाच्च ॥ ४३ ॥

अत्रैव साधकान्तरमाह । अपूर्वेति । पुरोडाशेन वै देवा अमुष्मिँल्लोकआर्ध्नुवन् चरुणा ऽस्मिन्यः कामयेतामुष्मिँल्लोकऋध्नुयामिति स पुरोडाशं कुर्वीत यः कामयेतास्मिँल्लोकऋध्नुयामिति स चरुं कुर्वीतेत्यत्र पुरोडाशापूर्वसदृशापूर्वजनकत्वं व्यपदेशः चरौ प्रतीयते । अतश्चरुरपि पुरोडाशसदृशो भवितुमर्हति न कपालसदृशः ॥ ४३ ॥

## तथा च लिङ्गदर्शनम् ॥ ४४ ॥

एवं कपालविकारं प्रदूष्य सिद्धान्तमाह । तथा चेति । अत्रौदनो वेति प्रपूर्वसूत्रस्थं योज्यम् । तथा च कपालविकारदूषणेन च ओदनश्चरुशब्दवाच्यो भवितुमर्हति । लिङ्गदर्शनात् । लिङ्गं ह्येवं ज्योतिष्टोमाङ्गं प्रायणीयेष्टयामादित्यः प्रायणीयश्चरुरिति । तदनन्तरं चतुर आज्यभागान् जुहोतीति ओदनेनेति चरुपदार्थस्यैवौदनेत्यनुवादाच्चरुरोदन एवेति भावः ॥ ४४ ॥

सौर्यचरोः स्थाल्यामेव पाकः ।

## स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४५ ॥

स ओदनः अष्टसु कपालेषु पक्तव्यः उतैककपाले उत कपालभिन्ने यत्र क्वचित् अथ वा स्थाल्यामेवेति संशये प्रथमपक्षमाह । स इति ।

ओदनः कपाले कपालेषु स्यात् । कुतः प्रकृत्या दर्शपूर्णमासप्रकृतितः प्राप्तत्वात् । तद्बाधकान्यस्य चाश्रुतत्वात् शास्त्रत्वाच्च ॥ ४५ ॥

## एकस्मिन्वा विप्रतिषेधात् ॥ ४६ ॥

प्रथमपक्षं दूषयन् द्वितीयमाहैकस्मिन्निति । प्राकृतसंख्यां बाधित्वा कपालमात्रमतिदिशेत् । कुतः बहुषु जलधारणपूर्वकौदननिष्पत्तेर्विप्रतिषिद्धत्वाद्बाधितत्वात् ॥ ४६ ॥

## न वा ऽर्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात्पात्रलाभः स्यादनियमो विशेषात् ॥ ४७ ॥

द्वितीयं दूषयन् तृतीयमुत्थापयति । न वेति । न वा कपाले पक्तव्यः अपूपे पुरोडाशे पूपो ऽपूपः पिष्टकः स्यादिति कोशात्पिष्टविकारत्वादपूपत्वमर्थान्तरेण जलगतौष्मणा यदवयवशैथिल्यं तदन्येन विजातीयपाकेन संयोगात् । चरौ पाकेन पाकसाधनोष्मणा संयुक्तं यत्तद्धारणार्थं धारणमर्थो यस्येति तादृशवस्तुना भवितव्यमतः तत्र चरावर्थात् अर्थापत्तिप्रमाणात्पात्रलाभः स्यात् । तत्पात्रं स्थाल्येवेति अनियमः अविशेषात् नियामकविशेषाभावात् । तादृशोदकधारणयोग्ये स्थाल्यां कटाहादौ यत्र क्व चित्पक्तव्यमिति फलितार्थः ॥ ४७ ॥

## चरौ लिङ्गदर्शनात् ॥ ४८ ॥

सिद्धान्तमाह चराविति । वेति पूर्वपक्षव्यावर्तकः । चरौ स्थाल्यां पाकः । लिङ्गदर्शनात् । यासु स्थालीषु सोमाः स्युः तेषु चरवस्स्युरिति स्वे स्वस्थालीषु चरुपाकं ब्रुवन् पाकसाधनं स्थालीति दर्शयति ॥ ४८ ॥

सोयंचरौ पेषणबाधः ।

## तस्मिन्पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥

इतः परमापादसमाप्ति अस्यैवाधिकरणस्य वर्णकान्तरमिति पार्थसारथिप्रभृतिमतम् । भाष्यकारमते पृथगधिकरणानि । एवं वेति । यथा चरौ कपालं बाध्यते तथा पेषणादि पात्रोद्धरणान्तं बाध्यते द्वारलोपात् । द्वारलोप एव स्पष्टीकृतो ऽग्रिमसूत्रैरिति पार्थसारथ्याद्यभिप्रायः ।

भाष्याभिप्रायेण लिख्यते । तत्रैव पेषणविषये पूर्वपक्षमाह । तस्मिन्पेषणमिति । चरौ पेषणं भवति । अर्थस्य चूर्णीभावस्य कृष्णलवल्लोपाभावात् कर्तुं शक्यत्वादित्यर्थः ॥ ४९ ॥

## अक्रिया वा ऽपूपहेतुत्वात् ॥ ५० ॥

सिद्धान्तमाह । अक्रियेति । अक्रिया चरौ पेषणं न कर्तव्यम् । कुतः अपूपहेतुत्वात् । प्राकृतपेषणस्यापूपहेतुत्वेन चरावपूपाभावादिति भावः ॥ ५० ॥

सौर्यचरौ संयवनबाधः । अधि॰ १३ ।

## पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥

पिण्डेति । प्रणीताभिः हवींषि संयौतीत्यस्य प्रकृतौ पिण्डार्थत्वात् । चरौ पिण्डाभावान्निवर्तत इत्यर्थः ॥ ५१ ॥

सौर्यचरौ संवपनबाधः । अधि॰ १४ ।

## संवपनं च तादर्थ्यात् ॥ ५२ ॥

संवपनं चेति । देवस्य त्वा संवपामीति यत्तदपि निवर्तते । चरोः संवप्तव्येन प्रयोजनाभावात् ॥ ५२ ॥

सौर्यचरौ संतापनबाधः । अधि॰ १५ ।

## संतापनमधः श्रपणात् ॥ ५३ ॥

संतापनेति । भृगूणामङ्गिरसां तपसा तप्यध्वमिति संतापनं निवर्तते । प्रकृतौ अयं संतापः कपालोपरि क्रियते । अत्राधः अतो न प्राकृतम् । अध इत्यनन्तरं संतापेनेति शेषः ॥ ५३ ॥

सौर्यचरावुपधानबाधः । अधि॰ १६ ।

## उपधानं च तादर्थ्यात् ॥ ५४ ॥

उपधानेति । कपालोपधानस्य हविष्पाकार्थत्वात् । तस्य स्थाल्यैव निर्वाहान्निवर्तते ॥ ५४ ॥

सौर्यचरौ पृथुश्लक्ष्णबाधः । अधि॰ १७ ।

## पृथुश्लक्ष्णे चानपूपत्वात् ॥ ५५ ॥

पृथ्विति । उरु प्रथस्वेति प्रथनम् । त्वचं गृह्णीष्वेति श्लक्ष्णीकरणं च निवर्तते । तयोरपूपार्थत्वात् ॥ ५५ ॥

सौर्यचरावभ्यूहबाधः । अधि० १८ ।

## अभ्यूहश्चोपरिपाकार्थत्वात् ॥ ५६ ॥

अभ्यूहेति । वेदेन पुरोडाशे साङ्गारं भस्म अभ्यूहेति विहितम् अभ्यूहनं निवर्तते । चरावुपरि पाकाभावात् ॥ ५६ ॥

सौर्यचरौ ज्वलनबाधः । अधि० १९ ।

## तथा च ज्वलनम् ॥ ५७ ॥

तथेति । दर्भैरभिज्वलयतीति निवर्तते । उपरिपाकार्थत्वात् ॥ ५७ ॥

सौर्यचरौ व्युद्धृत्यासादनबाधः । अधि० २० ।

## व्युद्धृत्यासादं च प्रकृतावश्रुतित्वात् ॥ ५८ ॥

व्युद्धृत्येति । प्रकृतौ कपालेभ्यः पृथक्कृत्य अन्तर्वेद्यां हविरासादनं क्रियते तद्बोधकविधेरभावात् । अन्तर्वेद्यां हविरासादनानन्तरं कपालोद्वासनस्य विहितत्वाद् आर्थिकं व्युद्धृत्यासादनम् । आर्थिकस्यानङ्गत्वान्न चोदकशास्त्रं प्रापयति अतः तन्निवर्तते ॥ ५८ ॥

इति जैमिनिसूत्रवृत्तौ दशमाध्यायस्य प्रथमः पादः ॥ १ ॥

कृष्णले चरौ पाकानुष्ठानम् । अधि० १ ।

## कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥

पूर्वपादे द्वारलोपनिबन्धनो बाधश्चिन्तितः । द्वितीये तदपवादश्चिन्त्यते । शतकृष्णलेष्टिरुदाहरणम् । तत्र पूर्वपक्षमाह । कृष्णलेष्विति । कृष्णलेषु द्रव्येषु अपाकः पाकाभावः स्यात् । अर्थस्य कार्यस्य लोपात् । न च घृते श्रपयतीति वैयर्थ्यं, पूषानुमन्त्रणवदेतत्प्रकरणादुत्कृष्य द्वारवति निवेशादिति भावः ॥ १ ॥

## स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत् ॥ २ ॥

सिद्धान्तमाह । स्याद्वेति । पाकः स्यात् । यथा ऽनदनीयस्यापि द्रव्यस्य वचनात्प्रदानं प्रत्यक्षवचनमनुशास्ति तद्वत् प्रत्यक्षवचनेन शासनात् । न चोत्कर्षेण सार्थक्यम् । तत्रापि चोदकादेव प्राप्तौ उक्तवाक्यवैयर्थ्यस्य दुर्वारत्वात् ॥ २ ॥

कपाले उपस्तरणाभिघारणयोरभावः । अधि० २ ।

उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥

तत्रैव प्राकृतोपस्तरणाभिघारणे स्तो न वेति संशये सिद्धान्तमारभते । उपस्तरणेति । तयोरमृतार्थत्वात् स्वादुर्थत्वात् । कपाले तदभावात्तयोरकर्म अननुष्ठानं, यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोतीति अमृतेनोपमितत्वात्स्वादुर्थत्वम् ॥ ३ ॥

क्रियेत वा ऽर्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥

पूर्वपक्षमाह । क्रियेत वेति । अमृतीभाववाक्यस्यार्थवादत्वाद्विधिवाक्येन हविःसंबन्धमात्रहेतुत्वं प्रतीयते ॥ ४ ॥

अकर्म वा चतुर्भिराप्तिवचनात्सह पूर्णं पुनश्चतुरवत्तम् ॥ ५ ॥

पुनः सिद्धान्तपक्षमुत्थापयति । अकर्मेति । तयोरकर्म अननुष्ठानम् । चतुरवत्तसंपत्त्यै हि प्रकृतावुपस्तरणाभिघारणे । अत्र चत्वारि चत्वारि कपालान्यवद्यति चतुरवत्तस्याप्त्यादिति श्रूयते । तेनैव चतुरवत्तलाभात् सह ताभ्यां सह अवदाने चतुरवत्तं पूर्णम् । तथा सति कपालचतुष्टयावदानेन चतुरवत्तसंपादकं व्याहन्येतेति भावः ॥ ५ ॥

क्रिया वा मुख्यावदानपरिमाणात्सामान्यात्तद्गुणत्वम् ॥ ६ ॥

पुनः पूर्वपक्षमुत्थापयति । क्रियेति । तयोः क्रिया ऽनुष्ठानं वा । कुतः, मुख्यस्य हविषः यदवदानं तत्कियत्कर्तव्यमित्याकाङ्क्षायां प्रकृतितः अङ्गुष्ठपर्वमात्रप्राप्तौ तद्बाधकतया चतुःसंख्यारूपपरिमाणात् परिमाणबोधकत्वात् । परिमाणबोधकत्वे किं मानमत आह । सामान्यात् । कियदवदेयमित्याकाङ्क्षापूरकत्वेन साजात्यात् । अतः तस्य परिमाणस्य द्रव्ये गुणत्वम् अङ्गत्वम् । केवलाङ्गबोधकशास्त्रं, न मुख्यं द्रव्यं बाधितुं शक्नोतीति भावः ॥ ६ ॥

तेषां चैकावदानत्वात् ॥ ७ ॥

अत्रैव साधकान्तरमाह । तेषामिति । तेषां चतुर्णां कपालानां एकावदानत्वात् । एकावदानत्वविधानात् । न तयोर्निवृत्तिः । तद्विधायकं वाक्यं च चत्वारि कपालान्येकमवदानमिति ॥ ७ ॥

## आप्तिः संख्यासमानत्वात् ॥ ८ ॥

यदुक्तं चतुरवत्तावाप्तिविरोध इति तत्परिहरति । आप्तिरिति । स्तुतिरिति शेषः । आप्तिवचनं चतुष्कमुभयत्र समानमिति तेन कृष्णलनिष्ठसंख्यास्तुतिः । द्वादश द्वादशानि जुहोति द्वादशमासास्संवत्सर इतिवत् ॥ ८ ॥

## सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥

पुनराप्तिवचनवैयर्थ्यमाह । सतोस्त्विति । तयोः सतोः आप्तिवचनं व्यर्थम् । अयमभिप्रायः । अविद्यमाने वसिष्ठत्वे अयं वसिष्ठ इति तेन रूपेण स्तुतिः संभवति न वसिष्ठे तेन रूपेण स्तुतिः । तथा अविद्यमाने चतुरवत्ते तेन रूपेण स्तुतिः संगच्छते न विद्यमाने इति । आप्तिवचनं तयोः सत्त्वे व्यर्थमेवेति ॥ ९ ॥

## विकल्पस्त्वेकावदानत्वात् ॥ १० ॥

पूर्वपक्षं पुनरुत्थापयति । विकल्प इति । यथा आप्तिवचनं तौ निवर्तयत्येवमेकावदानवचनं तौ व्यवस्थापयतीति साम्याद्विकल्पः स्यात् ॥ १० ॥

## सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् ॥ ११ ॥

एवं विकल्पमापाद्य तमसहमानः आप्तिवचनबाधमेव दृढीकरोति । सर्वविकारेति । सर्वस्य चतुरवदानस्य विकारे सति प्राकृतचतुरवदानबाधके सकृदवदाने सति चत्वारि चत्वारि कृष्णलान्यवद्यतीति अभ्यासस्यानर्थक्यम् । अयं भावः । कृष्णलचतुष्टयसकृदवदानं चतुरवत्तं संपादयति तदा द्वितीयावदानाभावादभ्यासो व्यर्थः स्यादिति । स्वमते उपपत्तिमाह । हविष इति । मन्मते ऽभ्यास इतरस्य द्वितीयस्य हविरवदानस्य प्राप्त्यर्थं, मन्मते प्राकृतावदानचतुष्टयस्याभावात् । मध्ये शङ्कते । अपि वेति । अभ्यासः स्विष्टकृदवदानार्थ इति चेत् । तस्य स्विष्टकृदर्थत्वस्यान्याय्यत्वात् । प्रधानप्रकरणं परित्यज्यान्यार्थत्वस्यान्याय्यत्वादिति भावः ॥ ११ ॥

अकर्म वा संसर्गार्थनिवृत्तत्वात्तस्मादा-
प्तिसमर्थत्वात् ॥ १२ ॥

सिद्धान्तमाह । अकर्म वेति । तयोरकर्म अननुष्ठानम् । तयोरसंसर्गार्थेनिवृत्तित्वात् । प्रकृतौ पुरोडाशावयवानां सूक्ष्माणां स्रुचि संयोगाभावप्रयोजनस्य निवृत्तत्वात् । प्रकृते तयोरेव निवृत्तिः । न तु द्वितीयावदानस्य । तथा चाभ्यास उपपन्नः । तस्मात्तयोर्निवृत्तत्वाद् आप्तिसमर्थत्वम् । चतुरवदानाभावादाप्त्या समर्थनं स्तुतिरुपपन्ना ॥ १२ ॥

कपालचरौ भक्षसद्भावः । अधि० ३ ।

भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥

तत्रैव हविःशेषभक्षणं कर्तव्यं नेति संशये पूर्वपक्षमाह । भक्षाणामिति । स्पष्टो ऽर्थः ॥ १३ ॥

स्याद्वा निर्धानदर्शनात् ॥ १४ ॥

सिद्धान्तमाह । स्याद्वेति । भक्षणं प्राकृतं स्यात् । निर्धानदर्शनात् । निरिव धयन्तो भक्षयन्तीति वचने निरिव धयन्त इति प्राकृतं भक्षमनूद्य तत्र गुणविशेषविधानदर्शनादिति भावः ॥ १४ ॥

वचनं त्वाज्यभक्षं प्रकृतौ स्यादभागित्वात् ॥ १५ ॥

पूर्वपक्षं पुनरुत्थापयति । वचनं त्विति । वचनं पूर्वोक्तमाज्यभक्षणं विदधाति । प्रकृतावाज्यस्याभागित्वात् । भक्षहेतुत्वेनाक्लृप्तत्वात् ॥ १५ ॥

वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥

सिद्धान्तमाह । वचनं वेति । निरिव धयन्तो भक्षयन्तीत्येतद्वचनं हिरण्यस्य भक्षमाह नाज्यस्यानिर्दिष्टत्वात् । यथा प्रदानमशनीयस्य क्रियते तद्वद् भक्षणमपि । ननु अनिर्देशः हिरण्ये ऽपि समानः कथं हिरण्यं गृह्यते । तत्राह । आज्यस्य गुणेति । अनिर्देशे गृह्यमाणमाकाङ्क्षया प्रधानमेव गृह्यते न गुणः । इत्थं च आज्यस्य गुणभूतत्वादप्रधानद्रव्यत्वादग्रहणं, यथा इष्टकाकूटे दण्डः तिष्ठति प्रहर चोरमित्युक्ते दण्डमेव प्रधानं गृह्णाति न त्विष्टकां, तथा ॥ १६ ॥

कपालचरौ सहपरिहारविधानम् । अधि· ४ ।

## एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ १७ ॥

तस्यामेवैकधा ब्रह्मणउपहरतीत्यत्र धाप्रत्ययस्य सकृत्त्वे सहत्वे च शक्त्यात्मकृत्ते इच्छया ग्राह्यमिति पूर्वपक्षे सिद्धान्तमाह । एकधेति । एकधा एककाले प्राकृतानामिडाचतुर्धाकरणशंयुवाकभक्षाणामुपहारे सर्वेषां सहत्वं ब्रह्मभक्षाणां संपद्यते । प्रकृतौ दर्शपूर्णमासे भक्षचतुष्टयस्य विहितत्वात् । अयं भावः । प्रकृतौ विहितं भक्षचतुष्टयं चोदकेन प्राप्तम् । तत्र सकृत्त्वार्थत्वे भक्षत्रयबाधः । सहत्वार्थत्वे भक्षाङ्गभूतकालबाधः प्रधानबाधाद्वरमङ्गबाधकल्पनेति ॥ १७ ॥

कपालचरौ ब्रह्मणे सर्वभक्षभागार्पणम् । अधि· ५ ।

## सर्वत्वं च तेषामधिकारात्स्यात् ॥ १८ ॥

तत्रैव कपालचरौ सर्वं ब्रह्मणे परिहरतीति । अत्र यद्ब्रह्मणे परिहरति तत्सर्वमिति सर्वत्वविधिः उत यत्सर्वं परिहरति तद्ब्रह्मणइति ब्रह्मसंबन्धविधिरिति संशये पूर्वपक्षमाह । सर्वत्वमिति । सर्वत्वं विधीयतइति । कुतः तेषां ब्रह्मसंबन्धिपरिहाराणामधिकारात् । उद्देश्यत्वात् । अयमभिप्रायः यथा । द्व्यवदाने ऽपि सकलपुरोडाशे आग्नेयत्वं तथा प्रकृतौ ब्रह्मभागैकदेशभक्षणे ऽपि शेषे ब्रह्मभागत्वं न विरुध्यते अतः परिहरतीत्यनेन भक्ष्यं लक्षयित्वा प्रकृते ब्रह्मभागभक्षणमुद्दिश्याप्राप्तं सर्वत्वं विधीयतइति ॥ १८ ॥

## पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥

सिद्धान्तमाह । पुरुषेति । पुरुषान्तरस्य ब्रह्मातिरिक्तर्त्विक्संबन्धस्य अपनयः विच्छेदः । स्यादिति पूर्वसूत्रस्थमत्र संबध्यते । अयमभिप्रायः । हविःशेषस्यर्त्विग्भक्षणेन संस्कार्यत्वात् सर्वभक्षः प्राप्तो न विधेयः किं तु हविःशेषे सर्वस्मिन् ब्रह्मसंबन्धो विधीयते तेनेतरसंबन्धनिवृत्तिः । अथ यद्ब्रह्मणे तत्सर्वं परिहरति । ब्रह्मणे सर्वं यत्तत्परिहरतीति वा । यत्सर्वं तद्ब्रह्मणे परिहरतीति पक्षाः । तेषाम्, विशेष्यस्येति शेषः । अवाच्यत्वादश्रुतत्वात् । अबोधकं वाक्यं भवेदिति भावः । यदि च ब्र-

ह्मणे इत्यादिशब्दैः प्राकृतब्रह्मभागा एव विशेष्यत्वेनानूद्यन्ते इत्युच्यते तर्हि विशिष्टार्थस्य प्राप्तत्वेन विधेयाभावाद्वाक्यं व्यर्थमेव भवेदिति भावः ॥१९॥

भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणम् । अधि॰ ६ ।

## पुरुषापनयात्स्वकालत्वम् ॥ २० ॥

कृष्णलचरावेकैककालपरिहाराद् भक्षणमप्येककालमिति पूर्वपक्षे सिद्धान्तमाह । पुरुषेति । पुरुषापनयादित्यनन्तरं कृतार्थत्वादिति शेषः । स्वकालत्वं प्रकृतौ यस्य यस्य विहितः कालः तत्कालत्वं भक्षाणाम् । अयं भावः । पुरुषापनयेन चरितार्थो विधिः प्राकृतकालं बाधितुमसमर्थः ॥ २० ॥

ब्रह्मभक्षे चतुर्धाकरणादीनामभावः । अधि॰ ७ ।

## एकार्थत्वादविभागः स्यात् ॥ २१ ॥

तत्रैवेदं चिन्त्यते । इदं ब्रह्मण इति निर्देशः कर्तव्यो नेति संशये बाधकाभावात्कर्तव्य इति पूर्वपक्षे सिद्धान्तमाह । एकार्थत्वादिति । एकब्रह्मार्थत्वादविभागः निर्देशाभावः । अयं भावः । प्रकृतौ सर्वर्त्विगर्थत्वाद्विशेषस्य निर्देशाभावे परस्परं कलहं कुर्युः । इह एक एवेति कलहाभावान्न निर्देशः ॥ २१ ॥

ऋत्विग्दानस्यानत्यर्थता । अधि॰ ८ ।

## ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददातिसामर्थ्यात् ॥ २२ ॥

यज्ञे श्रूयमाणा दक्षिणा अदृष्टार्थेति पूर्वपक्षयति । ऋत्विगिति । धर्ममात्रम् अर्थो यस्येति । यजतीत्यत्र यथा ऽदृष्टार्थता तथा ददातेरपि तादर्थ्याददृष्टार्थत्वात् ॥ २२ ॥

## परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥

सिद्धान्तमाह । परिक्रयेति । ऋत्विजां परिक्रयार्थं दक्षिणा कर्मसंयोगात् कर्मकर्तृसंबन्धात् । लोके क्रियाकर्तुः दानं भृतिरूपं दृष्टम् ॥ २३ ॥

## दक्षिणायुक्तवचनाच्च ॥ २४ ॥

साधकान्तरमाह । दक्षिणेति । दक्षिणायुक्ता वहन्त्यृत्विज इति वाक्ये ऋत्विजां वहने हेतुत्वं दक्षिणायुक्ता इत्यनेन ज्ञाप्यते इदं लिङ्गम्* ॥ २४ ॥

* न चान्येनानम्येत परिक्रयात्कर्मणः परार्थत्वादिति सूत्रमधिकं न्यायमालायाम् ।

## परिक्रीतवचनाच्च ॥ २५ ॥

लिङ्गान्तरं स्पष्टमाह । परिक्रीतेति । श्रूयते दक्षिणापरिक्रीता ऋत्विजो याजयन्तीति । तस्माच्च ॥ २५ ॥

## सनिवन्त्येव भृतिवचनात् ॥ २६ ॥

लिङ्गान्तरमाह । सनीति । सनिवनि याच्ञायां प्राप्तं सनिवन्यं तस्मिन् तद्विधायकवाक्ये भृतिवचनाद् भृतिवचनसत्त्वात् तद्वाक्यं द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति । अयमर्थः यजमानो दीक्षितः द्वादशरात्रपर्यन्तमन्येभ्यः ऋत्विग्दक्षिणारूपां भृतिं भिक्षेतेति । भृतिशब्दो लोके कर्मकर्तुः परिक्रये प्रसिद्धः । अतो लिङ्गात् ॥ २६ ॥

## नैष्कर्तृकेण संस्तवात् ॥ २७ ॥

लिङ्गान्तरमप्याह । नैष्कर्तृकेणेति । यथा वै दारुहारो नैष्कर्तृको निष्कर्तनभृतः कर्मयोगे वर्तते । एवं वा एते यज्ञस्यर्त्विज इति । अयमर्थः । यथा दारुहारः नैष्कर्तृकः वृक्षच्छेदनकर्ता निष्कर्तनं छेदनं तद्भृतकर्म तल्लाभोपाये वर्तते । तत्सादृश्यप्रदर्शनेन ऋत्विग्दक्षिणा भृतिरूपेति क्लृप्ता । विचारफलं पूर्वपक्षे सत्रे दक्षिणाया अबाधः । सिद्धान्ते तद्बाधः ॥ २७ ॥

ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थत्वम् । अधि० ६ ।

## शेषभक्षाश्च तद्वत् ॥ २८ ॥

हविश्शेषभक्षणं परिक्रयः संस्कारो वेति संशये पूर्वपक्षमाह । शेषेति । तद्वद्दक्षिणावत् ॥ २८ ॥

## संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ २९ ॥

सिद्धान्तमाह । संस्कारेति । शेषहविषः संस्कारः । कुतः, पुरोडाशादिद्रव्यस्य परार्थत्वात् । यागार्थत्वात् । अयं । भावः । पुरोडाशादिद्रव्यं यदि भक्षार्थं स्यात्तदा भवेदेवम् । यागार्थत्वान्नैवम् ॥ २९ ॥

## शेषे च समत्वात् ॥ ३० ॥

हेत्वन्तरमाह । शेषइति । शेषे हुतशेषे द्रव्ये समत्वात् । ऋत्विग्यजमानयोः समत्वात् । स्वत्वाभावसाम्यात् । अयं भावः । देवता-

हूतेनाग्नये जुष्टं निर्वपामीति निर्वापाद्यजमानस्वत्वं निवृत्तम् । अतः साम्यम् । यत्र स्वत्वमेव नास्ति तेन परिक्रयः कथं स्यात् ॥ ३० ॥

स्वामिनि च दर्शनात्तत्सामान्यादितरेषां तथात्वम् ॥ ३१ ॥

हेत्वन्तरमाह । स्वामिनीति । यजमानस्यापि शेषभक्षो विहितः दृश्यते । अतः इतरेषामपि भक्ते तथात्वं स्वामिभक्षसादृश्यम्* ॥ ३१

सत्रे ऋत्विग्वरणाभावः । अधि० १० ।

वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ ३२ ॥

सत्रे अबाधात्प्राकृतवरणं कर्तव्यमिति पूर्वपक्षे सिद्धान्तमाह । वरणमिति । स्वकर्मत्वात् । सत्रे यजमाने ऋत्विक्त्वातिदेशेन सर्वस्य यजमानकर्मत्वात् । शेषं स्पष्टम् ॥ ३२ ॥

सत्रे परिक्रयाभावः । अधि० ११ ।

परिक्रयश्च तादर्थ्यात् ॥ ३३ ॥

परिक्रय इति । परिक्रयः दक्षिणा ऽपि नेति पूर्वसूत्रादनुवर्तते । तादर्थ्यात् । आत्मार्थत्वात् ॥ ३३ ॥

प्रतिषेधश्च कर्मवत् ॥ ३४ ॥

सिद्धान्तमाक्षिपति । प्रतिषेध इति । प्रतिषेधः अदक्षिणानि सत्राणीति निषेधः कर्मवत् प्राप्तिमत्प्राप्तिपूर्वकमिति यावत् । यदि सत्रे दक्षिणाया अप्राप्तिः तदा निषेधो ऽनुपपन्न इति भावः ॥ ३४ ॥

स्याद्वा प्रसर्पिकस्य धर्ममात्रत्वात् ॥ ३५ ॥

एकदेशिसमाधानमाह । स्याद्वेति । प्रतिषेधोपपत्तिः स्यात् । प्रसर्पकेभ्यो लोमानीति विहितदानस्य धर्ममात्रत्वाददृष्टार्थत्वात् । तत्प्राप्तौ तन्निषेधसंभवात् ॥ ३५ ॥

न दक्षिणाशब्दात्तस्मान्नित्यानुवादः स्यात् ॥ ३६ ॥

सिद्धान्तमाह । नेति । प्रसर्पकदक्षिणानिषेधो न । दक्षिणाशब्दात् । आनत्यर्थदानएव दक्षिणाशब्दो रूढ इति भावः । अतो निषेधो

* तथा चान्यार्थदर्शनमिति सूत्रमधिकं न्यायमालायाम् ।

नित्यानुवादः इत्थं च प्रसर्पकदक्षिणाबाधो न ॥ ३६ ॥

उदवसानीये दानस्य परिक्रयार्थत्वम् । अधि० १२ ।

उदवसानीयः सत्रधर्मा स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३७ ॥

अस्ति सत्रसमाप्त्यनन्तरं सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्निति विहितः । तत्र दक्षिणा ऽदृष्टार्थेति पूर्वपक्षमाह । उदवसानीयेनि । सत्रस्य धर्मा यत्रेति बहुव्रीहिः तदङ्गत्वात् । सत्राङ्गत्वात् । धर्ममात्रमदृष्टैकफलम् ॥ ३७ ॥

न त्वतत्प्रकृतित्वाद्विभक्तचोदितत्वात् ॥ ३८ ॥

सिद्धान्तमाह । नेति । नादृष्टार्थमतत्प्रकृतित्वादुदवसानीयस्य सत्रप्रकृतिकत्वाभावात् । नापि सत्राङ्गमित्याह । विभक्तचोदितत्वात् । सत्रादुदवसाय इत्याद्य समाप्येति अस्मिन् सत्रविभक्तत्वनिर्देशात् ॥ ३८ ॥

उदवसानीयस्यर्त्विजामेकैकेनानुष्ठानम् । अधि० १३ ।

तेषां तु वचनाद् द्वियज्ञवत्सह प्रयोगः स्यात् ॥ ३९ ॥

सोदवसानीया सर्वैः संभूय कार्या प्रत्येकमिति संशये पूर्वपक्षमाह । तेषामिति । तेषां सत्रकर्तॄणां वचनात् सहस्रदक्षिणेन यजेरन्नित्यत्र बहुवचनाद् द्वियज्ञवद् राजपुरोहितौ सायुज्यकामौ यजेयातामितिवत् सह मिलित्वा अनुष्ठानं स्यात् । एवं पूर्वपक्षे स्थिते सिद्धान्तमनुक्त्वा विचारान्तरमारभते ॥ ३९ ॥

उदवसानीयस्यर्त्विजां सत्रिभ्यो भिन्नता । अधि० १४ ।

तत्रान्या ऋत्विजो वृणीरन् ॥ ४० ॥

पूर्वोक्ते कर्मणि सत्रस्य अनङ्गत्वे ऽपि त्वया एककर्तृकत्वनिर्देशात्स एवर्त्विज इति पूर्वपक्षे सिद्धान्तमाह । तत्रेति । दक्षिणाश्रवणादिति शेषः । स्पष्टम् ॥ ४० ॥

पृष्ठशमनीये प्रत्येकं यष्टृता । अधि० १५ ।

एकैकशस्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात् ॥ ४१ ॥

आगन्तुकविचारं समाप्य पूर्वपक्षे सिद्धान्तमाह एकैकश इति । पृष्ठशमनीयमेकैकशः प्रत्येकं कुर्युः । अविप्रतिषेधात् । बाधकाभावात् । तत्र

कर्तॄणां बहुत्वेन तत्र बहुवचने तत्सामानाधिकरण्यार्थमाख्यातबहुवचनम् । प्रकृतेः एककर्तृसंयोगाच्चोदकशास्त्रमनुगृहीतं भवतीति भावः । द्वियज्ञवैषम्यं भाष्यादवगन्तव्यम् । विस्तरभयान्नेह लिख्यते ॥ ४१ ॥

कामेष्टौ दानस्यादृष्टार्थता । अधि० १६ ।

## कामेष्टौ च दानशब्दात् ॥ ४२ ॥

सारस्वतसत्रमध्ये कामेष्टौ अश्वौ पुरुषी दक्षिणेति विहिता । तत्र दक्षिणा परिक्रयार्थोतादृष्टार्थेति संशये पूर्वपक्षमाह । कामेति । पृष्ठशमनीवद्दानशब्दाद्दानत्यर्था ॥ ४२ ॥

## वचनं वा सत्रत्वात् ॥ ४३ ॥

सिद्धान्तमाह । वचनमिति । सत्रत्वाद्दानत्यर्था । दक्षिणावचनमदृष्टार्थत्वबोधकम् ॥ ४३ ॥

दर्शपूर्णमासयोर्द्रुघ्याय दानस्यादृष्टार्थत्वम् । अधि० १७ ।

## द्रुघ्ये वा चोदनाद्दक्षिणापनयात् ॥ ४४ ॥

निमित्तविशेषे इष्टिः श्रूयते । वैश्वानरं द्वादशकपालं निर्वपेत्त्र्यैकहायनी गौर्दक्षिणा तं द्रुघ्याय दद्यादिति । अत्र दक्षिणाश्रवणात्परिक्रयार्थं, तथा च तदनुसारेण द्रुघ्या ऋत्विजः इति पूर्वपक्षे सिद्धान्तमाह । द्रुघ्येति । द्रुघ्ये दक्षिणा दृष्टार्था अचोदनाद् द्रुघ्यस्य ऋत्विक्त्वनिषेधात् । अतः ऋत्विक्षु उक्तदक्षिणापनयात् । प्राकृतान्वाहार्यमेवेति भावः ॥ ४४ ॥

जीवतामस्थियज्ञः । अधि० १८ ।

## अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४५ ॥

सत्रे श्रूयते । यदि संदीक्षितानामेकः प्रमीयेत तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य यो ऽस्य नेदिष्ठः तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ततः संवत्सरे ऽस्थीनि याजयेदिति । याजयेदित्यत्र णिचः परस्मैपदस्य च श्रवणादस्थीनि याजयेयुरिति विहितयागजन्यफलं मृतस्येति पूर्वपक्षे सिद्धान्तमाह । अस्थियज्ञ इति । अस्थियज्ञः इतरेषां मृतभिन्नानां स्यात् । अविप्रतिषेधात् । अबाधात् । अस्थ्नामचेतनानां बाधाच्च ॥ ४५ ॥

## यावदुक्तमुपयोगः स्यात् ॥ ४६ ॥

ननु तत्राऽग्न्यां क्वचिदुपनिधानं श्रूयते। अस्थि कुम्भमुपनिधाय स्तुवी-तेति तत्कथमिति शङ्कायामाह । यावदिति । स्पष्टो ऽर्थः ॥ ४६ ॥

अस्थियागे ऽग्न्यां जपाद्यमनुष्ठानम् । अधि० १६ ।

## यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४७ ॥

इत ऊर्ध्वमधिकरणपञ्चकं क्त्वाचिन्तारूपम् । यद्यग्न्यां यागः वाचनिकः तदा संस्कारादयः अग्न्यां कर्तव्या इति पूर्वपक्षे सिद्धान्तमाह । यदीति । तेषामग्न्यां वचनबलाद्यागस्तदा जपः मन्त्रोच्चारः संस्कारः केशश्मश्रुवपनादि सेष्टि दीक्षणीयेष्टिसहितम् अर्थः द्वारं लुप्तो यस्य तन्निवर्तते । तेषां तदर्थत्वात् । कर्तृसंस्कारार्थत्वात् ॥ ४७ ॥

## क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ४८ ॥

क्रत्वर्थमपि लुप्यतद्दति पूर्वपक्षमाह । क्रत्वर्थमिति । शुक्रयहान्वारम्भा-दिरूपं यत्क्रत्वर्थं तत्कर्तव्यम् । तत्र यजमानस्य गुणभूतत्वादङ्गत्वात् ॥ ४८ ॥

अस्थियज्ञे ऽग्न्यां काम्यकर्माद्यननुष्ठानम् । अधि० २० ।

## काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्या-नुच्यमानानि ॥ ४९ ॥

यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयादि-त्यादि अस्थियज्ञे कर्तव्यम् इति पूर्वपक्षे सिद्धान्तमाह । काम्यानीति । काम्यानि सदोमानविशेषाणि अस्थियज्ञे न विद्यन्ते । तदीयकाम-स्याज्ञानात् । जीवतो ऽपि परपुरुषस्य अनुच्यमानानि ज्ञानादीनि परो न जानाति यथा ॥ ४९ ॥

अस्थियज्ञे ऽग्न्यां सूक्तवाकगताशासनाननुष्ठानम् । अधि० २१ ।

## ईहार्थाभावात्सूक्तवाकवत् ॥ ५० ॥

तत्रैव दर्शपूर्णमासप्रकृतिके प्रायणीयादौ सूक्तवाके अयं यजमान आयुराशास्ते इत्यादिमन्त्राः सन्ति न वेति संदेहे सिद्धान्तमाह ।

ईहेति । मन्त्राणामीहार्थत्वात् । अस्थि तदभावात् । सूक्तवाकवत् । सूक्तवाकार्हाः । अत्राहुर्वतिः । मन्त्रेषु विशेषणम् । निवर्तन्तइति शेषः ॥ ५० ॥

स्युर्वा ऽर्थवादत्वात् ॥ ५१ ॥

पूर्वपक्षमाह । स्युर्वेति । स्पष्टो ऽर्थः ॥ ५१ ॥

नेच्छाभिधानात्तदभावादितरस्मिन् ॥ ५२ ॥

पुनः सिद्धान्तं द्रढयति । नेति । मन्त्रेषु इत्यादिः । इतरस्मिन् अस्थि ॥ ५२ ॥

अस्थियज्ञे होतृकामाभावः । अधि० २२ ।

स्युर्वा होतृकामाः ॥ ५३ ॥

तत्रैव यं कामयेत पशुमान्स्यादिति परार्चो तस्येडामुपहूयेतेत्यादिहोतृकामा अबाधात्स्युरिति पूर्वः पक्षः ॥ ५३ ॥

न तदाशीष्ट्वात् ॥ ५४ ॥

सिद्धान्तमाह । नेति । तदाशीष्ट्वाद् यजमानाशीष्ट्वात् ॥ ५४ ॥

यजमानस्य मरणे ऽपि सर्वस्वारस्य समापनम् । अधि० २३ ।

सर्वस्वारस्य दिष्टे गतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ ५५ ॥

सर्वस्वार इति क्रतुविशेषः ज्योतिष्टोमविकारः । मरणकामो ह्येतेन यजेतार्भवपवमाने औदुम्बरीं दक्षिणेन दशेनाहतेन वाससा परिवेष्ट्य ब्राह्मणाः समापयत मे यज्ञमिति संप्रेष्याग्नौ संविशतीति । अत्र पूर्वपक्षमाह । सर्वेति । दिष्टे गतौ यजमानमरणोत्तरम् । शेषं स्पष्टम् ॥ ५५ ॥

स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥ ५६ ॥

सिद्धान्तमाह । स्याद्वेति । समापनान्तं पूर्वस्मादनुवर्तते । उभयोः क्रत्वोः परिसमाप्तेश्च । समापयतेति प्रैषद्वारा लक्षणया समाप्तिर्बोदाहृतवाक्येन विधीयतइति भावः ॥ ५६ ॥

सर्वस्वारे कार्यबाध्यव्यवस्था । अधि० २४ ।

गते कर्मास्थियज्ञवत् ॥ ५७ ॥

तत्रैव गते यजमानमरणानन्तरं यजमानकर्म पूर्वमस्थियज्ञे निर्णीतं तद्वदिति सिद्धान्तः ॥ ५७ ॥

दर्शपूर्णवस्थारे यजमाने मृते ऽप्यायुराशंसनम् । अधि० ३५ ।

## जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ ५८ ॥

तस्मिन्नेव क्रतौ प्रायणीयादौ अयं यजमान आयुराशास्ते इति मन्त्रो न पठनीय इति पूर्वपक्षमाह । जीवत्येति । जीवितुमिच्छावान् जीवत्यः तत्संबन्धिवचनमायुराशास्ते इति, निवर्तते इति शेषः । आशिषः यजमानार्थत्वात् । यजमानस्यायुषि इच्छाभावादिति भावः ॥ ५८ ॥

## वचनं वा भागित्वात्प्राग्यथोक्तात् ॥ ५९ ॥

सिद्धान्तमाह । वचनमिति । वचनं पठनं वा कर्तव्यम् । आयुरादीनां यथोक्तात् । आर्भवपवमानात्प्राग् भागित्वात्तादृशेच्छाभागित्वात् । तावत्पर्यन्तं जीवनेच्छासत्त्वादिति भावः ॥ ५९ ॥

द्वादशाहे ऋतुयाज्याद्यनुष्ठानम् । अधि० ३६ ।

## क्रिया स्याद्धर्ममात्राणाम् ॥ ६० ॥

अस्ति सत्रे ऋतुयाज्यावरणम् आत्रेयाय हिरण्यदानादि । तत्र वरणादि निवर्ततइत्युक्तं प्राक् । अत ईदृशमपि निवर्ततइति प्राप्ते सिद्धान्तमाह । क्रियेति । धर्ममात्राणामदृष्टैकप्रयोजनानां क्रिया अनुष्ठानम् ॥ ६० ॥

पवमानेष्टौ निर्वापानुष्ठानम् । अधि० ३७ ।

## गुणलोपे तु मुख्यस्य ॥ ६१ ॥

प्रथमपवमानेष्टौ अग्निहोत्रहवण्या निर्वापसाधनस्य अभावान्निर्वापो निवर्ततइति प्राप्ते सिद्धान्तमाह । गुणेति । गुणस्याग्निहोत्रहवण्या लोपे ऽपि मुख्यस्य प्रधानस्य निर्वापस्यानुष्ठानम् ॥ ६१ ॥

वाजपेये मुष्टिलोपः । अधि० ३८ ।

## मुष्टिलोपात्तु संख्यालोपः तद्गुणत्वात्स्यात् ॥ ६२ ॥

वाजपेये नैवारस्सप्तदशशरावश्चरुर्भवतीति । तत्र चतुरो मुष्टीन्निर्वपतीति अतिदेशेन प्राप्तौ सप्तदशशराव इत्यनेन बाध्यमानं कतमं बाध्यतइति चिन्तायां प्रथमपूर्वपक्षमाह । मुष्टीति । मुष्टिलोपे सति सप्तदशशरावधान्यस्य स्थूलपात्रेण माने संख्यानुग्रहः । तादृशधान्यस्य शतवारं मुष्ट्या माने मुष्ट्यनुग्रहः संख्याबाधः । तयोर्मध्ये मुष्टिलोपाद्वरं संख्यालोपः स्यात् । संख्याया मुष्टिगुणत्वात् ॥ ६२ ॥

न निर्वापशेषत्वात् ॥ ६३ ॥

इमं पक्षं दूषयन् पक्षान्तरमाह । नेति । न मुष्टिगुणा संख्या किंतु निर्वापस्य । तद्विस्तरो भाष्ये द्रष्टव्यः । अतो मुष्टिलोपः ॥ ६३ ॥

संख्या तु चोदनां प्रति सामान्यात्तद्विकारः संयोगाच्च परं मुष्टेः ॥ ६४ ॥

इमं पक्षं दूषयन् पक्षान्तरमाह । संख्या त्विति । चोदनां प्रति सामान्यात् । सादृश्यात् । प्रकृतौ चतुःसंख्याकार्यं द्रव्यपरिच्छेदः तस्य सप्तदशत्वस्यापि परिच्छेदकत्वेन सादृश्यात्संख्या सप्तदशसंख्या चतुष्ट्वविकारः बाधकः स्यात् । परं शरावः द्रव्यमानसंयोगाद् मुष्टेर्विकारः । तथा चोभयबाध इति भावः ॥ ६४ ॥

न चोदनाभिसंबन्धात्प्रकृतौ संस्कारयोगात् ॥ ६५ ॥

सिद्धान्तमाह । नेति । वाजपेयवाक्ये संख्याशरावौ उत्पत्तिवाक्यत्वाच्चोदनया यागभावनया संबन्धात् । प्रकृतौ तु निर्वापरूपद्रव्यसंस्कारभावनया योगाद् न द्वयोरपि बाधः संभवति शास्त्रेण किं तु द्वयोर्मेलनानुपपत्त्या ऽन्यतरस्य बाधे कर्तव्ये असञ्जातविरोधन्यायेन प्रथमोपस्थितसंख्या न बाध्यते । पाश्चात्यमुष्टिरेव बाध्यतइति भावः ॥ ६५ ॥

धेन्वादिशब्दानां गोवाचित्वम् । अधि० २८ ।

औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ ६६ ॥

द्यावापृथिव्यां धेनुमालभेतेत्यत्र सकृत्प्रसूतत्वरूपगुणविशिष्टगोत्वे धेनुशब्दस्य रूढिः तथा ऽपि चोदकानुग्रहणाय जातिमपहाय गुणमात्रमजायां विधीयतइति पूर्वपक्षस्य समाधानमाह । औत्पत्तिकेति । यदोत्पत्तिवेलायामेव गुणविशिष्टजातिवाचके द्रव्यस्य प्राकृतस्य विकारः बाधः स्यात् । अकार्यत्वात् । प्राकृते द्रव्ये अकार्यत्वाद् गुणविशिष्टद्रव्यस्य संपादयितुमशक्यत्वात् ॥ ६६ ॥

वायव्यपशोरजस्यैवालम्भनम् । अधि० ३० ।

नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥ ६७ ॥

नैमित्तिके केवलं गुणमात्रं निमित्तीकृत्य प्रवृत्ते श्वेतमालभेतेत्यत्र

श्वेतशब्दे कार्यत्वात् । गुणयोगस्य प्राकृते कर्तुं शक्यत्वात्प्राकृतः स्यात् । कुतः तस्य चोदकशास्त्रस्य आपत्तेः उपपत्तेः अनुग्रहादिति सिद्धान्तः ॥ ६७ ॥

खलेवालीतण्डुलयोः खादिरत्रैहत्वानियमः । अधि० ३१ ।

## विप्रतिषेधे तद्वचनात्प्राकृतगुणलोपः स्यात्तेन कर्मसंयोगात् ॥ ६८ ॥

खलेवाली यूपो भवतीत्यत्र चोदकानुग्रहाय यो यूपः स खलेवालीति वाक्यार्थं संपाद्य यत्र खादिरः खलेवाली स संपादनीय इति पूर्वपक्षे सिद्धान्तमाह । विप्रतिषेध इति । प्राकृतवैकृतयोर्गुणयोर्विप्रतिषेधे विरोधे सति तस्य वैकृतस्य वचनात्प्रत्यक्षवचनात्प्राकृतगुणलोपः बाधः स्यात् । ननु यूपमुद्दिश्य खलेवालीत्वविधानेन द्वयोर्विरोध इत्यत आह । तेनेति । तेन यूपेन समीपवर्तिना कर्मसंयोगात् । भावनान्वयात् तस्यैव विधानं युक्तमिति भावः ॥ ६८ ॥

खलेवाल्यां तक्षणाद्यननुष्ठानम् । अधि० ३२ ।

## परेषां प्रतिषेधः स्यात् ॥ ६९ ॥

तत्रैव परेषां तक्षणादीनां प्रतिषेधः बाधः स्यात् । तक्षणाष्टाश्रीकरणादियूपोत्पत्तिसाधनम् अत्र तदभावादिति भावः ॥ ६९ ॥

## विप्रतिषेधाच्च ॥ ७० ॥

हेत्वन्तरमाह । विप्रतीति । विप्रतिषेधाद्विरोधाच्च तक्षणादिषु क्रियमाणेषु रूपान्तरोत्पत्त्या खलेवालीत्वं भज्येत । तथा च गतं खलेवालीत्वमिति भावः ॥ ७० ॥

खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानम् । अधि० ३३ ।

## अर्थाभावे संस्कारत्वं स्यात् ॥ ७१ ॥

तत्रैव खलेवाल्यां यूपत्वनिमित्ततक्षणादिवन्मैत्रावरुणदण्डेन समीकरणजलसेचनादयो निवर्तन्ते इति पूर्वपक्षे सिद्धान्तमाह । अर्थेति । अर्थस्य यूपत्वस्य खलेवाल्यामभावे ऽपि संस्कारत्वं दृष्टफलसंस्कारसमूहः स्यात् । यद्वा खलेवाल्यामुक्तसंस्काराणां कार्यस्य दृष्टस्याभावे हि यूपसंस्कारत्वं स्यात् । इह दृष्टप्रयोजनसंभवाचादृष्टार्थतेति भावः ॥ ७१ ॥

महापितृयज्ञे धानास्ववघातानुष्ठानम् । अधि० ३३ ।

## अर्थे न च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥ ७३ ॥

महापितृयज्ञे पितृभ्यो बर्हिषद्भ्यो धाना इति। धाना भृष्टतण्डुलाः । अत्र धानासु अवहननं खलेवाल्यां तत्प्रवर्त्तते । यदि धानास्ववहननं भवेत्तदा सक्तवो भवेयुर्धानात्वं भज्येतेति पूर्वपक्षे सिद्धान्तमाह । अर्थे नेति । विपर्यासे विपर्यासवति विपरीतक्रमइति यावत् । अर्थे पदार्थे च सति न च धानात्वं हन्येत । ननु प्राकृतपदार्थानुग्रहे क्रियमाणे क्रमो बाध्येतेति अन्यतरबाधप्रसक्तौ किं बाध्यतइत्यत्र नियामकमाह । तादर्थ्यादिति । तादर्थ्यात्, क्रमस्येति शेषः । पदार्थार्थत्वात् पदार्थाङ्गत्वादिति यावत् । तत्त्वं क्रमरहितत्वं धानात्वसंपादनमवहननं च द्वयं पदार्थः । अत्र प्राकृतसरण्यनुसरणे उत्पत्तिवाक्यश्रुतद्रव्योद्देशेनावहननविधायकं वाक्यं धाना अवहन्तीति क्लृप्तधानात्वनिर्माणं प्रथमं पश्चादवहननमिति क्रमे ऽनुसृते धानाभङ्गः । प्रथममवहत्य पश्चाद्धानासंपादने क्रमबाधः न पदार्थबाध इति भावः ॥ ७३ ॥

इति जैमिनिसूत्रवृत्तौ दशमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

पशवादौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानम् । अधि० १ ।

## विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥

अस्मिन्पादे विकृतौ श्रुतस्य प्राकृतेन विरोधः प्रायेण चिन्त्यते । अग्नीषोमीयपशौ एकादश प्रयाजान्यजतीति श्रुतम् । इदं प्राकृतमपूर्वं वेति संशये पूर्वपक्षमाह । विकृताविति । विकृतौ प्राकृतगुणविलक्षणगुणकप्राकृताङ्गके अग्नीषोमीयपश्वादौ शब्दवत्त्वात् । एकादशत्वादिविशिष्टप्रयाजादिविधायकशब्दवत्त्वाद् गुणानाम् अप्राकृतगुणानाम् अधिकोत्पत्तिः स्वातन्त्र्येणोत्पत्तिः स्यात् । ननु प्राकृतप्रयाजानुवादेन संख्यामात्रविधिः किं न स्यादत आह । प्रधानस्य सन्निधानात् । प्रधानस्य मुख्यविशेष्यस्य भावनायाः सन्निधानात् । पदश्रुत्या धात्वर्थविधिरेव युक्तः । तेन एकमेधीयवद् यावत्प्राकृताङ्गनिवृत्तिरिति भावः ॥ १ ॥

प्रकृतिवत्त्वस्य चानुपरोधः ॥ २ ॥

उक्तार्थे साधकान्तरमाह । प्रकृतिवत्त्वेति । प्रकृतिवत्त्वस्य पशुना-ऽभेतेति वाक्ये प्रकृतिवदिति पदस्य अनुपरोधः अकल्पनं प्रयाजवाक्ये-नैव कथंभावाकाङ्क्षाशान्तेरिति भावः ॥ २ ॥

चोदनाप्रभुत्वाच्च ॥ ३ ॥

चोदनेति । चोदनायां प्रयाजादिविधौ उक्तवाक्यस्य प्रभुत्वात् समर्थत्वात् ॥ ३ ॥

प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात्तस्य विध्युपलक्षणात्सर्वो हि पूर्ववान्विधि-रविशेषात्प्रवर्तितः ॥ ४ ॥

सिद्धान्तमाह । प्रधानमिति । प्रधानं प्राकृतं यथा अङ्गसंयुक्तं यादृशाङ्गसंयुक्तं तथाभूतं तादृशाङ्गसंयुक्तमपूर्वं विकृतिसामान्यं स्यात् । ननु प्राकृतधर्मोऽस्तु विकृतिविशेषे सौर्ययागादौ यत्रापूर्वमङ्गं न श्रूयते, प्रकृते श्रवणाचेत्यत आह । तस्येति । क्व चिद्विकृतौ तस्य प्रकृतेः विधेरङ्गस्य उपलक्षणाद् उपलब्धेः सर्वोऽपि सर्वविकृतियागोऽपि पूर्ववान् प्रकृति-मान् यतः अविशेषेण प्रवर्तितः । प्रकृतिवदित्यस्य विशेष्याकाङ्क्षायां विकृतिर्योज्या तत्र वैजात्यनिवेशे प्रमाणाभावात् प्रकृतिवद्विकृतिः कर्त-व्येति योजनेति भावः ॥ ४ ॥

न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥

हेत्वन्तरमाह । न चेति । अनङ्गे प्राकृतप्रयाजादिशून्ये एकादश-त्वाद्यङ्गविधिः संभवति । सति कुड्ये चित्रकर्मेति न्यायात् ॥ ५ ॥

कर्मणश्चैकशब्द्यात्सन्निधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद्गुणस्य चोपदेश्यत्वात् ॥ ६ ॥

ननु यदि प्रकृतितः प्राप्यन्ते तर्हि एकादश प्रयाजान्यजतीति वाक्यं व्यर्थं स्यादत्रोत्तरमाह । कर्मण इति । कर्मणश्चैकशब्द्यात् । पशुयागप्र-

याजयोर्विशब्दवाच्यत्वात् । समीपवृत्तिनोः परस्परविलक्षणार्थबोधक-त्वासंभवात् । तत्सन्निधाने प्रधानविधिसन्निधाने सति विधेः अङ्गविधेः आख्या नाम तेन संयोगः । प्राकृतप्रयाजनामविशेषितयागः कृत इति भावः । ततः गुणेन एकादशत्वसंख्यया तस्य प्रयाजयागस्य विकारः परिच्छेदकरूपान्तरप्राप्तिः स्यात् । कुत एवं निर्णयस्तत्राह । शब्दस्य एकादशत्वादिशब्दस्य विधिगामित्वात् । प्रयाजादिविधिसंबन्धात् । गुणस्योपदेश्यत्वाद्विधेयत्वात्, नानर्थक्यमिति शेषः ॥ ६ ॥

अकार्यत्वाच्च नाम्नः ॥ ७ ॥

प्रयाज इति नाम यागे विधीयते इति नेत्यत्र हेतुमाह । अका-र्यत्वादिति ॥ ७ ॥

तुल्या च प्रभुता गुणे ॥ ८ ॥

तुल्येति । अपूर्वकर्मविधाने प्राकृते च कर्मणि गुणविशेषविधाने प्रभुता शक्तिः विधिप्रत्ययस्य तुल्या ॥ ८ ॥

सर्वमेवं प्रधानमिति चेत् ॥ ९ ॥

एवं सति सर्वे ऽपि प्रधानविधयः स्युः आख्यातवाच्यत्वादिति युक्त्या सिद्धान्तमाक्षिपति । सर्वेति ॥ ९ ॥

तथाभूतेन संयोगाद्यथा ऽर्थविधयः स्युः ॥ १० ॥

आक्षेपं परिहरति । तथाभूतेनेति । तथाभूतेन द्वितीयाध्यायस्य-गुणप्रधानलक्षणयुक्तेन यथा ऽर्थविधयः गुणकर्मविधयः ॥ १० ॥

विधित्वं चाविशिष्टं वैकृतैः कर्मणा योगात्तस्मात्सर्वं प्रधानार्थम् ॥ ११ ॥

प्रयाजवाक्यस्य गुणविधित्वे युक्त्यन्तरमाह । विधित्वं चेति । श्रूयमाणप्रयाजादिविधित्वं प्राकृतानां वैकृतैस्सह कर्मणा अर्थवादेन योगात्सम्बन्धाद् अविशिष्टं, न विशिष्यते एकरूप इति यावत् । यथा प्रकृतौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रतिदधातीति, विकृतावपि

आज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेतीति । तस्मादेवंजातीयं सर्वं न प्रधानं किं तु प्रधानार्थम् ॥ ११ ॥

## समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् ॥ १२ ॥

प्रधानार्थत्वे साधकान्तरमप्याह । समत्वादिति । संस्कारैः, सहेति शेषः । तदुत्पत्तेः प्रयाजादिक्रमस्य समत्वात्प्रकृतिविकृत्योः तुल्यत्वात् । प्रकृतौ प्रथमं प्रयाजाः मध्ये प्रधानं ततो ऽनूयाजा इति दृष्टं, विकृतावपि प्रजापतिर्यज्ञमसृजत स आज्यं पुरस्तादसृजत पशुं मध्यतः पृषदाज्यं पश्चात्तस्मादाज्येन प्रयाजा इज्यन्ते पशुना मध्यतः पृषदाज्येनानुयाजा इति । प्रकृतौ यथा प्रधानार्थं पाठः एवमेवाधिकारः । अत्रापि प्रयाजादिपाठः स्यात् ॥ १२ ॥

हिरण्यगर्भ इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वम् । अधि० ३ ।

## हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥

वायव्यपशुविशेषे श्रूयते, हिरण्यगर्भः समवर्तताग्रइति आघारमाघारयतीति । अयं मन्त्रः प्रथमाघाराङ्गमुत द्वितीयस्येति संशये पूर्वपक्षमाह । हिरण्येति । हिरण्यगर्भमन्त्रः पूर्वस्य प्रथमाघारस्य प्रकृतौ प्रजापतिदेवता अत्रापि तद्वाचकहिरण्यगर्भ इति लिङ्गात् ॥ १३ ॥

## प्रकृत्यनुपरोधाच्च ॥ १४ ॥

प्रकृते प्राकृतमन्त्रस्य अनुपरोधात् । अबाधात् । द्वितीयाघारे प्रकृतौ समारभ्योर्ध्वो अध्वर इति मन्त्रस्य बाधः स्यात् । हिरण्येत्यस्य द्वितीआघारे योजने अस्मिन्पक्षे अबाध इति भावः ॥ १४ ॥

## उत्तरस्य वा मन्त्रार्थित्वात् ॥ १५ ॥

सिद्धान्तमाह । उत्तरस्येति । मन्त्रार्थित्वादुत्तराघारे प्रकृतौ मन्त्रस्य क्लृप्तत्वात्तत्रैव मन्त्राकाङ्क्षा न प्रथमइति भावः ॥ १५ ॥

## विध्यतिदेशात्तच्छ्रुतौ विकारः स्याद्गुणानामुपदेश्यत्वात् ॥ १६ ॥

विध्यतिदेशात् आघारविधेः प्रकृतितः अतिदेशात् । तच्छ्रुतौ तदनुवादे गुणानामनुवाक्यस्य ये प्राकृता गुणाः तेषामेव विकारः स्यात् ।

कुतः, गुणानां तद्गुणानामेवोपदेश्यत्वात् । विधेयत्वात् । यथा देवदत्तं शाकेन घृतेन भोजय, विष्णुमित्रं तद्वत्तेनेत्युक्तौ साजात्यात्प्राप्तं घृतमेव बाधते न शाकं, तथा द्वितीयाघारमन्त्रं साजात्याद्बाधत इति भावः ॥ १६ ॥

पूर्वस्मिंश्चामन्त्रदर्शनात् ॥ १७ ॥

तादृशसाजात्यं स्पष्टीकरोति । पूर्वेति । न मन्त्रदर्शनममन्त्रदर्शनं तस्मात् ॥ १७ ॥

आसादननियोजनयोः प्राकृतगुणविधित्वम् । अधि० ३ ।

संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ १८ ॥

सन्ति क्रतुविशेषे परिधौ पशुं नियुञ्जीतेति । इदं प्राकृतात्पशुनियोजनात् कर्मान्तरमुत तत्रैव गुणविधिरिति संशये पूर्वपक्षमाह । संस्कार इति । उदाहृतवाक्यस्य तस्य पशुनियोजनस्य विधायकत्वात् । परिधिसंबन्धेन पशोः संस्कारे सति क्रियान्तरं प्राकृताद्भिन्नमदृष्टार्थत्वादिति भावः ॥ १८ ॥

प्रकृत्यनुपरोधाच्च ॥ १९ ॥

प्रकृतीति । व्याख्यातं पूर्वाधिकरणे ॥ १९ ॥

विधेस्तु तत्र भावात्संदेहे यस्य शब्दस्तदर्थं स्यात् ॥ २० ॥

सिद्धान्तमाह । विधेरिति । विधेः नियोजनविषये प्राकृतप्रत्यक्षविध्योः तत्र क्रतुविशेषे भावात्संदेहे यस्य यदुद्देश्यकः, षष्ठ्यर्थ उद्देश्यत्वं, शब्दः परिधिरूपः सः तदर्थे नियोजनार्थम् । न च परिधेरपि प्रकृतौ कार्यस्य क्लृप्तत्वात्कथं नियोजनार्थत्वमिति शङ्क्यम् । कपाले क्लृप्तोपकारे तुषोपवपनार्थत्ववत्प्राकृतवैकृतोभयार्थत्वसंभवात् । तस्मान्नापूर्वं कर्म ॥ २० ॥

संस्कारसामर्थ्याद् गुणसंयोगाच्च ॥ २१ ॥

ननु नियोजनार्थत्वे नियोजनस्य पशुगतिप्रतिबन्धकत्वं दृष्टं फलमिदं परिधौ कथं संभवतीत्यत आह । संस्कारेति । गुणयोगात् ।

परिधौ स्थूलत्वरूपगुणयोगात् । संस्कारस्य गमनप्रतिबन्धरूपकार्यस्य सामर्थ्यात् । उत्पादकशक्तिमत्त्वात् ॥ २१ ॥

## विप्रतिषेधात् क्रिया प्रकरणे स्यात् ॥ २२ ॥

ननु सौत्रामण्यां ब्राह्मणस्य मस्तके हवींष्यासादयतीति यथा अदृष्टार्थम् एवमेव किं न स्यादत आह । विप्रतिषेधादिति । प्रकरणे सौत्रामणीप्रकरणे विप्रतिषेधात् । दृष्टासंभवात् । क्रिया अपूर्वं कर्म स्यात् ॥ २२ ॥

अग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानम् । अधि० ४ ।

## षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥

अग्निचयने श्रूयते, षड्भिर्दीक्षयतीति । तत्र प्रकृतितः आकूत्यै प्रयुजइति पञ्चमन्त्राः प्राप्ताः । वैकृता आकूतिमग्निमिति षण्मन्त्रा विहिताः । तथा च वैकृतेन प्राकृतबाध उत समुच्चय इति संशये पूर्वपक्षमाह । षड्भिरिति । तासां प्राकृतदीक्षाहुतीनां मन्त्रविकारः प्राकृतमन्त्रादन्यमन्त्रः स्यात् । षड्भिर्दीक्षयतीतिश्रुतिसंयोगात् ॥ २३ ॥

## अभ्यासात्तु प्रधानस्य ॥ २४ ॥

सिद्धान्तमाह । अभ्यासादिति । प्रधानस्य प्राकृतदीक्षाहुतेः अभ्यासात् । आवृत्त्या द्वयोरुपपत्तेरिति शेषः । अबाधेनोपपत्तौ बाधो नेति भावः ॥ २४ ॥

## आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥

अयं पक्षो न संभवतीति पूर्वपक्ष्याह । आवृत्त्येति । आवृत्त्या क्रियमाणे ऽपीति शेषः । मन्त्रैः वैकृतमन्त्रैरेव युक्तं कर्म मन्त्रकर्म स्यात् । चयनप्रकरणे मन्त्रवद्विधेरिति हेतुः पूरणीयः ॥ २५ ॥

## अपि वा प्रतिमन्त्रत्वात्प्राकृतानामहानिः स्यादन्यायश्च कृते ऽभ्यासः ॥ २६ ॥

सिद्धान्तमाह । अपि वेति । प्रतिमन्त्रत्वात् । यावत्य आहुतयः तासां प्रत्येकमेकैकमन्त्रापेक्षत्वात् । प्राकृतानां पञ्चानां द्विवाराभ्यासे

प्राकृतमन्त्राणामहानिः अबाधः अबाधेन संभवे बाधो ऽन्याय्यः अतः अभ्यासः स्यात् ॥ २६ ॥

**पौर्वापर्यं वा ऽभ्यासेनोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥**

हेत्वन्तरमाह । पौर्वेति । षट् पूर्वाञ्जुहोति षडुत्तरानिति श्रुतम् । इदमभ्यासेनैवोपपद्यते पूर्वान्प्राकृतान् उत्तरान् नैमित्तिकान् । आगन्तुकस्य नैमित्तिकत्वात् प्राकृते पूर्वत्वमुपपन्नमिति भावः ॥ २७ ॥

**तत्पृथक्त्वं च दर्शयति ॥ २८ ॥**

उभयीर्जुहोत्याग्निकीराध्वरीश्चेति श्रुतम् । उभयीरित्यस्य विवरणमाग्निकीः अग्निसंबन्धिनीः आध्वरीः प्राकृताः ॥ २८ ॥

**न वा विशेषाद्व्यपदेशः स्यात् ॥ २९ ॥**

इतो ऽपि न बाध इत्याह । न वेति । पूर्ववाक्यसमीपएव पूर्वमध्वरस्याग्नेरिति श्रुतो ऽस्ति । तत्र विशेषान्नैमित्तिकाद्व्यपदेशः । पूर्वभावः विहितः । अयं समुच्चयमन्तरा न कल्पते अतो न बाधः ॥ २९ ॥

पुनराधाने ऽग्न्याधानदक्षिणानां निवृत्तिः । अधि· ५ ।

**अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥**

यो ऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमाधत्तइत्यग्न्याधेयविकृतिराम्नाता । तत्र वैकृतदक्षिणा पुनर्निष्कृतो रथो दक्षिणेत्यादिः श्रुता । आधानान्मिथुनौ गावौ ददातीत्यादि प्राप्तम् । अत्र समुच्चयो बाधो वेति संशये पूर्वपक्षमाह । अग्न्याधेयेति । नैमित्तिके पुनराधेये गुणस्य दक्षिणायाः पुनर्निष्कृतो रथो दक्षिणेत्यनेन विकारे प्राप्ते ऽपि अग्न्याधेयस्य दक्षिणादानमधिकं समुच्चितं स्यात् । वाक्यसंयोगात् । तत्रापि उभयीर्ददात्याग्न्याधेयिकीः पुनराधेयिकीश्चेति वाक्येन संयोगात् ॥ ३० ॥

**शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥**

साधकान्तरमाह । शिष्टत्वादिति । यथास्थानं यथाक्रमम् इतरासां प्राकृतदक्षिणानां शिष्टत्वात् । अनुशासनात् । अनुशासनं चैवं श्रूयते, अग्न्याधेयिकीर्दत्वा पुनराधेयिकीर्ददातीति ॥ ३१ ॥

## विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥

सिद्धान्तमाह । विकार इति । हि यस्मात् कारणात् काम्यानि पुनराधेयानि । प्रयोगबहुत्वाभिप्रायं बहुवचनम् । अतो ऽप्रकरणे ऽप्रकृतौ, विहितदक्षिणाया इति शेषः । विकारः बाधः प्राकृतस्य ॥ ३२ ॥

## शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥

पूर्वपक्षिणा दर्शितवाक्यसंगतिमाह । शङ्कतइति । पूर्वोक्तवाक्ये उभयत्वं श्रूयते । तत्स्वार्थपरं नेति पूरणीयम् । कुतः, हि यस्मात् शङ्कते निवृत्तेः प्राकृतदक्षिणाविषये शङ्कते । पूर्ववाक्यसमीपएव यद्विकृतौ ददाति दक्षिणा उभयीरपि दक्षिणाः तेन प्रत्ता भवन्तीति श्रूयते । अत्र प्रत्ता भवन्तीति शब्देन प्राकृतदक्षिणालोपाद्वङ्गत्वशङ्कायाः समाधानं कृतम् । अतः पूर्ववाक्यं जर्तिलयवाग्वा जुहुयादितिवत् पूर्वपक्षपरमिति भावः ॥ ३३ ॥

वासोवत्साभ्यामन्वाहार्यस्य निवृत्तिः । अधि० ६ ।

## वासोवत्सं च सामान्यात् ॥ ३४ ॥

आग्रयणे प्रथमजो वत्सो दक्षिणेत्यत्राबाधायान्वाहार्यस्यापि समुच्चय इति पूर्वपक्षे सिद्धान्तमाह । वास इति । यथा पुनराधेयदक्षिणा प्राकृतदक्षिणां बाधतएवं वासोवत्सं च सामान्याद् एककार्यकारित्वात् ॥ ३४ ॥

वासोवत्सयोरन्वाहार्यधर्मानुष्ठानम् । अधि० ७ ।

## अर्थापत्तेस्तद्धर्मः स्यान्निमित्ताख्याभिसंयोगात् ॥ ३५ ॥

तत्रैवान्वाहार्यधर्मा मन्त्रादयः न सन्ति । प्रकृतावन्वाहार्योद्देशेन प्रवृत्तत्वादिति पूर्वपक्षे सिद्धान्तमाह । अर्थेति । अर्थस्य प्राकृतमन्त्राद्युद्देश्यदक्षिणाया आपत्तेः स्थाने पतितत्वात् । तद्धर्मः अन्वाहार्यधर्मः वासोवत्से स्यात् । वासो दक्षिणेत्यस्य मन्त्रनिमित्तस्य दक्षिणाख्यया दक्षिणानाम्ना अभिसंयोगात् । संयुक्तत्वात् ॥ ३५ ॥

वत्से पाकाभावः । अधि० ८ ।

## दाने पाको ऽर्थलक्षणः ॥ ३६ ॥

तत्रैव वत्से प्राकृतपाकप्राप्तौ सिद्धान्तमाह । दानइति । अर्थः

ग्रीतः तस्य वत्सशब्दस्य लक्षणः लक्षकः पाको भवेदतः दाने दानसाधनत्वं निवर्ततइति शेषः । वत्से पाके सति दक्षिणासाधनं न वत्सः तस्य नष्टत्वात् । किं तु मांसं, वत्सपदस्य लक्षणापत्तिरिति भावः ॥ ३६ ॥

वाससि पाकाभावः । अधि० । ९ ।

## पाकस्य चान्नकारित्वात् ३७ ॥

वासोनाशाभावात्तत्र पाको ऽस्त्विति पूर्वपक्षे सिद्धान्तमाह । पाकस्येति । अन्नकारित्वं हि पाकस्य । वाससि तदभावान्निवृत्तिरिति भावः ॥ ३७ ॥

वासोवत्सयोरभिघारणाभावः । अधि० १० ।

## तथा ऽभिघारणस्य ॥ ३८ ॥

यथा पाकस्य तथा ऽभिघारस्यापि निवृत्तिः । रुचिसंपादकत्वात्तस्येति भावः ॥ ३८ ॥

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वम् । अधि० ११ ।

## द्रव्यविधिसंनिधौ संख्या तेषां गुणत्वात् स्यात् ॥ ३९ ॥

ज्योतिष्टोमे गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति । अत्र द्वादशशतसंख्या सर्वेषु प्रत्येकमुत एकस्मिन् कस्मिंश्चिद् उत सन्निहितउत गवादिदशाविति संशये प्रथमं पक्षमुत्थापयति । द्रव्येति । संख्यापदोत्तरं सर्वैः संबध्यतइति शेषः । तेषां, षष्ठ्यर्थो निरूपितत्वं, गवादिमाषान्तनिरूपितगुणत्वात् संख्यायाः । यद्वा तेषां संख्या स्यादित्यन्वयः । तावद्द्रव्यका संख्येति फलितं, प्रतिप्रधानमङ्गावृत्तिरित्यावृत्त्या संख्यावाचकशब्दस्य प्रत्येकमन्वय इति भावः ॥ ३९ ॥

## समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥

इमं पक्षं दूषयन् पक्षान्तरमाह । समत्वादिति । गुणानां माषान्तानां संख्यायाश्च समत्वात् । अयं भावः । न गवादिभिः संख्या संबध्यते किं तु दक्षिणया गवादीनामपि तत्रैव संबन्धः । अतः समत्वमिति

न पूर्वोक्तो गुणत्वरूपो हेतुः संगच्छते । यस्मिन् कस्मिंश्चित्संबन्धे ऽपि तद्द्वारा दक्षिणायां योग उपपन्नः तस्मादिच्छया एकस्मिन्संख्यान्वयः । ननु दक्षिणान्विता संख्येति कथं निर्णयः । तत्राह । श्रुतिसंयोगात् । श्रुतेः द्वादशशतशब्दस्य संयोगात् । दक्षिणाशब्दसान्निध्यात् ॥ ४० ॥

**यस्य वा सन्निधाने स्याद्वाक्यतो ऽह्यभिसंबन्धः ॥ ४१ ॥**

इच्छातो वरं सान्निध्यस्य नियामकत्वमित्यभिप्रायेणापरं पक्षमाह । यस्य वेति । यस्य वा सन्निधाने संख्याशब्दः स्यात्तेन ह्यभिसंबन्धः । एवं सति वाक्यतो ऽभिसंबन्धः गृहीतो भवति ॥ ४१ ॥

**असंयुक्तास्तु तुल्यवदितराभिर्विधीयन्ते तस्मात्सर्वाधिकारः स्यात् ॥ ४२ ॥**

सान्निध्यस्य नियामकत्वं दूषयन् तुरीयं पक्षमाह । असंयुक्ता इति । केवलैर्माषैरसंयुक्ताः संख्यायतइतराभिर्द्रव्यश्रुतिभिस्तुल्यवत्तया विधीयन्ते माषाः । अयं भावः । गौरित्यारभ्य माषान्तद्रव्यावाचकपदेषु चकारयोगो दृश्यते । तेन न कस्यापि स्वातन्त्र्यं किं तु इतरसहितस्यैव तस्मात्सर्वाधिकारः स्याद्गवादिमाषान्तराशौ संख्यान्वयः स्यादिति भावः ॥ ४२ ॥

**असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्याकोपात्क्रतोः ॥ ४३ ॥**

सिद्धान्तमाह । असंयोगादिति । राशेः विधिश्रुतौ विधिवाक्ये ऽसंयोगाद् न राशौ अन्वयः किं त्वेकजातीयके द्रव्ये यस्मिन् कस्मिंश्चिद् एकस्मिन् एकजाताधिकारः स्यादित्यस्यायमेवार्थः । यद्यनेकद्रव्येषु संख्यान्वयार्थमुद्योगः स्यात् तदा तस्येत्यत्र एकत्वश्रुतिकोपात् तच्छब्दः द्रव्यमबोधयन् क्रतुमेव बोधयेत् । तस्मादेकजातीयएकस्मिन्संख्यान्वयः ॥ ४३ ॥

**शब्दार्थश्चापि लोकवत् ॥ ४४ ॥**

ननु तस्य द्वादशशतमित्यस्मात् तद्वृत्तिद्वादशशतमिति बोधः ।

तत्पदेन श्रुत्यनुग्रहायैक एव पदार्थो गृह्यताम् । गवादिष्वेकस्मिन् तदन्यस्मिंश्च वर्तमानद्वादशशतसंख्याग्रहणे बाधकाभाव इत्याशङ्क्य एकजातीयवृत्तिसंख्याया एव ग्रहणे लोकदृष्टान्तमाह । शब्दार्थ इति । यः वेदे शब्दार्थः स लोकवद्भवति । लोके शतं गावः इत्यत्राश्वादिवृत्तित्वसहितगोवृत्तिसंख्या यथा न प्रतीयते तथा प्रकृते ऽप्येकजातीयवृत्त्यैवेति भावः ॥ ४४ ॥

तस्य द्वादशशतमित्यनेन पशुगतसंख्याभिधानम् । अधि॰ १२ ।

## सा पशूनामुत्पत्तितो विभागात् ॥ ४५ ॥

एवमेकजातीयसंख्यासिद्धावपि व्रीह्यादिवृत्त्येति पूर्वपक्षे सिद्धान्तमाह । सेति । सा संख्या पशूनां पशुवृत्तिः न व्रीह्यादिवृत्तिः । उत्पत्तितः लोकतः विभागात् । संख्यायाः गवादिष्वेव साक्षात्परिच्छेदग्रहात् । अयं भावः । लोके पञ्चभिरश्वैः क्रीत इतिवत्पञ्चभिः माषैः क्रीत इति व्यवहाराभावादिति ॥ ४५ ॥

पशुषु गवां नियमः । अधि॰ १३ ।

## अनियमो ऽविशेषात् ॥ ४६ ॥

पशुष्वप्यनियमो नियमो वेति संशये पूर्वपक्षमाह । अनियम इति । स्पष्टो ऽर्थः ॥ ४६ ॥

## भागित्वाद्वा गवां स्यात् ॥ ४७ ॥

सिद्धान्तमाह । भागित्वादिति । भागित्वाद् बृहदुपकारकत्वात् । गवां नियमः स्यात् ॥ ४७ ॥

## प्रत्ययात् ॥ ४८ ॥

साधकान्तरमाह । प्रेति । संख्यान्वयार्थं विशेष्याकाङ्क्षायां प्रकृतशास्त्रेण प्रथमं गोः प्रत्ययात् । असति बाधके तत्परित्यागो ऽनुचित इति भावः ॥ ४८ ॥

## लिङ्गदर्शनाच्च ॥ ४९ ॥

लिङ्गेति । तैत्तिरीयशाखायां सप्तमाष्टके प्रथमप्रपाठके सहस्रदक्षिणार्थवादे, ते संवत्सरमेकां गामसृजन्तेति सा त्रीणि च शतान्यसृजत त्रयस्त्रिंशतं चेति भूयो भूयो गोमहिमैव श्रूयते । इदं लिङ्गं गोनियमे ॥ ४९ ॥

विभज्य गोदक्षिणाया दानम् । अधि॰ १४ ।

तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ५० ॥

गोद्वादशशतं दक्षिणेति क्लृप्ते तादृशगोद्वादशशतं सर्वेषां मध्ये संस्थाप्य समुदायोद्देशेन दातव्यं ततः ऋत्विजः स्वयं विभज्य गृह्णीयुरिति पूर्वपक्षे सिद्धान्तमाह । तत्रेति । तत्र क्रतौ विभागेन दानम् । एतावदस्मै अमुष्माएतावदिति विभज्य यजमानेन दातव्यं प्रदानानां संप्रदानानां प्रतिग्रहीतृणामिति यावत् । पृथक्त्वाद् भिन्नत्वात् ॥ ५० ॥

परिक्रयाच्च लोकवत् ॥ ५१ ॥

लोके यथा काष्ठादिवाहानां स्वामी विभज्य ददाति तथा ऋत्विग्दानस्य परिक्रयरूपत्वाच्च ॥ ५१ ॥

विभागं चापि दर्शयति ॥ ५२ ॥

लिङ्गमप्याह । विभागमिति । श्रुतिरिति शेषः । तुभ्यं वो विश्ववेदा विभजत्विति मन्त्रलिङ्गम् । अग्नीधे ददाति ब्रह्मणे ददातीति संप्रदानस्य पृथक्कृत्वा ऽर्थकथनमपरं लिङ्गम् ॥ ५२ ॥

समाख्यानुसारेण दक्षिणाविभागः । अधि॰ १५ ।

समं स्यादश्रुतित्वात् ॥ ५३ ॥

एवं विभागे सिद्धे किं समो विभाग उत विषम इति संशये पूर्वपक्षमाह । सममिति । स्पष्टम् ॥ ५३ ॥

अपि वा कर्मवैषम्यात् ॥ ५४ ॥

वैषम्यसाधनपूर्वकं पक्षान्तरमाह । अपि वेति । कर्मानुरूपा भृतिर्लोकवद् इति भावः ॥ ५४ ॥

अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथा ऽभ्युदये ॥ ५५ ॥

सिद्धान्तमाह । अतुल्या इति । परिक्रये दक्षिणादाने विषमाख्या विधिश्रुतौ परिक्रयात् । समाख्यया ऋत्विक्षु दक्षिणांशभागित्ववैषम्यमनूद्य दीक्षाविधिश्रुतौ परिक्रयात्तन्निर्णयात् । एवं विशेषदर्शनात्

कर्मणि वैषम्यं पूर्वोक्तं न । ईदृशश्रुतिः कुत्रास्तीत्यत्राह । अभ्युदये सत्ते । तथा उत्कर्षनिर्णायकशब्दस्य दर्शनात् । तादृशं वाक्यं चैवं श्रूयते । आर्धिनो दीक्षयति तृतीयिनो दीक्षयति पादिनो दीक्षयतीति । अस्य विवरणं कल्पसूत्रकारैः कृतं, यावदध्वर्यवे ददाति तस्यार्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थमुन्नेत्रे एतेनोत्तरेषां दानमुक्तमिति ॥ ५५ ॥

भूनामैकाहे तस्य धेनुरित्यनेन कृत्स्नक्रतुदक्षिणाबाधः । १६ ।

## तस्य धेनुरिति गवां प्रकृतौ विभक्तं चोदितत्वात्तत्सामान्यात्तद्विकारः स्याद्यथेष्टिर्गुणशब्देन ॥ ५६ ॥

ज्योतिष्टोमविकारः एकाहः क्रतुविशेषो ऽस्ति । तत्र धेनुर्दक्षिणेति श्रुतम् । अत्र धेनुशब्दः किं प्राकृतदक्षिणामध्ये गोमात्रबाधकः उत पूर्ववाक्ये विहितयावद्दक्षिणाबाधकः । एतन्निर्णयाय, गौश्चाश्वश्चाश्वतरश्चेत्यादिना माषान्तान् प्रथमैकवचनान्तांश्चकारसहितान्पठित्वा तस्य द्वादशशतं दक्षिणेति श्रुतम्, ज्योतिष्टोमे मिलित्वा दक्षिणा उत प्रत्येकमिति संशयः । एतदर्थमुक्तवाक्ये गवादीनुद्दिश्य दक्षिणेति विधीयते उत दक्षिणामुद्दिश्य गवादिकं विधीयतइति संशयेषु सत्सु पूर्वपक्षमाह । तस्य धेनुरितीति । तस्य धेनुरित्यनेन प्राकृतः गौरेव विक्रियते । कुतः, प्रकृतौ ज्योतिष्टोमे दक्षिणावाक्ये विभक्तं विभज्य प्रत्येकं दक्षिणात्वेन चोदितत्वात् । विहितत्वात् । ननु धेनुरिति वाक्यं पक्षीकृत्य प्राकृतगोबाधकत्वं साध्यते । तत्र प्रकृतौ विभक्तं चोदितत्वादिति हेतुः इयं गौरश्वत्वादितिवत् प्रयुक्तः सूत्रकारेण न सदनुमानमित्याशङ्कायामुच्यते सूत्रकाराभिप्रायः । धेनुरितिवाक्यविहितं वस्तु, प्रकृतेन गौर्दक्षिणेति वाक्येन जनितज्ञानविषयप्रकृतिकं, प्राकृतवाक्यस्य सजातीयवाक्यजन्यज्ञानविषयत्वात् । यो यादृशवाक्यसजातीयवाक्यजन्यज्ञानविषयः स तादृशवाक्यजनितज्ञानविषयप्रकृतिकः यथा सौर्ययागः इत्यनुमानमभिप्रेतम् । तस्य धेनुरित्यनेन पक्षः सूचितः । गवामित्यनेनोक्तं साध्यं सूचितम् । तत्सामान्यादित्यनेन हेतुः सूचितः । तद् धेनुरिति वाक्यं तेन सामान्यात् साजात्याद् यथेष्टिरित्यनेन दृष्टान्तः [illegible]

निर्वापशब्देन निर्वापशब्दघटितोत्पत्तिवाक्येन जनितज्ञानविषयत्वेनेति यावत् । अयं भावः । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र कथंभावाकाङ्क्षापरिपूरकशब्दाकाङ्क्षायां यथा द्वारमित्यत्र प्रकरणादिना परिच्छाविषयीभूतपिधानशब्दः कल्प्यते तथा वाक्यस्य निर्वपतिशब्दघटितत्वेन क्लृप्तनिर्वापकः दर्शपूर्णमासप्रयोगउपस्थितः तद्वदिति शब्दः कल्प्यते । तथा च तत्प्रकृतिकत्वं सिद्धम् । एवमेवात्र धेनुर्दक्षिणेत्यनेन गोप्रकृतिकत्वमश्वप्रकृतिकत्वं वा ऽऽश्रयणीयमिति संदेहे गोप्रकृतिकत्वाश्रयणे लिङ्गं धेनुरिति । तथा निर्वपतिशब्देन तदर्थघटितप्रयोगोपस्थितिः तथा धेनुशब्दस्य गोत्वसमानाधिकरणप्रकृत्यभूतत्वं शक्यतावच्छेदकमतः तद्घटितार्थबोधकतया तेन शब्देन तद्घटितार्थको गोरेवोपस्थाप्यतइति तत्रैव द्वादशशतसंख्याबाधं कृत्वैकत्वं निविशते सकृत्प्रसूतत्वं चेति प्रकृतौ पूर्वोक्तदक्षिणावाक्येन यदि गवादिसमूहो दक्षिणात्वेन विधीयते तदा गौर्दक्षिणेति वाक्यमेवाप्रसिद्धमतः तद्घटितसाध्याप्रसिद्धिरिति तद्वारणाय तद्वाक्यप्रसिद्धिसंपादको हेतुः प्रकृतौ विभक्तं चोदितत्वादिति । यतः गवादीनुद्दिश्य दक्षिणा विधीयते अतः गवादयः प्रधानं दक्षिणा ऽङ्गं प्रतिप्रधानमङ्गावृत्तिरिति न्यायेन गौर्दक्षिणा अश्वो दक्षिणेति वाक्यानि तथा च न साध्याप्रसिद्धिरिति भावः ॥ ५६ ॥

सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तया समवायाद्धि कर्मभिः ॥ ५७ ॥

सिद्धान्तमाह । सर्वस्येति । सर्वस्य गवादिमाषान्तस्य विकारः । तथा हि । यतः प्रकृतौ दक्षिणामुद्दिश्य गवादयो विधीयन्ते । कुतो ऽवगतमिति चेच्छृणु । यदि दक्षिणा विधीयते तदा द्वादशशतसंख्याया दक्षिणायामन्वयः उत गवि । आद्ये ऽपि गवादिभिः सहान्वयवेलायामेव संख्यान्वयः उत पश्चात् । आद्ये दक्षिणाया विरुद्धत्रिकद्वयापत्तिः । द्वितीये वाक्यभेदः । यदि च संख्याविशिष्टदक्षिणाया अन्वयः तदा गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादिति न्यायविरोधः । किं च संख्याविशिष्टदक्षिणायाः

गवादिमात्रान्वेतु संख्यान्वयापत्तेः । इष्टापत्तौ भागित्वाद्गवामितिन्यायविरोधः । यदि च द्वादशशतसंख्यायाः गव्यन्वयं कृत्वा पश्चात्तत्र दक्षिणान्वये विशिष्टोद्देश्यत्वप्रयुक्तो वाक्यभेदो दुर्वारः । अपि च दक्षिणापदोत्तरं बहुवचनापत्तिश्च । गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीति नियमात् । अतः दक्षिणामुद्दिश्य गवादयो विधीयन्ते । इत्थं च द्वादशशतविशिष्टगौः तदितरे च परस्परसहिता दक्षिणया संबध्यन्तइति न वाक्यभेदः । न वा विरुद्धत्रिकादिः । एवं च दक्षिणार्थस्य दक्षिणाकार्यस्य ऋत्विगानतेः एकत्वं क्लृप्तं प्रकृतौ तथा गवादिगुणानां च दक्षिणारूपैककार्यत्वमपि । तस्माद्विकृतौ अर्थे धेनुर्दक्षिणेति विहिते वैकृते धेनुरूपार्थे प्रकृतौ दक्षिणासाधनत्वेन क्लृप्ता यावन्तः पदार्थाः तावतां मिलित्वा यत्कार्यं तत्कारित्वं हि प्राप्यते यतः अतः तावत्कारित्वं श्रुतिभूतं श्रुतितात्पर्यविषयः । तथा दक्षिणया समवायात् संबन्धात् । धेनुर्दक्षिणेत्यत्रापि पूर्ववदुद्देशेन दक्षिणानुवादेन विधानात्तस्यास्त्वर्त्विक्षु संबन्धः क्लृप्त इति भावः । दक्षिणाया ऋत्विक्संबन्धश्च स्वजन्योत्साहाश्रयत्वं दक्षिणाप्रतियोगिकनिष्ठसंबन्धानुयोगिका ऋत्विजः कर्मभिः क्रतुसंबन्धकर्मभिः संबध्यन्ते । एतादृशप्रणाड्या धेनोः क्रतुसंयोगात् संबन्धान्निखिलदक्षिणाबाधः । प्रकृतौ गवादिसमुदायरूपस्याभिन्नदक्षिणाजन्योत्साहाश्रयत्विक्साध्यत्वसंबन्धेन समुदायवैशिष्ट्यं क्रतोः क्लृप्तम् । प्रकृते ऽपि धेनोरुक्तसंबन्धेन क्रतुसंयोगात् सर्वस्य बाधइति विशिष्टसूत्रस्य निर्गलितो भावः । एतादृशसंबन्धबोधकमेवैकत्वमित्याशय्य कर्मभिरित्युक्तम् ॥ ५७ ॥

## चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् ॥ ५८ ॥

ननु यथेष्टिगुणशब्देनेत्युक्तं तत्र किमुत्तरमत आह । चोदनानामिति । चोदनानां विकृतीष्टिचोदनानां वैकृतविधीनामिति यावत् । अनाश्रयात् । इतिकर्तव्यताकाङ्क्षापूरकशब्दानाश्रयात् । शब्दाभावादिति यावत् । लिङ्गेन निर्वपतिचोदनाचोदितत्वादिलिङ्गेन नियमः । तत्तत्प्रकृतिकत्वनियमः स्यात् । धेनुर्दक्षिणेत्यत्र प्राकृतदक्षिणामुद्दिश्य धेन्वाः प्रत्यक्षविधानाच्च लिङ्गेन प्रकृतिभावनिर्णय इति भावः ॥ ५८ ॥

एकां गामित्यनेन प्राकृतसंख्याया बाधः । अधि० १७ ।

## एका पञ्चेति धेनुवत् ॥ ५९ ॥

सोमापहरणनिमित्ते कर्मणि एकां गां दक्षिणां दद्यात्सेभ्य एवेति श्रुतम् । कचित्पञ्चेति च । अत्र सर्वनिवर्तिकोत गोवृत्तिप्राकृतसंख्यानिवर्त्तिकेति संशये पूर्वपक्षमाह । एकेति । धेनुवत् । यथा धेनुः सर्वनिवर्तिका तथा ॥ ५९ ॥

साद्यस्के त्रिवत्सेन सर्वेषां क्रयार्थानां बाधः । अधि० १८ ।

## त्रिवत्सश्च ॥ ६० ॥

एवं पूर्वपक्षे उत्तरमनुक्त्वा अधिकरणान्तरमारभते । त्रिवत्स इति । साद्यस्के त्रिवत्सः साण्डः सोमक्रयण इति । त्रिवत्सः त्रिवत्सर इत्यर्थः । प्रकृतितः अजादिदशद्रव्याणि प्राप्तानि तत्र दशमध्ये श्रूयमाणस्य ऋषभस्यैव बाधकः उत दशद्रव्याणामिति संशये पूर्वपक्षसिद्धान्तावतिदिशन्नाह । त्रिवत्सश्चेति । धेनुवदिति पूर्वसूत्रादनुवर्तते । पूर्वपक्षसिद्धान्तौ धेन्वधिकरणवदित्यर्थः । पृथगधिकरणबीजमाकराज्ज्ञेयम् ॥ ६० ॥

## तथा लिङ्गदर्शनम् ॥ ६१ ॥

लिङ्गमपि साधकमाह । तथेति । उक्तादन्यसाद्यस्के स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषां स्पर्द्धेति । अस्यार्थः । यतः साद्यस्के स्त्री गौः निखिलसोमक्रयसाधनं बाधित्वा सर्वस्थाने स्थिता अतः स्पर्धा कलहो निवृत्तः । यदि वृषभमात्रस्य बाधिका भवेत्तदा शेषाः स्वसंघस्थितमृषभं बाधितवत्यै क्रुध्येयुरेवेति स्पर्धा निवृत्तेत्यसङ्गतम् । इदं लिङ्गं सर्वबाधे ॥ ६१ ॥

## एके तु श्रुतिभूतत्वात्संख्याया गवां लिङ्गविशेषेण ॥ ६२ ॥

पूर्वस्थितपूर्वपक्षोत्तरमाह । एकेति । एकां गां पञ्च गा दक्षिणेत्यनेन प्राकृतसंख्यायुक्ता गावः निवर्तन्ते । नाश्वादयः । एकेत्यस्य द्वादशशतसंख्याविशिष्टा या गावः तत्स्थाने एका गौरिति हि श्रुतिभूतं श्रुतितात्पर्यम् । न हि एकामित्यस्य दक्षिणया ऽन्वयः संभवति । एकदक्षिणायाः प्रकृतौ क्लृप्तत्वेनातिदेशादेव प्राप्तौ वाक्यवैयर्थ्यात् । अतः गवां गोवृत्तिसंख्याया एकामिति स्त्रीलिङ्गेन च संख्याया गोवृत्तेर्निवृत्तिरिति भावः ॥ ६२ ॥

अश्वमेधे प्राकाशाविव्यनेनाध्वर्युभागबाधः । अधि॰ १९ ।

## प्राकाशौ च तथेति चेत् ॥ ६३ ॥

क्वचिच्छ्रूयते, प्राकाशावध्वर्यवे ददातीति । अत्र प्राकाशौ निखिलदक्षिणानिवर्तकौ धेनुवदिति पूर्वपक्षमाह । प्राकाशाविति । अयं भावः। अध्वर्युसंप्रदानकत्वविशिष्टदानमुद्दिश्य प्राकाशकर्मकत्वं विधीयते। अत्रोद्देश्यविशेषणसंप्रदानविवक्षणे वाक्यभेदभिया अविवक्षितम् । तथा च प्राकृतदानमात्रमुद्दिश्य प्राकाशविधानान्निखिलबाध इति ॥ ६३ ॥

## अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद्गुणे दन्ताविकारः स्यात् ॥ ६४ ॥

सिद्धान्तमाह । अपि त्विति । अवयवार्थत्वात् ऋत्विजां मध्ये यः अवयव एकदेशः अध्वर्युः तदर्थत्वात् । तदर्थत्वेन श्रूयमाणत्वात् । प्रकृतयागस्य विभक्तप्रकृतित्वात् । विभक्ता विभागवती इदमध्वर्योरितिनिर्देशवती प्रकृतिः ज्योतिष्टोमो यस्य तस्मात् । प्रकृतौ गवादिरूपगुणे इदमध्वर्यवइति इदन्ता तद्विकारः इमौ प्राकाशावध्वर्यवइति विकारः स्यात् । अयं भावः। अध्वर्युपदवैयर्थ्यभिया तत्संप्रदानकप्राकाशद्वयकर्मकदानं विधीयते ऽपूर्वं, तेन वाक्यभेदः । तेनाध्वर्युदक्षिणामात्रबाध इति ॥ ६४ ॥

उपहव्ये अश्वेन कृत्स्नक्रतुदक्षिणाबाधः । अधि॰ । २० ।

## धेनुवच्चाश्वदक्षिणा स ब्रह्मणइति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥

क्वचिदश्वः श्यावो रुक्मललाटो दक्षिणा स ब्रह्मणे परिहरतीति । अत्र प्राकाशवद्ब्रह्मभागमात्रबाधक इति पूर्वपक्षे सिद्धान्तमाह । धेनुवदिति । ननु स ब्रह्मणे इत्यस्य का गतिरत आह । पुरुषेति । पुरुषापनयः ऋत्विगन्तरसंबन्धापनयो, यथा शतकृष्णलचरौ हिरण्यस्य ब्रह्मैकसंप्रदानत्वम् ॥ ६५ ॥

## एके तु कर्तृसंयोगात्स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६६ ॥

पूर्वपक्षमुत्थापयति । एके इति । एके दक्षिणैकदेशा निवर्तन्ते ।

कर्तृसंयोगात् । कर्तुः कर्मकर्तुः ब्रह्मणः संयोगात् । स्ववत् । स्वजमुन्नाथे इतिवत् । शेषं प्राग्वत् ॥ ६६ ॥

## अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात् ॥ ६७ ॥

सिद्धान्तमाह । अपि वेति । तदधिकारात् । दक्षिणाधिकारात् । दक्षिणया ऽन्वितत्वादिति यावत् । विकारः सर्वविकारः हिरण्यवत् । स्ववाक्यं ह्येकं तत्र वाक्यभेदभिया अपूर्वदानविधिः । अत्र वाक्यद्वयं श्रूयते । एकेन केवलदक्षिणाविधिः एकेन पुरुषापनय इति वैषम्यमिति भावः ॥ ६७ ॥

ऋतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणाबाधः । अधि० २१ ।

## तथा च सोमचमसः ॥ ६८ ॥

ऋतपेये श्रूयते, उदुम्बरः सोमचमसो दक्षिणा स ब्रह्मणे देय इति । तत्र पूर्ववत्संशये पूर्वपक्षमाह । तथेति । तथा प्राकाशवत् ॥ ६८ ॥

## सर्वविकारो वा क्रत्वर्थे पशूनां प्रतिषेधात् ॥ ६९ ॥

सिद्धान्तमाह । सर्वेति । सर्वविकारः सर्वबाधकः क्रत्वर्थे दाने पशूनां प्रतिषेधात् । प्रतिषेधश्चैवं श्रूयते, ऋतं वै सोमो ऽनृतं पशवो यत्पशून्दद्यात् सो ऽनृतं कुर्यादिति । अनेन प्राकृतपशूननूद्य निषेधं कृत्वा चमसविधानात्सर्वबाध इति भावः ॥ ६९ ॥

## ब्रह्मदाने ऽविशिष्टमिति चेत् ॥ ७० ॥

पूर्वपक्षमुत्थापयति । ब्रह्मेति । ब्रह्मणः ब्रह्मभागे अविशिष्टं निषेधोपपत्तिस्तुल्या इति ॥ ७० ॥

## उत्सर्गस्य क्रत्वर्थत्वात्प्रतिषिद्धस्य कर्मत्वाद् न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥

सिद्धान्तमाह । उत्सर्गेति । उत्सर्गस्य दानस्य क्रत्वर्थत्वाद् ऋत्विगानतिद्वारा क्रत्वर्थत्वाज् ज्योतिष्टोमे ऋत्विगानतिद्वारा क्रतुसंबन्धिदक्षिणायां गवादिसमुदायस्यान्वयादेकैव दक्षिणा प्रकृते ऽपि दक्षिणयैव चमसान्वयान्निखिलबाध इति भावः । प्रतिषिद्धस्य निषिद्धस्य पशुसंघस्य

प्रकृतौ दानकर्मत्वात् क्रतुसंबन्धिपशुत्वावच्छिन्नं निषिद्धम् । अतो ऽपि यावतां स्थाने चमसः । ननु निषेधो ब्रह्मभागविषयः सन्नपि चरितार्थ इत्युक्तं भाक् । तत्रोत्तरमाह । न चेति । गौणः अमुख्यवृत्त्युपस्थाप्यो दक्षिणानामर्थः, चमसस्येति शेषः । प्रयोजनं स्यात् । चमसदक्षिणया ऋत्विगानतिं कुर्यादिति मुख्यवृत्तिज्ञानजन्यो बोधः । चमसस्यैकदेशबाधकत्वे चमसात्मकदक्षिणैकदेशेन ऋत्विगेकदेशानतिं भावयेदिति हि वाक्यार्थो लाक्षणिको वाच्यः । अयमयुक्त इति भावः ॥ ७१ ॥

## यदि तु ब्रह्मणः तदूनं तद्विकारः स्यात् ॥ ७२ ॥

अस्य अधिकरणस्य फलज्ञापकं सूत्रद्वयम् । पूर्वपक्षफलमाह । यदीति । यदि तु चमसदानं ब्रह्मणः तदा क्रतुः तदूनं तेन ब्रह्मभागमात्रेण ऊनं प्राकृतदानजातं शेषदानमस्त्येव अतः तद्विकारः ब्रह्मभागस्य विकारः स्यात् ॥ ७२ ॥

## सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥

सिद्धान्ताभिप्रायमाह । सर्वं वेति । सर्वं निवर्तते । कुतः, तासां दक्षिणानां क्रतुप्रधानत्वात् । क्रत्वर्था सर्वा ऽपि दक्षिणा निवर्ततइति भावः । ननु क्रत्वर्था दक्षिणा सर्वेभ्यो देया कथं ब्रह्मणएवेति तत्राह । पुरुषापनयात् । वचनेन पुरुषान्तरविभागात् । ब्रह्मणएव दानमिति भावः ॥ ७३ ॥

वाजपेये रथस्य भागानियामकत्वम् । अधि० ३२ ।

## यजुर्युक्तो ऽध्वर्योर्दक्षिणाविकारः स्यात् ॥ ७४ ॥

अस्ति वाजपेये यजुर्युक्तं रथमध्वर्यवे ददातीति । अत्र अध्वर्योः शेषदक्षिणा निवर्तते उत अध्वर्योः पक्षे प्राप्तौ नियम इति संशये पूर्वपक्षमाह । यजुरिति । स्पष्टो ऽर्थः ॥ ७४ ॥

## अपि वा श्रुतिभूतत्वात्सर्वासां तस्य भागो नियम्येत ॥ ७५ ॥

सिद्धान्तमाह । अपि वा श्रुतिभूतत्वादिति । सप्तदश रथाः सप्तदश निष्काः सप्तदश दास्यो दक्षिणेति श्रुतिभूतत्वात् । श्रूयमाणत्वात् । सप्तदशसु कश्चन रथो यजुर्युक्तः कश्चन ऋग्युक्तः कश्चन सामयुक्तः । एवं रथेषु अध्वर्योः यजुर्युक्तरथस्य पक्षे सर्वासां दक्षिणानां प्राप्तौ तस्य अध्वर्योः भागो रथविशेषो नियम्यते ॥ ७५ ॥

इति जैमिनिसूत्रवृत्तौ दशमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

अग्न्यादौ नारिष्टहोमादिभिः नक्षत्रेष्ट्यादीनां समुच्चयः । अधि० १ ।

## प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

अस्मिन्पादे प्राकृतवैकृतानां समुच्चयश्चिन्त्यते । तत्र श्येने लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति । अत्र उपव्ययतइत्यनेनोपवीतं प्राप्तम् । तत्रोपवीतकार्ये निवीतविधानाद् उपवीतं बाध्यतइति बहिः पूर्वपक्षे सिद्धान्तमाह । प्रकृतीति । प्रकृतेः लिङ्गेन कार्येण संयोगाभावात् । कुतो योगाभावः, तत्र हेतुमाह । कर्मसंस्कारमिति । संस्कारमदृष्टफलकं कर्म यतः । अयं भावः । प्राकृतोपवीतजन्यमदृष्टं भिन्नं निवीतादृष्टं भिन्नमुभयोः परस्परकार्यकारित्वे प्रमाणाभावात् । अतः विकृतौ अधिकं समुच्चयः स्यात् ॥ १ ॥

## चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥

नन्वेवं शरैः कुशबाधो न स्यादित्याशङ्क्य तत्र वैषम्यं दर्शयति । चोदनेति । चोदनायां प्राकृतविधौ अव्यभिचरितं यल्लिङ्गं बर्हिषा वेदिं स्तृणातीतिवाक्यस्थवेदिस्तरणसाधनबर्हिःशब्दस्तत्संयोगेन तदन्वयेन । प्रकृतिसन्निधानात् । प्रकृतिविधिघटकशब्दसन्निधानात् । अयं चोदनालिङ्गसंयोगेन अत्र हेतुः । तद्विकारः कुशविकारः ॥ २ ॥

शरमयबर्हिषा कौशबर्हिर्बाधः । द्वितीयवर्णकम् । एवं वा ।

तत्रैवोदाहरणे युक्त्यन्तरेण पूर्वपक्षमाशङ्क्य निराकरोति । एवं

वेति । तादित्थं शरमयमित्यत्र मयटः प्राचुर्यार्थकत्वेन द्वयोः शरकुशयोरबाधेनैवोपपत्तौ बाधो न युक्त इति पूर्वपक्षे सिद्धान्तमाह । चोदनेति । मयटो विकारार्थे प्रमाणान्तरबाधएव विकारान्यार्थत्वम् । तथा च विकारार्थे तथात्वाभावात् । तादृशार्थकस्य चोदनालिङ्गत्यादि पूर्ववत् ।

वाजपेये रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरुभयोर्बाधः । तृतीयवर्णकम् । एवं वा ।

उदाहरणान्तरे इमं सूत्रार्थमतिदिशति । एवं वेति । वाजपेये दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोतीति, प्रकृतौ उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोतीति । तत्र दुन्दुभिना दर्भबाधः द्रव्यत्वेन सादृश्याद् घोषेण मन्त्रबाधः शब्दत्वेन सादृश्यादिति पूर्वपक्षे सिद्धान्तमाह । चोदनेति । अस्मिन्पक्षे सूत्रे सकृदिति शेषः । चोदनालिङ्गेन उपाकरोतिशब्देन सकृदन्वयाद् द्रव्यसंबन्धिघोषः एक एव द्वयोर्बाधकः । अयं भावः । दुन्दुभिश्च घोषश्चेति द्वन्द्वे दुन्दुभिना उपाकरोति घोषेण उपाकरोतीति द्विवारं चोदनालिङ्गसंयोगेन प्रत्येकं द्वयोर्बाधकं भवेत् । न द्वन्द्वः । एकवचनान्तत्वात् । षष्ठीतत्पुरुषे दुन्दुभिविशिष्टघोषस्य करणत्वसबन्धेन सकृदेवान्वयः स्तोत्रोपाकरणे । अतो विशिष्टं द्वयोर्बाधकमिति ॥ २ ॥

बृहस्पतिसवादौ बार्हस्पत्यग्रहादिभिः प्राकृतैन्द्रवायवादिग्रहाणां समुच्चयः । अधि० २ ।

## सर्वत्र तु ग्रहाम्नातमधिकं स्यात्प्रकृतिवत् ॥ ३ ॥

बृहस्पतिसवे श्रूयते, बार्हस्पत्यं ग्रहं गृह्णातीति । अत्र ग्रहं गृह्णातीत्यनेन चोदनालिङ्गेन बार्हस्पत्यमित्यस्य योगात् प्राकृतनिखिलग्रहबाध इति पूर्वपक्षे सिद्धान्तमाह । सर्वत्रेति । यत्रैवं श्रूयते तत्र सर्वत्र ग्रहाम्नातम् अधिकं प्राकृतग्रहादधिकं समुच्चय इति भावः । प्रकृतिवत् । यथा प्रकृतौ ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णातीत्यनयोस्तद्वत् ॥ ३ ॥

## अधिकश्चैकवाक्यत्वात् ॥ ४ ॥

साधकान्तरमाह । अधिकश्चेति । चकार एकवाक्यत्वादित्यनेनान्वितः । वाजपेये सप्तदश प्राजापत्या ग्रहा गृह्यन्त इति वदत् सोमग-

हांश्च सुराग्रहांश्च गृह्णातीति अनेनैकवाक्यतापन्नप्राजापत्यग्रहवाक्यं न प्राकृतानुवादकं भवितुमर्हति । प्रकृतौ सुराऽभावात् । अतो ऽपि प्राकृतात्तत्र यथा ऽधिकं तथा ऽत्रापीति भावः ॥ ४ ॥

## लिङ्गदर्शनाच्च ॥ ५ ॥

किं च विरप्शो वा एष यज्ञक्रतुर्यद्वाजपेय इति श्रूयते । अस्यार्थः । ज्योतिष्टोमाद्यपेक्षया ऽयं विरप्शो विस्तृत इत्यर्थः । अत्र विस्तारः समुच्चयलिङ्गमित्याह । लिङ्गेति ॥ ५ ॥

वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयः । अधि० ३ ।

## प्राजापत्येषु चाम्नानात् ॥ ६ ॥

अस्ति वाजपेये सप्तदश प्राजापत्यान्पशूनालभतइति । पूर्ववत्मा कृतपशुबाधक इति प्राप्ते सिद्धान्तमाह । प्रजापत्येष्विति । अधिक इति प्रपूर्वसूत्रात्मण्डूकप्लुत्या ऽनुवर्तते । आम्नानात् । ब्रह्मवादिनो वदन्ति नाग्निष्टोमो नोक्थ्यः इत्यारभ्य तान्पशुभिरेवावरुन्धे इत्यन्तेन स्पष्टं समुच्चयकथनात् ॥ ६ ॥

सांग्रहण्येष्टौ आमनहोमैरनुयाजानां समुच्चयः । अधि० ४ ।

## आमने लिङ्गदर्शनात् ॥ ७ ॥

सांग्रहण्यां आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीति । पूर्ववत् प्राकृतत्रित्वविशिष्टानूयाजबाधका इति पूर्वपक्षे सिद्धान्तमाह । आमनइति । अधिकमित्यनुवर्तते । लिङ्गदर्शनात् । लिङ्गमेवम् । आत्मा वै प्रयाजानूयाजा आत्मा देवता यत्प्रयाजानुयाजानां पुरस्ताद्वोपरिष्टाद्वा जुहुयाद्बहिरात्मानं सजातात्समादधीत यन्मध्यतो जुहोति मध्यत एव सजातानात्मन्धत्तइति ॥ ७ ॥

महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयः । अधि० ५ ।

## उपगेषु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥

महाव्रते श्रूयते पत्न्य उपगायन्तीति । प्रकृतौ ऋत्विज उपगायन्तीति । अत्रोपगायन्तीतिप्रकृतिलिङ्गसंयोगात् उपगेषु उपगानकर्तृषु शरवत्पत्न्यः ऋत्विजो बाधन्तइति पूर्वपक्षः ॥ ८ ॥

## आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥

सिद्धान्तमाह । आनर्थक्यादिति । आनर्थक्यात् पत्नय उपगायन्तीत्येतत्समीपे काण्डवीणाभिरुपगायन्तीत्यस्यानर्थक्यात् । शेषं स्पष्टम् ॥ ९ ॥

अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयः । अधि० ६ ।

## संस्कारे चान्यसंयोगात् ॥ १० ॥

सत्त्रे गौग्गुलवेन प्रातःसवने समञ्जते ऽभिवाञ्जतइति । प्रकृतौ दीक्षाकाले नवनीतेनाभ्यञ्जतइति । प्राकृताभ्यञ्जनमनूद्य गौग्गुलविधानान्नवनीतबाध इति पूर्वपक्षे सिद्धान्तमाह । संस्कारइति । संस्कारे अञ्जने ऽभ्यञ्जने च, अधिकं स्यादित्यनुवर्तते । कुतः, अन्यसंयोगाद् दीक्षासुत्यारूपभिन्नकालसंयोगात् ॥ १० ॥

## प्रयाजवदिति चेन्नार्थान्यत्वात् ॥ ११ ॥

ननु तिष्ठन्तं पशुं प्रयजतीत्यत्रापि प्राकृतप्रयाजानां हविरासादनोत्तरकालिकत्वेन भिन्नकालसंयोगे ऽपि प्राकृतवैकृतयोः न समुच्चयः किं तु बाधः तथा ऽत्र स्यादित्याशङ्क्येमं हेतुं हित्वा हेत्वन्तरमाह । प्रयाजवदिति । अर्थान्यत्वं कार्यभेदः तस्मात् । नवनीतेन त्वचि मृदुता गौग्गुलेन शैत्यं भवतीति ॥ ११ ॥

महाव्रते ऽहतवाससः तार्प्यादिभिः समुच्चयः । अधि० ७ ।

## आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारः स्यात् ॥ १२ ॥

महाव्रते श्रूयते । तार्प्यं यजमानं परिधापयतीति । घृताक्तकम्बलस्तार्प्यम् । प्रकृतावहतं वासः परिधत्तइति । अत्र शरीराच्छादनविषये द्वयोरेकार्थत्वात्प्राकृतवासोविकारः बाधकः स्यादिति पूर्वपक्षः ॥ १२ ॥

## अधिकं वा ऽन्यार्थत्वात्* ॥ १३ ॥

सिद्धान्तमाह । अधिकं वेति । अधिकं समुच्चयः । अन्यार्थत्वात् । गुह्याच्छादनपृष्ठोदराद्याच्छादनरूपकार्यभेदात् ॥ १३ ॥

* इत उत्तरं, समुच्चयं च दर्शयति, इति सूत्रमधिकं भाष्ये दृश्यते ।

महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिः समुच्चयः । अधि० ८ ।

सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १४ ॥

महाव्रते श्लोकेन पुरस्तात्सदसः स्तुवन्तीति श्लोकसाम्ना प्राकृतज्यादिसाम्नां बाधे प्राप्ते समाधत्ते । सामस्विति । सामसु श्लोकादिसामसु अविकारः प्राकृतसामभिः समुच्चयः । कुतः, अर्थान्तरेण पदार्थान्तरेणान्वयश्रुतेः । अयं भावः । सकृदुच्चरितः शब्दः तस्य यो ऽर्थः प्राकृतस्तुतिरूपः प्राप्तः स एकेन पुरस्तात्सदस इत्यर्थान्तरेणान्वितः श्लोकेनान्वेतुं नार्हति । प्राप्ते ऽर्थे अनेकगुणविधाने वाक्यभेदात् । अतो गुणद्वयविशिष्टं नवीना स्तुतिर्विधीयते । तथा च प्राकृतलिङ्गसंयोगाभावात्समुच्चय इति ॥ १४ ॥

विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधः । अधि० ९ ।

अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १५ ॥

क्व चिच्छ्रूयते कौत्सं भवतीति भर्गयशसी भवत इति । अत्र स्तुवतइति प्राकृतलिङ्गाभावात् समुच्चय इति पूर्वपक्षे सिद्धान्तमाह । अर्थे त्विति । अर्थे प्राकृतफले ऽश्रूयमाणे ऽपि प्राकृतस्य प्रकृतिसाम्नो विकारः बाधः स्यात् । शेषत्वात् । प्राकृतस्य वैकृतशेषत्वाविशेषात् । अयं भावः । साम्नः क्रतुमध्यविधिपाठात्क्रत्वङ्गत्वे तदुपकार्याकाङ्क्षायामङ्गत्वाविशेषेण प्राकृतसामोपकार्यमेवाकाङ्क्षानिवर्तकमिति तत्कार्यकारित्वात्तद्बाध इति ॥ १५ ॥

कौत्सादिभिर्व्यवस्थया एकादिबाधः । अधि० १० ।

सर्वेषामविशेषात् ॥ १६ ॥

उक्तोदाहरणे प्राकृतसाम्नां सर्वेषां बाधकमिति पूर्वपक्षमाह । सर्वेषामिति । स्पष्टो ऽर्थः ॥ १६ ॥

एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् ॥ १७ ॥

सिद्धान्तमाह । एकस्य वेति । श्रुतेः एकवचनश्रुतेः सामर्थ्यात् । साधकान्तरमाह । प्रकृतेश्चाविकारादिति । प्रकृतेः चोदकशास्त्रस्य अविकाराद् अबाधात् । श्रुतसंख्याकप्राकृतसामबाधेन विधिश्चरितार्थो ऽधिकं न बाधतइति ॥ १७ ॥

विवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामबाधाबाधौ । अधि॰ ११ ।

**स्तोमवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वात् ॥ १८ ॥**

यत्र साम्नां वृद्धिः श्रूयते तत्रापि प्राकृतबाधं कृत्वा वैकृतैरेव संख्यापूरणमिति पूर्वपक्षे सिद्धान्तमाह । स्तोमवृद्धाविति । स्तोमवृद्धौ अधिकं प्राकृतवैकृतसमुच्चयः स्यात् । इतरस्य केवलवैकृतसाम्नः श्रुतत्वात् । तत्र संख्यावृद्धिः श्रूयते सा च प्राकृतवैकृतैः समुच्चितैरुपपन्नेति भावः । अविवृद्धाविति पूर्वाधिकरणसिद्धान्तानुवादः । द्रव्यस्य सामरूपद्रव्यस्य विकारो बाधकः । मीमांसकमते शब्दस्य द्रव्यरूपत्वे गमकमिदम् ॥ १८ ॥

पवमाने एव विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापौ । अधि॰ १२ ।

**पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ १९ ॥**

विवृद्धस्तोमके क्व चिदावापः क्व चिदुद्वापः श्रुतः । सो ऽविशेषेण यत्र क्व चन कार्य इति पूर्वपक्षे सिद्धान्तमाह । पवमानइति । पवमाने पवमानस्तोत्रे तौ स्याताम् । तस्मिन्पवमाने तयोर्दर्शनात् । श्रुतत्वात् । अत्र ह्येवावपन्त्यत एवोद्वपन्तीति वाक्येन ॥ १९ ॥

**वचनानि त्वपूर्वत्वात् ॥ २० ॥**

ननु न्यायेनैव निर्णये वचनम् अत्र ह्येवेत्यादि व्यर्थमित्यत आह । वचनानि त्विति । अपूर्वत्वान्न्यायाभावाद्वचनानि । तथा चान्यतरस्यैव निर्णायकत्वं शेषस्यानुवादकत्वमिति भावः ॥ २० ॥

यागादौ विधिशब्देनैव देवताभिधानम् । अधि॰ १३ ।

**विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ २१ ॥**

दर्शपूर्णमासे यदाग्नेयो ऽष्टाकपाल इति श्रूयते । यो ऽयं विधिवाक्ये श्रूयमाणो ऽग्निशब्दः स एव यागनिर्वापादिमन्त्रे योज्य इति न नियमः, किं तु वह्निशब्दो ऽपि । तेनाप्यर्थस्मरणादिति पूर्वपक्षे सिद्धान्तमाह । विधीति । मन्त्रत्वे मन्त्रसंबन्धिदेवतावाचकशब्दोच्चारणावश्यम्भावे विधिगताग्निशब्दस्य भावः उच्चारणं स्यात् । यतः तेन विधिशब्देन हविःसंबन्धेन चोदना आग्नेयं हविरिति अतः । अयं भावः ।

आग्नेयो ऽष्टाकपालो भवतीत्यत्र अग्निरूपगुणविशिष्टभावनाविध्यनन्तरमर्थापत्त्या कल्प्याग्निरूपदेवतायाः द्रव्येण संबन्धविधिवाक्यं द्वेधा संभवति। अग्निपदवाच्यमुद्दिश्य हविस्त्यजेदित्याकारः, एकश्चाग्निपदमुच्चार्य हविस्त्यजेदिति। एकस्य विधिकल्पने अपरमर्थसिद्धम्। तद्यथेत्थम्। अग्निपदार्थोद्देश्यकहविस्त्यागविधिकल्पने अग्नये इदं न ममेति शब्दोच्चारणमन्तरोद्देश्यत्वं न संभवतीति उच्चारणस्यार्थिकत्वमार्थिकस्यानङ्गत्वात् पर्यायेण येन केनापि शब्देनोद्देश्यनिर्देश इति पूर्वपक्षाभिप्रायः। सिद्धान्तस्य तु अग्निपदमुच्चार्य त्यजेदिति वाक्यं कल्प्यं श्रूयमाणाग्निशब्दकर्मकोच्चारणस्य विधिसंबन्धे शब्दस्यापि तत्संबन्धात्सर्वत्राग्निपदसंबन्ध एव। मन्त्रे तस्य शब्दस्य विधानेनाङ्गत्वात्। यादृशार्थवाचकशब्दस्य चतुर्थ्यन्तस्योच्चारणं तादृशार्थोद्देश्यत्वरूपं देवतात्वमर्थसिद्धमिति भावः॥ २१॥

## शेषाणां वा चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते॥ २२॥

साधकान्तरमाह। शेषाणामिति। सर्वत्र उत्तमप्रयाजस्विष्टकृदादिनिगदेषु चोदनैकत्वात्। पठनस्यैकरूपत्वात् तस्माच्छेषाणां शेषमन्त्राणां, विधिशब्दस्य भाव इति पूर्वसूत्रादनुवर्तते॥ २२॥

अतिदेशस्थले ऽपि विधिशब्देनैव देवताभिधानम्। अधि० १४।

## तथोत्तरस्यां ततौ तत्प्रकृतित्वात्॥ २३॥

प्रकृतौ मन्त्रेष्वेकरूपपाठे नियमे ऽपि विकृतौ न नियम इति पूर्वपक्षे सिद्धान्तमाह। तथेति। तथा प्रकृतिवत्। उत्तरस्यां ततौ सौर्यादिविकृतिषु शब्दनियमः दर्शपूर्णमासप्रकृतित्वात्। नियमो ऽप्यतिदिश्यतइति भावः॥ २३॥

आधाने ऽग्नेः सगुणेनाभिधानम्। अधि० १५।

## प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात्॥ २४॥

आधाने ऽग्नये पावकायाष्टाकपालमिति श्रुतम्। तत्र सिद्धान्तेनोपक्रमते। प्राकृतस्येति। प्राकृतस्याग्नेः गुणश्रुतौ पावकरूपगुणश्रवणात् सगुणेनाभिधानम्। अन्यथा गुणाभिधानं व्यर्थमिति भावः॥ २४॥

अविकारो वा ऽर्थशब्दानपायात्स्याद् द्रव्यवत् ॥ २५ ॥

पूर्वपक्षमाह । अविकारो वेति । अविकारः केवलाग्निप्रयोगः । अर्थस्य शब्देन केवलाग्निशब्देनानपायादत्यागात् । पाठवैयर्थ्यं दृष्टापत्तिं दृष्टान्तेन द्रढयति । द्रव्यवदिति । यदजां वशा वायव्यामालभेत भूतिकाम इत्यत्रोत्पत्तिवाक्ये वशादिरूपगुणविधाने ऽपि निगदेषु छागस्य वपाया मेदस इत्येव पाठो न तु गुणस्य तथा देवतास्थले ऽपीति भावः ॥ २५ ॥

आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात् ॥ २६ ॥

सिद्धान्तं व्यवस्थापयति । आरम्भेति । अर्थस्य अग्न्यादिपदस्य यो ऽर्थस्तस्य आरम्भे उत्पत्तिवाक्यस्थतिङ्वाच्यभावनायामसमवायात् चतुर्दशाधिकरणे सिद्धान्तभावप्रकटनावसरे उक्तरीत्या ऽनन्वयात् । मीमांसकैकदेशिमते शब्दस्य अग्नये पावकायेति शब्दस्यैव देवतात्वाङ्गीकारात्तद्रूपयाः केवलाग्निपदेन प्रत्यायनासंभवाच्च । चोदितेन उत्पत्तिवाक्ये श्रूयमाणेनाभिधानं तत्र तत्र निर्वापादौ देवतास्मरणम् । श्रुत्या उत्पत्तिवाक्येन समवायित्वात्सम्बद्धत्वात् । यदि चाग्न्याद्यर्थस्यैव चतुर्दशाधिकरणपूर्वपक्षरीत्या भावनासंबन्धमङ्गीकृत्य तत्र निर्वापादिमन्त्रे केवलाग्न्यादिप्रयोगः क्रियते तदा तदवचने गुणवाचकशब्दापाठे गुणशासनं गुणविधानमनर्थं व्यर्थं स्यात् ॥ २६ ॥

द्रव्येष्वारम्भगामित्वादर्थे विकारे सामर्थ्यात् ॥ २७ ॥

य उक्तो द्रव्यदृष्टान्तः तद्वैषम्यं दर्शयति । द्रव्येष्विति । द्रव्येषु द्रव्यविधिषु अर्थे अजादिशब्दार्थे आरम्भगामित्वाद् उत्पत्तिवाक्यभावनान्वितत्वाद् विकारे गुणरहितकेवलच्छागपदे सामर्थ्यात् । तदर्थबोधकशक्तिसत्त्वात् । अयमत्र भावः । नन्वर्थस्य देवतात्वं शब्दतः प्रतीयमानमुत्तत्न्याप्रतिपन्नस्य अग्निशब्दोच्चारणस्य चोदनार्थता न युक्त्याशङ्क्य अर्थस्य विधिपक्षे दूषणकलापः तन्त्ररत्नटीकादौ प्रपञ्चितः । तद्दूषणानां द्रव्यस्याजादिपदार्थस्य विध्यन्वये अभावाद् अजापदार्थेन

यागं कुर्यादित्यर्थस्यैव विधिसंबन्धः । तथा वशारूपगुणविशिष्टाजाय-च्छस्य विध्यसंसृष्टत्वेनानङ्गत्वात् छागस्य वपाया मेदस इत्यत्र अजा-स्थाने मन्त्रे पर्यायात्मकच्छागशब्दप्रयोगे वा गुणरहितच्छागशब्दप्रयोगे वा बाधकाभावाद् गुणरहितच्छागादिपदोच्चारणं युक्तमिति ॥ २७ ॥

आधाने आज्ययोरग्नेर्निर्गुणेनाभिधानम् । अधि० १६ ।

## वृधन्वान्पवमानवद्विशेषनिर्देशात् ॥ २८ ॥

पुनराधेये वृधन्वत्याग्नेयस्याज्यभागस्य पुरोनुवाक्या भवतीति श्रूयते । अत्र पूर्वपक्षमाह । वृधन्वानिति । उत्तमस्वाहाकारादिषु पूर्वाधिकरणसिद्धाग्निगुणपवमानोच्चारवद्वृधन्वान् उच्चार्यः विशेषनिर्देशात् ॥ २८ ॥

## मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् ॥ २९ ॥

सिद्धान्तमाह । मन्त्रविशेषेति । स्पष्टो ऽर्थः । अयं भावः । वृधन्वतीति यदि देवताविशेषणं तर्हि भवेदुच्चारणम् । पुरोनुवाक्यारूपमन्त्रविशेषणम् । अतः पवमानवदिति दृष्टान्तासङ्गतिरिति ॥ २९ ॥

गवानुबन्ध्यपृषदाज्यहोमयोर्विधिशब्दाभ्यामेव उस्रावनस्पतिशब्दाभ्यामभिधानम् । अधि० १७ ।

## विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ ३० ॥

अस्ति ज्योतिष्टोमे गौरनुबन्ध्य इति । तस्याग्नीषोमपशुप्रकृतिकत्वात् प्रकृतौ उत्पत्तिवाक्ये पशुशब्दश्रवणे ऽपि निगदेषु पशुपदस्थाने छागस्य वपाया मेदसः प्रेष्येति पर्यायश्रवणादत्रापि निगदेषु उस्रादि-पर्यायशब्दप्रयोगः इति भावेन पूर्वपक्षमाह । विधीति । प्रकृतौ विधिः उत्पत्तिवाक्ये श्रुतः पशुशब्दः निगमो मन्त्रस्थच्छागशब्दः तयोर्भेदात् । तत्प्रकृतित्वादित्यत्र बहुव्रीहिः । शेषं स्पष्टम् ॥ ३० ॥

## यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥ ३१ ॥

सिद्धान्तमाह । यथोक्तमिति । यथोक्तमुत्पत्तिवाक्ये यदुक्तं तदेव पदं योज्यं, यतः विप्रतिपत्तेर्विधिवाक्यश्रुतशब्दान्यस्य शब्दस्य न चोदना

अन्यशब्दः पठितव्य इति न विधिरस्ति किं तु निगदे छागशब्दपाठे-नार्थात्सिद्धः आर्थिकस्य नातिदेशो ऽस्ति अतः ॥ ३१ ॥

अवभृथे अग्नीवरुणयोः स्विष्टकृच्छब्देनाभिधानम् । अधि० १८ ।

स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ ३२ ॥

अवभृथे अग्नीवरुणौ स्विष्टकृतौ यजतीति । अत्र स्विष्टकृतौ प्राकृतस्विष्टकृत्कार्यकारिणौ अग्नीवरुणौ कार्यावित्यर्थतात्पर्येण पूर्वपक्षमाह । स्विष्टकृदिति । प्रकृतौ स्विष्टकृति देवता या ततो ऽन्यत्वेन एतद्वाक्यविहितदेवतायाः । स्विष्टकृत्पदस्येति शेषः । तच्छब्दत्वात् । प्राकृताग्निरूपार्थविशिष्टशब्दत्वात् । अग्निवाचकत्वादिति फलितं, द्वयोर्बाधान्निवर्तेत । प्रकृतौ स्विष्टकृद्गुणविशिष्टो ऽग्निर्देवता तस्यैवैकदेशेन स्विष्टकृच्छब्देनानुवादं कृत्वा तत्स्थाने ऽग्नीवरुणविधानात् प्राकृतस्य गुणस्याग्नेर्बाध इति भावः ॥ ३२ ॥

संयोगो वा ऽर्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३३ ॥

सिद्धान्तमाह । संयोगो वेति । संयोगः स्विष्टकृत्पदयोगः अग्नीवरुणौ स्विष्टकृतावावहेति कर्तव्यः स्विष्टं कृतवानिति व्युत्पत्त्या अर्थस्य योगार्थस्य आपत्तेः उपपत्तेः । उक्तार्थमेव विवृणोति । अभिधानस्य स्विष्टकृत्पदस्य कर्मजत्वात् । क्रियानिमित्तत्वात् । अयं भावः । यथा पाचक इति पाकक्रियानिमित्तेवं स्विष्टकरणनिमित्तेयं संज्ञेति ॥ ३३ ॥

अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्नेरभिधानम् । अधि० १९ । *

सगुणस्य गुणलोपे निगमेषु गुणस्थाने यावदुक्तं स्यात् ॥ ३४ ॥

अग्नीषोमीयपशुपुरोडाशे स्विष्टकृद्यागे स्विष्टकृद्गुणरहितो ऽग्निः श्रूयते अग्निं यजतीति । अत्र केवलयागे ऽन्वयः केवलाग्निशब्दस्य उत तद्घटितप्रयोगइति संशये पूर्वपक्षमाह । सगुणस्येति । प्रकृतौ सगुणस्य गुणस्थाने गुणलोपे प्राप्ते निगमेषु मन्त्रेषु मध्ये यावदुक्तं यावच्छ्रुतं तत्रैव नान्यत्र, प्रकृते यागे श्रुतत्वात्तत्रैव लोप इति ॥ ३४ ॥

सर्वस्य वैककर्म्यात् ॥ ३५ ॥

सिद्धान्तमाह । सर्वस्येति । सर्वस्य सर्वगुणस्थाने लोपः एककर्म्यात् । एकप्रयोगरूपत्वात् ॥ ३५ ॥

अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मत्वम् । अधि० २० ।

## स्विष्टकृदावापिको ऽनूयाजे स्यात् प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३६ ॥

दर्शपूर्णमासे तृतीयो ऽनूयाजः आरादुपकारकः इति पूर्वपक्षे सिद्धान्तमाह । स्विष्टकृदिति । अनूयाजे स्विष्टकृद् आवापिकः आज्यभागस्विष्टकृतोर्मध्यदेश आवापः तत्सम्बन्धी आवापिकः सन् प्रधानाग्नेः स्मरणद्वारा संस्काररूपप्रयोजनवान्स्यात् । कुतः, अङ्गानां समीपवर्तिनामर्थेन वाक्ये श्रूयमाणेनार्थेन संयोगात् । संबन्धात् । अयं भावः । आरादुपकारपक्षे अनूयाजस्य तृतीयस्य प्रकरणेन प्रधानापूर्वाङ्गत्वं, देवतासंस्कारपक्षे यागेनाग्निं स्विष्टकृतं यागेन संस्कुर्यादिति वाक्येन देवताङ्गत्वं, प्रकरणाद्वाक्यं बलीय इति ॥ ३६ ॥

दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मत्वम् । अधि० २१ ।

## अन्वाहेति च शस्त्रवत्कर्म स्याच्चोदनान्तरात् ॥ ३७ ॥

तिष्टन्याज्यामन्वाहेति श्रुतं गुणकर्म प्रधानकर्म वेति संशये पूर्वपक्षमाह । अन्वाहेति। यथा शंसतीति शस्त्रविधिः प्रधानकर्म तद्वद् अन्वाहेति प्रधानकर्म स्यात् । चोदनान्तरात् । स्वतन्त्रचोदनाविहितत्वात् । यदि देवतास्मरणरूपं दृष्टफलं पाठस्य तदर्थत्वं लोकसिद्धमिति विधिवैयर्थ्यं स्यादिति भावः ॥ ३७ ॥

## संस्कारो वा चोदितस्य शब्दस्य वचनार्थत्वात् ॥ ३८ ॥

सिद्धान्तमाह । संस्कार इति । देवतासंस्कारः चोदितस्य विहितस्य वाचकशब्दस्य वचनार्थत्वाद् दृष्टार्थत्वसंभवाद् ॥ ३८ ॥

## अवाच्यत्वान्नेति चेत् ॥ ३९ ॥

पूर्वपक्षी शङ्कते । अवाच्यत्वादिति । अवाच्यत्वाद्विधेरभावाद् दृष्टार्थत्वं नेति चेत् ॥ ३९ ॥

स्याद्गुणार्थत्वात् ॥ ४० ॥

विधेयं दर्शयति । स्यादिति । गुणार्थत्वाद् दृष्टार्थमेव पठनं स्यात् ॥ ४० ॥

मनोतायामूहाभावः । अधि० २२ ।

मनोतायां तु वचनादविकारः स्यात् ॥ ४१ ॥

त्वं ह्यग्ने प्रथमो मनोतेति प्रकृतौ श्रुतम् । वायव्यपशौ त्वं हि वायो इत्यूह इति पूर्वपक्षे सिद्धान्तमाह । मनोतायामिति । वचनात् । वचनमिदं, यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोतेति । अतो ऽविकारः । अनूहः ॥ ४१ ॥

कण्वरथन्तरस्य स्वयोनौ गानम् । अधि० २३ ।

पृष्ठार्थे ऽन्यद्रथंतरात्तद्योनिपूर्वत्वादृचां प्रविभक्तत्वात् ॥ ४२ ॥

वैश्यस्तोमे कण्वरथंतरं पृष्ठं भवतीति । प्रकृतितः रथंतरबृहत्पृष्ठौ प्राप्तौ तत्रानेन वचनेन रथंतरबृहतोः साम्नोर्बाधे ऽपि तद्योनिभूतर्चामबाधाद् बृहद्रथंतरयोनिभूतर्चां मध्ये रथंतरयोनावेव गेयमिति पूर्वपक्षमाह । पृष्ठार्थ इति । पृष्ठार्थे पृष्ठस्तोत्रकार्ये रथंतरादन्यत् कण्वरथंतरं यद्विहितं तद् रथंतरयोनिकमिति शेषः । तद्योनिः रथंतरयोनिः पूर्वं यस्येति व्युत्पत्त्या ज्योतिष्टोमप्रकृतित्वादिति फलितम् । ननु ज्योतिष्टोमे बृहद्योनेरपि सत्त्वेन तद्योनिकत्वं किं न स्यादत आह । ऋचां बृहद्योनिभूतर्चां प्रविभक्तत्वात् । व्यावृत्तत्वात् । कण्वरथंतरमित्यत्र नामैकदेशेन रथंतरेणेति शेषः ॥ ४२ ॥

स्वयोनौ वा सर्वाख्यत्वात् ॥ ४३ ॥

पूर्वपक्षं दूषयति । स्वेति । स्वयोनौ कण्वरथंतरयोनौ ज्ञेयं सर्वाख्यत्वात् । कण्वरथंतरमिति विशिष्टसमुदायस्य सामविशेषे रूढत्वात् ॥ ४३ ॥

यूपवदिति चेत् ॥ ४४ ॥

पूर्वपक्षमाशङ्कते । यूपवदिति । यथा यूपशब्दः संस्कारकलापं निमित्तीकृत्य प्रवर्तते तथा प्राकृतरथंतरसंबन्धियावद्धर्मविशिष्टे रथंतरशब्दः प्रवर्तेत । अत्र योनिभेदे रथंतरशब्दो बाध्येतेति भावः ॥ ४४ ॥

न कर्मसंयोगात् ॥ ४५ ॥

सिद्धान्तं द्रढयति । नेति । कण्वरथंतरशब्दो यूपवन्न कर्मसंयोगात्, प्रवृत्त इति शेषः । किं तु हस्तिनखशब्दः पुरद्वारवत् सामविशेषे रूढ इति भावः ॥ ४५ ॥

कण्वरथंतरस्य स्वयोन्युत्तरयोर्गानम् । अधि० २४ ।

कार्यत्वादुत्तरयोर्यथाप्रकृति ॥ ४६ ॥

कण्वरथंतरसाम्न्येव एकं साम तृचे क्रियतइत्यनेन सामयोनिभूतर्चमपहायान्यदृग्द्वयमपेक्षते तत्रोत्तरयोर्द्वयोर्गापयतीत्यनेन स्वस्वयोन्युत्तरऋग्द्वयं प्राप्तं तत्र पूर्वपक्षमाह । कार्यत्वादिति । उत्तरयोः कार्यत्वात् । सामपरिपूर्तेः रथंतरबृहदन्यतरोत्तरग्रहणे यथाप्रकृति कृतं भवति । चोदकशास्त्रबाधो न भवतीति फलितम् । यदुत्तरयोः कार्यं तद्यथाप्रकृतीति सूत्रार्थः ॥ ४६ ॥

समानदेवते वा तृचस्याविभागात् ॥ ४७ ॥

सिद्धान्तमाह । समानेति । तृचस्य ऋक्त्रयस्य अविभागात् । भिन्नदेवताकत्वासंभवात् । समानदेवताकः तृचो भवतीति शास्त्रात् स्वयोन्युत्पन्न एव समानदेवताक इति चोदकबाधो युक्तः ॥ ४७ ॥

अग्निष्टुति स्तुतशस्त्रयोरविकारः । अधि० २५ ।

ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ ४८ ॥

अग्निष्टुति आग्नेया ग्रहा भवन्तीति । तत्र प्रकृतितः प्राप्तस्तुतशस्त्रमन्त्रेषु अग्निरूह्य इति पूर्वपक्षे सिद्धान्तमाह । ग्रहाणामिति । ग्रहाणां स्तुतशस्त्रमन्त्रदेवतातो देवतान्यत्वे ऽपि अविकारः अनूहः स्तुतशस्त्रयोः कर्मत्वात् । प्रधानकर्मत्वात् । प्रधानकर्मत्वस्य द्वितीये व्यवस्थापितत्वादिति भावः ॥ ४८ ॥

चातुर्मास्येषु आज्यशब्दस्य अविकारेण आवाहनम् । अधि० २६ ।

## उभयपानात्पृषदाज्ये दध्नो ऽप्युपलक्षणं निगमेषु पातव्यस्योपलक्षणत्वात् ॥ ४९ ॥

चातुर्मास्ये पृषदाज्येनानूयाजान्यजतीति श्रुतम् । प्रकृतौ देवां आज्यपां आवहेति मन्त्रस्तस्मिन्नाज्यं पिबतीति व्युत्पत्त्या प्रयाजानूयाजदेवतानां व्यापकरूपेणानुगमः । स मन्त्रश्चोदकशास्त्रेण प्राप्तः । अत्र पूर्वपक्षमाह । उभयपानादिति । पृषदाज्ये हविषि सति निगमेषु उक्तमन्त्रेषु दध्नो ऽप्युपलक्षणं दधिपदप्रयोगो ऽपि कार्यः, दध्याज्यपानीति । कुतः, उभयपानात् । अत्र द्रव्यद्वयपानात् । प्रकृतौ पातव्यस्योपलक्षणत्वात् । विहितद्रव्यपानकर्तृत्वेन देवताग्रहेण पातव्यद्रव्यस्य देवतालक्षणघटकत्वात् ॥ ४९ ॥

## न वा परार्थत्वाद् यज्ञपतिवत् ॥ ५० ॥

अस्मिन्पक्षे दोषमुद्भावयन्पक्षान्तरमाह । न वेति । न वोभयं योज्यम् । यज्ञपतिवत् । यथा इडास्तुतौ ये यज्ञपतिं वर्धानित्यत्र ऋत्विजामपि वर्धकत्वे ऽपि यज्ञपतिमिति यजमानमात्रमुच्चारितम् । परार्थत्वात् । परप्रत्यायकत्वात् । अयं भावः । घटे कम्बुग्रीवादिमत्त्वं कपालजन्यत्वं द्वयमस्ति । तत्र केन चिद्रूपेण घटो ज्ञाप्यः । तदेकेन ज्ञानसंभवे उभयोच्चारणं व्यर्थम् । तथा यज्ञपतिवर्धकत्वेनेडाज्ञानसंभवे ऋत्विक्प्रवेशो व्यर्थः । तथा ऽन्यतरद्रव्यस्य मन्त्रे प्रवेशेन देवताज्ञानसंभवे द्रव्यद्वयप्रवेशो व्यर्थ इति ॥ ५० ॥

## स्याद्वा आवाहनस्य तादर्थ्यात् ॥ ५१ ॥

उक्तं पक्षं दूषयन् प्रथमपक्षं द्रढयति । स्याद्वेति । स्याद्वा दधिपदप्रक्षेपः । आवाहनस्य तादर्थ्यात् । आवाहनमन्त्रस्य पातृपेयोभयस्मारणार्थत्वात् ॥ ५१ ॥

## न वा संस्कारशब्दत्वात् ॥ ५२ ॥

सिद्धान्तपक्षमुद्भावयति । न वेति । न दध्युपलक्षणं संस्कारशब्दत्वात् । पृषदाज्येन यजतीत्यत्र पृषत् चित्रितमाज्यं तेनेत्यर्थः । तेनाज्यस्य दध्ना चित्रीकरणरूपः संस्कारः श्रूयते न दधिद्रव्यमिति भावः ॥ ५२ ॥

## स्याद्वा द्रव्याभिधानात् ॥ ५३ ॥

पुनः पूर्वपक्षमुत्थापयति । स्याद्वेति । दधिपदयोगः स्यात् । द्रव्याभिधानात् । पृषदाज्यं गृह्णातीत्येतत्समीपे सर्पिश्चैव दधि च द्वन्द्वं वै मिथुनं प्रजननमिति । अनेन आज्यसमद्रव्याभिधानात् ॥ ५३ ॥

## दध्नस्तु गुणभूतत्वादाज्यपा निगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५४ ॥

इमं पक्षं निराकरोति । दध्नस्त्विति । आज्यपा इत्येव निगमाः स्युः दध्नस्तु गुणभूतत्वाद्गुणत्वम् आज्यस्य तु श्रुत्या प्राधान्यमतः । अयं भावः । पृषदाज्येन यजतीत्यत्र तृतीयाश्रुत्या यागाङ्गत्वं सिद्धं दध्नस्तु ग्रहणविधिसन्निधौ तुल्यत्वेन पाठः । ग्रहणाङ्गत्वं प्रापयन्यागं प्रति नाज्येन समो भवितुमर्हतीति अत आज्यसंस्कार एवेति ॥ ५४ ॥

## दधि वा स्यात्प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५५ ॥

दध्न एव प्राधान्यं पुनर्व्यवस्थापयति । दधि वेति । दधि प्रधानं स्यात् । कुतः, आज्येन प्रथमान्त्यसंयोगात् । प्रथमान्त्ये उपस्तरणाभिघारणे ताभ्यां संयोगात् । उपस्तरणाभिघारवचनमेवं श्रूयते, यदि वसन्ते यजेत द्विरुपस्तृणीयात्सकृदभिघारयेदिति । पुरोडाशादावुपस्तरणाभिघारयोः प्रधानसंस्काररूपतायाः क्लृप्तत्वादिति भावः ॥ ५५ ॥

## अपि वा ऽऽज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् ॥ ५६ ॥

सिद्धान्तं व्यवस्थापयति । अपि वेति । दधि न प्रधानमाज्यप्रधानत्वात् । दधिप्राधान्यं पूर्वं दर्शितं परिहरति गुणेत्यादिना । गुणार्थे द्वित्वादिरूपगुणार्थे भक्त्या लक्षणया उपस्तरणशब्दस्य व्यपदेशे

अवदानार्थत्वे संस्कारशब्दः आज्यमवदानेन संस्कुर्यादित्यर्थकः स्यात् । लक्षणायां बीजं श्रुतिसिद्धहोमसाधनत्वानुपपत्तिराज्यस्य ज्ञेयम् ॥ ५६ ॥

## अपि वा ऽऽख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥ ५७ ॥

पूर्वोक्ताद्विलक्षणं पक्षमुत्थापयति । अपि वेति । दधिसंसृष्टाज्यस्याख्याविकारत्वात् । संज्ञाभेदात् । तेन संज्ञाविशेषेण उपलक्षितो मन्त्रः कार्यः, देवान्पृषदाज्यपां आवहेति । अयं नानाद्रव्यसंयोगादेकं विलक्षणं द्रव्यमुत्पद्यते । तस्य संज्ञा भिन्ना यथा सुरेति । प्रकृते तद्वत् ॥ ५७ ॥

## न वा स्याद्गुणशास्त्रत्वात् ॥ ५८ ॥

चरमं सिद्धान्ताभिप्रायमाह । न वेति । सुरावदिदं द्रव्यान्तरं न स्यात् । गुणशास्त्रत्वात् । अयं भावः । पृषदाज्येनानूयाजान्यजतीति श्रूयते । अत्र यथा सुराशब्दो द्रव्यविशेषे रूढः तथा नायं शब्दः । पृषच्छब्दः चित्रस्य वाचको लोके आज्यशब्दो घृते । समुदायस्य चित्राज्यमिति । चित्रत्वं च द्रव्यान्तरसंयोगेनेति द्रव्यान्तरसंयोगेन संस्कारः शब्दावगत इति ॥ ५८ ॥

इति जैमिनिसूत्रवृत्तौ दशमस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

एकदेशग्रहणे प्राथमिकानामेव ग्रहणम् । अधि० १ ।

## आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥

पञ्चमपादे प्राकृतधर्माणामेकदेशबाधश्चिन्त्यते । यथा द्यावापृथिव्यमेककपालं वैष्णवं त्रिकपालमित्यादौ प्रकृतितः उपधानमन्त्राणामष्टानां प्राप्तौ अर्थाभावान्निवृत्तिः केषांचिद्भवति । सा यस्य कस्य चिद्भवति उतान्त्यानामेवेति संशये सिद्धान्तेनोपक्रमते । आनुपूर्व्यवतामिति । आनुपूर्व्यवतां नियतक्रमवतां मध्ये एकदेशग्रहणे विकृतौ आद्यानां ग्रहणमन्त्यस्य लोपः स्यात् । आगमवत् । यथा क्लृप्तसमाजेषु ये आगन्तवः ते उपविष्टाननुपमृद्यैव निविशन्ते तद्वत् । निर्णीतश्चायमागमन्यायः मुख्यं वा ऽपूर्वचोदनाल्लोकवदिति सूत्रे पञ्चमे ॥ १ ॥

## लिङ्गदर्शनाच्च ॥ २ ॥

साधकान्तरमाह । लिङ्गेति । आग्नेयं पञ्चकपालमुद्वसानीयमित्यत्र, लुप्येत वा एतत्पष्ठं कपालं यत्पञ्चकपालं निर्वपतीत्यत्र षष्ठकपाललोपप्रदर्शनं लिङ्गं चरमनिवृत्तौ ॥ २ ॥

## विकल्पो वा समत्वात् ॥ ३ ॥

पूर्वपक्षमारभते । विकल्पो वेति । स्पष्टार्थः ॥ ३ ॥

## क्रमादुपसर्जनो ऽन्ते स्यात् ॥ ४ ॥

अथागमवदिति दृष्टान्तः प्रदर्शितः तस्मिन्नसादृश्यं दर्शयति । क्रमादिति । क्रमात् क्लृप्तक्रमाद् उपसर्जनो ऽप्रधानो ऽन्ते स्यात् । प्रकृते न तथेति पूरणीयम् । अयं भावः । क्लृप्तक्रमस्थले तथैवास्तां, प्रकृते प्रथमो ग्राह्यश्चरमो वेति संशये ऽक्लृप्तक्रमआगमदृष्टान्तो विरुद्ध इति ॥ ४ ॥

## लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ॥ ५ ॥

लिङ्गदर्शनाच्चेति न भवत्साधकमित्याह । लिङ्गेति । अविशिष्टमविरुद्धम् । कथं, संख्यायाः पूरणे षष्ठमिति वचनम् । यथा षड्भ्रातॄणां मध्ये कस्य चिददर्शने षष्ठो न दृश्यत इति तथोपपन्नमिति भावः ॥ ५ ॥

## आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ॥ ६ ॥

सिद्धान्तं व्यवस्थापयति । आदित इति । प्रथमतः प्रवृत्तिः । आरभ्यस्य कपालोपधानस्य प्रारम्भ इत्युक्ते तच्चोपधानक्रियायां प्रकृतौ क्लृप्तप्रथममन्त्रकरणकत्वरूपतदादित्वस्यैवारम्भपदार्थत्वात् । अयं भावः । कपालोपधानप्रारम्भः कार्य इति विकृतौ ज्ञानवेलायां प्रकृतौ यन्मन्त्रकरणकोपधाने प्रारम्भः क्लृप्तः स एवात्रापि बुद्ध्यारूढः । तथा च तत्परित्यागे मानाभावः । एवमेव द्वितीयादिष्वपीति । नन्वनया दिशा ऽवभृथादौ चतुरः प्रयाजान्यजतीति श्रवणादन्त्यस्यैव लोपः स्यादत आह । वचनादिति । वचनात् । अपबर्हिषः प्रयाजान्यजतीति वचनादन्त्यस्य विधिः अलोपः ॥ ६ ॥

एकत्रिके आद्ये तृचे गानम् । अधि० २ ।

## एकत्रिके तृचादिषु माध्यन्दिनश्छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥

अस्त्येकत्रिकनामकः क्रतुः । तत्र माध्यन्दिनपवमाने प्रकृतिप्राप्तः प्रथमतृचः उच्चा ते जातमिति गायत्रीछन्दस्कः । द्वितीयः पुनानः सोमेति बृहतीछन्दस्कः । प्रतुद्रव इति तृतीयस्त्रिष्टुप्छन्दस्कः । एवं तृचत्रयं बाधित्वा एकः तृचो वचनेन प्राप्तः । अत्र तृचसंपत्तिः गायत्रीछन्दस्कऋक्त्रयेण कार्या उत त्रिष्वपि आद्याम् ऋचं गृहीत्वा कार्यमिति संशये पूर्वपक्षमाह । एकत्रिकेति । एकत्रिके क्रतौ माध्यन्दिनः माध्यन्दिनपवमानः तृचादिषु तृचत्रयस्यादिषु स्यात् । छन्दसां गायत्रीबृहतीत्रिष्टुप्छन्दसां श्रुतिभूतत्वात् प्रकृतौ श्रुतत्वात् त्रिच्छन्दा वै माध्यन्दिनः पवमान इति । तद्बाधे प्रमाणाभावादिति भावः ॥ ७ ॥

## आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ॥ ८ ॥

सिद्धान्तमाह । आदितो वेति । आदितः आद्ये तृचे गानं कर्त्तव्यम् । तन्न्यायत्वात् कपालन्यायत्वात् । इतरस्य छन्दस्त्रितयसंबन्धस्यानुमानिकत्वात् । चोदकशास्त्रेण प्राप्तत्वात् । उभयोः कर्मत्रिच्छन्दोयोगयोः तुल्यबलत्वादिति भावः । विनिगमनाविरहाभावो भाष्ये दर्शितः ततोऽवगन्तव्यः ॥ ८ ॥

## यथानिवेशं च प्रकृतिवत्संख्यामात्रविकारत्वात् ॥ ९ ॥

साधकान्तरमाह । यथेति । प्रकृतिवदित्यनेन यथासन्निवेशं प्रकृतिवत्सन्निवेशं क्रमः प्राप्नोति । तत्र प्रत्यक्षवचनस्यायिमतृचद्वयेन सह तृचेषु त्रित्वं यत् प्रकृतौ स्थितं तावन्मात्रविकारत्वात् । बाधकत्वात् । क्रमबाधे प्रमाणाभाव इति भावः ॥ ९ ॥

एकस्यामृचि धूर्गानम् । अधि० ३ ।

## त्रिकस्तृचे धुर्ये स्यात् ॥ १० ॥

तस्मिन्नेव क्रतौ धूर्गानं क्व चिद्विहितं, तत्तृचे कार्यमुतैकस्यामृचीति

संदेहे पूर्वपक्षमाह । त्रिकेति । धुर्ये धूर्गानसंपाद्यस्तोत्रमध्ये यस्त्रिकः त्रिकस्तोमकं तत्तृचेषु स्यात् ॥ १० ॥

एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ॥ ११ ॥

सिद्धान्तमाह । एकस्यामिति । एकस्यामृचि कार्यं स्तोमसंपादनं स्तोमस्यावृत्तिधर्मत्वात् । आवृत्तं धूर्षु स्तुवतइति वचनेनावृत्तिः स्तुतेविशेषणं, तत्र ऋग्भेदे ऽर्थभेदेन स्तुतिर्भिद्यते । तथा सति श्रूयमाणावृत्तिर्बाध्येत । तस्मादेकस्यामृचीति भावः ॥ ११ ॥

द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानम् । अधि० ४ ।

चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ॥ १२ ॥

सन्त्यहर्गणा द्विरात्रादयः । तस्य प्रकृतिर्द्वादशाह इति पूर्वं स्थितम् । द्वादशाहस्य प्रथमचरमे अहनी प्रायणीयोदयनीयसंज्ञके । शेषाणां दशानां मध्ये षण्णां पृष्ठ्यसंज्ञा चतुर्णां छन्दोमसंज्ञा । एवं स्थिते द्विरात्रे कपालन्यायेन प्रथमस्य प्रथमधर्मः द्वितीयस्य द्वितीयधर्म इति पूर्वपक्षे सिद्धान्तमाह । चोदनेति । चोदनासु द्विरात्रेण याजयेदित्यादिविधिविहितासु द्वादशाहसंबन्धिप्रथमचरमयोरह्नोः अपूर्वत्वात् । प्रकृतित्वात् । लिङ्गेन द्विरात्रसविधौ दृष्टलिङ्गेन धर्मनियमः स्यात् । तच्च लिङ्गमित्थं, यत्प्रथमं तद् द्वितीयं यद् द्वितीयं तत्तृतीयं जगतीमन्तर्यन्तीति । अस्यार्थः । द्विरात्रस्य रात्रिद्वये रात्रिद्वयधर्मापेक्षा ऽस्ति । स धर्मः द्वादशाहरात्रिषु प्रथममारभ्य न, किं तु यद् द्विरात्रप्रथममहः स द्वादशरात्रस्य द्वितीयमहः । यद् द्वितीयं द्विरात्रे तत्प्रकृतितृतीयं द्वादशाहे चतुर्थमहर्जगतीसंज्ञमन्तर्यन्ति त्यजन्ति रात्रिद्वयस्यैवापेक्षितत्वात् । यदि कपालन्यायेन प्रवृत्तिस्तर्हि तृतीयस्याह्नः त्यागः प्राप्तः जगतीमन्तर्यन्तीत्यसंगतम् । इदमेव लिङ्गं द्विरात्रन्यायः दशरात्रादिषु ज्ञेयः ॥ १२ ॥

प्राप्तिस्तु रात्रिसंबन्धात् ॥ १३ ॥

द्वादशरात्रादिधर्मप्राप्तौ बीजमाह । प्राप्तिरिति । प्राप्तिः धर्मप्राप्तिः । रात्रिसंबन्धात् । द्विरात्रं दशरात्रमिति उभयत्र रात्रिसंबन्धात् । रात्रियोग एव सादृश्यम् ॥ १३ ॥

सप्तभिराधुनोतीत्यनेनाग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानम् । अधि० ५ ।

## अपूर्वासु तु संख्यासु विकल्पः स्यात्सर्वा-सामर्थवत्त्वात् ॥ १४ ॥

महाग्निचयने, या जाता इत्याद्या बीजावापमन्त्राः चतुर्दशाधिकाः सन्ति । चतुर्दशभिर्वपतीति शेषन्त्यागः श्रुतः । ततः कपालन्यायेन चरममन्त्राणां त्यागे प्राप्ते सिद्धान्तमाह । अपूर्वास्विति । अपूर्वासु चोदकादनागतासु तत्प्रकरणपठितासु विकल्पः इच्छया संख्यापूरणं कार्यं सर्वासामृचामर्थवत्त्वात् । तत्प्रकरणपाठस्य फलवत्त्वात् । अन्यथा चरममन्त्राणां तत्प्रकरणपाठवैयर्थ्यमिति भावः ॥ १४ ॥

त्रिवृदादिस्तोमके प्राकृतानां साम्नामागमः । अधि० ६ ।

## स्तोमविवृद्धौ प्राकृतीनामभ्यासेन संख्यापूरण-मधिकारात्संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥

क्वचित् क्रतौ स्तोमवृद्धिः श्रूयते, एकविंशेनातिरात्रेण प्रजाकामं याजयेदिति । प्रकृतौ त्रिवृत्पञ्चदशसप्तदशस्तोमाः । एवं च प्राकृतसाम्नामतिदेशेन प्राप्तत्वात्तदावृत्त्या एकविंशतिसंख्यापूरणमुत आगन्तुकाप्राकृतसामभिरिति सन्देहे पूर्वपक्षमाह । स्तोमेति । स्तोमविवृद्धौ प्राकृतानां साम्नामभ्यासेन आवृत्त्या संख्यापूरणं स्यात् । अधिकारात् । सन्निधानात् । एकविंशतिरूपसंख्याया गुणशब्दत्वात् । प्राकृतसामगुणत्वेनैवोपपत्तेः । अन्यस्य अप्राकृतानामश्रुतत्वात् । अशास्त्रीयत्वात् ॥ १५ ॥

## आगमेन वा ऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥

सिद्धान्तमाह । आगमेति । स्पष्टो ऽर्थः ॥ १६ ॥

## संख्यायाश्च पृथक्त्वे निवेशात् ॥ १७ ॥

अश्रुतत्वसाम्ये विकल्पे प्राप्ते विनिगमकमाह । संख्याया इति । पृथक्त्वे व्यक्तिपृथक्त्वे निवेशात् । निवेशस्य स्वरसता व्यक्तिपृथक्त्वे एव । यथा गेहे अष्टौ सन्तीति भावः ॥ १७ ॥

## पराक्शब्दत्वात् ॥ १८ ॥

हेत्वन्तरमाह । पराक्शब्दत्वादिति । पराग् बहिष्पवमानेन स्तुवीतेति । अत्र पराक्शब्दो ऽनभ्यासवाचकः ॥ १८ ॥

## उक्ताविकाराच्च ॥ १९ ॥

उक्तेति । अविकारात् । अत्र अविकारो नाम पुनर्वचने निन्दाश्रवणं, जामि वा एतद्यज्ञस्य क्रियते यदेकं पुनः क्रियतइति निन्दा ऽभ्यासे श्रूयते ॥ १९ ॥

## अश्रुतित्वादिति चेत् ॥ २० ॥

प्रथमसूत्रे अभ्याससाधकत्वेनोपन्यस्तं हेतुं पुनः दूषणार्थमनुवदति । अश्रुतीति ॥ २० ॥

## स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥

हेतुं दूषयति । स्यादिति । परिमाणशास्त्रमेकविंशेनेति संख्याविशेषपरिच्छेदशास्त्रमर्थेन अर्थापत्त्या चोदितानां प्राप्तानां, प्रापक इति शेषः । अयं भावः । सामसु संख्याविधानमेकविंशतिव्यक्तिं विना न स्वरसं, प्रकृतौ न तावन्ति सामानि सन्ति, अत एकविंशतिसंख्यान्वयानुपपत्त्या प्रापिताप्राकृतसामसु एकविंशेनेति वाक्यमेव प्रमाणमिति ॥ २१ ॥

## आवापवचनं वा ऽभ्यासे नोपपद्यते ॥ २२ ॥

बाधकमभ्यासे दर्शयति । आवापेति । आवापवचनम् अत्र ह्येवावपन्तीति शास्त्रम् अभ्यासे सर्वत्राभ्यासे नोपपद्यते । विहितस्य विषयाभावादिति भावः ॥ २२ ॥

## साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३ ॥

बाधकान्तरमाह । साम्नामिति । साम्नामप्राकृतसाम्नामुत्पत्तिः पाठः तत्सामर्थ्यात् । यदि सर्वत्र प्राकृतसामाभ्यासः तर्हि शेषसाम्नां कार्याभाव त्पाठवैयर्थ्यमिति भावः ॥ २३ ॥

## धुर्येष्वपीति चेत् ॥ २४ ॥

ननु धूर्गाने ऽप्युक्तयुक्त्या ऽऽवापः स्यादिति शङ्कते । धुर्येष्वपीति ॥ २४ ॥

## नावृत्तिधर्मत्वात् ॥ २५ ॥

समाधत्ते । नेति । आवृत्तं धूर्षु स्तुवतइति वचने तस्यावृत्तिधर्मत्वात् । वचनस्यार्थे न युक्तिप्रवेश इति भावः ॥ २५ ॥

बहिष्पवमाने ऋगागमः । अधि० ७ ।

## बहिष्पवमाने त्वृगागमः सामैकत्वात् ॥ २६ ॥

बहिष्पवमाने स्तोमवृद्धौ आगन्तुकसामभिः संख्यापूरणमिति पूर्वपक्षे सिद्धान्तमाह । बहिरिति । उक्तस्थले ऋगागमेन संख्यापूरणं सामैकत्वात् । एकं हि तत्र सामेति वचनेन सामान्तरागमप्रतिषेधात् ॥ २६ ॥

सामिधेनीष्ववशिष्टानामागमेन संख्यापूरणम् । अधि० ८ ।

## अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ २७ ॥

एकविंशतिमनुब्रूयादिति सामिधेनीवृद्धिः श्रूयते । तत्राभ्यासेन संख्यापूरणमुत यावदुक्तमभ्यस्य ऋगागमेन संख्यापूरणमिति संशये पूर्वपक्षमाह । अभ्यासेनेति । अभ्यासप्रकृतित्वादभ्यासः प्रकृतौ यस्य तत्त्वात् । तस्य एकविंशतिसामिधेनीकप्रयोगप्रकृतिभूतपञ्चदशसामिधेनीकप्रयोगे संख्यापूरणार्थं त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यभ्यासस्य दृष्टत्वादिति भावः ॥ २७ ॥

## अविशेषान्नेति चेत् ॥ २८ ॥

अस्मिन् पक्षे शङ्कते । अविशेषादिति । अविशेषात् । पञ्चदशसामिधेनीकः प्रकृतिः अन्या तद्विकृतिरत्र नियामकाभावात् ॥ २८ ॥

## स्यात्तद्धर्मत्वात्प्रकृतिवदभ्यस्येतासंख्यापूरणात् ॥ २९ ॥

प्रकृतिविकृतिभावे नियामकमाह । स्यादिति । पूर्वोक्ता प्रकृतिः

स्यात् । एकविंशस्य पञ्चदशधर्मत्वात् । अतः संख्यापर्याप्तिपर्यन्तं प्रकृतिवदभ्यासः ॥ २९ ॥

## यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥

सिद्धान्तमाह । यावदुक्तमिति । शास्त्रे यावदुक्तं तावदेवाभ्यसितव्यं, कृतपरिमाणत्वात् । त्रिः प्रथमां त्रिरुत्तमामित्यनेनाभ्यासस्य नियतपरिमाणत्वात् ॥ ३० ॥

## अधिकानां च दर्शनात् ॥ ३१ ॥

अभ्यासनिवृत्तौ साधकान्तरमाह । अधिकानामिति । अग्नीषोमीयपशौ सप्तदशसामिधेनीके पृथुपाजाः तं सबाधइति ऋचोः अधिकयोर्दर्शनात् ॥ ३१ ॥

## कर्मस्वपीति चेत् ॥ ३२ ॥

अतिप्रसङ्गं शङ्कते । कर्मस्विति । कर्मसु धूर्गानकर्मस्वपि आगमोऽस्त्विति चेत् ॥ ३२ ॥

## न चोदितत्वात् ॥ ३३ ॥

वैषम्यमाह । न चोदितत्वादिति । आवृत्तं धूर्षु गायेदिति विहितत्वात् तत्राप्रवृत्तिरेव ॥ ३३ ॥

षोडशिनां प्राकृतत्वम् । अधि० ६ ।

## षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥

यस्यैवं विदुषः षोडशी गृह्यतइति विहितः षोडशी ग्रहः प्राकृतो वैकृतो वेति संशये आद्यपक्षमाह । षोडशिन इति । तत्र कृत्स्नविधानात् । तत्र द्विरात्रादौ कृत्स्नस्य अङ्गकलापस्य विधानात् ॥ ३४ ॥

## प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥

साधकान्तरमाह । प्रकृताविति । अभावदर्शनात् । निषेधदर्शनात् ॥ ३५ ॥

## अयज्ञवचनाच्च ॥ ३६ ॥

लिङ्गान्तरमाह । अयज्ञेति । क्व चिदर्थवादे अयज्ञो वावैष ज्योतिष्टोमो यत् षोडश्या हीन इति । यथा अयज्ञो वा एष यो ऽसामेत्यत्र असामत्वं क्लृप्तम् एवमेव षोडश्यभावः प्रकृतौ क्लृप्तः ॥ ३६ ॥

## प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥

सिद्धान्तमाह । प्रकृताविति । षोडशी ग्रहो ज्योतिष्टोमे ऽस्ति । विकृतौ शिष्टत्वाद् उपदिष्टत्वात् । अयं भावः । द्वितीये ऽहनि द्विरात्रस्य गृह्यतइति अन्यत्र निवर्त्तकं न, किं तु उपदेशशास्त्रं, परिसंख्याविधेर्दुष्टत्वात् । येन प्रकृतितो निवर्तकं भवेत् ॥ ३७ ॥

## प्रकृतिदर्शनाच्च ॥ ३८ ॥

ननु ज्योतिष्टोमाङ्गत्वे केवलं प्रकरणं मानं द्विरात्राङ्गत्वे वाक्यं, तच्च वाक्याद्दुर्बलमत आह । प्रकृतीति । प्रकृतौ अप्यग्निष्टोमे राजन्यस्य गृह्णीयादिति वाक्यस्य दर्शनात् ॥ ३८ ॥

## आम्नानं परिसंख्यार्थम् ॥ ३९ ॥

ननु चोदकशास्त्रेण द्विरात्रादौ प्राप्तत्वात्तत्र पुनः पाठवैयर्थ्यमत आह । आम्नानमिति । परिसंख्यार्थं प्रकृतौ राजन्यकर्तृकत्वे निमित्ते षोडशी ग्रहः अतिदेशशास्त्रेण चेत् स निमित्तएव प्राप्नुयात् तन्निमित्तपरिसंख्यार्थमाम्नानमिति भावः ॥ ३९ ॥

## उत्क्रमभावदर्शनम् ॥ ४० ॥

उत्क्रमभावदर्शनं, विकल्पार्थमिति पूरणीयम् ॥ ४० ॥

## गुणादयज्ञत्वम् ॥ ४१ ॥

गुणादिति । पक्षे प्राप्तस्य षोडशिग्रहणस्य गुणात्स्तुतेः अयज्ञत्वमुपपन्नमिति शेषः ॥ ४१ ॥

आग्रयणादेव षोडशिग्रहणम् । अधि० १० ।

## तस्याग्रयणाद् ग्रहणम् ॥ ४२ ॥

स षोडशी ग्रहः कस्माद्ग्राह्य इति प्रश्ने पूर्वपक्षमाह । तस्येति । तस्य षोडशिग्रहस्य सोमरसः । स्पष्टं शेषम् ॥ ४२ ॥

## उक्थ्याच्च वचनात् ॥ ४३ ॥

उक्थ्याच्च द्वयोरित्यर्थः । आग्रयणाद्गृह्णाति उक्थ्याद्गृह्णातीति वचनात् ॥ ४३ ॥

तृतीयसवने एव षोडशिग्रहणम् । अधि० ११ ।

## तृतीयसवने वचनात्स्यात् ॥ ४४ ॥

एतदधिकरणमसमाप्य मध्ये अन्यच्चिन्तयति । षोडशिग्रहस्य सवने सवने ऽभिगृह्णातीति वचनेन सवनत्रये प्राप्तौ सिद्धान्तमाह । तृतीयेति । वचनात् तृतीये सवने गृह्णीयात् सर्वेषु सवनेषु गृहीतः स्यादिति वचनात् । पूर्ववचनमेतत्स्तुत्यर्थमिति भावः ॥ ४४ ॥

## अनभ्यासे पराक्शब्दस्य तादर्थ्यात् ॥ ४५ ॥

गतो ऽवान्तरविचारः । ननु यद्याग्रयणोक्थ्याभ्यां षोडशिग्रहणं तर्हि पराञ्चमुक्थ्याद्विगृह्णातीत्यत्र दिग्वाचकः पराञ्चशब्दो ऽनर्थक इत्यत आह । अनभ्यासइति । अनभ्यासे सकृद्ग्रहणे पराक्शब्दः न दिगर्थकः शब्दस्य पराक्शब्दस्य तादर्थ्यात् । तादृशार्थे व्यवहारस्य दृष्टत्वात् । अपादानपञ्चमी न दिक्शब्दयोगे पञ्चमीति भावः ॥ ४५ ॥

## उक्थ्यविच्छेदवचनाच्च ॥ ४६ ॥

साधकान्तरमाह । उक्थ्येति । वचनमेवं, विच्छिन्दन्ति ह वा एतदुक्थ्यं यदुक्थ्यानि षोडशिनं च ततः प्रणयतीति । अस्यार्थः । यद्युक्थ्यात् षोडशिग्रहं न गृह्णीयात् तर्हि उक्थ्यानि उक्थ्यसामानि एतमुक्थ्यं षोडशिनं च विच्छिन्दन्ति अन्योन्यासंबद्धं कुर्वन्ति अतस्ततः उक्-

थ्यालम्भयति गृह्णातीति पूर्वपक्षार्थः । उक्थ्यषोडशिनोः संबन्धबोधकं वचनं त्वस्माद्ग्रहणे ऽनुपपन्नमिति भावः ॥ ४६ ॥

## आग्रयणाद्वा पराक्शब्दस्य देशवाचित्वा-त्पुनराधेयवत् ॥ ४७ ॥

सिद्धान्तमाह । आग्रयणादिति । आग्रयणादेवेत्यर्थः । पूर्वोक्तप-राक्शब्दस्य देशवाचित्वात् । यथा पराञ्चमग्न्याधेयात् पुनराद्धीतेत्यत्र उत्तरकालरूपदेशवाचकत्वं तथेहापीत्याह । पुनराधेयवदिति ॥ ४७ ॥

## विच्छेदः स्तोमसामान्यात् ॥ ४८ ॥

ननु विच्छेदवचनस्य का गतिरत आह । विच्छेद इति । विच्छे-दवचनं स्तोमसाम्यादुपपन्नं स्तोमसाम्यं च द्वयोरेकविंशस्तोमत्वेन । अस्य विस्तरस्त्वन्यतो ऽवगन्तव्यः ॥ ४८ ॥

षोडशिग्रहस्य सस्तोत्रशस्त्रत्वम् । अधि० १२ ।

## उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति संस्थान्यत्वम् ॥ ४९ ॥

अयं षोडशी ग्रहः अस्तोत्रशस्त्रक उत ताभ्यां सहित इति विशये पूर्वपक्षमाह । उक्थ्येति । अयमस्तुतशस्त्रः उक्थ्याग्निष्टोमसंयोगात् सति स्तुतशस्त्रे संस्थान्यत्वं भिन्नसंस्थं स्यात् । अयं भावः । अप्यग्निष्टोमे राज-न्यस्य गृह्णीयादप्युक्थ्यइति । अत्राग्निष्टोमादिसंज्ञा तत्तत्साम्ना क्रतु-र्निमित्तीकृत्य प्रवृत्ता यदि षोडशी तद्युक्ता तर्हि षोडशिसाम्ना समाप्त-त्वात् षोडशीति संस्थान्तरमेव स्यात् । श्रूयते चाग्निष्टोमादिसंज्ञा । तद्बलाद्वै ताभ्यां रहितमिति ॥ ४९ ॥

## सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥

सिद्धान्तमाह । सस्तुतेति । तदङ्गत्वात् । ग्रहाङ्गत्वात् स्तुतश-स्त्रयोः ॥ ५० ॥

## लिङ्गदर्शनाच्च ॥ ५१ ॥

साधकान्तरमाह । लिङ्गदर्शनादिति । कथमूर्ध्वा वा ऽन्ये यज्ञक्रतवः सन्तिष्ठन्ते तिर्यञ्चो ऽन्ये ये होतारमभिसन्तिष्ठन्ते तऊर्ध्वाः ये ऽच्छावाकं ते तिर्यञ्च इत्यनेन यज्ञक्रतूनामूर्ध्वतिर्यग्भेदेन द्वैविध्यं दर्शितम् । यद्यस्तुतशस्त्रं स्यात्तर्ह्यध्वर्युमभिसंतिष्ठेतेति तृतीयः । तथा सति द्वैविध्यदर्शनं विरुध्येतेति भावः ॥ ५१ ॥

## वचनात्संस्थान्यत्वम् ॥ ५२ ॥

अथ स्तुतशस्त्रसत्त्वे संस्थान्तरं स्यादित्युक्तं तत्रोत्तरमाह । वचनादिति । इष्टापत्तिरिति भावः । वचनं यथेच्छं कर्तुं शक्नोति ॥ ५२ ॥

आङ्गिरसां द्विरात्रे षोडशिनः परिसंख्या । अधि० १३ ।

## अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥

आङ्गिरसां द्विरात्रे वैखानसं पूर्वे ऽहन्साम भवति तेन जत्यैनैति षोडश्युत्तरइति । अत्र षोडशिविधानमपूर्वमुतानुवाद इति संशये पूर्वपक्षमाह । अभावादिति । अतिरात्रेषु यः षोडशिग्रहः तस्याङ्गिरसां द्विरात्रे ऽतिरिक्ते ऽभावाद् आङ्गिरसद्विरात्रएव गृह्यते । अयमभिप्रायः । अतिरात्रे षोडशी ग्रहो वैकल्पिकः प्रसिद्धः ततः चोदकशास्त्रेण आङ्गिरसां द्विरात्रे प्राप्तौ विकल्पेन । एवं सति अनारभ्यैकं वाक्यमस्ति उत्तरे ऽहनि द्विरात्रस्य गृह्यतइति । तेन चोदकप्राप्तं विकल्पं बाधते । अतः सर्वद्विरात्रे नित्यं प्राप्तः । एवं सति वैखानसं पूर्वे ऽहन् साम भवति षोडश्युत्तरइति वाक्यस्य अनारभ्याधीतेनोपसंहारे यद् द्विरात्रे षोडशिग्रहणं तदाङ्गिरसां द्विरात्रे नान्यत्रेति । एवं च पूर्वोक्तसूत्रार्थ उपपन्नः ॥ ५३ ॥

## अन्वयो वा ऽनारभ्यविधानात् ॥ ५४ ॥

सिद्धान्तमाह । अन्वयो वेति । सर्वत्र द्विरात्रे ऽन्वयः षोडशिग्रहसंबन्धः अनारभ्य विधानात् ॥ ५४ ॥

नानाहीने षोडशिग्रहग्रहणम् । अधि० १४ ।

## चतुर्थे चतुर्थे ऽहन्यहीनस्य गृह्यतइत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५५ ॥

षोडशिनं प्रकृत्य चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते इति श्रुतम् । अत्रैकस्मिन्नेवाहीने नवरात्रादौ चतुर्थदिवसे अष्टमदिवसे वाह्नमुताहीनान्तरसंबन्धिचतुर्थे दिवसइति संशये आद्यपक्षमाह । चतुर्थइति । एकस्मिन्नहीनएवाभ्यासेन द्विवारं त्रिवारं प्रतीयेत भोजनवत् । लोके चतुर्थे चतुर्थेऽहनि भुङ्क्ते इत्युक्ते पूर्वभोजनदिनावधिकं चतुर्थमहः प्रतीयते तद्वत् ॥ ५५ ॥

अपि वा संख्यावत्त्वान्नानाहीनेषु गृह्यते पक्षवदेकस्मिन् संख्यार्थभावात् ॥ ५६ ॥

सिद्धान्तमाह । अपि वेति । संख्यावत्त्वात् । चतुर्थे इति संख्याया वचने श्रुतत्वात् । नानाहीनेषु तत्संबन्धः । एकस्मिन्नेकाहीने एकदिवसएव संख्यार्थभावात् । चतुर्थसंख्यायाः फलवत्त्वात् । अन्यचतुर्थस्याहीनसंबन्धग्रहत्वादिति भावः । ननु वीप्सायाः का गतिरत आह । पक्षवदिति । यथा पञ्चम्यां पञ्चम्यां भुङ्क्ते इति वीप्साया एकपक्षे पञ्चमीद्वयाभावात् पक्षान्तरं ज्ञापयति । तथा एकाहीनसंबन्धिचतुर्थदिनद्वयाभावाद् अहीनान्तरं ज्ञापयतीति भावः ॥ ५६ ॥

भोजने च तत्संख्यं स्यात् ॥ ५७ ॥

भोजनस्थले अगत्या युक्तमित्याह । भोजनेति । तत्संख्यं भोजनदिनमारभ्य चतुष्ट्वसंख्यावत्त्वं स्यात् । किंसंबन्धिचतुष्ट्वमित्याकाङ्क्षापूरकशब्दाश्रवणाद् इति भावः ॥ ५७ ॥

विकृतौ पदाग्रामायपणापत्वम् । अधि० १५ ।

जगत्साम्नि सामाभावादृक्ः साम तदाख्यं स्यात् ॥ ५८ ॥

यदि जगत्सामा ऽऽयथणायानिकी ज्योतिष्टोमप्रकरणे श्रुतम् । अस्य प्रकृतावेव यथाकथंचिन्निवेश इति पूर्वपक्षे सिद्धान्तमाह । जगत्साम्नीति । जगत्साम्नि जगत्सामपदघटितपूर्वोक्तश्रुतौ ऋक्ः जगतीछन्दस्काया ऋचः संबन्धात् । तदाख्यं जगत्सामेति आख्या यस्य तादृशं स्यात् । सामाभावान्निखिलसामवेदे जगत्संज्ञकसामाभावात् । इत्थं च प्राकृत-

सामयोनिभूतत्वं कस्या अपि जगतीकन्दस्काया अभावात्र प्रकृतौ समावेश इति पूर्वपक्षनिरासः पूरणीयः ॥ ५८ ॥

जगत्सामेति शब्देन विषुवतो ग्रहणम् । द्वितीयवर्णकम् । एवं वा ।

यद्वा जगत्सामेति रथंतरमेव । तद्योनौ ऋचि ईशानमस्य जगतः इति जगत्पदसत्त्वादिति पूर्वपक्षे सिद्धान्तमाह । जगदिति । सामाभावात्तत्संज्ञकसामाभावात् । अस्मत्पक्षे जगदित्यस्य जगत्कन्दस्कऋग्योनिके लक्षणा । परमते जगत्पदे जगदित्यस्य जगच्छब्दे प्रथमलक्षणा अनन्तरं तत्पदघटितऋग्योनिके पुनर्लक्षणेति लक्षितलक्षणापत्तिरूपो दोषः पूरणीयः । एतदभिप्रायेणैव वेति ॥ ५८ ॥

संसवे उपवत्यग्रियवत्योरभावः । अधि० १६ ।

## उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ॥ ५९ ॥

प्रकृतौ पृष्ठस्तोत्रे बृहद्रथंतरसाम्नोर्विकल्पः । तत्तत्साम्नि निमित्ते नैमित्तिकं च प्रकृतौ श्रुतं, रथंतरसाम्नि उपवती प्रथमा ऋग्बृहत्यग्रियवतीति । विकृतिविशेषे बृहद्रथंतराभ्यां यन्तीति समुच्चयः श्रुतो । तथा सत्यत्र निमित्तद्वयप्राप्तौ विरुद्धत्वेनोभयानुष्ठानासंभवाद् इच्छया यत्किंचिन्निमित्तमनुष्ठेयमथ वा रथंतरनिमित्तम् अथ प्राकृतान्यनिमित्तमिति संशये प्रथमपक्षं स्थापयति । उभयेति । समत्वात् । नियामकाभावात् ॥ ५९ ॥

## मुख्येन वा नियम्येत ॥ ६० ॥

द्वितीयं पक्षमाह । मुख्येनेति । मुख्येन प्रथमेन उपवत्यग्रत्वं नियम्येत ॥ ६० ॥

## निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥ ६१ ॥

सिद्धान्तमाह । निमित्तेति । निमित्तविघातात् । निमित्तद्वयाभावात् । प्रकृतौ द्वयोः प्रतिपक्षोः निमित्तं प्रत्येकं पृष्ठकार्यविनियुक्तान्यतरत् । इह तु तत्कार्यविनिमुक्तोभयम् । अतो निमित्तद्वयाभाव इति भावः । क्रतुयुक्तं क्रतुनिमित्तं ततोऽन्यदेव स्यात् ॥ ६१ ॥

ऐन्द्रवायवस्य सर्वादावप्रतिकर्षः । अधि० । १७ ।

## ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥ ६२ ॥

ऐन्द्रवायवाग्रान् गृह्णीयादिति विहितम् । अनेन सर्वाग्रता विधीयते उत धाराग्रहाग्रता इति संशये पूर्वपक्षमाह । ऐन्द्रेति । अग्रतावचनात् सर्वादितः प्रतिकर्षः योगः ॥ ६२ ॥

अपि वा धर्मविशेषाद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ॥ ६३ ॥

सिद्धान्तमाह । अपि वेति । तद्धर्मविशेषात् । ऐन्द्रवायवप्रभृतिष्वविशेषात् । अयं भावः । नात्राग्रता विधीयते किं तु ऐन्द्रवायवाग्रानित्यनेन मैत्रावरुणाश्विनप्रभृतीन् सर्वान् ग्रहाननूद्य ग्रहणमात्रं विधीयते । ऐन्द्रवायवप्रभृतीनित्यस्य सर्वसाधारणत्वाद् इति । इत्थं च प्रकरणात् प्रकरणपाठात् स्वस्थाने स्वस्थानस्थऐन्द्रवायवे स्थितमग्रत्वमुच्यते अनूद्यते । अनुवादफलं मत्कृतविहारवापीतः ज्ञेयं भवति ॥ ६३ ॥

धारासंयोगाच्च ॥ ६४ ॥

धारेति । अथवा धारया गृह्णातीति श्रवणाद्धाराग्रहः प्रकृतः । अतो ये धाराग्रहाः तदग्रतैव स्यान्न तु सर्वाग्रतेति भावः ॥ ६४ ॥

कामसंयोगे ऽपि ऐन्द्रवायवस्यादावप्रतिकर्षः । अधि॰ १८ ।

कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥ ६५ ॥

ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति । अत्र कामसंयोगे सति वचनादुक्तवचनात् सर्वादितः प्रतिकर्षः संयोगः स्यात् । पूर्वपक्षसूत्रम् । पूर्वयदर्थकरणे तस्य नित्यत्वेन ततो ऽन्यैलक्षण्यं स्यात् । कामसंयोगो व्यर्थं इति भावः ॥ ६५ ॥

तद्देशानां वा ऽग्रसंयोगात्तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥

सिद्धान्तमाह । तद्देशानामिति । तद्देशानामित्यस्य सः पूर्वोक्तः उपांश्वन्तर्यामान्तरः देशो यस्येति व्युत्पत्त्या पूर्वाधिकरणसिद्धस्वस्वदेशसंबद्धानामेव ग्रहाणामग्रतासंबन्धात् पूर्वाधिकरणवदेव तद्युक्ते स्वदे-

शयुक्ते कामशास्त्रं फलसंबन्धबोधको विधिः स्यात् । यच्चोक्तं नित्यत्वेन कामशास्त्रं व्यर्थमिति तत्रोत्तरमाह । नित्येति । नित्ये एव फलसंबन्धादुपपन्नं संयोगपृथक्त्वन्यायेनेति भावः ॥ ६६ ॥

आश्विनादीनां ग्रहाणां प्रतिकर्षः । अधि० १९ ।

## परेषु वा ऽग्रशब्दः पूर्ववत्स्यात्तदादिषु ॥ ६७ ॥

शुक्राग्रान् गृह्णीत गतश्रीः प्रतिष्ठाकाम इति श्रुतम् । अत्र पूर्वपक्षमाह । परेष्विति । परेषु ऐन्द्रवायवान्यग्रहेषु श्रूयमाणः अग्रशब्दः पूर्ववत् पूर्वाधिकरणसिद्धान्तवत्तदादिषु तत्प्रभृतिषु स्यात् ॥ ६७ ॥

## प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥

सिद्धान्तमाह । प्रतिकर्षो वेति । ऐन्द्रवायवात् चतुर्थस्थाने स्थितस्य शुक्रग्रहस्यैन्द्रवायवात्प्राक् प्रतिकर्षः प्रतिष्ठाफलाय विधीयते । कुतः, नित्यार्थः पाठक्रमेण नित्यं प्राप्तप्रथमस्थानः ऐन्द्रवायवः तेन, संबद्धस्येति शेषः । अग्रस्य अग्रतायाः तदसंयोगात्फलासंबन्धात् । अयं भावः । शुक्राग्रता वाक्ये श्रुता सा फलेन संबद्धा । न हि पूर्ववत् पाठेन प्राप्तानैन्द्रवायवाग्राननूद्य ग्रहणं विधीयतइति वक्तुं शक्यं, पाठक्रमेणाग्रताया अप्राप्तेः । अतः अग्रतैव फलाय विधेया । तथा च स्वस्थानभ्रंशो ऽवश्यं सिध्यतीति ॥ ६८ ॥

## प्रतिकर्षं च दर्शयति ॥ ६९ ॥

लिङ्गमप्याह । प्रतिकर्षमिति । एवं श्रूयते धारयेयुस्तं यं कामाय गृह्णीरन्नैन्द्रवायवं गृहीत्वा सादयेत्तम् इति । अस्यार्थः । यदि प्रतिष्ठाकामनया शुक्राग्रान् गृह्णीयात् यं ग्रहं प्रथमं गृह्णाति तं भूमावनासादयन् धारयन्नैन्द्रवायवं गृहीत्वा पश्चादासादयेदिति । इदमैन्द्रवायवाव्यवहितप्राक्प्रतिकर्षे लिङ्गम् ॥ ६९ ॥

आश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात् प्रतिकर्षः । अधि० २० ।

## पुरस्तादैन्द्रवायवादग्रस्य कृतदेशत्वात् ॥ ७० ॥

नन्वेवमपि शुक्राग्रानिति श्रवणात् बोधत्वं प्राप्तमिति पूर्वपक्षे सिद्धान्तमाह । पुरस्तादिति । ऐन्द्रवायवात्पुरस्ताद्ग्रहणं न त्वुपांश्वन्त

र्थामतः । अस्य कृतदेशत्वात् । कृप्तदेशत्वात् । धारावहाधिकारात्त-
द्वत्येव सिध्यति न त्वधारावहायतेति भावः ॥ ७० ॥

तुल्यधर्मत्वाच्च ॥ ७१ ॥

कृतदेशत्वादिति यदुक्तं तत्र देशस्य कृप्तत्वे हेतुमाह । तुल्य-
धर्मत्वाच्चेति । धारावहत्वेन तुल्यः धर्मो येषां तत्त्वात् । किमपेक्षया ऽपृथ-
क्त्वमित्याकाङ्क्षायां प्रकृतमेवाकाङ्क्षापूरकं न त्वप्रकृतमिति भावः ॥ ७१ ॥

तथा च लिङ्गदर्शनम् ॥ ७२ ॥

तथा चेति । प्रतिकर्षं च दर्शयतीत्यत्र यल्लिङ्गं तदेवात्र ॥ ७२ ॥

सादनस्यापि प्रतिकर्षः । अधि० २१ ।

सादनं चापि शेषत्वात् ॥ ७३ ॥

पूर्वोक्तस्थले ग्रहणस्यापकर्षे ऽपि सादनस्य नापकर्षः अश्रुतत्वा-
दिति पूर्वपक्षे सिद्धान्तमाह । सादनमिति । विप्रकृष्यते इति शेषः ।
सादनस्य ग्रहणाङ्गत्वात् । अङ्गिसमभिव्याहृतमङ्गमिति न्यायात् ॥ ७३ ॥

लिङ्गदर्शनाच्च ॥ ७४ ॥

लिङ्गेति । लिङ्गमैन्द्रवायवं गृहीत्वा सादयेदिति प्राग् दर्शित-
मेव ॥ ७४ ॥

प्रदानस्याप्रतिकर्षः । अधि० २२ ।

प्रदानं चापि सादनवत् ॥ ७५ ॥

ननु पूर्वोक्तस्थले आसादनवद्यागो ऽप्यपकृष्यतइति पूर्वपक्षमाह ।
प्रदानमिति । गतम् ॥ ७५ ॥

न वा प्रधानत्वाच्छेषत्वात् सादनं तथा ॥ ७६ ॥

सिद्धान्तमाह । नेति । न सादनसमं प्रदानं तस्य प्रधान-
त्वात् ॥ ७६ ॥

त्र्यनीकायामैन्द्रवायवाग्रतोक्तेः समासाभिप्रायत्वम् । अधि० २३ ।

त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥

द्वादशाहे प्रथमचरमदशमाहानि त्यक्त्वा शेषेषु नवसु त्र्यनीकेति
संज्ञा । तत्र क्रमेणाग्रतैव श्रूयते । ऐन्द्रवायवाग्रं प्रथममहरग्र शुक्राग्रमग्रा-

ग्रयणाग्रमिति प्रथमत्रिकवदेव अन्तिमत्रिकक्रतुयायताक्रमः । द्वितीये ऽहनि प्रकृतित एव ऐन्द्रवायवाग्रतामाप्तौ अत्र श्रवणमर्थवाद इति पूर्वपक्षमाह । त्र्यनीकेति । न्यायोक्तेषु चोदकशास्त्रप्राप्तेषु आम्नानं पुनः कथनं गुणार्थं स्तुत्यर्थं स्यात् ॥ ७७ ॥

अपि वा ऽहर्गणेष्वग्निवत्समानं विधानं स्यात् ॥ ७८ ॥

सिद्धान्तमाह । अपि वेति । अहर्गणेषु द्वादशाहे त्र्यनीकेषु विधानं समानम् । यथा प्रकृतौ तथैव । अग्निवत् । अथातो ऽग्निमग्निष्टोमेन यजेत तं द्वि रात्रेणेत्यत्राग्निष्टोमे ऽग्निविधानाच्चोदकेन प्राप्तावपि द्विरात्रे पुनरग्निविधानं तद्वत् । पुनर्विधानफलं भक्तताविहारवाप्यां ज्ञेयम् ॥ ७८ ॥

व्यूढद्वादशाहस्य समूढविकारत्वम् । अधि० २४ ।

द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ ७९ ॥

द्विविधो द्वादशाहः व्यूढः समूढश्चेति । पूर्वाधिकरणोदाहृतो ऽसौ समूढः । व्यूढस्तु ऐन्द्रवायवाग्रौ प्रथमचरमौ शेषाणां दशानां मध्ये ऐन्द्रवायवाग्रं प्रथममहस्य शुक्राग्रमथाग्रयणाग्रे तृतीयचतुर्थे । अनेनैव क्रमेण पुनरहश्चतुष्कं संपाद्य चरमे द्वे ऐन्द्रवायवाग्रे । एवं द्वैविध्ये उभयोस्तुल्यता उत प्रकृतिविकृतिभाव इति संशये पूर्वपक्षमाह । द्वादशाहस्येति । द्वादशाहस्य तत्सम्बन्धिव्यूढत्वसमूढत्वे पृष्ठवत् । प्रकृतौ बृहद्रथन्तरयोर्यथा समानविधित्वं तथा समानं स्याद् न प्रकृतिविकृतिभावः । प्रमाणाभावादिति भावः ॥ ७९ ॥

व्यूढो वा लिङ्गदर्शनात्समूढविकारः स्यात् ॥ ८० ॥

सिद्धान्तमाह । व्यूढो वेति । समूढविकारः व्यूढः स्यात् । लिङ्गदर्शनात् । लिङ्गमित्थम् । ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहस्तस्मिन्नाग्रयणो ग्राह्य इति व्यूढे श्रुतम् । समूढे त्र्यनीकिन्यां चतुर्थमहः ऐन्द्रवायवाग्रत्वादायतनं तस्मिन्नाग्रयणो गृह्यतइति प्रकृत्यनुवादेन वैकृतकथनं लिङ्गम् ॥ ८० ॥

कामसंयोगात् ॥ ८१ ॥

कामेति । यः कामयेत बहु स्यां प्रजायेयेति व्यूढे कामसंयोगात् । काम्यं नित्यस्य विकार इति प्रसिद्धम् ॥ ८१ ॥

तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८२ ॥

एतदधिकरणफलं दर्शयति । तस्येति । तस्य द्वादशाहस्य ऐककर्म्यात् । अविशेषैकरूपत्वात् । द्विरात्रादिषु उभयथा उभयधर्मप्रवृत्तिः पूर्वपक्षफलम् । सिद्धान्ते यत्र लिङ्गं तत्रैव व्यूढधर्मप्रवृत्तिः शेषेषु समूढधर्मप्रवृत्तिः ॥ ८२ ॥

संवत्सरसत्रे त्र्यनीकानां विवृद्धिः । अधि० २५ ।

एकादशिनीवत् त्र्यनीकाप्रवृत्तिः स्यात् ॥ ८३ ॥

गवामयने संवत्सरसाध्यक्रतौ द्वादशाहविकृतौ त्र्यनीका चोदकप्राप्ता । तदावृत्त्या संवत्सरः पूरणीयः । तत्रावृत्तिविचारे पूर्वपक्षमाह । एकादशिनीवदिति । एकादशिनी आग्नेयादिवारुणान्ताः पशवः । तेषां यथा दण्डकलितन्यायेनावृत्तिस्तद्वत् । एकां त्र्यनीकां समाप्य पुनस्त्र्यनीकान्तरं प्रारब्धव्यम् । एवं वत्सरपर्यन्तं प्रवृत्तिः स्यात् ॥ ८३ ॥

स्वस्थानविवृद्धिर्वा अह्नामप्रत्यक्षसंख्यत्वात् ॥ ८४ ॥

सिद्धान्तमाह । स्वस्थानेति । स्वस्थानविवृद्धिः । अयमभिप्रायः । त्र्यनीकाया नवाहानि तेषु नव अयताः क्रमेण विहिताः । वत्सरस्य नवधाऽहानि विभज्यैकस्मिन् भागे एकैकायतासंपादने स्वस्य प्रथमाया ऐन्द्रवायवाग्रताया यत्स्थानं प्रथमाहः तस्य वृद्धिः एवमुत्तरत्रेति । ननु अयता अह्नामङ्गं श्रूयते ऐन्द्रवायवाग्रं प्रथममहरिति । इत्थं च यस्मिन् अहनि ऐन्द्रवायवाग्रता तदुत्तराहनि शुक्राग्रतायां वाक्यं समञ्जसम् । तत्र पक्षे विरुध्येतेत्यत आह । अह्नामप्रत्यक्षसंख्यत्वादिति । अह्नामहर्विधीनामदर्शनात् । अयं भावः । उक्तवाक्ये अहरविवक्षितम् । यदि विवक्ष्यते तर्हि वाक्यं भिद्येत, ऐन्द्रवायवाग्रता कार्या सा चाहःसंबन्धिनीति । तस्मादैन्द्रवायवाद्यग्रतामात्रं क्रतुमुद्दिश्य अयेत्यनेन क्रमो

बोध्यते । इत्थं चैन्द्रवायवोत्तरत्वं शुक्राये न तूत्तरदिवसे । स क्रमो मन्मते ऽबाधित इति ॥ ८४ ॥

### पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात्त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५ ॥

पूर्वपक्षे लिङ्गानुपपत्तिमपि दर्शयति । पृष्ठ्येति । सूत्रार्थपरिज्ञानाय गवामयनस्याह्नां प्रवृत्तिं दर्शयामि । गवामयने एकषष्ट्यधिकत्रिशतमहानि । तन्मध्ये अशीत्युत्तरशतमहानि पूर्वपक्षः । तावन्त्येवोत्तरपक्षः । तयोर्मध्ये मध्यवंशस्थानापन्नं विषुवन्नामैकमहः । प्रथमपक्षे प्रथममहः प्रायणीयम् १ । द्वितीयं चतुर्विंशन्नामकम् २ । इदं द्वयं प्रत्यहग्रहणेनैन्द्रवायवाग्रम् । एतदुत्तरं अनीकप्रवृत्तिः । तत्र चत्वारोऽभिप्लवाः । प्रत्येकं षडहसाध्याः २४ । ततः पृष्ठ्य इति षडहः साध्यः ६ । एवं च त्रिंशद्दिवसाः । एवमेव द्वितीयतृतीयचतुर्थपञ्चममासाः १५० । षष्ठे मासि त्रयोऽभिप्लवाः षडहाः १८ । एकः पृष्ठ्यः षडहः ६ । अभिजिदित्येकाहः । त्रयः स्वरसामसंज्ञका एकाहाः ३ । एवं चाद्याभ्यां सह १८० । ततः विषुवन्नामकमहः १८१ । अथोत्तरपक्षे प्रथमं त्रयः स्वरसामानः । ततो विश्वजिदेकाहः । पृष्ठ्यः षडहः । अयं त्रयस्त्रिंशपरिवृत्तः । अस्यार्थः । अन्यत्र पृष्ठ्ये त्रिवृत्पञ्चदशः सप्तदश एकविंशः त्रिणवस्त्रयस्त्रिंश इति क्रमः । अयं त्रयस्त्रिंशमारभ्य परिवृत्तः विपरीतक्रम इत्यर्थः । त्रयोऽभिप्लवाः प्रत्येकं षडहाः २८ । पुनः पृष्ठ्यः षडहः । चत्वारोऽभिप्लवाः प्रत्येकं षडहाः । एवं त्रिंशद्दिवसाः । एवं पुनः त्रिरावृत्तौ उत्तरपक्षादारभ्य अहानि १४८ । ततः त्रयोऽभिप्लवाः प्रत्येकं षडहाः १८ । ततः आयुर्गावित्ति द्वे २ । ततः द्वादशाहप्रायणीयोदयनीयमध्यवृत्तीनि दशाहानि । ततो महाव्रतातिरात्राविति द्वे । १८० । ३६१ । एवं स्थिते सूत्रार्थो वर्ण्यते । त्रयस्त्रिंशे परिवृत्तौ त्रयस्त्रिंशमारभ्य त्रिवृदन्तं विपरीतानुष्ठानके पृष्ठ्यावृत्तौ उत्तरपक्षे स्वरसामविश्वजिदनन्तरं प्राप्तपृष्ठ्यावृत्तौ आग्रयणस्य आग्रयणाग्रताया दर्शनाच्च श्रवणात् । श्रुतिश्च जगतीमग्रडपर्यन्ति जगतीं वै छन्दांसि प्रत्यवरोहन्त्याग्रयणाग्रा ग्रहा बृहत्पृष्ठानि त्रयस्त्रिंशं स्तोमा इति । पूर्वपक्षे

न्यूनताया यः क्रमः तद्विपरीतक्रमेणोत्तरपक्षे अनुष्ठीयमाने सति उक्तषडहे छन्दांसि जगतीं प्रथमं कृत्वा प्रवर्तन्ते । आग्रयणं प्रथमं कृत्वा ग्रहाः प्रवर्तन्तइति । एतेनास्मिन्पृष्ठे आग्रयणाग्रता श्रुता । दण्डाकलितन्यायेनाह्नां पूरणे ऐन्द्रवायवः ऐन्द्रवायवाग्रता स्यात् । तथा हि । प्रायणीयचतुर्विंशाख्ये द्वे अहनी अपहाय चोदकशास्त्रेण न्यूनीकावृत्तौ एकैकावृत्तेनैव दिवसा इति । एकोनविंशतिवारमावृत्तौ एकसप्तत्युत्तरं शतदिवसा जाताः । आह्नौ द्वौ । एवं सति पूर्वपक्षे सप्त दिवसाः शिष्टाः । पूर्वपक्षे ऽपि येन क्रमेण परिसमाप्तिः तस्यैवोत्तरपक्षे ऽपि प्रातिलोम्येनानुष्ठानम् । अत्र पूर्वपक्षे ऽपि न्यूनीकापरिपूर्त्यभावेन प्रातिलोम्यप्राप्त्यभावादानुलोम्येनैवानुष्ठानं प्राप्तम् । तथा च विंशत्यामावृत्तौ नवदिवसपूर्तये विषुवन्नामकं मध्यममहः । एकमुत्तरपक्षआद्यस्वरसामसंज्ञकमेकमहरिति विंशतितमावृत्तिः पूर्णा । तत एकविंशत्यां परिवृत्तौ द्वितीये स्वरसामनि ऐन्द्रवायवाग्रं तृतीये स्वरसाम्नि शुक्राग्रं ततो विश्वजिति चतुर्थे ऽहनि आग्रयणाग्रं ततः पृष्ठ्यः षडहः प्राप्तः । तत्रैव त्रयस्त्रिंशस्तोममारभ्य विपरीतानुष्ठानम् । एतद्दहः प्रकृत्यैव जगतीमग्रतः कृत्वा छन्दांसि प्रकृतानि । आग्रयणमग्रतः कृत्वा ग्रहा इत्यनेनाग्रयणाग्रता श्रुतिसिद्धा । उक्तक्रमानुसरणे ऐन्द्रवायवाग्रता प्राप्नोति आग्रयणं ग्रहा इति लिङ्गविरोधः । सिद्धान्ते नव भागाः । एकैकभागस्य विंशतिदिवसाः । तावत्पर्यन्तं प्रथममहः आरभ्य ऐन्द्रवायवाग्रता विधेया । एवं सति प्रायणीयचतुर्विंशयोरैन्द्रवायवाग्रता प्रत्यक्षवचनसिद्धा ऽप्यविरुद्धा । अनयैव रीत्या नवभागवृद्धौ पूर्वपक्षे ऽपि न्यूनीका परिपूर्णा । तस्यैवोत्तरपक्षे ऽपि प्रातिलोम्येनानुष्ठानं प्राप्तं प्रातिलोम्येनानुष्ठाने प्रथमं विंशतिदिनपर्यन्तम् आग्रयणाग्रं तदन्तःपातित्वान्निरुक्तषडहस्याग्रयणं ग्रहा इति लिङ्गमुपपन्नमित्यलमतिविस्तरेण ॥ ८५ ॥

## वचनात्परिवृत्तिरैकादशिनेषु ॥ ८६ ॥

नन्वनया दिशैकादशिनानामपि स्यानवृद्धिरेव स्यादत आह । वचनादिति । वचनं चेत्थं श्रूयते, वारुणमन्ततः

पुनः पर्यावृत्तेषु आग्नेयमेव प्रथमे ऽऽलभेतेति । अस्यार्थः । ऐकादशिनानां प्रथम आग्नेयः चरमो वारुणः । चरमं वारुणमारभ्य पुनरावृत्तौ आग्नेयः प्रथमः कार्य इत्यनेन दण्डाकलितन्यायो वचनसिद्धः । सूत्रार्थः स्पष्टः ॥ ८६ ॥

## लिङ्गदर्शनाच्च ॥ ८७ ॥

उक्तार्थे लिङ्गं चाह । लिङ्गेति । प्राणा वा ऐकादशिना यदेकादशिनीभिरीयुरहान्यतिरिच्यन्तइति । दण्डाकलितन्यायेन द्वात्रिंशत्कृत्व आवृत्तौ नवाहान्यतिरिच्यन्तइति लिङ्गमुपपन्नं स्यानवृत्तौ नातिरेकावसर इति भावः ॥ ८७ ॥

व्यूढे मन्त्राणां छन्दोव्यतिक्रमः । अधि० २६ ।

## छन्दोव्यतिक्रमाद्व्यूढे भक्षपवमानपरिधिकपालमन्त्राणां यथोत्पत्ति वचनमूहवत्स्यात् ॥ ८८ ॥

व्यूढद्वादशाहे छन्दोव्यतिक्रमः श्रूयते । छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्ति । गायत्री त्रिष्टुभः त्रिष्टुब् जगत्याः जगती गायत्र्या इति गायत्र्याः स्थाने त्रिष्टुब् योज्या । एवमग्रे ऽपि । अत्र गायत्र्यादीनां क्वचिन्मुख्यवृत्तिः, यथा चतुर्विंशत्यक्षरादिमन्त्रेषु । गौणं क्वचिद्यथा भक्षानुवाके गायत्रच्छन्दस इन्द्रपीतस्य त्रिष्टुप्छन्दसः जगतीछन्दसः इति । पवमानमन्त्रे श्येनो ऽसि गायत्रच्छन्दा अनु त्वा ऽऽरभे सुपर्णो ऽसि त्रिष्टुप्छन्दाः सघा ऽसि जगतीछन्दा इति । परिध्यर्थवादे गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तर इति । एवं कपालेषु यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनमिति । त्रैष्टुभं माध्यन्दिनं सवनं जागतं तृतीयसवनमिति । अत्र गौणमुख्यसाधारण्येन व्यत्यये प्राप्ते सिद्धान्तमाह । छन्दोव्यतिक्रमादिति । व्यूढे तत्संज्ञके छन्दोव्यतिक्रमात् । मुख्यच्छन्दसामेव व्यतिक्रमस्य श्रुतत्वात् । वचनं तत्तच्छन्दस्कमन्त्ररूपवचनमूहवद् विपर्यस्तं स्यात् । भक्षादिमन्त्राणामुक्तानां यथोत्पत्ति यथा पाठः तथैव पठितव्यमिति ॥ ८८ ॥

इति श्रीजैमिनिसूत्रवृत्तौ दशमस्याध्यायस्य पञ्चमः पादः ॥ ५ ॥

रथन्तरादिसाम्नां तृचे गानम् । अधि॰ १ ।

## एकर्क्स्थानानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥

अस्मिन्पादे सामविषये प्राधान्येन बाधश्चिन्त्यते । अध्ययनवेलायां रथंतरादिसामैकस्यामृच्यभ्यस्यते । क्रतावपि तथैव योज्यमित्याह पूर्वपक्षम् । एकेति । एकर्क्स्थानमाश्रयो येषामीदृशानि यज्ञे स्युः सामानि अध्ययनवत् ॥ १ ॥

## तृचे वा लिङ्गदर्शनात् ॥ २ ॥

सिद्धान्तमाह । तृचे वेति । ऋक्त्रये ज्ञेयं लिङ्गदर्शनात् । अष्टाक्षरेण प्रथमायामृचि प्रस्तौति द्व्यक्षरेणोत्तरयोरिति लिङ्गम् ॥ २ ॥

स्वर्दृक्शब्देन वीक्षणस्य कालार्थता । अधि॰ २ ।

## स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥

रथंतरे प्रस्तूयमाने संमीलयेत् स्वर्दृशं प्रति वीक्षेतेति । अस्यार्थः । रथन्तरस्तुतौ संमीलनं रथन्तरयोनिभूतायाम् अभि त्वा शूरेत्यृचि स्वर्दृक्शब्दो ऽस्ति तेन वीक्षेतेति अभिप्रायेण स्वर्दृक्पदस्य वीक्षणाङ्गत्वमिति पूर्वपक्षे सिद्धान्तमाह । स्वर्दृशमिति । स्वर्दृशं प्रतीति कालमात्रं काललक्षकं स्वर्दृगुच्चारणकाले वीक्षेतेत्यर्थः । कुतः, परार्थत्वात् । स्वर्दृक्शब्दस्य स्तुत्यर्थत्वात् । एकत्र स्तुतौ विनियुक्तस्य वीक्षणे विनियोगासम्भवादिति भावः ॥ ३ ॥

गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागः । अधि॰ ३ ।

## पृष्ठ्यस्य युगपद्विधेरेकाहवद् द्विसामत्वम् ॥ ४ ॥

इदमाम्नायते, पृष्ठ्यः षडहो बृहद्रथन्तरसामेति । अत्र पूर्वपक्षमाह । पृष्ठ्यस्येति । पृष्ठ्यस्य पृष्ठस्तोत्रस्य युगपद्विधेः बृहच्च रथन्तरं चेति एकसहितापरं द्वन्द्वसमासलभ्यं तस्यैककाले विधेः प्रत्येकमर्हति द्विसामत्वम् । यथा एकाहविशेषे संसवडभे कुर्यादिति तथा ॥ ४ ॥

## विभक्ते वा समस्तविधानात्तद्विभागे ऽप्रतिषिद्धम् ॥ ५ ॥

सिद्धान्तमाह । विभक्तइति । विभक्ते द्वन्द्वसमासशून्ये समुदाये समस्तविधानाद् बहुव्रीहिसमासविधानात् । बृहद्रथन्तरं साम यस्मिन्

पृष्ठे इति श्रुत्यतो न साहित्यलाभः । किं तु प्रत्येकमेव द्वयोर्लाभ इति तद्विभागे बृहद्रथन्तरविभागे अविप्रतिपिद्धं च अबाधितं, चोदकमिति शेषः । प्रकृतौ एकस्मिन् अहनि एकैकं पृष्ठमत्रापि तथा ऽनुष्ठाने चोदकानुग्रहो भवति । चोदकशास्त्रेण विकल्पेन प्राप्तौ षडप्यहानि एकेन रथन्तरेणैव कर्तुरिच्छया प्राप्तं तन्माभूदितीदं वचनम् ॥ ५ ॥

प्रायणीयोदयनीययोरेकादशिनानां विभागः । अधि० ४ ।

## समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥

द्वादशाहे श्रूयते । ऐकादशिनान्प्रायणीयोदयनीययोरतिरात्रयोरालभेरन् इति । अत्र पूर्वपक्षसूत्रमाह । समास इति । प्रायणीयोदयनीययोरह्नोः प्रत्येकाहनि ऐकादशिनानां समासः कृत्स्नानुष्ठानं स्यात् । तत्प्रकृतित्वात् । अत्र तत्प्रकृतिरित्यस्य तत्प्रकृतिधर्मत्वे लक्षणा । तत्प्रकृतेर्ज्योतिष्टोमस्य ये धर्माः तद्वत्त्वात् । ज्योतिष्टोमे निखिलपशूनामेकस्मिन्नहन्यालम्भस्य दृष्टत्वादिति भावः ॥ ६ ॥

## विहारप्रतिषेधाच्च ॥ ७ ॥

विहारेति । विहारः एकस्मिन्दिने ऐकादशिनसंबन्धियागानां परस्परसामानाधिकरण्यं तत्प्रतिषेधात् । तन्निषेधशास्त्रात् । द्वादशाहे प्रकृतित ऐकादशिनप्राप्तौ अन्वहमेकैकमालभेतेति परस्परासामानाधिकरण्ये प्राप्ते प्रायणीयोदयनीययोरालभेतेति असामानाधिकरण्यं बाधते । अतो युगपदनुष्ठानमिति भावः ॥ ७ ॥

## श्रुतितो वा लोकवद्विभागः स्यात् ॥ ८ ॥

सिद्धान्तमाह । श्रुतीति । श्रुतितः द्वित्वश्रुतितः । लोकवत् । यथा लोके चैत्रमैत्रयोः शतं देहीत्युक्ते विभज्यैव ददाति तद्वत् ॥ ८ ॥

## विहारप्रकृतित्वाच्च ॥ ९ ॥

विहारेति । अन्वहमेकैकमालभेतेत्यनेन विहारस्य प्रकृतित्वाद् उपक्रान्तत्वात् । विभागः स्यात् ॥ ९ ॥

## यावच्छक्यं तावद्विहारस्यानुग्रहीतव्यं विशये च तदासक्तिः ॥ १० ॥

ननु विभागे वा अन्वहमित्यस्योपपत्तिः कथमित्यत आह । यावदिति । विहारस्य यावच्छक्यं तावदनुग्रहः कार्यः । विभागे यावत्पशूनां सामानाधिकरण्याभावाद्दीक्षा ऽनुगृहीतमिति भावः । विषये विभागनिश्चयानन्तरं प्रायणीये कति यागा उदयनीये कतीति संशये तदासत्तिः प्रकृत्यासत्तिः मुख्येनानुगृह्येत ॥ १० ॥

## त्रयस्तथेति चेत् ॥ ११ ॥

त्रयस्तथा प्रायणीये शेषा उदयनीयइति चेत् ॥ ११ ॥

## न समत्वात् प्रयाजवत् ॥ १२ ॥

नेति । प्रयाजवत् । यथा एकादशमध्ये षडागन्तवः प्रयाजाः प्रथमोत्तमयोर्विकारभूताः साम्येन प्रविभज्यन्ते एवमिहापि यावत्सु साम्यं भवति तावतः साम्येन विभज्य आधिक्यमुदयनीये ॥ १२ ॥

विश्वजित्सर्वपृष्ठ इत्यत्रैकस्यैव पृष्ठदेशे निवेशः । अधि· ५ ।

## सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १३ ॥

रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि सामानि विश्वजिति । विश्वजित्सर्वपृष्ठो भवतीति सर्वेषां विनियोगः श्रुतः । तत्र पूर्वपक्षमाह । सर्वेति । तेषां पूर्वोक्तसाम्नामेकदेशत्वं माध्यन्दिनपवमानादूर्ध्वं मैत्रावरुणसाम्नः प्राग् यो देशः स एव देशो येषां तत्त्वं स्यात् । पृष्ठशब्दात् तेन शब्देन निर्देशात् । पृष्ठस्य पृष्ठसाम्नः कृतदेशत्वात् । निरुक्तदेशस्य क्लृप्तत्वात्साम्ना तद्धर्मातिदेशादिति भावः ॥ १३ ॥

## विधेस्तु विप्रकर्षः स्यात् ॥ १४ ॥

सिद्धान्तमाह । विधेरिति । विधेः न्यायेनैकदेशप्राप्तावपि प्रत्यक्षवचनाद्विप्रकर्षः देशभेदः स्यात् । प्रत्यक्षवचनं तु भाष्ये स्पष्टम् ॥ १४

वैरूपवैराजसाम्नोः पृष्ठकार्ये निवेशः । अधिः ६ ।

## वैरूपसामा क्रतुसंयोगात् त्रिवृदेकसामा स्यात् ॥ १५ ॥

अस्ति ज्योतिष्टोमसंस्थाविशेष उक्थ्य इति । तत्रैवं श्रूयते । उक्थ्यो वैरूपसामेति । वैरूपसामा क्रतुरुक्थ्यः एकसामा स्यात् । आदिनि-खिलसामशून्यः निरुक्तैकसामा स्यात् । क्रतुसंयोगात् । कृत्स्नविषत्वात् । यथा त्रिवृदग्निष्टोमः इत्यत्र त्रिवृन्मात्रस्तोमकत्वं क्रतोस्तथा ॥ १५ ॥

## पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १६ ॥

सिद्धान्तमाह । पृष्ठेति । पृष्ठकार्यमेव वैरूपं निविशते नान्यत्र प्रकृतिलिङ्गसंयोगात् । पृष्ठसामविधानवाक्ये रथन्तरसाम बृहत्साम वेति बहुव्रीहिसमासयोगः प्रतीयते इहापि तथात्वेन तस्यैव बुद्धिस्थत्वादिति भावः ॥ १६ ॥

## त्रिवृद्वदिति चेत् ॥ १७ ॥

दर्शितदृष्टान्तं साधकत्वेनोपन्यस्यति । त्रिवृदिति ॥ १७ ॥

## न प्रकृतावकृत्स्नसंयोगात् ॥ १८ ॥

दृष्टान्तवैषम्यं दर्शयति । नेति । अकृत्स्नसंयोगात् । प्रकृतौ प्रकृतौ सामविधायकानि यानि तेषु कृत्स्नेषु बहुव्रीहियोगो नास्ति किं तु क्व चिदेव पृष्ठस्तोत्रे अतः अकृत्स्नसंयोगरूपलिङ्गाद् यथा सामविशेषबाधः एवं त्रिवृति नेति योज्यम् । यथा एवमिति पूरणीयम् ॥ १८ ॥

## विधित्वान्नेति चेत् ॥ १९ ॥

धेनुर्दक्षिणेत्यत्र कृप्तन्यायं गृहीत्वा शङ्कापूर्वपक्षसाधनानि सूत्रद्वयेनाह । विधित्वादित्यादिना । अत्रोत्तरसूत्रे तन्न्यायत्वाद्विशयइति तन्न्यायत्वाद् धेनुर्दक्षिणेति न्यायो यत्र प्रकृते तत्त्वाद् विशये संशये पूर्वपक्षमाह । विधित्वादिति । विधित्वाद् धेनुरिति तुल्यविधित्वादुक्तसिद्धान्तो नेति चेत् ॥ १९ ॥

## न स्याद्विशये तन्न्यायत्वात् कर्माविभागात् ॥ २० ॥

नेति सिद्धान्तमाह । न स्यात् । धेनुरितिविधिसमो न स्यात् । धेनुर्दक्षिणाकर्मणः कार्यस्य अविभागात् । एकत्वात् । तत्र ऋत्विक्परिक्रयरूपं कार्यमेकमत्र सामभेदेन कार्यं भिन्नमिति वैषम्यमिति भावः ॥ २० ॥

## प्रकृतेश्चाविकारात् ॥ २१ ॥

साधकान्तरमाह । प्रकृतेरिति । प्रकृतेः चोदकशास्त्रस्य सामान्तरे इति शेषः । अविकारात् । अबाधात् ॥ २१ ॥

त्रिवृदग्निष्टोम इत्यत्र स्तोमगतसंख्याविकारः । अधि० ७ ।

## त्रिवृति संख्यात्वेन सर्वसंख्याविकारः स्यात् ॥ २२ ॥

त्रिवृदग्निष्टोम इति । अत्र पूर्वपक्षमाह । त्रिवृतीति । त्रिवृति पदे संख्यात्वेन त्रैगुण्यरूपसंख्याबोधकत्वेन ज्योतिष्टोमसाधनद्रव्यपरिच्छेदकसंख्यायाः सर्वस्याः विकारो बाधः स्यात् । ज्योतिष्टोमे यत्र या संख्या तत्त्रिगुणसंख्याकमत्र कार्यमिति भावः ॥ २२ ॥

## स्तोमस्य वा तल्लिङ्गत्वात् ॥ २३ ॥

सिद्धान्तमाह । स्तोमस्येति । स्तोमस्य ऋगनवकस्य बाधकः तल्लिङ्गात् । प्राकृतलिङ्गात् । प्रकृतौ त्रिवृद्बहिष्पवमान इति बहिष्पवमानस्तोत्रसामानाधिकरण्यं तथा ऽत्र दर्शनादिति भावः ॥ २३ ॥

उभयसाम्नि बृहद्रथन्तरयोः समुच्चयः । अधि० ८ ।

## उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥ २४ ॥

संसवे बृहद्रथन्तरे उभे कुर्यादिति श्रुतम् । अत्र पूर्वपक्षमाह । उभयेति । उभयसाम्नि संसवे विश्वजिद्वत् । विश्वजित् सर्वपृष्ठो भवतीत्यत्र रैवतान्तानां षण्णां विधावपि एकं रथन्तरं पृष्ठकार्ये विनियुक्तं शेषाणां स्तोत्रान्तरेण विनियोगस्तथा रथन्तरस्य बृहतो वा एकस्य पृष्ठकार्ये अपरस्य स्तोत्रान्तरइति विभागः स्यात् । भिन्नकार्ये विनियोगः स्यात् ॥ २४ ॥

## पृष्ठार्थे वा ऽतदर्थत्वात् ॥ २५ ॥

सिद्धान्तमाह । पृष्ठार्थइति । पृष्ठार्थे पृष्ठकार्ये उभे भवतः । अतदर्थत्वात् । तस्य इतरस्तोत्रस्य अर्थः कार्यं तदर्थः । न विद्यते तदर्थो ययोस्तत्त्वात् । तदर्थत्वादिति पाठे सरल एवार्थः । रथन्तरसहितबृहता पृष्ठकार्यं साधयेदिति वाक्यार्थ इति भावः ॥ २५ ॥

लिङ्गदर्शनाच्च ॥ २६ ॥

लिङ्गमपि साधकमाह । लिङ्गेति । पूर्वाह्णो वै रथन्तरमपराह्णो बृहद्विति एकेनाह्ना ऽभिसंबन्धादेकस्थानतां दर्शयति ॥ २६ ॥

मध्वशनघृताशनयोः षडहान्तेऽनुष्ठानम् । अधि० ९ ।

पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशे ऽहनि स्यात्तदानन्तर्यात्प्रकृतिवत् ॥ २७ ॥

द्वादशाहे त्रिवृतमारभ्य त्रयस्त्रिंशान्तः षडहः । तत्रैव संस्थिते पृष्ठ्ये षडहे मध्वाशयेदिति । एवं सति द्वादशाहप्रकृतिकगवामयने त्रयस्त्रिंशमारभ्य त्रिवृदन्ता विपरीतप्रवृत्तिः । तत्र मध्वशने पूर्वपक्षमाह । पृष्ठइति । रसभोजनं मध्वशनमावृत्ते प्रकृतितः विपरीतस्तोमके संस्थिते षडहे त्रयस्त्रिंशे ऽहनि यस्मिन्दिवसे त्रयस्त्रिंशस्तोमः तद्दिने प्रथमदिनइति फलितम् । प्रकृतौ तदानन्तर्यात् । आनन्तर्यश्रवणादिहापि प्रकृतिवत् ॥ २७ ॥

अन्ते वा कृतकालत्वात् ॥ २८ ॥

सिद्धान्तमाह । अन्तइति । अन्ते अन्तिमदिने मध्वशनं संस्थिते षडहइति वाक्येन चरमदिनाङ्गत्वं कृतमतः कृतकालत्वात् कृतकालत्वात् । त्रयस्त्रिंशाङ्गत्वं स्थानप्रमाणेन तत्समीपे प्रकृतावनुष्ठानेन वाच्यं, तच्च वाक्याद्दुर्बलमितिभावः ॥ २८ ॥

षडहावृत्तावपि मध्वशनघृताशनयोः सकृदनुष्ठानम् । अधि० १० ।

अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ २९ ॥

क्व चिदावृत्तं पृष्ठ्यं षडहमुपयन्तीति षडहावृत्तिः श्रुता । तत्र मध्वशने पूर्वपक्षमाह । अभ्यासइति । अभ्यासे षडहाभ्यासे तदभ्यासः मध्वशनावृत्तिः । कर्मणः षडहरूपकर्मणः पुनः प्रयोगात् पुनरनुष्ठानात् ॥ २९ ।

अन्ते वा कृतकालत्वात् ॥ ३० ॥

सिद्धान्तमाह । अन्ते वेति । पूर्वं व्याख्यातम् । अयं भावः । संस्थितिर्नाम षडहसंबन्धिक्रियोपरमः । अयं चरमषडहएवेति तत्रैव मध्वशनमिति भावः ॥ ३० ॥

गवामयने मध्वशनघृताशनयोः प्रतिमाससमावृत्तिः। अधि० ११।

## आवृत्तिस्तु व्यवाये कालभेदात् ॥ ३१ ॥

गवामयने प्रथममेकं षडहः ततोऽभिप्लवसंज्ञकान्यहानि पुनः षडहः। तत्रापि मध्वशनं सकृदिति पूर्वपक्षे सिद्धान्तमाह। आवृत्तिरिति। व्यवाये षडहभिन्नाहोभिः व्यवाये अन्तरिते षडहे मध्वशनस्यावृत्तिः। कालभेदात्। यथा एकपाकं कृत्वा मध्ये पूजा ततः पाके भेदः सर्वैरनुभूयते तथाऽत्रापीति। निमित्तभेदे नैमित्तिकमावर्ततइति भावः॥ ३१॥

द्वादशाहे सत्रिभिरपि मध्वशनम्। अधि० १२।

## मधु न दीक्षिता ब्रह्मचारित्वात् ॥ ३२ ॥

सत्ररूपे द्वादशाहे सर्वेषामृत्विजां दीक्षितत्वेन ब्रह्मचर्यप्राप्तम्। ब्रह्मचर्ये च मधुमांसभक्षणनिषेधात् तत्र ऋत्विजां मधुभक्षणमिति पूर्वपक्षमाह। मध्विति। भक्षयेयुरिति सूत्रे शेषः। शेषं स्पष्टम्॥ ३२॥

## प्राश्यं तु यज्ञार्थत्वात् ॥ ३३ ॥

सिद्धान्तमाह। प्राश्येति। ब्रह्मचारिणो रागप्राप्तमधुन एव निषेधः। अयं क्रत्वर्थ इति निषेधाविषय इति भावः॥ ३३॥

मानसस्य दशमाहाङ्गत्वम्। अधि० १३।

## मानसमहरन्तरं स्याद् द्वादशाहे व्यपदेशात् ॥ ३४ ॥

द्वादशाहे प्राजापत्यं मनो गृह्णातीति श्रुतम्। इदं मानसग्रहाहः द्वादशाहसंबन्धिद्वादशदिवसभिन्नं त्रयोदशमहरिति पूर्वपक्षमाह। मानसेति। व्यपदेशात्। तदर्थवादे वाग्वै द्वादशाहो मनो मानसमहरिति द्वादशदिनभिन्नत्वेन निर्देशात्। शेषं स्पष्टम्॥ ३४॥

## तेन च संस्तवात् ॥ ३५ ॥

साधकान्तरमप्याह। तेनेति। तेन मानसेनाह्ना द्वादशाहसंस्तवात्। संस्तुतिवाक्यं, द्वादशाहस्य गतरसानि छन्दांसि तानि मानसेनाप्याययन्तीति॥ ३५॥

## अहरन्ताच्च परेण चोदना ॥ ३६ ॥

साधकान्तरमाह । अहरन्तादिति । अङ्गायन्तश्चरमावयवः तस्मात्परेण परतः मानसग्रहचोदना यतः ततः भिन्नग्रहः । चोदनावाक्यं पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्तीति । द्वादशाहचरमावयवो हि पत्नीसंयाजात्मकं कर्म । यदि द्वादशाहान्तर्गतदशमाह्नो ऽङ्गं तदा पत्नीसंयाजानन्तरं मानसो ग्रहो वाच्यः । एवं सति पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त इति वचनेन पत्नीसंयाजान्तत्वविरोध इति भावः ॥ ३६ ॥

पक्षे संख्या सहस्रवत् ॥ ३७ ॥

ननु त्रयोदशाहपक्षे द्वादशाहसंज्ञा बाधितेत्यत आह । पक्षइति । अस्मिन्पक्षे द्वादशसंख्या सहस्रवत् । अतिरात्रेण सहस्रसाध्येन यजेरन्निति अधिके ऽपि सहस्रात्सहस्रशब्दो दृष्टस्तथा ॥ ३७ ॥

अहरङ्गं वां ऽशुवच्चोदना ऽभावात् ॥ ३८ ॥

सिद्धान्तमाह । अहरिति । अहः दशमाहः अङ्गं न तु पृथक्कर्म अंशुवत् । यथा अंशुं गृह्णातीति सोमयागस्यैवाभ्यासरूपः सुत्यादिवसस्यैवाङ्गं तद्वत् पृथक्चोदनाऽभावात् ॥ ३८ ॥

दशमविसर्गवचनाच्च ॥ ३९ ॥

साधकं स्वमते दर्शयति । दशमेति । एष वै दशमस्याह्नो विसर्गो यन्मानसमिति वचनात् । विसर्गः चरमावयवः ॥ ३९ ॥

दशमे ऽहनीति च तद्गुणशास्त्रात् ॥ ४० ॥

दशमे इति । दशमे ऽहनि मानसाय प्रसर्पन्तीति तस्य दशमाह्नो गुणवाचकशास्त्रात् ॥ ४० ॥

संख्यासामञ्जस्यात् ॥ ४१ ॥

संख्येति । दशमाहाङ्गत्वे सिद्धे द्वादशाहस्यत्र द्वादशत्वरूपसंख्या स्वरसा । अन्यथा गौण्या बोधनीया स्यात् ॥ ४१ ॥

पश्वतिरेके चैकस्य भावात् ॥ ४२ ॥

पश्चिति । द्वादशाहे ऐकादशिनान्विधाय तदर्थवादे शङ्कावाक्यं कथमेकादश पशवो द्वादशाहानीति पश्वतिरेके एकादशिन्यामेकस्य भावात् । एकस्यातिरिक्तत्वशङ्कातः ॥ ४२ ॥

स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं व्रतवत् ॥ ४३ ॥

तेन च संस्थादित्यस्योत्तरमाह । स्तुतीति । अङ्गेन समुदायैकदेशस्तुत्या अङ्गिनि समुदाये स्तुतिव्यपदेशस्तमप्रतिषिद्धं वदन्ति व्रतवत् । महाव्रतवत् । गवामयने चरमं महाव्रतसंज्ञं तस्य यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्त्यन्तर्वेदि मिथुनौ सम्भवतस्तेनैव मिथुनाच्च यन्ति इति । अस्यार्थः । संवत्सरसाध्ये चिरकालब्रह्मचर्येण मिथुनाद्दियुक्ताः अन्तर्वेदि मिथुनीभावेन गतं मिथुनीभावं प्राप्नुवन्तीति महाव्रतस्तुत्या संवत्सरसाध्यसत्रस्तुतिस्तथा दशमाहःशेषमानसस्तुत्या द्वादशाहस्तुतिरिति भावः ॥ ४३ ॥

वचनादतदन्तत्वम् ॥ ४४ ॥

अहरन्ताच्च परेण चोदनेत्यस्योत्तरमाह । वचनादिति । पत्नीः संयाज्य मानसाय प्रसर्पन्तीति वचनादतदन्तत्वम् । पत्नीसंयाजान्तत्वाभावो दशमस्याह्नः । संस्थावचनं तद्विषाहःस्त्विति भावः ॥ ४४ ॥

सत्रस्य बहुकर्तृकत्वम् । अधि० १४ ।

सत्रमेकः प्रकृतिवत् ॥ ४५ ॥

सत्रे कर्तैको बहवो वेति संशये पूर्वपक्षमाह । सत्रमिति । स्पष्टम् ॥ ४५ ॥

बहुवचनात्तु बहूनां स्यात् ॥ ४६ ॥

सिद्धान्तमाह । बहुवचनेति । ऋद्धिकामाः सत्रमासीरन्निति बहुवचनात् । शेषं स्पष्टम् ॥ ४६ ॥

अपदेशः स्यादिति चेत् ॥ ४७ ॥

ननु यदि धनलाभः तदा बहवो ब्राह्मणा यजेरन्नित्यत्र पृथक्कर्तृके ऽपि बहुवचनं तद्वद्बहुवचनमुपपन्नमिति शङ्कते । अपदेश इति । अपदेशः केवलं क्रियासंबन्धमभिलक्ष्य बहुवचनप्रयोगः स्यात् ॥ ४७ ॥

नैकव्यपदेशात् ॥ ४८ ॥

दूषयति । नेति । एकव्यपदेशादिति । द्वादशाहो द्विविधः । सत्ररूपः अहीनरूपश्च । इत्थं च एष ह वै कुणपमत्तिः यः सत्रे प्रतिगृह्णा-

तीत्यनेन सत्रे प्रतिग्रहं निन्दन् इतरद्वादशाहएक एव यजेतेति वचने-नैककर्तृव्यपदेशात् सत्रे बहव इति सिद्धम् ॥ ४८ ॥

## सन्निवापं च दर्शयति ॥ ४९ ॥

साधकान्तरमाह । सन्निवापमिति । सावित्राणि होष्यन्तः सन्निवपेरन्निति बहुयजमाना ये अग्नयः तेषामेकत्र मेलनं दर्शयति । अतो बहुकर्तृकम् ॥ ४९ ॥

## बहूनामिति चैकस्मिन्विशेषवचने व्यर्थम् ॥ ५० ॥

बहूनामिति । यो वै बहूनां यजमानानां गृहपतिः स सत्रस्य प्रत्येता स हि भूयिष्ठां समृद्धिमाप्नोतीति एकस्मिन् गृहपतौ बहुभिर्यजमानैः सह प्रवृत्ते फलविशेषं दर्शयति । यद्येक एव कर्ता तदेदं व्यर्थम् ॥ ५० ॥

सत्रे यजमानानामेव ऋत्विक्त्वम् । अधि० १५ ।

## अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ ५१ ॥

एवं सिद्धेषु बहुकर्तृषु ऋत्विग्विचारे पूर्वपक्षमाह । अन्यइति । स्पष्टोऽर्थः ॥ ५१ ॥

## अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगा-त्तेषां स्याद्यजमानत्वम् ॥ ५२ ॥

सिद्धान्तमाह । अपि वेति । यजमाना एव ऋत्विजः । ऋत्विजां यानि अभिधानानि नामानि तत्संयोगात् । यजमानसंस्कारवत्स्विति शेषः । अयं भावः । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीति वाक्येन ब्रह्माणमिति ऋत्विजो नाम गृहीत्वा तत्रैव दीक्षारूपं यजमानसंस्कारं विधत्ते । अतः तेषाम् ऋत्विजां यजमानत्वं स्यात् ॥ ५२ ॥

## कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५३ ॥

ऋत्विजां नाम गृहीत्वा दीक्षाविधानमृत्विक्संस्कार इति शङ्कते । कर्त्रिति । आधातृवदिति । यथा ऽऽधाने श्वो ऽग्नीनाधास्यन्स्यात्स एतां

रात्रिं व्रतं चरेदिति न मांसमश्नीयान्न स्त्रियमुपेयादिति यजमान-संस्कार ऋत्विक्संस्कारत्वेन विहितस्तथा ॥ ५३ ॥

स्याद्विशये तन्न्यायत्वात्प्रकृतिवत् ॥ ५४ ॥

दूषयति । स्यादिति । विशये संशये अन्ये वेति तन्न्यायत्वात् । अपि वा यजमानाः स्युरितिन्यायवत्त्वात् । प्रकृतिवत् । प्रकृतौ ज्योति-ष्टोमे दीक्षाकार्ये यजमानसंस्कारस्तथा ऽत्रापीति । स्यादित्यनेनाधानव-दित्यस्य वैषम्यं दर्शितम् । तथा हि द्वादशाहे दीक्षा प्रकृतितः प्राप्ता । तस्य प्रकृतौ यत्कार्यं तदेव विकृतौ भवितुमर्हति । आधाने वचनेना-पूर्वविधानात् कर्तृसंस्कार इति कल्पयितुं शक्यमिति ॥ ५४ ॥

स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥

पुनः शङ्कते । स्वाम्येति । यथा गृहपतिशब्दः योगशक्त्या यजमानपरः । एवं ब्रह्मादिशब्दा अपि कथं चिद्योगेन स्वाम्याख्याः स्युः ॥ ५५ ॥

न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥

आशङ्कामुद्धरति । नेति । क्रियाविशेषवत्स्विति शेषः । तत्र प्रसिद्धं रूढात्मकं ग्रहणं शक्तिः येषां तानि अध्वर्य्वादिपदानि तत्त्वात् । तद्धर्मेण क्रियाविशेषेणासंयुक्तस्य असंबद्धस्य यजमानस्य तत्पदवाच्यत्वं नेति योज्यम् । अयं भावः । ब्रह्मादिपदशक्यतावच्छेदकाः क्रियाविशेषास्त-द्रहितो न तेन पदेन बोधयितुं शक्यते । केवलयोगेन बोधस्तु न सम्भ-वति । रूढेर्योगापहारित्वादिति ॥ ५६ ॥

बहूनामिति तुल्येषु विशेषवचनं नोपपद्यते ॥ ५७ ॥

साधकान्तरमाह । बहूनामिति । बहूनां यजमानानां गृहपतिः सत्रस्य प्रत्येतेति श्रूयते । तत्र तुल्येषु केवलयजमानेषु ऋत्विक्कर्मरहितेषु सर्वेषु पृथग्गृहपतिरिति वचनं नोपपद्यते । मन्मते षोडशऋत्विग्यज्ञ मानोभये कर्तारः केवलयजमानक्रियाकर्ता स गृहपतिरिति वचनमुपप न्नम् ॥ ५७ ॥

दीक्षितादीक्षितव्यपदेशश्च नोपपद्यते ऽर्थयो-
र्नित्यभावित्वात् ॥ ५८ ॥

गमकान्तरमाह । दीक्षितेति । दीक्षिताः सत्रैर्यजन्ते अदीक्षिता अहीनेनेति । अत्र पूर्वपक्षिमते दीक्षितादीक्षितव्यपदेशो निर्देशो ऽनुपपन्नः । अर्थयोर्दीक्षितत्वं यजमाने ऽदीक्षितत्वमृत्विक्षु उभयं नित्यमस्ति । अतस्तेन निर्देशो व्यर्थः । सिद्धान्ते सत्रे यागकर्तृषु दीक्षितत्वमसिद्धम् । अतस्तेन रूपेण निर्देश उपपन्नः ॥ ५८ ॥

अदक्षिणत्वाच्च ॥ ५९ ॥

अदक्षिणेति । स्पष्टम् ॥ ५९ ॥

सत्राहीनयोर्विवेकः । अधि० १६ ।

द्वादशाहस्य सत्रत्वमासनोपयिचोदनेन यजमानबहुत्वेन
च सत्रशब्दाभिसंयोगात् ॥ ६० ॥

द्वादशाहवृत्ति सत्रत्वमहीनत्वं च । तयोः परिज्ञानाय लक्षणम् । प्रथमं सत्रस्याह । द्वादशेति । आसनोपयिचोदनेन, आसीरन् उपेयुरितिशब्दघटितविधिवाक्यविहितत्वेन यजमानबहुत्वेन च द्वादशाहसंबन्धि सत्रत्वं ज्ञेयम् । गावो वा एतत्सत्रमासत सप्तदशावराः सत्रमासीरन्निति वाक्ये आसनघटितेषु बहुयजमानबोधकेषु च सत्रशब्दस्य दृष्टत्वात् ॥ ६० ॥

यजतिचोदनादहीनत्वं स्वामिनां चास्थित-
परिमाणत्वात् ॥ ६१ ॥

अहीनलक्षणमाह । यजेति । स्पष्टम् ॥ ६१ ॥

पौण्डरीके सकृदेव दक्षिणादानम् । अधि० १७ ।

अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्मभे-
दात् स्यात् ॥ ६२ ॥

अहीनः पौण्डरीक एकादशरात्रः । तत्र अयुतं पौण्डरीके दद्यादिति । इयं दक्षिणा प्रत्यहं सकृद्वेति संशये पूर्वपक्षमाह । अहीन.

इति । अहीने दक्षिणाशास्त्रं प्रत्यहं प्रवर्तते । तस्या गुणत्वात् । अहरङ्गत्वात् । प्रत्यहं कर्मभेदात् ॥ ६२ ॥

सर्वस्य वैककर्म्यात् ॥ ६३ ॥

सिद्धान्तमाह । सर्वस्येति । सर्वस्य अह्नां समूहस्यैकैव दक्षिणा कर्मैक्यात् । एकादशानामभ्यासरूपत्वादिति भावः ॥ ६३ ॥

पृषदाज्यवद्वा ऽह्नां गुणशास्त्रं स्यात् ॥ ६४ ॥

पूर्वपक्षं द्रढयति । पृषदाज्यवद्वा ऽह्नामिति । अह्नां गुणशास्त्रमिदमतः प्रत्यहं पृषदाज्यवत् । यथा पृषत्त्वरूपो गुणः प्रत्यनूयाजमावर्तते तथेति ॥ ६४ ॥

ज्योतिष्टोमेऽप्यस्तु दक्षिणाः सर्वासामेककर्मत्वात्प्रकृतिवत्तस्मात्तासां विकारः स्यात् ॥ ६५ ॥

दूषयति । ज्योतिष्टोम्येति । सर्वक्रतौ दक्षिणा ज्योतिष्टोमसंबन्धिन्यः । एवं प्रकृतौ ज्योतिष्टोमे सर्वदक्षिणानां विशिष्टक्रतुसंपत्तये ऋत्विगानतिरूपैककर्मत्वं दृष्टं तथा ऽत्रापि सर्वदक्षिणानां तादृशैकफलत्वात् तासां स्वकार्येण सह प्राप्तप्राकृतदक्षिणानां विकारमात्रं स्यात् । न त्वहरङ्गत्वेन दक्षिणाविधिः । यत आवृत्तिः स्यादिति भावः ॥ ६५ ॥

द्वादशाहे तु वचनात्प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात्परेषु तासां विकारः स्यात् ॥ ६६ ॥

पौण्डरीकस्य द्वादशाहप्रकृतिकतया द्वादशाहे अन्वहं द्वादशशतं ददातीति विहितत्वेनात्रापि अन्वहं प्राप्तदक्षिणांशमयुतादिविकारमात्रमिति पूर्वपक्षमुत्थापयति । द्वादशेति । परेषु पौण्डरीकादिषु तासामहःसंबन्धिदक्षिणानाम् । शेषसूत्रं व्याख्यातप्रायम् ॥ ६६ ॥

परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ॥ ६७ ॥

सिद्धान्तं साधयति । पदीति । परिक्रयाविभागात् । ऋत्विक्परिक्रयैक्यात् समस्तस्य निखिलक्रतुदक्षिणाद्रव्यस्य विकारः स्यात् ॥ ६७ ॥

## भेदस्तु गुणसंयोगात् ॥ ६८ ॥

ननु द्वादशाहे दिवसभेदेन दक्षिणाभेदो दृष्टः तद्विकृतिभूते ऽत्र कथमैक्यमित्याशङ्क्य तत्रापि दक्षिणाभेदो गुणसंयोगान्न वास्तवो भेद इति समाधत्ते । भेदेति । द्वादशाहे दक्षिणाभेदः गुणसंबन्धात् । दिवससंबन्धात् । तत्रापि परिक्रयस्यैकत्वादिति भावः ॥ ६८ ॥

पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनम् । अधि० १८ ।

## प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ ६९ ॥

ज्योतिष्टोमे माध्यन्दिने सवने दक्षिणा नीयन्त इति वचनेन दक्षिणाया नयनरूपः संस्कारो विहितः । अयं पौण्डरीके अतिदेशेन प्राप्तः संस्कारः प्रत्यहं निखिलायाः कार्यं उत विभज्येति संशये पूर्वपक्षमाह । प्रत्यहमिति । सर्वसंस्कारः सर्वदक्षिणासंस्कारः सर्वासां दक्षिणानां सर्वशेषत्वात् । सकलमाध्यन्दिनसवनशेषत्वात् ॥ ६९ ॥

## एकार्थत्वान्नेति चेत् ॥ ७० ॥

तटस्थः शङ्कते । एकेति । न प्रत्यहं निखिलदक्षिणासंस्कारः दक्षिणाया एकार्थत्वात् । ऋत्विगानतिरूपैककार्यत्वात् । किं तर्हि इच्छया एकमाध्यन्दिने निखिलदक्षिणानयनमिति फलितम् ॥ ७० ॥

## उत्पत्तौ कालभेदात् ॥ ७१ ॥

इमं पक्षं दूषयति । उत्पत्ताविति । उत्पत्तौ स्वप्रकृतौ द्वादशाहे कालभेदात्संस्कारस्य भेदस्य दृष्टत्वादिति पूरणीयम् ॥ ७१ ॥

## विभज्य तु संस्कारो वचनाद् द्वादशाहवत् ॥ ७२ ॥

सिद्धान्तमाह । विभज्येति । विहितदक्षिणा एकादशधा विभज्य प्रत्यहं संस्कारः । यथा द्वादशाहे ऋत्विगानतिफला विशिष्टदक्षिणा

चतुश्चत्वारिंशत्सहितत्रयोदशात्मिका पूर्वदर्शितवचनादन्वहं विभज्य दीयते तथा ॥ ७२ ॥

मनोतार्थं हत्यनेन यावदर्थमन्त्रानुपादानम्। अधि० १६।

## लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वात् ॥ ७३ ॥

क्वचित्कर्मविशेषे मनोत्वचः सामिधेन्यो भवन्तीति। मानव्यो यावत्यः ग्राह्या उत परिमिता इति संशये पूर्वपक्षमाह। लिङ्गेनेति। लिङ्गेन द्रव्यस्य शब्दस्य निर्देशे क्रियमाणे सर्वत्र तल्लिङ्गवत्सर्वविषयः प्रत्ययः ज्ञानं स्यात्। लिङ्गस्य सर्वगामित्वात्। सर्वशक्तित्वात्। आग्नेयवत्। आग्नेयेन संवत्सरमिष्टका उपदधातीत्यत्र यथा यावदाग्नेयसूक्तानि गृह्यन्ते तथा ॥ ७३ ॥

## यावदर्थं वा ऽर्थे शेषत्वादतो ऽर्थेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ७४ ॥

सिद्धान्तमाह। यावदिति। यावदर्थं यावता कार्यसिद्धिर्भवति तावत्। अर्थे कार्ये शेषत्वादङ्गत्वात्सामिधेनीनामतः अर्थः कार्यं तत्प्रमाणेन समं मन्त्रपरिमाणं स्यात्। यावता कार्यनिष्पत्तिः तावत्यः पञ्चदश सप्तदश वा ग्राह्या इति भावः। तस्मिन् तावत्परिमाणके गृह्यमाणे ऽपि लिङ्गसामर्थ्यमबाधितमिति शेषः ॥ ७४ ॥

## आग्नेये कृत्स्नविधिः ॥ ७५ ॥

पूर्वपक्षे दर्शितदृष्टान्तवैषम्यं दर्शयति। आग्नेयइति। कृत्स्नविधिः निखिलमन्त्राणामङ्गत्वबोधकविधिः प्रत्यक्षवचनं प्रतिसूक्तमुपदधातीति यस्तीह नेति ॥ ७५ ॥

## ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ॥ ७६ ॥

ननु ऋजीषमप्सु प्रतिपेदित्यत्राहर्गणे एकदिवससंबन्ध्यृजीषप्रक्षेपेणापि कार्यसिद्धिः स्यात्। प्रकृतन्यायेन किंचिद्ग्रहणे बाधकाभावादत

आह । ऋजीषस्येति । अहर्गणे द्वादशरात्रादौ ऋजीषस्य अभिषवादिना गतसारसोमावापस्य द्वितीयया विभक्त्या प्राधान्यावगतेः तदङ्गं प्रक्षेपः प्रतिपत्तिसंस्कारः प्रतिप्रधानमङ्गावृत्तिन्यायेन सर्वस्य स्यात् ॥ ७६ ॥

वाससि मानोपावहरणयोरनुष्ठानम् । अधि॰ २० ।

## वाससि मानोपावहरणौ प्रकृतौ सोमस्य वचनात् ॥ ७७ ॥

ज्योतिष्टोमे सोमस्य वाससि मानं वाससोपावहरणं प्रत्यक्षवचनक्लृप्तमुत्तराधिकरणोत्थानार्थं सिद्धान्तरूपं स्मारयति । वाससीति । स्पष्टो ऽर्थः ॥ ७७ ॥

अहर्गणे ऽर्थाद् वासोऽन्तरोत्पादनम् । अधि॰ २१ ।

## तत्राहर्गणे ऽर्थाद्वासःप्रक्लृप्तिः स्यात् ॥ ७८ ॥

द्वादशाहाद्यहर्गणे चोदकप्राप्तवाससः अन्यत्र संपादनीयमिति पूर्वपक्षे सिद्धान्तमाह । तत्रेति । अर्थाद् अर्थापत्त्या ऽनुपपत्त्येत्यर्थः । वासःप्रक्लृप्तिः अन्यवासःसंपादनं स्यात् । अयं भावः । अहर्गणे तावद्दिनपर्याप्तसोमक्रयः प्रथमं जातः । प्रकृतौ क्लृप्तवाससि क्रीतः सोमो ऽस्ति ततः तत्तदहःपर्याप्तं सोमं पृथक्कृत्य वाससा उपावहरेयुः तदुपावहरणं नवीनवासःक्लृप्तिं विना ऽनुपपन्नमिति ॥ ७८ ॥

उपावहरणार्थमेव वासोऽन्तरोत्पादनम् । अधि॰ २२ ।

## मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७९ ॥

तद्वासःसंपादनं सोमक्रयानन्तरं मानकालएव कार्यमिति पूर्वपक्षमाह । मानं प्रतीति । मानं प्रति मानोपलक्षितकालएवोत्पादनीयः । प्रकृतौ येन मानं तेन वाससा हरणस्य दर्शनात् ॥ ७९ ॥

## हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ८० ॥

सिद्धान्तमाह । हरणे वेति । हरणे हरणसमये उत्पाद्यमित्यनुवर्तते मानकाले संपाद्यमिति श्रुत्या असंयोगादबोधनात् । ननु प्रकृतौ तेनैव मानसाधनवाससा हरणं किंमूलमिति चेदाह । अर्थात् । प्रकृतौ अह्नः एकत्वाद्यस्मिन्मानं तेनैव हरणे बाधकाभावादार्थिकम् । इह तु मान-

वाससः द्विवसान्तरसोमधारणे व्यावृत्तत्वेन तेन नयनासंभवाद् विकृतौ तेन संपादितवाससा हरणमार्थिकं, तच्च यस्मिन्काले प्रयोजनमपेक्षते तस्मिन्काल एव संपाद्यतइति लोकक्लृप्तो न्यायः । अतस्तत्कालइति भावः ॥ ८० ॥

इति जैमिनिसूत्रवृत्तौ दशमस्याध्यायस्य षष्ठः पादः ॥ ६ ॥

ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदः । अधि. १ ।

## पशावेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥

अस्मिन्पादे प्राधान्येन पश्वङ्गाद्यश्चिन्त्यते । अग्नीषोमीयं पशुमालभेतेत्यत्र पूर्वपक्षमाह । पशाविति । पशौ यागसाधनत्वेन श्रूयमाणे एकहविष्ट्वं समस्तस्य देवतासंबन्धचोदनात् ॥ १ ॥

## प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्कल्पनत्वात् ॥ २ ॥

सिद्धान्तमाह । प्रत्यङ्गमिति । प्रत्यङ्गं हविः । अङ्गानां हृदयादीनां पृथग् हविष्ट्वेन कल्पना यस्मात्तस्मात् । हृदयस्याग्रे ऽवद्यत्यथ जिह्वाया इत्यादितः । ग्रहवत् । यथा सोमेन यजेतेत्यनेन सोमलतायाः साधनत्वश्रुतावपि ऐन्द्रवायवं गृह्णात्यच्छ्वा धारया गृह्णातीत्यादिविधिभिः रसप्रयाज्ञा साधनत्वं तथा ॥ २ ॥

पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागानुष्ठानम् । अधि॰ २ ।

## हविर्भेदात्कर्मणो ऽभ्यासः तस्मात्तेभ्यो ऽवदानं स्यात् ॥ ३ ॥

एवमङ्गेषु हविष्ट्वे सिद्धे किं निखिलाङ्गानामवदानमुतैकादशानामिति संशये पूर्वपक्षमाह । हविर्भेदादिति । अङ्गभेदेन हविर्भेदाद् यावदवयवं कर्मणो ऽभ्यासः क्लृप्तस्तस्मात् तेभ्यः सर्वेभ्यः अवदानं स्यात् ॥ ३ ॥

## आज्यभागवद्वा निर्देशात्परिसंख्या स्यात् ॥ ४ ॥

सिद्धान्तमाह । आज्येति । एकादशाज्यभागवत् । गृहमेधीयाज्यभागाधिकरणे पञ्चमपक्षइव एकादशावदानानि इति निर्देशाद् इतरपरिसंख्या स्यात् ॥ ४ ॥

## तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः पञ्चावदानत्वात् ॥ ५ ॥

पूर्वपक्ष्याशङ्कते । तेषामिति । पशोः सर्वेषां पञ्चावत्तमिति वचनसिद्धम् एकादशेति वाक्ये यानि हृदयादीन्येकादश तानि तदनुवादेन द्विरवदानं विवक्षन् विधास्यन् इति अभिनिर्दिशेत् तात्पर्यं ज्ञेयम् । यतः पशोः पञ्चावत्तत्वं क्लृप्तम् । तथा च न परिसंख्या किं तु सर्वमवद्येयमिति भावः ॥ ५ ॥

## अंसशिरोऽनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्याने ऽनर्थकः स्यात् प्रदानन्यायत्वात्तेषां निरवदानप्रतिषेधः स्यात् ॥ ६ ॥

अत्र साधकमाह । अंसेति । यदि एकादशातिरिक्तपरिसंख्यानं तर्हि अंसादीनां तत एव व्यावृत्तत्वेन पृथक् प्रतिषेधो ऽनर्थकः स्यात् । स्वमते उपपत्तिमाह । प्रदानं न्यायसिद्धं येषां सक्थ्यादीनां तत्त्वात् । तेषां प्रदेयत्वस्य क्लृप्तत्वादिति भावः । नितरां विशेषेण अवदानम् । द्विरवदानमिति यावत् । तस्य प्रतिषेधः हृदयादीनि द्विरवद्येयानि अंसादीनि सकृदिति भावः ॥ ६ ॥

## अपि वा परिसंख्या स्यादनवदानीयशब्दत्वात् ॥ ७ ॥

सिद्धान्तसाधकं दर्शयति । अपि वेति । अनवदानीयशब्दत्वात् । वाजपेये सुराग्रहांश्चानवदानीयान्वाजसृद्भ्य इति श्रुतम् । यदि पशोरङ्गानि निखिलानि तर्ह्यनवदानीयाप्रसिद्ध्या तदनुवादो न स्यात् । परिसंख्यापत्ते उपपन्नमिति भावः ॥ ७ ॥

## अब्राह्मणे च दर्शनात् ॥ ८ ॥

साधकान्तरमाह । अब्राह्मणइति । ककुभो राजपुत्रः प्राश्नातीति अब्राह्मणे भक्षो ऽवयवविशेषस्य विहितः । यदि सर्वावयवावदानं तर्हि भक्षो विरुध्येतेति भावः ॥ ८ ॥

## श्रुताश्रुतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वं सर्वेषां न श्रपणं स्यात् ॥ ९ ॥

लिङ्गान्तरमाह । श्रुतेति । हृदयान्यङ्गान्यभिमृशति श्रुतान्यश्रुतानि चेति । तेषामश्रुतानां पर्यग्निकृतं पात्नीवतमुत्सृजतीत्यत्र यथा उत्सर्गश्रवणेनायज्ञशेषत्वाच्च श्रपणं नास्ति तथा परिसंख्यापक्षे एकादशानां श्रपणमन्येषां नेति उपपन्नम् ॥ ९ ॥

ज्योतिष्टोमे ऽग्निज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमः । अधि· ३ ।

## इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥

पशौ इज्याशेषाद् हृदयादिभ्यः स्विष्टकृत्प्रकृतिवद् दर्शपूर्णमासवदिति पूर्वपक्षः । त्र्यङ्गैः स्विष्टकृतं जुहोतीति सर्वहविर्निवृत्तिपरमिति भावः ॥ १० ॥

## त्र्यङ्गैर्वा शरवद्विकारः स्यात् ॥ ११ ॥

त्र्यङ्गैः दोःपूर्वार्धस्य गुदमध्यतः श्रोणिजघनार्धस्येति विहितैर्विकारः प्राकृतेज्याशेषबाधः शरवच्च शरैः कुशवत् ॥ ११ ॥

अध्यूध्या इडाभक्षविकारत्वम् । अधि· ४ ।

## अध्यूध्नी होतुस्त्र्यङ्गवदिडाभक्षविकारः स्यात् ॥ १२ ॥

पशौ श्रूयते । अध्यूध्नीं होत्रे हरतीति । अत्र सिद्धान्तेनारभते । अध्यूध्नीति । अध्यूध्नी तद्विषयकं शास्त्रं प्रकृतितः प्राप्तहोतृकेडाभक्षविकारः स्यात् । बाधकः स्यात् । त्र्यङ्गवत् । पूर्वाधिकरणसिद्धान्तवदिति यावत् ॥ १२ ॥

## शेषे वा समवैति तस्माद् द्रव्यवन्नियमः स्यात् ॥ १३ ॥

अनस्थिभिरिडां वर्धयतीत्यनेन शेषनिखिलमांसस्य हरणं प्राप्तम् । अनूद्याध्यूध्नीं होतृसंबन्धः पक्षे प्राप्तो नियम्यतइत्यभिप्रायवतः पूर्वपक्षिणो मतमाह । शेषे वेति । शेषे इडायां गृह्यमाणे अनस्थिभिरित्यनेन विधीयमाने हुतशेषमांसे समवैति अन्तर्भूतं तस्माद् द्रव्यवत् । वाजपेये सप्तदशरथमध्ये यजुर्युक्तो रथो ऽध्वर्योरितिवद् नियमः स्यात् ॥ १३ ॥

अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥

अनस्थिभिरिडां वर्धयतीति न विधायकं लटः श्रूयमाणत्वात् । अतो ऽध्वर्य्वोप्रापकं शास्त्रं नास्ति येन पूर्वपक्षसिद्धिः स्यादित्यभिप्रायवान् सिद्धान्त्याह । अशास्त्रत्वादिति । स्पष्टम् ॥ १४ ॥

अपि वा दानमात्रं स्याद्भक्षशब्दानभिसंबन्धात् ॥ १५ ॥

तटस्थः शङ्कते । अपि वेति । उक्तवाक्ये भक्षशब्दानभिसंबन्धादश्रवणात् । होतृसंप्रदानकं दानमात्रं विधीयते । अतो नेडाभक्षविकार इति भावः ॥ १५ ॥

दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥

सिद्धान्तं द्रढयति । दातुरिति । शेषं प्रति हुतशेषं प्रति अविशिष्टत्वात् । यजमानस्य होतुश्च समानत्वात् । समानत्वं यथा प्रपञ्चितं तृतीये । तदुपरि उभयोरपि स्वत्वाभावेन दातुरविद्यमानत्वादभावाद् दानविधिर्न संभवति किं तु भक्षविधिरिति तद्विकारः स्यात् ॥ १६ ॥

वनिष्ठोर्भक्षविकारत्वम् । अधि० ५ ।

आग्नीध्रश्च वनिष्ठुरध्यूध्नीवत् ॥ १७ ॥

वनिष्ठुमग्नीधे प्रयच्छतीत्यत्र इममेव सिद्धान्तमतिदिशति । आग्नीध्र इति । स्पष्टम् । अत्रातिदेशबीजं भाष्यादवगन्तव्यम् ॥ १७ ॥

मैत्रावरुणस्यापि शेषभक्षास्तित्वम् । अधि० ६ ।

अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥

पशौ मैत्रावरुणस्य भक्षो ऽस्ति न वेति संशये पूर्वपक्षमाह । अप्राकृतत्वादिति । अप्राकृतत्वाद् मैत्रावरुणस्य अभक्षत्वं न विद्यते भक्षो यस्येति व्युत्पत्त्या अभक्षो मैत्रावरुणस्तस्मिन् तत्त्वं, मैत्रावरुणस्य दर्शपूर्णमाससंबन्धाभावात् प्राकृतभक्षस्याप्यभाव इति भावः ॥ १८ ॥

स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसंबन्धात् ॥ १९ ॥

सिद्धान्तमाह । स्यादिति । मैत्रावरुणस्य प्रैषकर्तृत्वेनाध्वर्युविकारः अनुवचनेषु होतृविकारः तत्त्वात्तयोः होत्रध्वर्व्वोः प्राकृतकर्माभिसंबन्धादस्ति मैत्रावरुणस्य भक्ष इति ॥ १९ ॥

मैत्रावरुणस्यैकभागत्वम् । अधि० ७ ।

## द्विभागः स्याद् द्विकर्मत्वात् ॥ २० ॥

तत्रैव होतृकर्मकारित्वादध्वर्युकर्मकारित्वान्मैत्रावरुणो द्विकर्मा अतः द्विभागः स्यादिति पूर्वपक्षः ॥ २० ॥

## एकत्वादेकभागः स्याद्भागस्याश्रुतिभूतत्वात् ॥ २१ ॥

सिद्धान्तमाह । एकत्वादिति । भागस्याश्रुतिभूतत्वात् । पशौ होतुर्भागं भक्षयेद् अध्वर्युभागं चेति शास्त्राविषयत्वाद्भक्षस्य चोदकशास्त्रेण प्राप्तं भक्षणं कर्मनिमित्तं भक्षणं तत्कर्तुरेकत्वाद् एकभागः स्यात् ॥ २१ ॥

प्रतिप्रस्थातुर्भक्षाभावः । अधि० ८ ।

## प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥

पशौ प्रतिप्रस्थातुर्वपाश्रपणरूपाध्वर्युकर्मकारित्वान्मैत्रावरुणवत्प्रतिप्रस्थातुरपि हुतशेषभक्ष इति पूर्वपक्षमाह । प्रतीति । व्याख्यातप्रायम् ॥ २२ ॥

## अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥

सिद्धान्तमाह । अभक्षो वेति । प्रतिप्रस्थातुरभक्षः भक्षाभावः । तस्या वपायाः सर्वप्रदानत्वात् । सर्वं प्रदानं यस्याः तत्त्वात् । यद्द्रव्यश्रपणं तत्कर्तृकं तस्य सर्वस्य हुतत्वेन शेषाभावादिति भावः । ननु पश्वङ्गवपाहोमानां निखिलानामेककर्मत्वेनैकापूर्वजनककर्मकर्तृत्वं प्रतिप्रस्थातुरस्तीत्यत आह । कर्मभेदादिति । शब्दान्तराभ्यासाभ्यामिति शेषः ॥ २३ ॥

आज्यभागौ यजतीत्यनेनापूर्वग्रहमेधीयाज्यभागविधानम् । अधि० ९ ।

## विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनः श्रुतिरनर्थकः स्यात् ॥ २४ ॥

चातुर्मास्ये गृहमेधीये आज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्त-रेतीति श्रुतम् । अत्र नानापक्षानुत्थाप्य निराचिकीर्षुः आद्यपक्षमाह । विकृताविति । विकृतौ गृहमेधीये प्राकृतस्य दर्शपूर्णमासस्य विधेः आज्यभागविधेः पुनर्ग्रहणाच् श्रुतिः प्रकृतवाक्यमनर्थकमनुवादरूपं स्यात् ॥ २४ ॥

अपि वा ऽऽग्नेयवद् द्विशब्दत्वं स्यात् ॥ २५ ॥

पक्षान्तरमुत्थापयति । अपि वेति । संभवति सार्थकत्वे निरर्थक-त्वकल्पनमनुचितमिति पूर्वकल्पे अपि वेत्यनेनास्वरसः सूचितः । द्विशब्द-त्वमेकशाब्दबोधजनकैकार्थकशब्दद्वयं स्यात् । द्वाभ्यां मिलित्वैकः शाब्द-बोधः । तथा च नानर्थक्यम् । यथा ऽग्निमग्नआवहेत्यत्र द्वाभ्यामग्नि-शब्दाभ्यामेको बोधः तथा चोदकशास्त्रेण प्रत्यक्षशास्त्रेण च मिलित्वा एको बोधः । स चेत्थं, प्रकृतिवत्कर्त्तव्यं तत्र सादृश्यं केन रूपेणेत्याका-ङ्क्षायामाज्यभागवत्त्वेन सदृशं कार्यमिति दर्शपूर्णमासधर्मप्रापकं लिङ्ग-मिति फलितम् ॥ २५ ॥

न वा शब्दपृथक्त्वात् ॥ २६ ॥

यश्चोपदर्शितो ऽग्निशब्दद्दृष्टान्तः स विषमः संबोधनान्त आवा-ह्यग्निपरः द्वितीयान्तेन वोढव्यो ऽग्निरुच्यते । भिन्नार्थकाविमौ प्रकृते न तथेति न पूर्वपक्षसिद्धिरिति पुनः प्रत्यक्षपाठः आज्यभागस्तुत्यर्थमित्यभिप्रा-येण तृतीयपक्षमाह । न वेति । अशब्दपृथक्त्वात् । अभिन्नार्थकाद् न पूर्वपक्षः ॥ २६ ॥

अधिकं वा ऽर्थवत्त्वात्स्यादर्थवादगुणाभावे वचनादवि-कारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥

दर्शपूर्णमासप्रकरणस्थाज्यभागविधेः गृहमेधीयप्रकरणे स्तुतिरसा-म्प्रतमित्यभिप्रायेण तुरीयं पक्षमाह । अधिकमिति । अधिकं प्राकृताद-धिकं विधीयते । आमनहोमवत् । कुतः अर्थवत्त्वात् । कार्यसाधनत्व-बोधकत्वात् । नन्वेतावता स्तुतिगुणविधिप्राकृतधर्मबाधरूपार्थवत्त्वमस्तु

किमधिककल्पनेनेत्यत आह । अर्थवादगुणाभावे अविकारे च सति वच-नात् । अर्थवादश्च गुणश्चेति द्वन्द्वः । अर्थवादासंभवश्च दर्शितः । अप्सु-मन्तावाज्यभागावित्यत्र गुणविधानाद्वचनमर्थवद्यथा तथा प्रकृते गुणा-भावः । शरादिवत्प्राकृतधर्मबाधकतया वचनमर्थवद्वाच्यं तदभावे च सति आज्यभागौ यजतीति वचनादर्थवत्त्वकल्पनम् । एमर्थवत्त्वेसिद्धे क्लृप्तार्था-भावादप्राकृतापूर्वसाधनमधिकं कर्म भवितुमर्हति । ननु अप्सुमन्तावाज्य-भागावित्यत्राप्यधिकं स्यादत आह । तेष्वित्यादि । तेषु स्तुतिगुणविधि-प्राकृतधर्मबाधेषु सत्सु हि तेषामपूर्वत्वात् तदर्थता तदर्थतात्पर्यकता स्यात् । प्रकृते तेष्वन्यतमाभावादधिकमिति भावः ॥ २७ ॥

## प्रतिषेधः स्यादिति चेत् २८ ॥

तुरीयपक्षो न समीचीनः आज्यभागौ यजतीत्यस्य महाग्निहोत्र-वद् आज्यभागधर्मकं कर्म कुर्यादिति लक्षणापत्तेरतः आज्यभागातिरिक्तं न कुर्यादिति निषेधाभिप्रायमिति पञ्चमं पक्षमुपस्थापयति । प्रतिषेध इति । स्पष्टम् ॥ २८ ॥

## नाश्रुतत्वात् ॥ २९ ॥

परिसंख्यायां दोषत्रयं दर्शयन् षष्ठपक्षमाह । नेति । द्वाभ्यां न पञ्चमः अश्रुतत्वात् । अश्रुतकल्पनापत्तेरित्यर्थः । इदं स्वार्थत्यागप्राप्त-बाधोपलक्षणम् ॥ २९ ॥

## अग्रहणादिति चेत् ॥ ३० ॥

तर्हि वाक्यस्य का गतिरत आह । अग्रहणादिति । चोदक-शास्त्रेणेति शेषः । अयं भावः । आज्यभागयोः प्रत्यक्षश्रुतत्वाच्चोदकशास्त्र-मेतदतिरिक्ताङ्गकलापमेव प्रापयति । एतद्ग्रहणं न करोतीति ॥ ३० ॥

## न तुल्यत्वात् ॥ ३१ ॥

इमं पक्षं दूषयति । नेति । तुल्यत्वात् सर्वधर्मप्रापकवाक्यस्य प्रकृतिवदित्यस्य तुल्यत्वात् । यदि पृथग्वाक्यप्रापिता धर्माः तदा भवेदेवम् एकवाक्यप्रापिते ग्रहणाग्रहणासंभवादिति भावः ॥ ३१ ॥

## तथा तद्ग्रहणे स्यात् ॥ ३२ ॥

ननु यथा सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्याधीतस्य अच्छर-कल्पासन्निधौ पठितसप्तदशसामिधेनीरन्वाहेति विधावुपसंहारः तथा प्रकृतिवदित्यस्य आज्यभागरूपविशेषधर्मावच्छिन्नउपसंहार इति सप्तमं पक्षमुत्सूत्रमाशङ्क्य निराकरोति । तथेति । यथा सप्तदशसामिधेनीस्थले वाक्यद्वयं प्रत्यक्षं तथा तद्ग्रहणे आज्यभागग्रहणे सति पूर्वोक्तं स्यात् । इह तु चोदकशास्त्रमानुमानिकमिति वैषम्यमिति भावः ॥ ३२ ॥

अपूर्वतां तु दर्शयेद्ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥

सिद्धान्तमाह । अपूर्वेति । तद्ग्रहणस्याज्यभागग्रहणस्यार्थवत्त्वात् । सफलत्वात् । अपूर्वतां दर्शपूर्णमासप्रकृतिकभेदं दर्शयेत् ॥ ३३ ॥

गृहमेधीये स्विष्टकृदाद्यनुष्ठानम् । अधि० १० ।

ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥

तर्हि यथाऽऽज्यभागश्रवणं तथैव स्विष्टकृदिडाभक्षणं च श्रूयते अत्रैकेनाकाङ्क्षानिवृत्तेर्विकल्प इति पूर्वपक्षे सिद्धान्तमाह । तत इति । ततः कथंभावाकाङ्क्षानिवारकतया युगपदन्वितत्वाद्यावदुक्तं सर्वं स्यात् । अन्यथा प्रकृतौ प्रयाजानूयाजयोर्विकल्पापत्तेरिति भावः ॥ ३४ ॥

गृहमेधीये प्राशित्रादिभक्षणाभावः । अधि. ११ ।

स्विष्टकृति भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् ॥ ३५ ॥

आज्यभागौ यजतीति परिसंख्येति पक्षमङ्गीकृत्य चिन्त्यते । तत्र-सिद्धान्तसूत्रम् । स्विष्टकृति श्रूयमाणे इति शेषः । भक्षप्रतिषेधः निवृत्तिः तुल्यकारणत्वात् । एकफलजनकत्वात् । अयं भावः । येन वाक्येनेतर-निवृत्तिः प्रतीयते तत्र समानजातीयमेव निवर्तते । आज्यभागवाक्येन सजातीयहोममात्रनिवृत्तिः कृता स्विष्टकृद्वाक्यं सजातीयभक्षं निवर्त-यति उभयोरपि शेषप्रतिपत्तिरूपसंस्कारफलत्वादिति ॥ ३५ ॥

अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥ ३६ ॥

पूर्वपक्षमुत्थापयति । अप्रतिषेधो वेति । इडायां भक्षस्य दर्श-नात् । यथा स्विष्टकृत्स्वसजातीयं व्यावर्तयत्येवं भक्षविधिः स्वसजातीयं व्यवस्थापयतीति भावः ॥ ३६ ॥

प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३७ ॥

सिद्धान्तं द्रढयति । प्रतिषेधो वेति । विधिः पूर्वं यस्य स विधिपूर्वः तस्य दर्शनाद् विधानात् । अयं भावः । प्रथमं चोदकशास्त्रेण हविःशेषप्रतिपत्तिसामान्यप्राप्तिः पश्चात्स्विष्टकृद्विधिना परिसंख्या स्वातिरिक्तनिवृत्तौ पुनरिडाविधिः तावन्मात्रे ऽभ्यनुज्ञारूपः नेतरप्रापक इति ॥ ३७ ॥

प्रायणीयातिथ्ययोः शंय्विडान्तत्तानियमः । अधि॰ १२ ।

शंय्विडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनूयाजप्रतिषेधो ऽनर्थकः स्यात् ॥ ३८ ॥

शंय्वन्ता प्रायणीया संतिष्ठते न पत्नीः संयाजयन्तीति । इडाऽन्ता ऽऽतिथ्या नानूयाजैश्चरन्तीति । अत्र पूर्वपक्षमाह । शंय्विति । शंय्विडान्तत्वे एतत्प्रतिपादकवाक्यद्वये परेषु शंय्विडोत्तरवर्तिकर्मसु विकल्पः विकल्पतात्पर्यम् । तथा च विकल्पेनानुष्ठानपक्षे पत्नीसंयाजानूयाजप्राप्त्या अग्रिमेण तत्पर्युदासः स्यात् । यदि शंय्वन्तत्वमिडान्तत्वं नियतं तर्हि तदुत्तरवृत्तिपत्नीसंयाजानूयाजयोः प्राप्त्यभावेन पत्नीसंयाजादिविषयनिषेधो ऽनर्थकः स्यात् ॥ ३८ ॥

नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ॥ ३९ ॥

सिद्धान्तमाह । नित्येति । शय्वन्तेत्यनेन पत्नीसंयाजाभावस्य क्लृप्तत्वान्नान्तरिक्षे चिन्वीतेतिवन्नित्यानुवादः स्यात् । कर्मणः शंयूत्तरकर्मणः अशब्दत्वात् । अविहितत्वात् ॥ ३९ ॥

प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां संस्थानम् । अधि॰ १३ ।

प्रतिषेधवचोत्तरस्य परस्तात् प्रतिषेधः स्यात् ॥ ४० ॥

दर्शपूर्णमासयोः एकः शंयुर्गार्हपत्ये परः । एक आहवनीये प्रथमः । एवमिडाद्वयं श्रूयते । तत्र शंय्वन्तेत्यनेन को वा शंयुर्ग्राह्यः केडेति संशये पूर्वपक्षमाह । प्रतीति । उत्तरस्य द्वितीयस्य गार्हपत्यसंबन्धिनः परस्ताद्यानि प्राकृतकर्माणि तेषां प्रतिषेधः स्यात् । एवं सति प्रतिषेधवत् प्रतिषेधप्रतिपादकवचनम्, अर्थवद्भवतीति शेषः । पत्नीसं-

याजानूयाजयोरुत्तरत्वविडापूर्वदेशत्वेन परिसंख्याऽभावात्प्राप्ते निषेधः सफल इति भावः ॥ ४० ॥

## प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥ ४१ ॥

सिद्धान्तमाह । प्राप्तेरिति । वचनात् शय्वन्तेति वचनात् प्रथमशंयोः उपरमनिमित्तस्य प्राप्तेः उक्तवाक्ये शंयुपदेन पूर्वस्य ग्रहणमन्यथा निमित्तातिक्रमः स्यात् । अयं भावः । शय्वन्तेति वाक्येन प्रायणीयां कुर्यादित्यनेन च यदि शंय्वन्ताङ्गकलापद्वारा प्रधानयागेन प्रायणीयाऽपूर्वं भावयेदिति बोधः कथंभावाकाङ्क्षाया गृहमेधीयाज्यभागवत् तेनैव निवृत्तत्वाच्चोदकशास्त्रं न प्रवर्तते इति पत्नीसंयाजप्राप्त्यभावात् निषेधो व्यर्थ एवेति श्रुतिं परित्यज्य वाक्यविध्यनुसरणं व्यर्थम् । तस्मात्पर्यग्निकृतं पात्नीवतमुत्सृजतीतिवदङ्गोतिविधिमपहायैकपदश्रुत्या संपूर्णकस्याधात्वर्थ उपरम एव शंयुवाके निमित्ते विधीयते । चोदकशास्त्रेण निखिलाङ्गप्राप्तौ उक्तनिमित्ते सत्युपरमविधाने शेषनिवृत्तिर्योपिद्धा । तथा च निमित्तं हि उपरमे शंयुवाकः । तत्र विशेषाश्रवणात्प्रथमोऽपि । निमित्तप्राप्तौ नैमित्तिकोपरमाकरणे निमित्तातिक्रमः स्यादिति ॥ ४१ ॥

## प्रतिषेधस्य त्वरायुक्तत्वात्तस्य च नान्यदेशत्वम् ॥ ४२ ॥

उक्तार्थे साधकतया लिङ्गमपि दर्शयति । प्रतिषेधस्येति । तस्य विवक्षितशंयुवाकस्य अन्यदेशवृत्तित्वं पत्नीसंयाजोत्तरदेशवृत्तित्वं नेष्टम् । प्रतिषेधस्य त्वरायुक्तत्वात् । अयं भावः । देवासुरा युद्धार्थं सन्नद्धाः । तत्र स्वजयाय अज्ञातेन्द्रज्ञानार्थं च प्रायणीयादीष्टीः असुरा आगमिष्यन्तीति भीत्या त्वरया समाप्यर्थं खण्डाश्चक्रुरिति ब्राह्मणे ऽर्थवादः श्रूयते । तत्र त्वरया सम्पादनं प्रथमशंयुवाकग्रहणे स्वरसतरम् ॥ ४२ ॥

षडुपसद इत्यादिना ऽपूर्वोपसत्कर्मविधानम् । अधि० १४ ।

## उपसत्सु यावदुक्तमकर्म स्यात् ॥ ४३ ॥

उपसत्सु श्रूयते । अप्रयाजास्ता अननूयाजा इति । अत्र प्रयाजानूयाजनिषेधात् चोदकशास्त्रं प्रवृत्तमिति सिद्धम् । तथा च निषिद्धं त्यक्त्वा

प्राकृतं यावत्कर्म कर्तव्यमित्यभिप्रायेण पूर्वपक्षमाह । उपसत्स्विति । अत्र चोदकशास्त्रेणेति प्रतिषिद्धस्येति पदद्वयं पूरणीयम् । तथा च चोदकेन उक्तं यावत् स्यात् प्रतिषिद्धस्य प्रयाजादेरकर्म अननुष्ठानम् ॥ ४३ ॥

स्रौवेण वा ऽगुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४४ ॥

सिद्धान्तमाह । स्रौवेणेति । उपसत्प्रकरणे यावच्छ्रुतं तदतिरिक्त-शेषप्रतिषेधः स्यात् । स्रौवेण स्रुवेण आघारमाघारयतीतिवाक्यश्रवणेन आज्यभागवचनवत् । ननु गुणविधाने चरितार्थं किं न भवेदत आह । अगुणत्वात् । अप्राकृतगुणबोधकत्वात् ॥ ४४ ॥

अप्रतिषेधो वा प्रतिषिध्य प्रतिप्रसववत् ॥ ४५ ॥

स्रुवेणाघारमित्यस्य पूर्वपक्षस्यान्यथा सार्थक्यं दर्शयति । अप्रति-षेध इति । स्रुवेणेति वाक्यं प्रतिषिध्य प्रतिप्रसवरूपम् । तथा हि नान्या-माहुतिं पुरस्ताज्जुहुयादिति उपसत्प्रधानहोमात्प्राग् होमसामान्यनि-षेधः । ततः स्रुवेणाघारमाघारयतीति अस्य प्रतिप्रसव इति न वाक्य-वैयर्थ्यमतः शेषस्याप्रतिषेधो ऽनेन वाक्येन ॥ ४५ ॥

अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४६ ॥

सिद्धान्तं दृढयन्, नान्यामाहुतिमित्यस्य तात्पर्यमन्यथा दर्शयति । अनिज्या वेति । शेषस्य अश्रूयमाणप्राकृतहोमानामनिज्या अकरणं स्रुवे-णाघारमाघारयतीति वाक्यवैयर्थ्यापत्तेः । ननु दर्शिता वाक्यगतिरत आह । मुख्येति । नान्यामाहुतिमित्यस्य मुख्या या अग्निसोमविष्णुरूपा देवताः तत्संप्रदानकाहुतिमध्ये अन्यतिरिक्तदेवताकाहुतेरेव प्राथम्यनिषे-धतात्पर्यकत्वात् । सूत्रे मुख्यदेवतेत्यत्र मुख्याग्निभिन्नदेवतार्थकं तस्या या इज्या प्रथमेज्या मुख्यदेवता ऽनभीज्या तात्पर्यं न विद्यते यस्मि-न्वाक्ये तस्वादिति सूत्रं योज्यम् । वाक्यस्येदृशतात्पर्यनिर्णायकबीजं तन्त्र-रत्नादवगन्तव्यं विस्तरभयान्नेह लिख्यते ॥ ४६ ॥

वारुणेनैककपालेनेत्यादिना ऽपूर्वस्यावभृथस्य विधानम् । अधि० १५ ।

अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात् ॥ ४७ ॥

अवभृथे अपबर्हिषः प्रयाजान्यजतीति श्रुतम् । अत्र चोदकशास्त्रं यदि प्रथमं न प्रवृत्तं तर्हि बर्हिषः प्राप्त्यभावादपबर्हिष इत्यनर्थकम् अतः चोदकशास्त्रं प्रवर्ततइत्यभिप्रायेण पूर्वपक्षमाह । अवभृथइति । शेषकर्म बर्हिर्भिन्नं प्राकृतं कर्म ॥ ४७ ॥

**आज्यभागयोर्वा गुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४८ ॥**

परिसंख्यापक्षमाह । आज्येति । आज्यभागयोः गुणत्वाद् गुणत्वश्रवणाद् अवभृथएवाज्यभागौ यजतीति श्रवणाच्छेषप्रतिषेधः ॥ ४८ ॥

**प्रयाजानां त्वेकदेशप्रतिषेधवाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात् ॥ ४९ ॥**

परिसंख्यापक्षे दोषं वदन्पूर्वपक्षं संपादयति । प्रयाजानामिति । प्रयाजानामेकदेशो बर्हिः तस्य यः प्रतिषेधः तद्बोधकवाक्यस्य शेषत्वं विधित्वं, नावकल्प्यते इति शेषः, परिसंख्यापक्षे । अतः नित्यानुवादरूपता स्यात् । अयं भावः । आज्यभागौ यजतीत्यनेनेतरनिषेधे प्रयाजस्यापि निषेधः । तथा सति अपबर्हिष इति वाक्यं बर्हिष्प्रतिषेधं प्रयाजविधिं च करोतीति वाच्यम् । तथा च वाक्यं भिद्येत । मत्पक्षे चोदकशास्त्रेण प्राप्तप्रयाजानुवादेन बर्हिष्प्रतिषेधमात्रमिति लाघवम् । तस्मादाज्यभागौ यजतीति चोदकप्राप्तस्य नित्यानुवादरूप इति ॥ ४९ ॥

**आज्यभागयोर्ग्रहणं नित्यानुवादो वा गृहमेधीयवत्स्यात् ॥ ५० ॥**

सिद्धान्तमाह । आज्येति । अत्र वाशब्दो नञर्थे । आज्यभागग्रहणं न नित्यानुवादः । किं तु गृहमेधीयवत्स्यात् । अत्रापि यावदुक्तं, न चोदकप्रवृत्तिः । अपबर्हिष इत्यनेन बर्हिर्भिन्नप्रयाजा अपूर्वं विधीयन्त इति न को ऽपि दोषः ॥ ५१ ॥

वाजपेयादौ यूपादीनां खादिरत्वादिनियमः । अधि० १६ ।

**विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् ॥ ५१ ॥**

त्रैधातवीयायां श्रूयते । यवमयो मध्य इति । अस्यार्थः । बहूनां पुरोडाशानां मध्ये मध्यमः पुरोडाशो यवमयः कार्य इति । अत्र पक्षे प्रकृतितः प्राप्तयवानुवाद उत प्राकृतं विकल्पं बाधित्वा नियमविधिरिति संशये सिद्धान्तमाह । विरोधिनामिति । विरोधिनां प्रकृतौ विकल्पितानामेकस्य श्रुतौ नियमः स्यात् । ग्रहणस्य एकग्रहणशास्त्रस्य अर्थवत्त्वात् सफलत्वात् । श्रुतितः श्रुत्या पक्षश्रुत्या विशिष्टाः प्रबला यवाः । अतः शराः कुशानिव चोदकतः पक्षे प्राप्तान् व्रीहीन् बाधेरन् ॥ ५१ ॥

## उभयप्रदेशादिति चेत् ॥ ५२ ॥

पूर्वपक्ष्याशङ्कते । उभयेति । आगतयोः द्वयोः कथमेकबाधकत्वमिति पूरणीयं सूत्रे । उभयप्रदेशात् प्रकृते व्रीहियवरूपोभयप्रदेशात् ॥ ५२ ॥

## शरेष्वपीति चेत् ॥ ५३ ॥

सिद्धान्ती शरेण कुशबाधः कथमिति पृच्छति । शरेष्वपीति ॥ ५३ ॥

## विरोध्यग्रहणात्तथा शरेष्वपीति चेत् ॥ ५४ ॥

पूर्वपक्षी शरस्थले उपपत्तिमाह । विरोध्यग्रहणादिति । प्रकृतौ कुशविरोधिशराणामग्रहणात्तयोर्विकल्पाभावादिति भावः । शरेषु तथा कुशबाधकत्वम् ॥ ५४ ॥

## तथोत्तरस्मिन् ॥ ५५ ॥

ननु प्रकृतौ विरोध्यग्रहणं न बीजं किं तु विकृतौ विरोधिग्रहणं तच्च कुशविरोधिशरइव व्रीहिविरोधियवे तुल्यमित्यभिप्रायेण सिद्धान्ती चोदयति । तथेति ॥ ५५ ॥

## श्रुत्यानर्थक्यमिति चेत् ॥ ५६ ॥

ननु प्रकृतौ श्रूयमाणव्रीहिविरोधियवग्रहणेनैव व्रीहिबाधे यवमयो मध्य इतिश्रुत्यानर्थक्यमिति पूर्वपक्षी शङ्कते । श्रुतीति ॥ ५६ ॥

## ग्रहणस्यार्थवत्त्वादुभयोरप्रवृत्तिः स्यात् ॥ ५७ ॥

यवमयो मध्य इत्यस्य नियमविधानरूपार्थवत्त्वाद् व्रीहियवयोरुभयोः प्रवृत्तिर्नेति समाधत्ते । ग्रहणस्येति । ग्रहणस्य यवग्रहणस्य ॥ ५७ ॥

काम्येष्टिषु प्राकृतद्रव्यदेवतस्य निवृत्तिः । अधि० १७ ।

सर्वासां च गुणानामर्थवत्त्वाद्ग्रहणमप्रवृत्ते स्यात् ॥ ५८ ॥

ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इत्यत्र प्राकृतद्रव्यदेवते निवृत्ते उत नेति संशये सिद्धान्तेनोपक्रमते । सर्वासामिति । सर्वासां काम्येष्टिसंबन्ध्युत्पत्तिचोदनानां काम्यकाण्डोत्पत्तिविधीनामिति यावत् । गुणानां देवतादीनामर्थवत्त्वात्तत्तत्फलभावनया संबद्धत्वात् । चोदकदेवताद्रव्ययोराकाङ्क्षाऽभावेनाप्रवृत्तेः । तद्ग्रहणं वैकृतद्रव्यदेवताग्रहणं स्यात् ॥ ५८ ॥

अधिकं स्यादिति चेत् ॥ ५९ ॥

समुच्चयं प्राकृतवैकृतयोराशङ्कते । अधिकमिति ॥ ५९ ॥

नार्थाभावात् ॥ ६० ॥

नेति । अर्थस्य आकाङ्क्षाया अभावात् । न समुच्चयः ॥ ६० ॥

सोमापौष्णपशौ खादिरयूपस्य नियमः । अधि० १८ ।

तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पः स्यात् ॥ ६१ ॥

क्वचिद् औदुम्बरो यूपो भवतीति । तत्र खादिरौदुम्बरयोः समुच्चय उत प्राकृतबाध इति संशये सिद्धान्तमाह । तथेति । यथा पूर्वाधिकरणे प्राकृतदेवताबाधस्तथा एकार्थविकारे एकफलकप्राकृतखादिरद्रव्यविरुद्धौदुम्बरद्रव्यविधौ सति प्राकृतस्य खादिरस्याप्रवृत्तिः । प्रवृत्तावनिष्टमाह । प्रवृत्तौ विकल्पापत्तेः ॥ ६१ ॥

यावच्छ्रुतीति चेत् ॥ ६२ ॥

विकल्पदोषमुद्धरति पूर्वपक्षी । यावच्छ्रुतीति । चोदकश्रुतं प्रत्यक्षश्रुतं द्वयं ग्राह्यं, तथा च न विकल्प इति भावः ॥ ६२ ॥

न प्रकृतावशब्दत्वात् ॥ ६३ ॥

दूषयति । प्रकृताविति । विकृतावित्यस्याप्युपलक्षणम् । इत्थं च प्रकृतौ विकृतौ च अशब्दत्वात् । अविहितत्वात् । प्रकृतौ खादिरे पशुनि-

योजनं विहितं, विकृतौ चौदुम्बरे, उभयत्र नियोजनं शास्त्रद्वयविरुद्धमिति भावः ॥ ६३ ॥

ब्रह्मवर्चसकामैर्व्रीहिभिरेव यागः । अधि० १९ ।

## विकृते त्वनियमः स्यात्पृषदाज्यवद्ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद्गुणशास्त्रं यदेति स्यात् ॥ ६४ ॥

अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणामिति श्रुतम् । अत्र व्रीहिभिरेव यागः उत व्रीहियवान्यतरेणेति संशये पूर्वपक्षमाह । विकृते इति । विकृतौ विरोधिनामन्यतरस्मिन् गृह्यमाणे अनियमः व्रीहियवयोः स्यात् । प्रकृतवाक्ये ग्रहणस्य व्रीहिग्रहणस्य गुणार्थत्वात् । कृष्णरूपगुणविध्यर्थत्वात् । यथा पृषदाज्येनानूयाजान्यजतीत्यत्राज्यग्रहणं गुणविध्यर्थं तथा व्रीहिग्रहणस्य नियमार्थत्वाभावात् । उभयोर्व्रीहियवयोः प्रदिष्टत्वात् । चोदकशास्त्रेण प्राप्तत्वात् । गुणशास्त्रं कृष्णानां व्रीहीणामिति शास्त्रं यदा यस्मिन्काले व्रीहिशास्त्रं तदा स्यात् । यवशास्त्रप्रवृत्तौ बाधान्न प्रवर्ततइति भावः ॥ ६४ ॥

## ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ६५ ॥

सिद्धान्तमाह । ऐकार्थ्यादिति । ऐकार्थ्यात् पुरोडाशरूपैककार्यार्थं प्रवृत्तयोः व्रीहियवयोर्मध्ये श्रुतितः प्रत्यक्षश्रवणेन विशिष्टत्वात् । आनुमानिकयवशास्त्रप्राप्तयवापेक्षया बलवत्त्वात् । नियम्येत । व्रीहीणामयोगव्यवच्छेदं कुर्यात् । ननु व्रीहीणामनुवादो गुणार्थमित्युक्तं प्राक् । तथा च तद्विधेरभावात् तद्विधिः प्रत्यक्ष इति कथनं संदर्भविरुद्धमिति चेन्न । फलोद्देशेन यागविधिः तत्रैव व्रीह्युद्देशेन गुणविधौ वाक्यं भिद्यते । तस्माद्गुणद्रव्यविशिष्टयागविधिरित्येव वाच्यम् । तथा च न काऽप्यनुपपत्तिर्नियमविधौ व्रीहिनियमे यवा वर्तन्तएव ॥ ६५ ॥

## विरोधित्वाच्च लोकवत् ॥ ६६ ॥

साधकान्तरमाह । विरोधित्वादिति । एकस्मिन्कार्ये ये कल्पेन साधकाः ते परस्परं विरोधिनः तेषां न सह प्रवृत्तिः विरोधित्वात् । लोकव्यवहारो दृष्टान्तः ॥ ६६ ॥

## क्रतोश्च तद्गुणत्वात् ॥ ६७ ॥

ननु व्रीहीणां विकारेण संबन्धे कथं गुणेनापि संबन्धः। विरुद्धत्रिकद्वयापत्तेरत आह। क्रतोरिति। प्राथमिकबोधवेलायां कृष्णत्वं न व्रीहिगुणः प्रतीयते निखिलगुणविशिष्टक्रतुविधानात्। क्रतोः तद्गुणत्वं सः कृष्णत्वं गुणः विशेषणं यस्य तत्त्वात्। व्रीहिगुणताबोधस्य पार्ष्ठिक इति नोक्ताशङ्कावकाश इति भावः* ॥ ६७ ॥

## पृषदाज्ये समुच्चयाद् ग्रहणस्य गुणार्थत्वम् ॥ ६८ ॥

ननु पृषदाज्यस्थले ऽपि आज्यग्रहणं गुणार्थं न स्यादत आह। पृषदाज्यइति। पृषदाज्ये दधिघृतयोः समुच्चयात्। उक्तवैषम्येण ग्रहणस्य आज्यग्रहणस्य गुणार्थत्वम्† ॥ ६८ ॥

## क्रत्वन्तरे वा ऽतन्न्यायत्वात्कर्मभेदात् ॥ ६९ ॥

ननु यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्येत्यत्र उक्तयुक्त्या चतुरवत्तिग्रहणं गुणार्थं न स्यादित्यत आह। क्रत्वन्तरइति। क्रत्वन्तरे दर्शपूर्णमासयोश्चतुरवत्तं पञ्चावत्तं च क्रत्वन्तरे पशौ उभयोः कर्मभेदात्। अतन्न्यायत्वात्। विरोधित्वाच्च लोकवदिति न्यायस्याप्रसरात् ॥ ६९ ॥

पञ्चावत्तैव वपा कार्येत्यनेनाङ्गेष्वपि पञ्चावत्तविधानम्। अधि॰ २०।

## यथाश्रुतीति चेत् ॥ ७० ॥

चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्येति। अत्र वपायामेव पञ्चावत्तत्वमुत अङ्गहोमे ऽपीति संशये पूर्वपक्षमाह। यथेति। वपायामेव पञ्चावत्तश्रवणाद् यथाश्रुति कार्यमिति ॥ ७० ॥

## न चोदनैकत्वात् ॥ ७१ ॥

सिद्धान्तमाह। नेति। चोदनैकत्वात्। यदग्नीषोमीयं पशुमालभेतइत्येकचोदनाविहितयागरूपत्वाद्वपाङ्गयागयोः। अयं भावः। पञ्चा-

---

* इत उत्तरं, विरोधिनां च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात्, इति सूत्रं शाबरभाष्ये ऽधिकं दृश्यते।

† यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते इति शाबरभाष्यपुस्तके सूत्रत्वेनाधारि।

वत्तैव वपा कार्येत्यत्र न संख्याविशिष्टवपासंबन्ध्यवदानं विधीयतइति शक्यते वक्तुम् । अवदानस्य प्रकृतितः प्राप्तत्वात् । नापि वपासंबन्ध्यवदानमुद्दिश्य पञ्चसंख्या विधातुं शक्यते, विशिष्टोद्देश्यत्वे वाक्यभेदप्रसङ्गात् । अतः केवलावदानमुद्दिश्य पञ्चसंख्याविधिः । प्रकरणात्प्रकृतयागसंबन्धीति लभ्यम् । प्रकृतौ यो यदग्नीषोमीयमित्यनेन विहितो यागः तत्संबन्ध्यवदानं पञ्चावत्तं संपादयेदिति फलितम् । यदग्नीषोमीयवाक्यविहितयागस्याभ्यासरूपो वपायागो ऽङ्गयागश्च । तस्माद्वपायागे ऽङ्गयागे च पञ्चावत्तमिति । एवकारस्य वपापदस्योच्चारणफलमाकरे ज्ञेयम् । विस्तरभयान्नेह लिख्यते ॥ ३१ ॥

इति जैमिनिसूत्रवृत्तौ दशमस्याध्यायस्य सप्तमः पादः ॥ ७ ॥

प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासत्वम् । अधि० १ ।

## प्रतिषेधः प्रदेशे ऽनारभ्यविधाने प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ॥ १ ॥

अस्मिन्पादे नञर्थविचारः प्राधान्येन क्रियते । महापितृयज्ञे नार्षेयं वृणीतइति । एवमनारभ्य यजतिषु येयजामहं करोति नानूयाजेष्विति । अत्र विकल्प एककल्पो वेति संशये पूर्वपक्षमाह । प्रतिषेध इति । प्रतिषेधः प्रदेशे पितृयज्ञसमीपे प्रदेशेन चोदकेनेति यावत् । आर्षेयवरणविधाने अनारभ्य पठिते यजतिष्विति वाक्ये येयजामहविधाने द्वाभ्यां प्रत्यक्षातिदेशशास्त्राभ्यां प्राप्तस्य प्रतिषिद्धरूपत्वाद्विकल्पः स्यात् ॥ १ ॥

## अर्थप्राप्तवदिति चेत् ॥ २ ॥

एतत्पक्षोपरि अत्यन्तबाधं शङ्कते । अर्थेति । अर्थेन रागेण प्राप्ते अर्थे यथा निषेधो बाधकः यथा न कलञ्जं भक्षयेदिति तद्वदिति ॥ २ ॥

## न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥

इमं पक्षं दूषयति । नेति । उभयं प्रवृत्तिनिवृत्तिरूपं शब्दलक्षणं शब्दप्रमाणकं तुल्यम् । इदं तुल्यहेतुत्वादित्यस्य विवरणरूपम् । तत्र प्रवृत्तौ रागः दुर्बलः निवृत्तौ शब्द इति युक्तो ऽत्यन्तबाध इति भावः ॥ ३ ॥

### अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ॥ ४ ॥

सिद्धान्तमाह । अपि त्विति । न विकल्पः विकल्पस्यान्याय्यत्वात् दृष्टदोषदुष्टत्वात् । अपि तु वाक्यशेषः सन् एकवाक्यतापन्नः सन् विध्येकदेशः । आर्षेयवरणभिन्नं प्रकृतिवत्कार्यमनूयाजातिरिक्तेषु ये यजामहइति वाच्यमिति ॥ ४ ॥

न तौ पशौ करोतीत्यादिनिषेधस्यार्थवादत्वम् । अधि २ ।

### अपूर्वे चार्थवादः स्यात् ॥ ५ ॥

आज्यभागौ प्रकृत्य श्रुतं, न तौ पशौ करोति न सोमे ऽध्वरइति । अस्मिन् वाक्ये न सोमे ऽध्वरइति वाक्यं न तौ पशौ करोतीति विधिशेषो ऽर्थवादः न पर्युदासो न वा प्रतिषेध इत्यभिप्रायेण सिद्धान्तमाह । अपूर्वे इति । अपूर्वे केनापि प्रमाणेन प्राप्त्यभावे यो निषेधः सो ऽर्थवादः स्यात् सोमे आज्यभागप्रापकप्रमाणाभावाद् अर्थवादत्वम् ॥ ५ ॥

नातिरात्रे षोडशिनमिति निषेधस्य विकल्परूपत्वम् । अधि० ३ ।

### शिष्ट्वा तु प्रतिषेधः स्यात् ॥ ६ ॥

प्रथमाधिकरणेन अर्थपर्युदासस्वरूपं विधीनामेकदेश इत्यनेन दर्शितं, द्वितीये ऽर्थवाद इत्युक्तम् । तृतीये प्रतिषेधस्वरूपमाह । शिष्ट्वेति । प्रमाणान्तरेण प्राप्त्यनन्तरं यः नञर्थः स प्रतिषेधः । यथा ऽतिरात्रे षोडशिनं गृह्णाति नातिरात्रइति ॥ ६ ॥

अनाहुतिर्वै जर्तिलाश्चेत्यादिनिषेधस्यार्थवादत्वम् । अधि० ४ ।

### न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्यात् ॥ ७ ॥

अग्निचयने श्रूयते, जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नारण्यानथो खल्वाहुरनाहुतयो वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोतीति जर्तिलयवाग्वादीनां विधिनिन्दाश्रवणेन पूर्वाधिकरणवद्विकल्पे प्राप्ते सिद्धान्तमाह । न चेदिति । अन्य-

विधेयं न विन्देच्चेद् न कल्पयेच्चेद् विकल्पो भवेत् । प्रकृतौ अजक्षीरविधिप्रक्लृप्तौ तच्छेषो ऽर्थवादः स्यात् । पद्द्रव्यविधानसामर्थ्याद्विकल्पे व्रीहियववत्सिद्धे आनर्थक्याद् निषेधो व्यर्थः स्यादन्यथा ॥ ७ ॥

नैयम्बकादावभिघारणानभिघारणादीनामर्थवादत्वम् । अधि. ५ ।

## पूर्वैश्च तुल्यकालत्वात् ॥ ८ ॥

आधाने होतव्यमग्निहोत्रं न होतव्यमित्यत्र पूर्वन्यायमतिदिशति । पूर्वैरिति । पूर्वैः पूर्वन्यायैः तुल्यकालत्वात् । तुल्ययोगक्षेमत्वात् ॥ ८ ॥

आधाने उपवादस्य विकल्पत्वम् । अधि· ६ ।

## उपवादश्च तद्वत् ॥ ९ ॥

उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायतीति । तत्र ब्रह्मपदमुख्यार्थस्य गानप्राप्त्यभावान्निषेधासम्भवाद्ब्रह्म जानातीति योगेनोद्गातुर्गाननिषेधाद्गानविधानाच्च शिष्टा तु प्रतिषेधः स्यादिति न्यायमतिदिशति । उपेति । उपवादः उपवीता इति वाक्यप्रतिपादितो वादः । तद्वद्ग्रहणवत् ॥ ९ ॥

## प्रतिषेधादकर्मेति चेत् ॥ १० ॥

प्रतिषेधादिति । स्पष्टम् ॥ १० ॥

## न शब्दपूर्वत्वात् ॥ ११ ॥

नेति । शब्दपूर्वत्वाद्विधिविहितत्वात् । रथन्तरमभिगायते गार्हपत्यआधीयमानइति ॥ ११ ॥

दीक्षितो न ददातीत्यादिनिषेधस्य पर्युदासत्वम् । अधि· ७ ।

## दीक्षितस्य दानहोमपाकप्रतिषेधे ऽविशेषात्सर्वदानहोमपाकनिषेधः स्यात् ॥ १२ ॥

दीक्षितो न ददाति न जुहोति न पचतीत्यत्र विशेषाश्रवणात्सर्वदानादिनिवृत्तिरित्यभिप्रायेण पूर्वपक्षमाह । दीक्षितेति । स्पष्टम् ॥ १२ ॥

अक्रतुयुक्तानां वा धर्मः स्यात् क्रतोः प्रत्यक्ष-
शिष्टत्वात् ॥ १३ ॥

पक्षान्तरमाह । अक्रत्विति । क्रतुसंयुक्ता ये दानादयः आत्रेयाय हिरण्यं ददाति दाक्षिणानि जुहोतीत्यादयः तद्भिन्ना ये पुरुषार्थाः अग्निहोत्रादयः तेषां निषेधो धर्मः स्यात् । अन्यथा क्रतोः क्रत्वर्थस्य प्रत्यक्षशिष्टत्वाद् विहितत्वात् तस्य वैयर्थ्यं स्यादिति भावः ॥ १३ ॥

तस्य वा ऽप्यानुमानिकमविशेषात् ॥ १४ ॥

पक्षान्तरमाह । तस्येति । तस्य निषेधशास्त्रस्य विषयः आनुमानिकं दीक्षणीयादिषु चोदकप्राप्तप्रयाजादिकम् अपिशब्दादग्निहोत्रादि उभयोरविशेषात् ॥ १४ ॥

अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्
प्रतिषेधे विकल्पः स्यात् ॥ १५ ॥

सिद्धान्तमाह । अपि त्विति । न पूर्वपक्षाः अपि तु अहरहरग्निहोत्रं जुहोतीत्यत्र अदीक्षितेन होतव्यमिति पर्युदासः । वाक्यशेषत्वाद्विधिवाक्यशेषत्वात् । प्रतिषेधे विकल्पापत्तेः ॥ १५ ॥

वर्त्महोमादिभिराहवनीयस्य बाधः । अधि० ८ ।

अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य
तत्संदिग्धमाराद्विशेषशिष्टं स्यात् ॥ १६ ॥

यदाहवनीये जुहोतीति सामान्यशास्त्रं सप्तमे पदे जुहोतीति विशेषशास्त्रम् अनयोर्ज्योतिष्टोमे होमार्थत्वेन युगपत्प्राप्तौ एकार्थत्वाद्विकल्प इति पूर्वपक्षे सिद्धान्तमाह । अविशेषेणेति । सामान्यविशेषशास्त्रसंनिपाते विशेषेण शिष्टं यत्तदेव स्यात् । अविशेषेण सामान्यतः यच्छास्त्रमाहवनीयशास्त्रं तदाराद्दूरम् । अतः तत्र प्रवर्तत इति फलितम् । अतः संदिग्धं सामान्यशास्त्रं यावद्विषयं यत्किञ्चिद्विषयं वेति । ननु विशेषेण सामान्यस्यात्यन्तबाधात् पक्षे बाध एव युक्तो ऽत आह । विकल्पस्यान्याय्यत्वात् । बहुदोषत्वात् ॥ १६ ॥

वैमृधादिषु साप्तदश्यविधेर्लोकाक्षेपत्वम् । अधि॰ ९ ।

## अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमा-ज्यभागवत् प्रकृतप्रतिषेधार्थम् ॥ १७ ॥

अनारभ्य श्रूयते, सप्तदश सामिधेनीरन्वाहेति । अध्वरकल्पां प्रकृत्य पुनस्तथैव श्रूयते । तत्प्रकरणे पाठस्य वैयर्थ्यभिया गृहमेधीयाज्य-भागवत्प्राकृताङ्गनिवर्तकमिति पूर्वपक्षमाह । अप्रकरणइति । अप्रकरणे यच्छास्त्रं साप्तदश्यशास्त्रं तदेव विशेषे प्रकरणविशेषे अध्वरकल्पादौ श्रूयमाणमविकृतम् अविलक्षणं चेत् प्राकृतानां प्रतिषेधार्थमाज्यभागवि-धिवत्* ॥ १७ ॥

## वाक्यशेषो वा क्रतुना ग्रहणात्स्या-दनारभ्यविधानस्य ॥ १८ ॥

सिद्धान्तमाह । वाक्येति । प्रकरणपठितवाक्यशेषः उभयं मिलि-त्वैकमेवार्थं ब्रूतइति फलितम् । ननु द्वयोरप्यविलक्षणार्थबोधकत्वेनान्य-तरवैयर्थ्यमत आह । अनारभ्यविधानस्येति । क्रतुना सह संबन्धाग्रहणात् । अयं भावः । विधीयमानसाप्तदश्यस्य क्रतुसंबन्धः सामिधेनीसंबन्धोऽपि ग्राह्यः तत्र प्राकरणिकवाक्यं क्रतुसंबन्धबोधकमपरवाक्यं सामिधेनीसंब-न्धबोधकमिति न वैयर्थ्यमिति । इतो विस्तरः तन्त्ररत्ने सोमनाथीये च द्रष्टव्यः ॥ १८ ॥

पृथिव्यै स्वाहेत्यादिविधिना ऽविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानम् । अधि॰ १० ।

## मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥ १९ ॥

अनारभ्यश्रुतं, स्वाहाकारेण देवेभ्योऽन्नं ददातीति । क्व चित्प्र-करणे पृथिव्यै स्वाहेति श्रुतं तत्र पूर्वन्यायेन यत्र स्वाहाकारान्तो मन्त्रः श्रुतः तत्रानारभ्याधीतवाक्यस्योपसंहार' इति पूर्वपक्षे सिद्धान्तमाह । मन्त्रेष्विति । अवाक्यशेषत्वं नोपसंहारः गुणोपदेशात् । वर्णानुपूर्वी-

* इत उत्तरं, विकारे तु तदर्थं स्यादिति सूत्रमधिकं शाबरभाष्ये दृश्यते ।

रूपगुणोपदेशात् । अयं भावः । पूर्वाधिकरणे वाक्यवैयर्थ्यभिया तथा कल्पितम् । अत्र मन्त्रे स्वाहाकारपाठस्य स्वाहा पृथिव्यामिति विपरीतक्रमनिवर्तकत्वेन सफलत्वादिति ॥ १९ ॥

## अनाम्नाते दर्शनात् ॥ २० ॥

उक्तार्थे साधकमाह । अनाम्नातइति । अनाम्नाते अपठितस्वाहाकारे ऽपि दर्शनात् । विधानात् । घृतेन द्यावापृथिवी आपृणेथामित्यौदुम्बर्यां जुहोतीत्युक्त्वा भूमिप्राप्ते घृते स्वाहा करोतीति । यदि पठितमन्त्रे उपसंहारस्तदा ऽत्र विधानमसंगतम् ॥ २० ॥

## प्रतिषेधाच्च ॥ २१ ॥

प्रतिषेधादिति । क्व चित्र स्वाहा करोतीति प्रतिषेधो वर्तते । स उपसंहारपक्षे व्यर्थः अतो नोपसंहारः ॥ २१ ॥

अग्न्यतिग्राह्यस्य विकृतावुपदेशः । अधि० ११ ।

## अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ २२ ॥

अथातो ऽग्निष्टोमेन यजेत तं द्विरात्रेणेति । एवं पृष्ठ्ये ऽतिग्राह्या गृह्यन्तइति । अत्र पूर्वपक्षमाह । अग्न्यतीति । अग्न्यतिग्राह्ययोः विकृतौ द्विरात्रादिषु उपदेशात्पाठात् । अग्न्यतिग्राह्याविषयचोदकशास्त्रस्याप्रवृत्तिः ॥ २२ ॥

## मासिग्रहणं च तद्वत् ॥ २३ ॥

क्व चिन्मासि मास्यतिग्राह्या गृह्यन्तइति श्रुतम् । तदपि तद्वत् प्राकृतनिवर्तकम् ॥ २३ ॥

## ग्रहणं वा तुल्यत्वात् ॥ २४ ॥

सिद्धान्तमाह । ग्रहणमिति । इतराङ्गवदनयोरपि चोदकशास्त्रेण ग्रहणं तुल्यत्वात् ॥ २४ ॥

## लिङ्गदर्शनाच्च ॥ २५ ॥

लिङ्गेति । इदं च लिङ्गं कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिंल्लोके स्यामिति । यथा पञ्चैन्द्रानतिग्राह्यान्गृह्णातीति कङ्क-

कारतामैन्द्रतां च ब्रुवन् आग्न्यतिग्राह्ययोः विकृतौ प्राप्तिं दर्शयति ॥ २५ ॥

ग्रहणं समानविधानं स्यात् ॥ २६ ॥

ननु विकृतावुपदेशो व्यर्थोऽत आह । ग्रहणमिति । ग्रहणं विकृतौ स्वातन्त्र्येण विधानं समानविधानं ज्योतिष्टोमे यथा तथैव द्विरात्रइति । अयं भावः । यदि ज्योतिष्टोमे विधाय द्विरात्रे स्वातन्त्र्येण विधानं न स्यात्तदा छन्दश्चितं चिन्वीत पशुकाम इत्यादिगुणफलसंबन्धविधीनामप्रवृत्तिः स्यात् । गुणफलसंबन्धविधीनामतिदेशो नास्तीति पूर्वमभिहितत्वात् । यदि ज्योतिष्टोमसमानविधिर्द्विरात्रे तदा पशुकामविधीनां प्रवृत्तिरिति तदर्थमुपदेश इति ॥ २६ ॥

मासिग्रहणमभ्यासप्रतिषेधार्थम् ॥ २७ ॥

मासिग्रहणमिति । अभ्यासप्रतिषेधार्थं प्रत्यहं नाभ्यासः किं तु मासि मासीत्येतदर्थम् ॥ २७ ॥

उपस्तरणाभिघारणाभ्यां सहैव चतुरवदानम् । अधि० १२ ।

उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २८ ॥

दर्शपूर्णमासयोः श्रूयते, चतुरवत्तं जुहोतीति । अत्र पूर्वपक्षमाह । उत्पत्तीति । उत्पत्तेः पुरोडाशोत्पत्तेः तादर्थ्याद् होमार्थत्वात् प्रधानस्य पुरोडाशस्य चतुरवत्तं कर्तव्यम् । प्रधानस्य चतुरवदानसंस्कृतस्य होमसंयोगात् । होतव्यस्यैव चतुरवत्तदानं सिद्धमिति भावः । आज्यं त्वतुल्यत्वात्पुरोडाशेन अधिकं चतुरवत्तादधिकं तदुत्पत्तेः उपस्तरणाभिघारोत्पत्तेर्गुणभूतत्वात्पुरोडाशसंस्काररूपत्वात् । अयमतुल्यत्वे हेतुः लोकवत् । यथा लोके चैत्रः प्रस्थं भुङ्क्ते इति मानमन्नस्य शाकादिकमधिकं तद्वत् ॥ २८ ॥

तत्संस्कारश्रुतेश्च ॥ २९ ॥

गुणभूतत्वादित्युक्तं तत्र प्रमाणमाह । तत्संस्कारेति । तस्य पुरोडाशस्य संस्कारश्रुतेः यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोतीति श्रुतिः ॥ २९ ॥

ताभ्यां वा सह स्विष्टकृतः सकृत्वे द्विरभिघारणेन तदाप्तिवचनात् ॥ ३० ॥

सिद्धान्तमाह । ताभ्यामिति । ताभ्यामुपस्तरणाभिघाराभ्यां सह चतुरवत्तं स्विष्टकृत्प्रकरणे सकृत्सकृदवद्यतीति पुरोडाशात्सकृदवदानं विधाय द्विरभिघारयतीति विधिफलं चतुरवत्तस्याप्त्याइति तदाप्तिः चतुरवत्ताप्तिस्तस्य वचनात् श्रवणात् ॥ ३० ॥

तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमात् ॥ ३१ ॥

गमकान्तरमाह । तुल्यवदिति । चत्वारि वा एतानि देवदधान्यवदानानि यदुपस्तृणाति तदनुवाक्यायै यत्पूर्वमवदानं तद्याज्यायै यदुत्तरं तद्देवतायै तदभिघारयतीति तद्वषट्कारायेति । अत्र तुल्यवदवदानान्यभिधाय सर्वेषु भक्त्यनुक्रमात् तत्तद्भागानुक्रमात् ॥ ३१ ॥

उपांशुयागे ऽपि चतुरवत्तस्यावश्यकत्वम् । अधि० १३ ।

साप्तदश्यवन्नियम्येत ॥ ३२ ॥

चतुरवत्तं जुहोतीति श्रुतम् । तत्कथं कर्तव्यमिति जिज्ञासायां सकृदुपस्तृणाति द्विरादधाति सकृदभिघारयतीति कथंभावाकाङ्क्षापरिपूरकं सत्तदेकवाक्यतापन्नम् । उपांशुयागे ऽस्याप्रसक्त्या यत्र पुरोडाशः सान्नाय्यं वा तत्रैव साप्तदश्यनियमवच्चतुरवत्तनियम इति पूर्वपक्षमाह । साप्तेति । स्पष्टम् ॥ ३२ ॥

हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात् ॥ ३३ ॥

सिद्धान्तमाह । हविष इति । हविषो गुणभूतत्वाद् विधेयत्वात् । तथाभूता होमसामान्ये चतुरवत्तहविषो गुणत्वविवक्षा स्यात् । अयं भावः । यदि अवदानमुद्दिश्य चतुःसंख्याविधिर्भवेत् तदा कथं चतुष्ट्वसंपादनमित्याकाङ्क्षा भवेत् । तदेव न । सकृदुपस्तृणातीत्यपूर्वोक्तवाक्यैः

प्राप्तं यच्चानुवदनं तत्संस्कारविशिष्टद्रव्यस्यैव होमोद्देशेन विधानान्न पूर्वपक्षसिद्धिरिति ॥ ३३ ॥

दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादत्वम् । अधि० १४ ।

## पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ ३४ ॥

पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्यावेनाग्नेयश्चैन्द्राग्नश्च साम्नायेन तु सोमयाजिनमिति । अत्र नानापक्षानुत्थापयन् प्रथमपक्षमाह । पुरोडाशेति । पुरोडाशाभ्यामित्यनेन अधिकृतानामसोमयाजिनां पुरोडाशयोः उक्तयोः उपदेशः विधिः तच्छ्रुतित्वात् । असोमयाजिनं स्वर्गकाममित्यधिकारिविशेषणतया श्रुतत्वात् । यथा वैश्यं वैश्यस्तोमेन याजयेदिति तद्वत् । तथा च सोमयाजिभिन्नस्वर्गकामं पुरोडाशाभ्यां याजयेदिति सिद्धम् । नित्यदर्शपूर्णमासे नायं नियम इति भावः ॥ ३४ ॥

## न त्वनित्याधिकारोऽस्ति विधेर्नित्येन संबन्धस्तस्माद्वाक्यशेषत्वम् ॥ ३५ ॥

प्रथमपक्षं दूषयन् द्वितीयमुत्थापयति । न त्विति । यतः नानित्याधिकारो ऽस्ति न स्वर्गकामाधिकारो ऽस्ति अतः विधेर्नित्यप्रयोगेणैव संबन्धः । तस्मात्फलवाक्येन संबन्धाभावात्तद्वाक्यशेषत्वं न संभवति ॥ ३५ ॥

## सति न चैकदेशेन कर्तुः प्रधानभूतत्वात् ॥ ३६ ॥

एवं फलाधिकाराभावादधिकारिविशेषणं दूषयित्वा प्रकारान्तरेण दूषयति । सतीति । सति तथा सति अधिकारिविशेषणत्वइति फलितम् । अधिकारिणः प्रधानत्वेन तद्विशेषणस्य असोमयाजिनः कर्तुरपि प्राधान्यात्पुरोडाशावुद्दिश्य सोमयाजिकर्तुः संबन्धो नोपपद्यते । ननु मा ऽस्तु पुरोडाशावुद्दिश्य कर्तृसंबन्धविधिः किं तु असोमयाज्यभिन्नकर्तृकफलमुद्दिश्यैव पुरोडाशविधिरस्त्वामत आह । न चेति । एकदेशेन दर्शपूर्णमासपदवाच्यैकदेशेन यागद्वयेन सह फलसंबन्धः संभवतीति पूरणीयम् । षड्भिर्मिलित्वैव फलजननादिति भावः ॥ ३६ ॥

कृत्स्नत्वात्तु तथा स्तोमे ॥ ३७ ॥

वैश्यस्तोमवैषम्यमाह । कृत्स्नत्वादिति । स्तोमे वैश्यस्तोमे कृत्स्नत्वात् । संपूर्णत्वाद्वैश्याभिन्नकर्तृकफले स्तोमसंबन्धो युक्तः । तस्मादत्रासोमयाजिकर्तृकपुरोडाशद्वयकरणकयागो ऽपूर्वो विधीयतइति द्वितीयपक्षाभिप्रायः ॥ ३७ ॥

कर्तुः स्यादिति चेत् ॥ ३८ ॥

अपूर्वकर्मविधौ एवकारवैयर्थ्यं चिन्तयन् पक्षान्तरं वदति । कर्तुरिति । कर्तुः गौणकर्तुः ऋत्विजो विधिः स्यात् ॥ ३८ ॥

न गुणार्थत्वात्प्राप्ते न चोपदेशार्थः ॥ ३९ ॥

दूषयति । नेति । गुणार्थत्वात् । कर्मानुष्ठानार्थमाध्वर्यवादिसमाख्यया प्राप्तत्वात् । उपदेशे पुनरुपदेशे ऽर्थः प्रयोजनं न च । तस्मात्कर्मान्तरमेवेति ॥ ३९ ॥

कर्मणोस्तु प्रकरणे तन्न्यायत्वाद्गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४० ॥

पक्षान्तरमाह । कर्मणोरिति । कर्मणोः पुरोडाशयागयोः प्रकरणे लिङ्गेन असोमयाजिपदप्रयोगरूपलिङ्गेन लक्षितं कालशास्त्रं स्यात् । तन्न्यायत्वात् । अपि वा कालशास्त्रं स्यात् प्रदर्शनाद्विशेषस्येतिन्यायवत्त्वात् ॥ ४० ॥

यदि तु साान्नाय्यं सोमयाजिनो न ताभ्यां समवायो ऽस्ति विभक्तकालत्वात् ॥ ४१ ॥

कालविधिपक्षे दूषणमाह । यदीति । यदि तु सान्नाय्यं सोमयाजिनः तर्हि सोमयाजिनः ताभ्यां पुरोडाशाभ्यां समवायः संबन्धो न । कुतः सान्नायपुरोडाशयोः विभक्तकालत्वात् । अतः अर्थात् पुरोडाशयोः पूर्वकालः सिद्धः न विधातुं शक्यः । तस्मादतिरिक्तं कर्मेति भावः ॥ ४१ ॥

अपि वा विहितत्वाद्गुणार्थायां पुनः श्रुतौ संदेहे श्रुतिर्द्विदेवताऽर्था स्याद्यथा ऽनभिप्रेतस्तथा ऽऽग्नेयो दर्शनादेकदेवते ॥ ४२ ॥

पक्षान्तरमाह । अपि वेति । विहितत्वात् । आग्नेयस्य दर्शपूर्णमासयोरुभयत्र विहितत्वात् । गुणार्थायां देवतारूपगुणार्थायां पुनः श्रुतौ पुनः श्रुतिः किमर्थमिति संदेहे द्विदेवतार्था पौर्णमास्यामैन्द्राग्नदेवतार्था स्यात् । एकदेवते अग्नौ अनभिप्रेतः यथा ऽऽग्नेयो ऽनभिप्रेतः केवलमनुवादरूपस्तथा च चिद्दर्शनात् । यथा यदाग्नेयो ऽष्टाकपालो ऽमावास्यायां भवत्यैन्द्रं दधीति तद्वत्प्रकृतौ आग्नेयमनूद्य पौर्णमास्यामैन्द्राग्नविधिरिति भावः ॥ ४२ ॥

## विधिं तु बादरायणः ॥ ४३ ॥

अत्रापि पक्षे एवकारवैयर्थ्यभिया पक्षान्तरमाह । विधिमिति । विधिं कालविधिं बादरायणः मनुते ॥ ४३ ॥

## प्रतिषिद्धविज्ञानाद्वा ॥ ४४ ॥

सोमयाजिनं सान्नाय्येन याजयेदिति विधिनैव पूर्वं पुरोडाशमात्रं न सान्नाय्यमिति सान्नाय्यप्रतिषेधज्ञानाच्च कालविधिः । सर्वो ऽप्यनुवादरूपः सन् सान्नायविधिशेषो ऽर्थवादः ॥ ४४ ॥

## तथा चान्यार्थदर्शनम् ॥ ४५ ॥

उक्तार्थे साधकमाह । तथा चेति । अन्यार्थेन अन्यप्रमाणेन तद्दर्शनं तन्निर्णयः । चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति । आहवनीये चतुरक्ताहुतयः पौर्णमास्यां चतुर्दश, पञ्च प्रयाजा द्वे आज्यभागाहुती प्रधानत्रयं स्विष्टकृत्त्रयो ऽनूयाजाश्चेति । दर्शे उपांशुयागाभावाद्दधिघृतयोस्तन्त्रेण होमात्त्रयोदश । उक्तवाक्येनापूर्वाहुतिविधाने उक्तसंख्या विरुध्येतेति भावः ॥ ४५ ॥

उपांशुयागस्य ध्रौवाज्यद्रव्यकत्वम् । अधि० १५ ।

## उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्‌ याथाकामी प्रतीयेत ॥ ४६ ॥

पौर्णमास्यामुपांशुयाजमन्तरा यजतीति श्रुतम् । तत्र पूर्वपक्ष-

माह । उपांश्विति । हविर्लिङ्गस्य हविर्विशेषनियामकलिङ्गस्याश्रुतित्वा-द्यथाकामी प्रतीयेत ॥ ४६ ॥

## ध्रौवाद्वा सर्वसंयोगात् ॥ ४७ ॥

सिद्धान्तमाह । ध्रौवादिति । सर्वसंयोगात् । सर्वस्मै वा एतद्य-ज्ञाय गृह्यते यद् ध्रुवायामाज्यमिति वाक्ये सर्वशब्दयोगाद् ध्रुवाया आज्यम् ॥ ४७ ॥

उपांशुयागस्य प्रकृतदेवतानियमः । अधि० १६ ।

## तद्वच्च देवतायां स्यात् ॥ ४८ ॥

हविर्विषये यः पूर्वपक्षः स देवताविषय इति पूर्वपक्षमाह । तद्व-दिति ॥ ४८ ॥

## तान्त्रीणां प्रकरणात् ॥ ४९ ॥

सिद्धान्तमाह । तान्त्रीणामिति । प्रकरणाद्दर्शपूर्णमासतन्त्रपठिता-नामन्यतमा ॥ ४९ ॥

उपांशुयागस्य विष्ण्वादिदेवताकत्वं पौर्णमासीकर्तव्यत्वं च । अधि० १७ ।

## धर्माद्वा स्यात् प्रजापतिः ॥ ५० ॥

एवं दर्शपूर्णमासतन्त्रपठितान्यतमेति सिद्धे तान्त्रीणां मध्ये कत-मेति विचारे प्रथमपक्षमाह । धर्मादिति । धर्माद् उपांशुयाजमन्तरा यजतीति अत्र उपांशुत्वं श्रुतम् । प्रजापतेरपि धर्मः उपांशुत्वमिति प्रजा-पतिः स्यात् ॥ ५० ॥

## देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहा-धिकारेण ॥ ५१ ॥

अस्मिन्पक्षे दोषमुत्थापयन् पक्षान्तरमाह । देवताया इति । तत्र उत्पत्तिवाक्ये देवताया अनिर्वचनमकथनम् । इह प्राजापत्ये शब्दस्य उपांशुधर्मवाचकशब्दस्य मृदुत्वं स्पष्टमश्रवणम् । तूष्णीं प्राजापत्य-मिति तूष्णींशब्दस्य श्रवणात् तस्माद्धर्मसादृश्याभावात् । इह उपांशुयागे ऽधिकारेण देवतानां मध्ये मुख्यत्वेन श्रेष्ठत्वेनाग्निः । अग्निरग्ने प्रथमो देवतानामिति श्रुतेः ॥ ५१ ॥

विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ॥ ५२ ॥

पक्षान्तरमाह । विष्णुर्वेति । दर्शयागसन्निधौ हौत्रस्य इदं विष्णुः प्रतद्विष्णुरिति याज्यापुरोनुवाक्यायुगलस्याम्नानात् । अत एवामावास्या हविः तत्र अमावास्यासन्निधौ ॥ ५२ ॥

अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगाद्गुणत्वा-न्मन्त्रो यथाप्रधानं स्यात् ॥ ५३ ॥

सिद्धान्तमाह । अपि वेति । पौर्णमास्यामेवोपांशुयागः प्रधान-शब्दसंयोगात् । विधायकवाक्ये पौर्णमास्यां यजेतेति पौर्णमास्यामिति-शब्दसंयोगात् । गुणत्वान्मन्त्रस्य, मन्त्रः यथा यया रीत्या प्रधानं भवेत्त भवेदित्यर्थः । अयं भावः । यत्र विधिविहितं कर्म तत्र मन्त्रः । न यत्र मन्त्रः तत्र कर्मेति पौर्णमास्यामेव ॥ ५३ ॥

आनन्तर्यं च सान्नायस्य पुरोडाशेन दर्शयत्यमावास्या-विकारे ॥ ५४ ॥

पौर्णमास्यामेवेत्यत्र लिङ्गमपि दर्शयति । आनन्तर्यमिति । अमा-वास्याविकारे साकम्प्रस्थायीये आग्नेयेन पुरोडाशेन प्रचर्य सह कुम्भीभि-रभिक्रामन्नाहेति वाक्येन पुरोडाशेनानन्तर्यं सान्नाय्यस्य दर्शयति नोपां-शुयाजस्य । अतो नामावास्यायाम् ॥ ५४ ॥

अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५५ ॥

यश्च तावदुक्तामग्नीषोमौ पौर्णमास्यां नौ यजेतेत्यत्र पौर्ण-मासीशब्दसंयोगः साधकः स नेत्याह । अग्नीषोमेति । तेन वाक्येन पौर्णमास्यामग्नीषोमीयदेवताविधिः न उत्पत्तिविधिः । इत्थं चोभयत्र पौर्णमास्याममावास्यायां च उपांशुयागः पौर्णमास्यामग्नीषोमीयः अमा-वास्यायां विष्णुः ॥ ५५ ॥

प्रतिषिध्य विधानाद्वा विष्णुः समानदेशः स्यात् ॥ ५६ ॥

उक्तपक्षं दूषयति । प्रतिषिध्येति । प्रतिषिध्य, जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्यो ऽजामित्वाय प्रजापतिरुपांशु यष्टव्यो ऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति वाक्ये जामि वा इत्यनेन पुरोडाशं प्रतिषिध्य, मध्यमवाक्येन विधानात् । अजामित्वायेति त्रयेण स्तुत्या विष्णावग्नीषोमयोः समानदेशः एकः कालः न भिन्नकालः ॥ ५६ ॥

तथा चान्यार्थदर्शनम् ॥ ५७ ॥

तथेति । अन्यार्थेन च अन्यलिङ्गेन च दर्शनं ज्ञानं तथा पौर्णमास्यामेवेति नियामकं, चतुर्दश पौर्णमास्यां त्रयोदशामावास्यायामिति पूर्वदर्शितं लिङ्गम् । यद्यमावास्यायामुपांशुयागः तदा चतुर्दश भवेरन् त्रयोदशेति विरुद्धम् ॥ ५७ ॥

न वा ऽनङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासंबन्धात् ॥ ५८ ॥

साधकान्तरमाह । न वेति । अनङ्गं प्रधानं सकृच्छ्रुतमुभयत्र न विधीयते । प्रधानानां परस्परसंबन्धाभावात् । अन्यथा आग्नेयवाक्ये ऽमावास्यायां पौर्णमास्यां चेति श्रवणं व्यर्थं स्यादिति भावः* ॥ ५८ ॥

विकारे चाश्रुतित्वात् ॥ ५९ ॥

विकारे दर्शविकारे दाक्षायणयज्ञे ॥ ५९ ॥

एकपुरोडाशायामप्युपांशुयागः । अधि॰ १८ ।

द्विपुरोडाशायां स्यादन्तरालगुणार्थत्वात् ॥ ६० ॥

पौर्णमास्यां सोमादूर्ध्वं पुरोडाशद्वयं प्रागेकः । उभयत्रार्थं किं सोमादूर्ध्वमिति संशये पूर्वपक्षमाह । द्वीति । द्विपुरोडाशायां पौर्णमास्यां स्यादुपांशुयागः । अन्तरालगुणार्थत्वात् । एकपुरोडाशे तदसंभवादिति भावः ॥ ६० ॥

* गुणानां च परार्थत्वात् प्रवृत्तौ विधिलिङ्गानि दर्शयति, इति सूत्रत्वेनाधिकं शाबरभाष्यपुस्तके ।

## अजामिकरणार्थत्वाच्च ॥ ६१ ॥

अजामीति । अजामित्वायेति तादर्थ्यचतुर्थ्या तादर्थ्यप्रतीते-रिति ॥ ६१ ॥

## तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६२ ॥

तदिति । नेत्यन्तं पूर्वपक्षोपसंहारः । तदर्थमन्तरालतासंपत्त्यर्थम-जामित्वसंपत्त्यर्थं वा याग इति न । तस्य अन्तरालत्वस्य अन्तरालत्व-निरूपितप्रधानत्वात् ॥ ६२ ॥

## अशिष्टेन च संबन्धात् ॥ ६३ ॥

युक्त्यन्तरमाह । अशिष्टेनेति । अशिष्टेनाश्रुतत्वेन अन्तरालार्थेन उपांशुयागस्य संबन्धः कर्तव्यः स्यात् । तथा सति यागेन फलस्य संबन्धः अन्तरालगुणेन च सम्बन्ध इति विरुद्धत्रिकद्वयापत्तिरिति भावः ॥ ६३ ॥

## उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमान-त्वात् विधानादन्तरार्थस्य नैमित्तिकत्वात्तदभावे ऽश्रुतौ स्यात् ॥ ६४ ॥

अन्तरालगुणस्याविधानादिति पक्षं दूषयति । उत्पत्तेरिति । उत्पत्तिरुत्पत्तिवाक्यएव अन्तरालगुणविधानात् । विशिष्टविधानान्न विरुद्ध-त्रिकमिति भावः । निवेशः अन्तरालगुणनिवेशः स्याद् गुणस्य अन्तरालस्य अनुपरोधेन अबाधेन अर्थस्य अन्वयिनः विद्यमानत्वात् । उभयपुरोडाश-स्थले संभवादिति भावः ।

अन्तरार्थस्य विधानात् । नैमित्तिकत्वादपूर्वसाधनत्वात्तदभावे अन्तरगुणाभावे यागस्याश्रुतौ, हेतौ सप्तमी, स्याद्गुणवत्येव स्यात् ॥ ६४ ॥

## उभयोस्तु विधानात् ॥ ६५ ॥

सिद्धान्तमाह । उभयोरिति । उभयोरेकपुरोडाशे द्विपुरोडाशे चोपांशुयागः पौर्णमासीमात्रे विधानात् ॥ ६५ ॥

गुणानां च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६६ ॥

गुणानामिति । गुणानामङ्गानां परार्थत्वात् । प्रधानार्थत्वात् । यथा राज्ञः पाकार्थं देवदत्तः कल्पितः । तत्र देवदत्ताभावे न राज्ञः पाको लुप्यते । गुणस्य तदर्थत्वात् । गुणानामित्यनेन क्ष्मन्यायो दर्शितः । उपवेषवदिति । शाखामूलं हि उपवेषः । पौर्णमास्यां शाखाभावादुपवेषाभावः । तथा च उपवेषेण कपालान्युपदधातीति विधिः । अनेन यदा उपवेषः तदा तेनोपधानं तदभावे ऽन्येन येन केनापि । न उपवेषाभावे कपालोपधाननिवृत्तिस्तथा यदा ऽन्तरालं तदा तत्र स्यात् । अन्यत्रापि ॥ ६६ ॥

अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६७ ॥

ननु विहितस्यान्तरालस्य लोपएकपुरोडाशप्रयोगे वैगुण्यमपरिहार्यम् । अन्यथा यदा आलस्याद्यभावः तदा प्रयाजानुष्ठानं तत्सत्त्वे न, गुणानां च परार्थत्वादिति न्यायादत आह । अनपाय इति । कालस्य उपांशुयागकालस्य लक्षणं पुरोडाशद्वयम् । अयं भावः । जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशाउपांशुयाजमन्तरा यजतीति वाक्येन पुरोडाशयागद्वयमनूद्य तयोरानन्तर्ये जामितादोषं प्रतिपाद्य प्रथमयागध्वंसोत्तरयागप्रागभावविशिष्टः कालः लक्षयित्वोपांशुयागाङ्गत्वेन विधीयते । तस्य एकपुरोडाशे ऽप्यनपायः सत्त्वम् ॥ ६७ ॥

प्रशंसार्थमजामित्वम् ॥ ६८ ॥

नन्वेवं सति तादर्थ्यचतुर्थीप्रतिपादितजामित्वाभावो ऽनुपपन्नः एकपुरोडाशे जामित्वाप्रसक्तेरित आह । प्रशंसेति । अजामित्वकथनं प्रशंसार्थमर्थवाद इति भावः ॥ ६८ ॥

इति श्रीमज्जैमिनिसूत्रवृत्तौ दशमस्याध्यायस्य अष्टमः पादः ॥ ८ ॥

समाप्तश्च दशमो ऽध्यायः ॥ १० ॥



भ्रान्तेः पुरुषधर्मत्वाद् दोषः स्यादेव सर्वथा ।
तान्नुद्धरन्तु कृपया विद्वांसो गतमत्सराः* ॥

आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वम् । अधि॰ १ ।

## प्रयोजनाभिसंबन्धात्पृथक्सतां ततः स्यादैककर्म्य-मेकशब्दाभिसंयोगात् ॥ १ ॥

दशमे ऽध्याये ऽतिदेशप्राप्तानामङ्गानां बाधाभ्युच्चयविचारेण विकृतावङ्गपरिमाणं चिन्तितम् । एकादशे प्रकृतिविकृतिसाधारण्येन प्रयोगपरिमितिज्ञानार्थं तन्त्रावापौ चिन्त्येते । तत्र यत्सकृत् कृतं बहूनुपकरोति तत्तन्त्रम् । यथा बहूनां मध्ये स्थापितो दीपः । यत्त्वावृत्त्योपकरोति स आवापः । यथा बहूनां भोजनम् । तदुक्तमाकरे । साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजक इति । अस्यार्थः । यच्चाङ्गमनुष्ठितं बहूनां साधारणमुपकारकं तत्तन्त्रम् । यच्चाङ्गमनुष्ठितमेकस्यैवोपकारकं परार्थे ऽपरप्रधानार्थे ऽप्रयोजकः अनुपकारकम् अतः पृथगावृत्तिः स आवाप इति । तत्र दर्शपूर्णमासे षड्यागानां फलस्य तन्त्रमुत भेद इति ज्ञानमन्तरा प्रयोगपरिमाणज्ञानं न भवति । तथा हि । यदि तन्त्रं दर्शे प्रधानत्रिकाङ्गानां सकृदनुष्ठानं द्वितीये त्रिवारमनुष्ठानमिति । अतः प्रयोगपरिमितिज्ञानोपोद्घातत्वेन प्रथमं फलतन्त्रविचारं कुर्वन् सिद्धान्तसूत्रमाह । प्रयोजनेति । पृथक्सतां पृथग्भूतानामपि आग्नेयादीनामपि ऐककर्म्यं, क्रियतइति व्युत्पत्त्या कर्मशब्दः फलम्, एकं कर्म येषां तान्येककर्माणि तेषां भाव ऐककर्म्यं स्यात् । एकफलकत्वमिति फलितम् । अत्र हेतुमाह । प्रयोजनेति। समेतानामिति शेषः । यतः समेतानां मिलितानां प्रयोजनेन फलेन संबन्धः अतः । अत्र किं मानमत आह । एकशब्दाभिसंयोगात् । एषां समुदायानां वाचकेन दर्शपूर्णमास इति शब्देन निर्दिश्य

---

* नन्दबाणाद्रिभूशाके शुच्यां भूते सिते रवौ । रचितो ग्रन्थसन्दर्भो विश्वेश्वरणे ऽर्पितः ॥ १ ॥ सूत्रस्य शाबरं भाष्यं तन्त्ररत्नं विलोक्य च । टुप्टीकां शास्त्रदीपं तट्टीकामन्यान् विलोक्य च ॥ २ ॥ अविरुद्धं च तल्लेखि रामेणालेखि धीमता । इति सार्धश्लोकद्वयमधिकं पुस्तकान्तरे ऽस्ति ।

फलेन साकमभिसंबन्धात् । अन्वयाभिधानात् । दर्शपूर्णमासाभ्यां स्वर्गकाम इत्यनेन समुदायवाचकशब्देन फलान्वयबोधस्य दर्शनात् । यथा ग्रामेण खन्यते कूप इत्यत्र पुरुषभेदे ऽपि यथा एकः कूपस्तथा ऽत्रापीति भावः ॥ १ ॥

## शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥

ननु यत्र यत्रैव शब्दाभिसंबन्धस्तत्र तत्र पृथग्भूतानामपि समुदायत्वेनैवान्यपदार्थसंबन्ध इतिव्याप्तिसिद्धौ भवेदेवं, सैव न । ब्राह्मणगणं पूजयेत्यादौ पूजायाः प्रत्येकान्वयदर्शनात् । न च विषमो दृष्टान्तः, स्वर्गकामवाक्ये समुदायत्वेन शेषग्रहणम् इह तु शेषिग्रहणं द्वितीयया शेषित्वबोधादिति वाच्यं, शेषशेषित्वाभ्यां वैलक्षण्ये ऽपि परस्परान्वयवेलायां शेषस्य शेषिणा साकमन्वये विभज्यैव शेषिणो ऽपि शेषेण संबन्धवेलायां विभज्य संबन्धे बाधकाभावादित्यभिप्रायवानाह । शेषवद्वेति । प्रयोजनं प्रतिकर्म विभज्यतेति सूत्रतात्पर्यं नन्वित्यनेनैव दर्शितम् ॥ २ ॥

## अविधानात्तु नैवं स्यात् ॥ ३ ॥

पूर्वहेतौ उक्तं दोषं परिहरति । अविधानादिति । एवं पूर्वोक्तरीत्या शेषशेषिणोः साम्येन अविधानात् । अयं भावः । अविधेयत्वेन हेतुनेद्देश्यत्वे सिद्धे उद्देश्यविशेषणानामविवक्षेति पूर्वं व्यवस्थितत्वात् । ब्राह्मणगणत्वं ब्राह्मणव्यक्तीनां परस्परसाहित्यम् । इदं यदुद्दिश्य विशेषणं तदविवक्षितं तदा प्रत्येकान्वयो विधेयपूजायां युक्तः । दर्शपूर्णमासाभ्यां स्वर्गकाम इत्यत्र फलमुद्दिश्य यद्यागविधानाद् द्वन्द्वावगतसाहित्यं विवक्षितम् । अतः समुदितानामेव फले ऽन्वय इति ॥ ३ ॥

## शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ॥ ४ ॥

संप्रति दर्शितमेव भावं दर्शयति । शेषस्य हीति । शेषस्याङ्गस्य परार्थत्वात् । प्रधानार्थत्वात्तत्र प्रतिप्रधानभावः प्रतिप्रधानमङ्गावृत्तिरिति लोकसिद्धो न्यायो दर्शितः । दृश्यते च लोके प्रतिघटं चक्रभ्रमणं तथेति

भावः । यागस्य शेषत्वे प्रमाणमाह । विधानात् । यत्र विधेयत्वं तत्र शेषत्वमिति व्याप्तेरिति भावः ॥ ४ ॥

अङ्गानामेककार्यत्वम् । अधि० २ ।

## अङ्गानां तु शब्दभेदात्क्रतुवत्स्यात्फलान्यत्वम् ॥ ५ ॥

एकमधिकरणं चतुःसूत्रम् । भत्रत्वत्र समुदायवाचकशब्देन द्वन्द्वेन चावगतसाहित्यस्य विवक्षणात् फलं समुदायस्यैकम् । अङ्गानां नैवं किं तु क्रतुवत् । ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः ऐन्द्रं चरुं निर्वपेत्पशुकामः इतिवत् फलान्यत्वं भिन्नफलत्वं स्यात् । शब्दभेदात् । समिधो यजति तनूनपातं यजतीत्यादिशब्दभेदात् । अयं भावः । अङ्गविधयः परस्परानपेक्षा अङ्गविधिं संपादयन्ति न सहिताः । अतस्तेषां पृथगेव संबन्धो युक्त इति द्वितीयाधिकरणपूर्वपक्षाभिप्रायः ॥ ५ ॥

## अर्थभेदस्तु तत्रार्थेहैकार्थ्यादैककर्म्यम् ॥ ६ ॥

सिद्धान्तमाह । अर्थेति । तत्रार्थभेदः यत्र भिन्नफलप्रतिपादकः शब्दः । इहाङ्गेषु ऐकार्थ्यात् प्रधानोपकारकत्वैकार्थ्याद् ऐककर्म्यमेकफलम् ॥ ६ ॥

## शब्दभेदान्नेति चेत् ॥ ७ ॥

ननु फलवाचकशब्दभेदाभावे ऽपि विधिप्रत्ययभेदात्फलभेद इत्याह । शब्देति । स्पष्टम् ॥ ७ ॥

## कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥ ८ ॥

अस्योत्तरमाह । कर्मार्थत्वादिति । प्रयोगस्येत्यस्मात्प्राक् प्रधानानामिति तदुत्तरमुच्यमाने इति पूरणीयम् । इत्थं च कर्मार्थत्वात् प्रधानप्रयोगे उच्यमाने अङ्गानामपि ताच्छब्द्यं प्रयोग उक्तः स्यात् । अयं भावः । समिधो यजतीत्यादिवाक्यानि यदि विधायकानि स्युः तर्हि भवेत्प्रत्येकं फलाकाङ्क्षा । तदेव न । तथा हि । दर्शपूर्णमासाभ्यां स्वर्गं कुर्यादिति ज्ञाते कथमित्याकाङ्क्षापरिपूरकतया यावदङ्गकलापानां प्रधानभावनयैव संबद्धत्वात् । सर्वेषामङ्गानां न पुनर्विधिः । समिदादिवाक्यैः अङ्गस्वरूपमाख्यायते ईदृशो याग इति । ननु प्रधानविधिनैवाङ्गानां

विधाने प्रधानस्य फलार्थत्वात् तत्प्रत्यप्रधानत्वम् अङ्गानां प्रधानार्थत्वात् तन्निरूपितं प्राधान्यमिति विरुद्धत्रिकद्वयापत्तिरिति चेन्न । असर्वविशिष्टभावनाविधानादवैरूप्यात् । नन्वङ्गवाक्येषु प्रत्येकं विधिश्रवणात्तत्र विधिः किमिति न कल्प्यतइति चेन्न । विधिस्वीकारे अंशत्रयाकाङ्क्षायां करणाकाङ्क्षानिवर्तको धातुरस्ति, किं कथमित्याकाङ्क्षानिवर्तकाभावेनापरिपूर्तेः । न चैवं सति विधिप्रत्ययानर्थक्यं, यद्यङ्गवाक्येषु विधिप्रत्ययो न स्यात् तदा सर्वाख्यातसाधारणतया प्रतीयमानाया अर्थभावनाया भाव्यापेक्षायां समानपदोपात्ततया धात्वर्थ एव तथा स्यात् । विधिप्रत्यये च सति प्रधानवाक्ये इत्थंभावेन विषयीभूता एते ऽमी इति ज्ञातुं शक्यते । अतः प्रधानविहितानुवादकतयैव सार्थक्यं बोध्यम् । उक्तं च पार्थसारथिमिश्रैः । यद्यपि प्रत्येकं विधिः श्रूयते तथा ऽप्यंशत्रयालाभादसावुदास्ते । भाव्यांशस्तु विध्यवगमबलादेव पुरुषार्थो ऽपेक्ष्यते । तावानेव च तत्र विधेरुपयोगः । तदभावे धात्वर्थभाव्यांशो निविशेत । सत्यां च फलाकाङ्क्षायां प्रकृतभावनया युगपत्संबन्धात् तस्याश्च सर्वाङ्गविशिष्टाया युगपत्प्रधानविधानादङ्गानामपि तत एवानुष्ठानसिद्धेः । तस्मिन्नंशे ऽङ्गविधीनामनुवादकत्वमित्यादिना । तस्मादुक्तरीत्या फलाकाङ्क्षाया अभावान्न प्रत्येकं फलेन संबन्धः । किं तु सर्वेषां केवलप्रधानार्थतेति ॥ ८ ॥

## कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ॥ ९ ॥

पूर्वसूत्रव्याख्याने आशङ्कितविरुद्धत्रिकं साङ्गप्रधानविधिपक्षे पूर्वपक्षी दर्शयति । कर्तृविधेरिति । गुणप्रधानेषु तद्विषयकः कर्तुर्यो विधिः प्रयोगविधिः गुणानुष्ठानस्य प्रधानानुष्ठानस्य चेति फलितम् । नानार्थत्वात् । नानोद्देश्यकत्वात् । तथा च पूर्वोक्तविरुद्धत्रिकमिति पूरणीयम् ॥ ९ ॥

## आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥

विरुद्धत्रिकद्वयापत्तिं परिहरति । आरम्भस्येति । अत्रारम्भशब्दो व्यापारवाची । आरम्भो व्यापार इति भाष्ये विवरणात् । इत्थं चारम्भस्यारम्भान्वयबोधजनिकाया आकाङ्क्षायाः शब्दपूर्वत्वात् । भावनावाचक-

शब्दजन्यत्वात् । अयं भावः । भावनावाचकशब्दस्य कुर्यादित्यस्य श्रवणे केन किं कथमिति तिस्र आकाङ्क्षा उत्पद्यन्ते, न तु यागशब्दउच्चारितइति कथंभावाकाङ्क्षापरिपूरकतया भावनायामेवान्वयो न तु यागानुवादेनेति न वैरूप्यम् । एवं सति फलाङ्गत्वपरिहारादिकथनमाकरे द्रष्टव्यम् । विस्तरभयान्नेह लिख्यते । भाष्यकारमते षट्सूत्रमेकमधिकरणम् । अपरं नवसूत्रम् ॥ १० ॥

दर्शपूर्णमासादिकाम्यकर्मणां सर्वाङ्गोपसंहारः । अधि० ३ ।

## एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ॥ ११ ॥

अग्निहोत्रादीनां नित्यप्रयोगाणां सर्वाङ्गोपसंहारो नेति षष्ठे साधितम् । तथा काम्ये तु सर्वाङ्गोपसंहार इति तमाक्षिपन्पूर्वपक्षमाह । एकेनापीति । एकेनाप्यङ्गेन समाप्येत । प्रयोग इति शेषः । कृतार्थत्वात् । कथंभावाकाङ्क्षायाः पूर्णत्वात् । यथा क्रत्वन्तरेषु स्वर्गसाधनेषु ज्योतिष्टोमाग्निहोत्रदर्शपूर्णमासादिषु सत्सु एका स्वर्गभावना एकेनैव क्रतुवाचकेन शब्देन निराकाङ्क्षं तथा । ननु तत्संनिधानाविशेषेण विनिगमनाविरहात्सर्वाङ्गाण्याकाङ्क्षापरिपूरकाणीत्यत आह । उत्तरावदिति । सर्वाङ्गाणां संबन्धे ऽपि न नियमेन संबन्धः किं तु यावदङ्गानुष्ठानं तावत्फले उपकाराधिक्यं यथा वा सान्नाय्ये तिस्रो वाग्यतो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयतीत्यत्र गवामनियमः उत्तरासां गृहे यावत्यस्तथा यथाशक्ति अनुष्ठानमिति भावः ॥ ११ ॥

## फलाभावादिति चेत् ॥ १२ ॥

यजेत स्वर्गकाम इति फलं प्रति सर्वेषामविशेषेण विधानादेकदेशानुष्ठाने फलाभावप्रसङ्ग इति शङ्कते । फलाभावादिति । फलाभावात्फलानुत्पत्तेः ॥ १२ ॥

## न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥

पूर्वशङ्कां दूरीकरोति । नेति । कर्मणा प्रधानकर्मणा फलस्य

संयोगान्न पूर्वद्रोषः । इत्थं सति प्रयोजनं फलमशब्ददोषं शब्ददोषरहितमबाधितार्थमिति यावत् । अयं भावः । यजेत स्वर्गकाम इति वाक्येन प्रधानकर्मणा फलं संबद्धुं नाङ्गैः । यदि चाङ्गान्यपि फलेन संबध्येरन् तर्हि दर्शपूर्णमासाभ्यामिति तृतीयानुपपत्तिः । करणत्वस्य प्रकृत्यर्थेतरसापेक्षत्वात् तृतीयानुपपत्तिः । विस्तरो व्रीहियवयोः समुच्चयखण्डनावसरे ज्ञेयः । तृतीयासहितवाक्यादितरनैरपेक्ष्यं प्रधानकर्मणः फलसंबन्धे प्रतीयमानं संबध्येत ॥ १३ ॥

ऐकशब्द्यादिति चेत् ॥ १४ ॥

पुनर्युक्त्यन्तरेणाशङ्कते । ऐकेति । ऐकशब्द्याद् एकविधिविषयत्वाद्, निखिलाङ्गानामिति शेषः । इत्थं चोभयोः फलसंबन्ध आवश्यक इति भावः ॥ १४ ॥

नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥ १५ ॥

इमं पक्षं दूषयित्वा पूर्वपक्षं द्रढयति । नेति । न सर्वेषां फलसंबन्धः । कुतः, अर्थपृथक्त्वादर्थभेदात् । प्रधानस्य फलार्थत्वात् । अङ्गानां प्रधानार्थत्वात् । यद्यङ्गानां प्रधानस्य च फलसंबन्धः तदा समत्वात्प्रधानाङ्गयोः तुल्यत्वादगुणत्वमेको गुणः अपरं प्रधानमिति विवेको न स्यादिति भावः । तस्माच्च सर्वाङ्गोपसंहार इति पूर्वपक्षः ॥ १५ ॥

विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाक्रमं निर्वृत्तवत्तस्मात्सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥

सिद्धान्तमाह । विधेरिति । सर्वाङ्गानुष्ठानं सर्वप्रयोगेष्विति प्रतिज्ञावाक्यं पूरणीयम् । कुतः, विधेः यावदङ्गानुष्ठानबोधकविधेः एकश्रुतित्वात् प्रधानविधिगम्यत्वाद् यावदङ्गप्रयोगविधेरिति भावः । नन्वेकविधिगम्यत्वे ऽपि पर्यायेण प्रयोगभेदेन सर्वेषां निवेशो ऽस्त्वत आह । अपर्यायविधानादिति। एतस्यैवार्थं विवृणोति । नित्यवदिति । नित्यवच्छ्रुताङ्गस्नानबोधकशब्दाद् भूता उत्थिता आकाङ्क्षा कथंभावाकाङ्क्षा तया

ऽभिसंबन्धात् । यथा प्रधानकरणाकाङ्क्षया नित्यं यावत्प्रयोगेषु संबन्धः तथा नित्यं यावदङ्गानां कथंभावाकाङ्क्षया संबन्धान्न पर्यायेणानुष्ठान-मिति भावः । ननु नित्यवक्तृत्वस्यापि पर्यायेणानुष्ठाने किं बाधकमित्यत आह । अर्थेनेति । अर्थेन प्रधानोपकारेण युगपदेककालं प्राप्तेः संब-न्धात् । यथाक्रमं प्रथमं यथा ऽऽकाङ्क्षापूरकतया ऽन्वितं तथैवानुष्ठानम् । अयं भावः । भावनावाचकशब्दश्रवणे उत्थितायाः कथंभावाकाङ्क्षायाः पूरकतया खलेकपोतन्यायेन युगपत्सर्वेषामङ्गानामन्वितत्वात्पर्यायेण प्रयोगे ऽङ्गानां संबन्धे प्राथमिकयुगपदन्वयो बाधितः स्यादिति । अत्र दृष्टान्तमाह । निवीतवदिति । निवीता ऋत्विजः प्रचरन्तीत्यत्राविशेषा-त्सर्वेषां सन्निधानात्सर्वर्त्विक्साधारणं तथा सर्वप्रधानप्रयोगसाधारणं सर्वा-ङ्गम् । प्रतिज्ञातमर्थं निगमयति । तस्मादिति ॥ १६ ॥

## तथा कर्मोपदेशः स्यात् ॥ १७ ॥

उक्तार्थे उपष्टम्भकं दर्शयति । तथेति । तथा सति यावदङ्गानां यावत्प्रयोगेष्वनुष्ठाने सति कर्मोपदेशः चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामित्याहुतिसंख्योपदेशः संगतः स्यात् । पौर्ण-मास्यां चतुर्दशत्वं च द्वे चतुषी पञ्च प्रयाजास्त्रीणि प्रधानानि स्विष्टकृत् त्रयो ऽनूयाजा इति अमावास्यायामैन्द्रयागयोरेकाहुतित्वात्त्र-योदशत्वम् । इयं संख्या नित्यं सर्वाङ्गेष्वनुष्ठितेष्वेवोपपद्यत इति भावः ॥ १७ ॥

## क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥

एतदधिकरणारम्भसूत्रे क्रतुदृष्टान्तो दर्शितः । तद्वैषम्यं दर्श-यति । क्रत्वन्तरेष्विति । पुनर्वचनम् । ज्योतिष्टोमदर्शपूर्णमासादिषु स्वर्ग-काम इति पुनः पुनः श्रुतमतः प्रत्येकं फलेन संबन्धो युक्त इति भावः ॥ १८ ॥

## उत्तरासुश्रुतित्वाद्विशेषाणां कृतार्थत्वात्स्वदोहे याथाकामी प्रतीयेत ॥ १९ ॥

उत्तरासु दृष्टान्तवैषम्यं दर्शयति । उत्तरास्विति । उत्तरासु तिसृष्वो गोष्व उत्तरासु अश्रुतित्वात् । विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयतीत्यनेन दोहनस्याविहितत्वात् । ननु तर्हि वाक्यं व्यर्थमत आह । विशेषाणां वाग्विसर्गादीनां विधानेन कृतार्थत्वात् । स्वदोहे स्वीयस्वत्वं यावत्तु तावद्दोहे याथाकामी यथेच्छं प्रतीयते नास्यैतां रात्रिं कुमाराः पयो लभन्तइत्यनेन स्वत्वाश्रयसकलगोदोहप्राप्तिरिति भावः ॥ १९ ॥

काम्यकर्मणां भूयो ऽभ्यासः । अधि० ४ ।

## कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भफलानि स्युः ॥ २० ॥

काम्यं कर्म सकृदेव कर्तव्यं फलाधिक्यमिच्छता ऽपि अथवा ऽसकृदनुष्ठेयमिति संशये प्रथमं सिद्धान्तसूत्रमाह । कर्मणीति । कर्मणि फले आरम्भेण कर्मानुष्ठानेन भाव्यत्वात् । उत्पाद्यत्वात् । प्रत्यारम्भं प्रत्यनुष्ठानं फलानि स्युः फलाधिक्येच्छावता आवृत्तिः कार्येति भावः । यथा कृषिः प्रतिसंवत्सरं कर्षणाद्यनुष्ठाने धान्योत्पत्त्यावृत्तिः ॥ २०

## अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥ २१ ॥

उक्तार्थे साधकं लिङ्गमप्याह । अधिकार इति । सर्वेषां बहूनां कार्यत्वादनुष्ठेयत्वात् । विशेषः अधिकारः, प्रथमं यजेरन् द्वितीयं यजेरन् इति क्व चित्कुलः उपपद्यते ॥ २१ ॥

## सकृत्तु स्यात्कृतार्थत्वादङ्गवत् ॥ २२ ॥

पूर्वपक्षी स्वाभिप्रायमाह । सकृदिति । सकृदेवानुष्ठानं स्यात् । यथा एकप्रयोगे सकृदङ्गानुष्ठानेन कृतार्थत्वात् ॥ २२ ॥

## शब्दार्थश्च तथा लोके ॥ २३ ॥

स्वमते ऽप्युपष्टम्भकमाह । शब्दार्थ इति । लोके लोकव्यवहारे तथा सकृत्काष्ठान्यानयेति गुरूक्ते शब्दार्थः शब्दानुष्ठानं काष्ठाहरणं सकृदेव करोतीति भावः ॥ २३ ॥

## अपि वा संप्रयोगे याथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥

उक्तपक्षं दूषयन् सिद्धान्तं दृढीकरोति । अपि वेति । अपि वेति पक्षान्तरद्योतकम् । संप्रयोगे प्रयोगानुष्ठाने याथाकामीति प्रतीयेत ज्ञातव्यम् । कुतः, अश्रुतित्वात् सकृदेव कर्तव्यमिति शास्त्राभावात् । विधिषु अनुष्ठानमात्रविषयाणि विधिवचनानि स्युः । न सकृदसकृद्वेत्यत्रापि तात्पर्यमिति भावः ॥ २४ ॥

## ऐकशब्द्यात्तथाऽङ्गेषु ॥ २५ ॥

नन्वङ्गेष्वपि सकृदसकृदिति शास्त्राभावादभ्यासः स्यादत आह । ऐकशब्द्यादिति । अयं भावः । अङ्गानां प्रधानानां च विधायक एको विधिप्रत्ययस्तत्र कथंभावाकाङ्क्षा सकृदेवेति । फले तु फलेच्छाया यदा यदा सत्त्वं तदा तदा उपायाकाङ्क्षा किं साधनमित्याकारिकेति तदावृत्तिरिति भावः ॥ २५ ॥

## लोके कर्मार्थलक्षणम् ॥ २६ ॥

यश्च लोकदृष्टान्तः पूर्वपक्षिणोक्तः तं निवारयति । लोकइति । लौकिकं कर्म अर्थलक्षणं लौकिकप्रत्यक्षविषयकार्यकम् । अयं भावः । लोके काष्ठान्यानयेत्युक्ते सकृदानयनेन पाकनिष्पत्तौ सकृदेवाहरति तदनिष्पत्तौ द्विवारं त्रिवारमानयति तेन विना ऽपि कार्यसिद्धौ नानयति च । अत्र बीजं फलदर्शनमस्तीति । स्वर्गादिस्थले तददर्शनाल्लौकिकदृष्टान्तो ऽनुचित इति ॥ २६ ॥

अवघातादीनामातण्डुलनिर्वृत्त्यभ्यासः । अधि० ५ ।

## क्रियाणामर्थशेषत्वात्प्रत्यक्षमतस्तन्निर्वृत्त्या ऽपवर्गः स्यात् ॥ २७ ॥

व्रीहीनवहन्तीत्यत्रावहननं सकृदनुष्ठेयमुत आ तण्डुलनिष्पत्तेरिति संशये अङ्गानां सकृदनुष्ठानमिति पूर्वाधिकरणे सिद्धान्तात्सकृदेवेति पूर्वपक्षे सिद्धान्तमाह । क्रियाणामिति । क्रियाणामवहननादिकर्मणामर्थशेषत्वात् । तण्डुलनिष्पत्तिरूपार्थजनकत्वात् । क्रियाफलं प्रत्यक्षमतस्तन्निर्वृत्त्या तण्डुलाद्युत्पत्त्या ऽपवर्गः क्रियोपरमः स्यात् ॥ २७ ॥

अदृष्टफलस्यावघातादेः सकृदनुष्ठानम् । अधि० ६

**धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥ २८ ॥**

एवं दृष्टफलावहनने आवृत्तिमुक्त्वा ऽदृष्टे तादृशक्रियास्थले सकृदनुष्ठानं दर्शयति । धर्मेति । धर्ममात्रे केवलादृष्टसाधने ऽवहनने फलस्यादर्शनात् प्रत्यक्षाभावाच्छब्दार्थेन सकृत्कृतः शास्त्रार्थ इति न्यायेन सकृदनुष्ठानेनापवर्गः विरामः स्यात् । यथा ऽग्निचयने औदुम्बरमुलूखलं सर्वौषधिपूर्णमवहत्य तदुपदधातीत्यत्र ॥ २८ ॥

प्रयाजादीनामङ्गानां सकृदनुष्ठानम् । अधि० ७ ।

**क्रतुवद्वा ऽनुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥**

प्रयाजादीनामपि असकृदनुष्ठानमुत सकृदिति संशये पूर्वपक्षमाह । क्रतुवदिति । प्रयाजानामभ्यासे फलभूमा फलाधिक्यं स्यात् । कुतः, अनुमानं चेत्थं, प्रयाजाद्यभ्यासः अधिकोपकारसाधनं क्रियावृत्तित्वात् काम्यक्रतुवदिति ॥ २९ ॥

**सकृद्वा कारणैकत्वात् ॥ ३० ॥**

सिद्धान्तमाह । सकृदिति । करणैकत्वात् । प्रधानरूपैककरणत्वात् । सकृदेवानुष्ठानम् । अयं भावः । यथा मृत्पिण्डादिना घटे जननीये यावता चक्रभ्रमेणोपकारः कृतस्तद्द्विगुणभ्रमणानुष्ठाने उपकारो न दृश्यते भ्रमणस्यान्यत्कार्यं नास्ति तावतैव कृतार्थत्वादुत ॥ ३० ॥

**परिमाणं चानियमेन स्यात् ॥ ३१ ॥**

उक्तार्थे साधकान्तरमाह । परिमाणमिति । परिमाणं पौर्णमास्याममावास्यायां च चतुर्दश त्रयोदशेति नित्यवत्कृतप्रयाजाद्यभ्यासे अनियमेन कदा चित्पञ्चदश कदा चित्षोडश सप्तदशेत्यनियमः स्यात् ॥ ३१ ॥

**फलारम्भनिर्वृत्तेः क्रतुषु स्यात्फलान्यत्वम् ॥ ३२ ॥**

क्रतुवदित्युक्तम् । तद्वैषम्यं दर्शयति । फलेति । फलस्य स्वर्गादेः आरम्भनिर्वृत्तेः आरम्भनिष्पत्तेः । पृथक् पृथग् उत्पत्तेरिति भावः । क्रतुषु काम्यक्रतुषु फलान्यत्वं फलभेदः स्यात् ॥ ३२ ॥

## अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥

यदुक्तं सिद्धान्तिना सकृत्कृतेनाङ्गेन कृतार्थत्वादभ्यासानर्थक्यमिति तत्परिहरन्पूर्वपक्षं दृढयति । अर्थवानिति । अभ्यासो ऽङ्गाभ्यासः अर्थवान्सफलः नैकत्वादनेकत्वात्कार्यस्येति शेषः । एकस्मिन्नेककार्यविषयः अभ्यासः अनर्थको विफलो भवेत् । यथा भोजनमेकतृप्त्यर्थं तृप्तिसमये तदभ्यासो व्यर्थस्तथा प्रकृते न फलानेकत्वं दर्शयति । अर्थस्य प्रधानफलस्यापरिमाणत्वाद् अनियतत्वात् । अङ्गानां प्रधाने यत्क्रियाफलजननसाधनरूपक्रिया तदर्थत्वात् । अयं भावः । प्रधानस्य फलमियदित्यनियतं स च नियमः अङ्गानुष्ठानकृतः । अङ्गोपकारभूयस्त्वे फलभूयस्त्वं तदल्पत्वे तदल्पत्वमिति अनियमः सकृदसकृदिति ॥ ३३ ॥

## पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥

आहुतिसंख्याविरोधं पूर्वं दर्शितं परिहरति । पृथक्त्वादिति । उक्तरीत्या अर्थस्य पृथक्त्वात्तदनुरोधेन विधितः विधिपरं परिमाणं संख्या स्यात् । आहुत्युत्पत्तिवाक्यगतसंख्यायां तात्पर्यमिति ॥ ३४ ॥

## अनभ्यासो वा प्रयोगवचनैकत्वात्सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ॥ ३५ ॥

पुनः सिद्धान्तं दृढयति । अनभ्यासो वेति । अङ्गानामनभ्यासः प्रयोगवचनैकत्वात् । ननु प्रयोगवचनैक्ये ऽपि यथा काम्यप्रयोगावृत्तिस्तथा ऽङ्गावृत्तिः किं न स्यादत आह । कर्मणो ऽङ्गस्याफलत्वात् । अफलत्वेनाभ्यासात्फलाधिक्यं नेति भावः । अफलत्वे हेतुमाह । युगपदिति । युगपदेकभावनायामन्वयश्रवणायां पदश्रुत्यां फलकरणत्वेन प्रधानक्रियैवान्वितेति भावः । नन्वङ्गानुष्ठानं तर्हि व्यर्थमत आह । क्रियार्थत्वात् । प्रधानक्रियोपकारार्थत्वात् ॥ ३५ ॥

## अभ्यासो वा छेदनसंमार्गावदानेषु वचनात्सकृत्त्वस्य ॥ ३६ ॥

पूर्वपक्षमन्यसाधनेन द्रढयति । अभ्यासो वेति । पितृयज्ञे सकृदाच्छिनत्तीति तथा परिधीन्सकृत्संमार्ष्टीति स्विष्टकृति सकृदवद्यतीति । एषु सकृत्त्ववचनादन्यत्राभ्यासः । अन्यथा सकृद्वचनं व्यर्थमिति भावः ॥ ३६ ॥

## अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥

सिद्धान्तमाह । अनभ्यास इति । अनभ्यास एव पूर्वोक्तयुक्तेः छेदनादिषु फलान्तरतात्पर्येण वाच्यत्वात् । तथा हि । दर्शपूर्णमासयोरसकृदाच्छिनत्तीति श्रुतं, तस्यातिदेशतः प्राप्तौ, एवं प्रयाजसंनिधौ परिधिसंमार्गस्त्रिवारं विहितः, तत्सादृश्येनानूयाजसंनिधाने ऽपि तथा प्राप्तौ, एवमन्यत्र द्विरवत्तं विहितं तथा स्विष्टकृत्यपि प्राप्तौ, तन्निवृत्त्यर्थं सकृत्त्वस्य वाच्यत्वादिति भावः ॥ ३७ ॥

कपिञ्जलानिति बहुवचनस्य त्रित्वपरत्वम् । अधि० ८ ।

## बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥

कपिञ्जलानालभतेत्यत्र त्रयश्चत्वारः पञ्चेत्यनियता उत त्रय एवेति संशये पूर्वपक्षमाह । बहुवचनेनेति । स्पष्टार्थः ॥ ३८ ॥

## दृष्टः प्रयोग इति चेत् ॥ ३९ ॥

ननु चतुष्ट्वादिकं न बहुवचनार्थः किं तु त्रित्वमेव । अत एव बहुवचने श्रुते न त्रित्वसंशयः किं तु चतुष्ट्वादीनामेवेति । यथा कपिञ्जलादिश्रवणे कपिञ्जलशब्दार्थे न विवदन्ते लोकाः कपोतो मयूरो वेति । किं कारणमिति चेदितरत्र प्रयोगाभावादेवेत्याशङ्कायामाह । दृष्टः प्रयोग इति । चतुरादिष्वपि चत्वारो ब्राह्मणा इति प्रयोगो दृष्टः कथं त्रित्वमात्रमर्थ इति भावः ॥ ३९ ॥

## तथेह ॥ ४० ॥

दृष्टान्ते ऽपीमं दोषमतिदिशति । तथेति । यथा माणवके

सिंहशब्दप्रयोगः तथा कदा चिन्मयूरे ऽपि कपिञ्जलप्रयोगो दृश्यते ऽतः विकल्पेन मयूरालम्भो ऽपि स्यादिति भावः ॥ ४० ॥

भक्त्येति चेत् ॥ ४१ ॥

लाक्षणिकत्वान्मयूरालम्भप्राप्तिर्नेति परिहरति । भक्त्येति । भक्त्या लक्षणया ॥ ४१ ॥

तथेतरस्मिन् ॥ ४२ ॥

बहुत्वस्याप्यन्यत्र प्रयोगो लक्षणया भविष्यति तस्माद्बहुवचनस्य न त्रित्वादिकमर्थः किं तु बहुत्वं तस्य त्रित्वमारभ्य परार्धपर्यन्तेषु सत्त्वात् । तावतां प्राप्तौ समुच्चयेनानुष्ठानासंभवाद्विकल्प इति भावः ॥ ४२ ॥

प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४३ ॥

अस्तु बहुत्वमर्थः तथा ऽपि न प्रथमं त्रीननुपादाय चत्वार उपादातुं शक्यन्ते । यतो बहूनां मध्ये त्रित्वं प्रथममुपस्थितं तत्परित्यागे मानाभाव इत्यभिप्रायेण सिद्धान्तमाह । प्रथममिति । उक्तवाक्ये प्रथमं त्रित्वं नियम्येत । कारणात् प्रमाणान्तरात् अतिक्रमः यथा सप्तदश प्राजापत्यानालभतइति ॥ ४३ ॥

तथा चान्यार्थदर्शनम् ॥ ४४ ॥

उक्तार्थे लिङ्गं साधकमाह । तथा चेति । तथा च केवलबहुवचनस्य त्रित्वपर्यवसाननियमात् । अन्यार्थे ऽप्यन्यत्र दर्शनम् । यथा कृष्णा याम्या अवलिप्ता रौद्रा नभोरूपा पार्जन्या ऐन्द्राग्नो दशम इति । अत्र एकत्र नियम एव ऐन्द्राग्ने दशमत्वं नियमेन घटते । अन्यथा पाक्षिकं स्यादिति भावः ॥ ४४ ॥

प्रकृत्या च पूर्ववत्तदासक्तेः ॥ ४५ ॥

सिद्धान्ते साधकान्तराण्यपि दर्शयति । प्रकृत्येति । प्रकृत्या अग्नीषोमीयं पशुमालभेतेत्यत्र एकत्वेन तदासक्तेः । तस्य त्रित्वस्यासक्तेः सन्निकृष्टत्वात् । किं च पूर्ववत् । पूर्वसूत्रवत् । लिङ्गान्तरं चास्ति वृहस्पतीये ओदनानुद्धरतीति । तत्र प्रथमं त्रित्वसंख्याबोधकं वाक्यं निदध-

पदं मध्यमस्येति श्रुतम् । अन्यत्र पञ्चानां मध्यमः अष्टानां मध्यम इति लोपपदं श्रूयते । इदमपि लिङ्गं ज्ञेयम् ॥ ४५ ॥

उत्तरा दोहयतीत्यत्र सर्वासां गवां दोहनविधानम् । अधि० ६ ।

## उत्तरासु यावत्स्वमपूर्वत्वात् ॥ ४६ ॥

सान्नाय्ये श्रूयते । वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्योत्तरा दोहयतीति । किमयं विधिरनुवाद इति संशये पूर्वपक्षमाह उत्तरास्विति । उत्तरासु गोषु यावत्स्वं यावतीषु स्वत्वं तावतीषु, दोहो विधीयते इति शेषः । अपूर्वत्वादप्राप्तत्वात् ॥ ४६ ॥

## यावत्स्वं वा ऽन्यविधानेनानुवादः स्यात् ॥ ४७ ॥

सिद्धान्तमाह । यावत्स्वमिति । यावत्स्वं पूर्वोक्तमनुवादः । अन्येन वाक्येन विधानेन ॥ ४७ ॥

## साकल्यविधानात् ॥ ४८ ॥

केन विधानमत आह । साकल्येति । साकल्यविधानात् । नास्यैतां रात्रिं पयसा ऽग्निहोत्रं जुहोति कुमाराश्च न पयो लभेरन् इत्यनेन सकलगोदोहविधानात् ॥ ४८ ॥

## बह्वर्थत्वाच्च ॥ ४९ ॥

ननु इदं वाक्यं न सकलगोदोहं विदधाति । लक्षणापत्तेः । कुमाराणां प्रतिषेधमात्रं करोतीत्यत आह । बह्विति । बह्वर्थत्वादित्यस्मात् प्राग्, लिङ्गस्येति शेषः । लिङ्गं च बहु दुग्धीन्द्राय देवेभ्य इति मन्त्रस्थं शतपदं बहुत्वं वदन् अशेषगोदोहनमेव विधेयं द्रढयतीति भावः ॥ ४९ ॥

## अग्निहोत्रे चाशेषवद्यवागूनियमः ॥ ५० ॥

लिङ्गान्तरमप्याह । अग्निहोत्रे चेति । नास्यैतां रात्रिं पयसा ऽग्निहोत्रं जुहोति यथा ऽन्यस्यै देवतायै प्रत्तमन्यस्यै देवतायै दद्यात्तादृक् तत्स्याद् यवाग्वा जुहुयादिति । अग्निहोत्रे यवागूनियमः अशेष-

वत्रिवित्वगोदोहरूपमर्थं द्रढयति । अन्यथा ऽन्यस्यै देवतायै दत्तमित्या-र्थवादासङ्गतेरिति भावः ॥ ५० ॥

इति व्याख्यातम् ॥ ५१ ॥

इत्यनेन सूत्रेण कुमारपयःप्रतिषेधवाक्यमपि व्याख्यातम् ॥ ५१ ॥

सर्वप्रापिना ऽपि लिङ्गेन संयुज्य देवताभिसंयोगात् ॥ ५२ ॥

सर्वदोहनविधौ लिङ्गान्तरमप्याह । सर्वेति । संयुज्य वत्सेभ्यश्च एताः पुरा मनुष्येभ्यश्चाप्याययन्तीति वाक्येन एता गावः प्रथमं वत्समनु-ष्यार्थत्वेन निर्दिश्य पश्चाद्देवताभिसंयोगात् । देवेभ्य एवैना इन्द्रायाप्याययतीत्यनेन वत्सेभ्यो मनुष्येभ्य आप्याययन्त ताः सर्वा देवेभ्य आप्याययतीति लिङ्गं सर्वदोहविधौ स्पष्टमिति भावः ॥ ५२ ॥

आग्नेयादीनां प्रधानानां भेदे ऽप्याघारादीनामङ्गानां तन्त्रेणानुष्ठानम् । अधि० १० ।

प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ५३ ॥

दर्शपूर्णमासयोः आग्नेयादिप्रधानभेदेनाघाराद्यङ्गानामावृत्तिरुत तन्त्रमिति संशये उपोद्वातं समाप्याध्यायार्थतन्त्रविचारं कर्तुं पूर्वपक्ष-माह । प्रधानमिति । अङ्गानां प्रयोगे ऽनुष्ठाने कर्मभेदः अनुष्ठानस्यावृत्तिः स्यात् । तद्भेदात्प्रधानभेदात् । प्रधानभेदे ऽनुष्ठानभेदः कुत इत्यत्र हेतुमाह । प्रधानकर्मार्थत्वात् ॥ ५३ ॥

क्रमकोपश्च यौगपद्ये स्यात् ॥ ५४ ॥

स्वमते ऽन्यदपि बाधकमाह । क्रमेति । यौगपद्ये ऽङ्गानां तन्त्रा-नुष्ठाने क्रमकोपः विहितक्रमबाधः । चतुर्यागाव्यवहितोत्तरत्वं सर्वप्रधा-नानां यौगपद्ये मध्ये ऽग्नियागव्यवधानादुपांशुयागस्य क्रमकोप इति भावः ॥ ५४ ॥

तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषा-ग्रहणात् ॥ ५५ ॥

सिद्धान्तमाह । तुल्यानामिति । तुल्यानां देशतः कालतः कर्तृ-

तत्तुल्यानां त्रयाणां यौगपद्यं सह प्रयोगः स्यात् । कुतः, एकशब्देन दर्शशब्देन पौर्णमासशब्देनोपदेशात् । फलसंबन्धोपदेशात् । अङ्गाना-मपि विशेषाग्रहणाद् अयमङ्गकलापः किमाग्नेयस्योताग्नीषोमीयस्येति सर्वार्थत्वमतस्तन्त्रेणैवानुष्ठानम् ॥ ५५ ॥

## ऐकार्थ्यादव्यवायः स्यात् ॥ ५६ ॥

क्रमकोपः स्यादित्युक्तं परिहरति । ऐकार्थ्यादिति । एकः अर्थो येषां ते एकार्थाः तेषां भावः ऐकार्थ्यं तत्त्वात् । दण्डचक्रादिवत्संभूय फलजनकत्वाद् न तेषां प्रयोगे क्रमः । कुतः क्रमकोपः । अतः सर्वेषाम-ङ्गैरव्यवायः स्यात् ॥ ५६ ॥

## तथा चान्यार्थदर्शनं कामुकायनः ॥ ५७ ॥

तथा चेति । तथा चाङ्गानां तन्त्रे सति अन्यदर्शनमन्यलिङ्गदर्शनं पूर्वोक्ताहुतिसंख्यादर्शनं लिङ्गं कामुकायनाचार्यो दर्शयति ॥ ५७ ॥

## तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ५८ ॥

नन्वेवं वेदेन पुरोडाशे साङ्गारभस्माध्यूहेत्यत्र सकृदनुष्ठानं स्या-दत आह । तन्न्यायत्वादिति । सः संभूयकारिणां सह क्रियेति न्यायो यत्र तत्त्वात् । तेन हेतुना नात्र तन्त्रम् । अशक्तेः अङ्गारस्थापनं कार्यं पुरो-डाशपाकः स चैकत्राङ्गारस्थापने ऽन्यत्र पाकाशक्तेः असमर्थत्वात् । किं त्वानुपूर्व्यं भेदेनैवानुष्ठानम् । नन्वदृष्टार्थमङ्गाराधिवासो ऽस्त्वत आह । संस्कारस्योक्तस्य तदर्थत्वात् । पाकार्थत्वात् । दृष्टसम्भवे ऽदृष्टकल्पनाया अन्याय्यत्वादिति भावः ॥ ५८ ॥

## असंस्पृष्टो ऽपि तादर्थ्यात् ॥ ५९ ॥

पुनः पूर्वपक्षमुत्थापयति । असंस्पृष्टो ऽपीति । ननु येन प्रधानेन यः स्पृष्टः तत्समीपे यदनुष्ठीयते तत्तदङ्गमित्याघारादय आग्नेयाङ्गं स्विष्टकृदादयः अग्नीषोमीयाङ्गम् उपांशुयागस्य केनाप्यसंस्पर्शादनङ्ग

स्यादत आह । असंसृष्टोऽपीति । *तादर्थ्यात् । बलवता प्रकरणेन सर्वार्थत्वात् । प्रत्येकमुपकारार्थमङ्गानामावृत्तिः कार्येति भावः ॥ ५९ ॥

विभवाद्वा प्रदीपवत् ॥ ६० ॥

सकृदनुष्ठानेनापि सर्वोपकारसंभवं दृष्टान्तेन दर्शयति । विभवादिति । विभवात्सामर्थ्यात् । सकृदनुष्ठितोऽप्युपकारं जनयतीति पूरणीयम् । प्रदीपदृष्टान्तो व्याख्यातः पूर्वम् ॥ ६० ॥

अर्थात्तु लोके विधिः प्रतिप्रधानं स्यात् ॥ ६१ ॥

पूर्वपक्षी प्रदीपदृष्टान्तेन सिद्धमर्थं निवारयति । अर्थादिति । लोके प्रवृत्तिरर्थाद् फलस्य प्रत्यक्षाद् विधिः विधिप्राप्तं कर्म प्रतिप्रधानं स्यात् । उक्तोऽयमर्थः सिद्धान्तिनैव, लोके कर्मार्थलक्षणमिति सूत्रेणेति भावः ॥ ६१ ॥

सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥ ६२ ॥

सकृदिति सूत्रं पूर्वं वर्णितं कामुकायनाचार्यमतानुवादः । दोषपरिहारार्थं यच्च तन्मतं तस्योत्तरं द्वान्तरितपूर्वाधिकरणे पृथक्त्वाद्विधित इति सूत्रेण दत्तमिति पूरणीयम् ॥ ६२ ॥

विधेस्त्वितरार्थत्वात्सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥ ६३ ॥

पूर्वपक्षमुपसंहरति । विधेरिति । विधेरङ्गकलापस्येतरार्थत्वात्प्रधानार्थत्वात्सकृदिज्या तन्त्रेणानुष्ठानं श्रुतिव्यतिक्रमः श्रुतेर्व्यतिक्रमो यत्रेति व्युत्पत्त्या शास्त्रविरुद्धं स्यात् ॥ ६३ ॥

विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६४ ॥

सिद्धान्तमाह । विधिवदिति । तन्त्रेण प्रयोगं बादरायणः मनुते कुतः, प्रकरणाविभागात् । संभूयफलकारित्वेन सर्वेषामेकप्रकरणत्वाद्वि-

* तादर्थ्यादित्यस्य स्थाने "अयं भावः । तत्तत्संनिधौ पठितस्य स्थानेनाङ्गत्वं बाध्यम् । ततोऽपीति" पाठः पुस्तकान्तरे ।

धिवत् । यथा यज्ञाङ्गविधयोऽपि प्रयाजादीनितिकर्तव्यताकाङ्क्षया सकृच्छ्रुतानप्यविशेषेण गृह्णन्ति प्रकरणेन स्वास्वसंनिधीन् बाधित्वा तथा तन्त्रेणानुष्ठानमपि संनिधिं बाधित्वा व्यवहितप्रधानेष्वप्युपकारं संपादयतीति सिद्धान्ताभिप्रायः ॥ ६४ ॥

## क्वचिद्विधानाच्चेति चेत् ॥ ६५ ॥

एवं सति क्वचित्सकृदनुष्ठानविधानं व्यर्थम्, यथा सह बध्नन्ति सह पिंषन्तीति पूर्वपक्ष्याशङ्कते । क्वचिदिति ॥ ६५ ॥

## न विधेश्चोदितत्वात् ॥ ६६ ॥

सिद्धान्ती इमामाशङ्कां परिहरति । नेति । विधेः निर्वापविधेः पृथक् चोदितत्वात्तथाऽत्र मा भवत्वेतदर्थं सहत्वविधानात् । तस्मादेकशकलकर्तृव्यवतां प्रधानानामङ्गानुष्ठानं तन्त्रेणेति सिद्धम् ॥ ६६ ॥

कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेनानुष्ठानम् । अधि० ११.

## व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६७ ॥

काम्यपशुकाण्डे श्रूयते । आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमान इति । तत्राग्नेयद्वयस्य सह प्रदानमुत पृथगिति संशये पूर्वपक्षमाह । व्याख्यातमिति । यतः अगृह्यमाणविशेषाणां तुल्यानां यौगपद्यमुक्तं व्याख्यातमुक्तपूर्वाधिकरणादिति, अतोऽत्रापि यौगपद्यमिति पूरणीयम् ॥ ६७ ॥

## भेदस्तु कालभेदाच्चोदनाव्यवायात्स्याद्विशिष्टानां विधिः प्रधानकालत्वात् ॥ ६८ ॥

सिद्धान्तमाह । भेद इति । भेदः प्रधानभेदः । कुतः, कालभेदात् । कालभेदे हेतुमाह । चोदनाव्यवायात् । सौम्यचोदनाव्यवहितत्वात् पाठक्रमेण त्रयाणां यागानां भिन्नकालत्वं क्लृप्तम् । तथा च कालभेदः सिद्ध इति भावः । इममेवाभिप्रायं विवृणोति । विशिष्टानां प्रथमादिलक्षणाविधियतः अतस्तस्यैव तत्तल्लक्षणस्यैव प्रधानकालत्वात् ॥ ६८ ॥

## तथा चान्यार्थदर्शनम् ॥ ६९ ॥

पाठक्रमविवक्षायां लिङ्गमप्याह । तथा चेति । अन्यस्मिन्वाक्ये तदर्थवादे अर्थदर्शनमुक्तार्थदर्शनमभितः सौम्यमाग्नेयौ भवत इति । अभितः पार्श्वद्वये ॥ ६९ ॥

## विधिरिति चेन्न वर्तमानापदेशात् ॥ ७० ॥

एकैकपार्श्वे आग्नेयद्वयविधिपरत्वमाशङ्क्य निराकरोति । विधिरिति । वर्तमानापदेशाल्लट्श्रवणात् ॥ ७० ॥

इति जैमिनिसूत्रवृत्तौ एकादशाध्यायस्य प्रथमः पादः ॥ १ ॥

आग्नेयादीनां प्रधानानां तन्त्रम् । अधि० १ ।

## एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥

पूर्वपादे केवलप्रधानार्थानां तन्त्रं सोपोद्घातं निरूपितम् । अस्मिन्पादे साङ्गप्रधानार्थानां तन्त्रं विचार्यते । दर्शपूर्णमासयोः समे दर्शपूर्णमासाभ्यां यजेत दर्शपूर्णमासयोश्चत्वार ऋत्विज इत्यादिना देशकर्त्रादि प्रतिपादितम् । इमे विधयः किं प्रत्येकमुत्पत्तिविधिशेषा उत प्रयोगविधिशेषा इति संशये सिद्धान्तमारभते । एकेति । मुख्यानां बहूनां प्रधानानामेको ऽभिन्नः देशकालादिः एषां तन्त्रम् । एकशब्दोपदेशात् । बहूनां समुदायवाचकदर्शपूर्णमासाभ्यामिति शब्देनैकेन देशादिविधिवाक्येषु निर्देशात् । इत्थं च यथा फलवाक्ये समुदायवाचकशब्देन समुदितानामेव फलजनकत्वं तथा ऽत्रापि समुदायमुद्दिश्य देशादिविधानादेक एव देशादिरिति भावः ॥ १ ॥

## अविधिश्चेत्कर्मणामभिसंबन्धः प्रतीयेत लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ॥ २ ॥

पूर्वपक्षमाह । अविधिश्चेदिति । तथा च प्रत्येकं कर्मणां प्रधानकर्मणामुद्देशेन देशाद्यविधिश्चेद् देशादीनामभिसंबन्धः अभेदेनाभिसंबन्धः प्रतीयेत देशाद्यैक्यं भवेदिति । तदेव न । किं तर्हि प्रत्येकविधिशेषा देशादय इति शेषः । कुतः, लक्षणार्थाभिसंयोगात् । दर्शपूर्णमासशब्देन लक्ष-

णया लभ्यो यो ऽर्थः समुदायैकदेशः प्रत्येकमाग्नेयादयस्तैरन्वितत्वात् । समुदायवाचकस्यापि प्रत्येककर्मसु लक्षणां स्वीकृत्य प्रत्येकमन्वय इति भावः। लक्षणास्वीकारे बीजमाह । विधेयत्वाच्चेतरेषाम् । इतरेषां देशादीनामप्राप्तत्वेन विधेयत्वात् । अयं भावः । यतो देशादयो विधेयास्तत एवापरिशेषाद्दर्शपूर्णमासशब्देनाग्नेयादयो दर्शपूर्णमासशब्देनानूद्यन्त इति तेषु उद्देश्यत्वं क्लृप्तम् । तथा सत्युद्देश्यवृत्तिपरस्परसाहित्यविवक्षणे वाक्यं भिद्येत । आग्नेयादयः समे कार्यास्ते च पुनः परस्परसहिता इति वाक्यभेदभिया साहित्यविवक्षामपहाय लक्षितेषु तेषु प्रत्येकमेवान्वयः । फलवाक्ये तु यच्यां विधेयत्वात्पश्वेकत्ववद्विवक्षायामपि साहित्यस्य न वाक्यभेद इति । अतः देशादीनां प्रतिप्रधानं भावः देशादिसंबन्धः स्यात् ॥ २ ॥

अङ्गानामपि समदेशादिनियमः । अधि० २ ।

## अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥ ३ ॥

एवं पूर्वपक्षे एतस्योत्तरं यदि त्वित्यादिना वक्ष्यमाणमिदानीमेवोच्येत तदा ऽयमाधिकरणपूर्वपक्ष एव न संभवत्यतः देशादीनामङ्गैः साकं संबन्धो ऽस्ति न वेति चिन्ता मध्ये क्रियते । पूर्वपक्षमाह । अङ्गेष्विति । अङ्गेषु प्रयाजादिषु तदभावः देशाद्यनियमः प्रधानं प्रति प्रधानोद्देशेन विधानात् ॥ ३ ॥

## यदि तु कर्मणो विधिसंबन्धः स्यादैकशब्द्यात्प्रधानार्थाभिसंयोगात् ॥ ४ ॥

एवं मध्ये ऽङ्गविषये पूर्वपक्षान्तरम् । अविधिश्चेदित्यनेन कृतो यः पूर्वपक्षः तदुत्तरपक्षमाह । यदि त्विति । कर्मणः प्रत्येकमाग्नेयादिकर्मणः विधिसंबन्धः देशादिविधिसंबन्धः यदि स्यात्, तदा भवेदेवं, तदेव नोति पूरणीयम् । कुतः, ऐकशब्द्यात् समुदायवाचकैकशब्देन निर्देशात् । ननु ऐकशब्द्यगतिरविधिश्चेदिति सूत्रे दर्शितेत्यत आह । प्रधानार्थाभिसंयोगात् । प्रधानं स्वर्गः फलं यस्य व्यापारस्य स प्रधानार्थः प्रयोगस्तेन देशादीनामभिसंबन्धात् । अयं भावः । देशादीनामुद्देश्यतावच्छेदकं न परस्परसहितयज्ञागत्वं साहित्यविवक्षायां वाक्यभेदस्य त्वयैव दर्शित-

त्वात् । न तावदाग्नेयत्वादिकमुद्देश्यभेदे वाक्यभेदात् । अतो येन व्यापारगणेनानुष्ठितेन स्वर्गो भवति तं लक्षयित्वा तेन देशसंबन्धः । स च व्यापारः संकल्पमारभ्य ब्राह्मणभोजनान्तः प्रयोगः । इत्थं च साङ्गप्रधानप्रयोगे देशनियमः सिद्धः ॥ ४ ॥

## तथा चान्यार्थदर्शनम् ॥ ५ ॥

उक्तार्थे साधकं दर्शयति । तथा चेति । उक्तरीत्या प्रयोगे देशादीनामन्वये चेत्यर्थः । अन्यच्च यो ऽर्थस्तस्य दर्शनमुपपन्नम् । तथा हि । उग्राणि ह वा एतानि घोराणि हवींषि यदमावास्यायां संभ्रियन्ते आग्नेयं प्रथममैन्द्र उत्तरे इति । अत्र संभरणपौर्वापर्यं चैककालत्वे त्रयाणामुपपन्नमिति भावः ॥ ५ ॥

## श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात्कर्मणो ऽश्रुतित्वाच्च ॥ ६ ॥

साधकान्तरमाह । श्रुतिरिति । एषां देशादीनां श्रुतिः प्रधानवद् अनुवादकवत्प्रतीयते । ननु देशादिवाचकसमाख्यांशस्य विधेयत्वं कुतो नेत्यत आह । कर्मश्रुतेः कर्मवाचकदर्शपूर्णमासश्रुतेः परार्थत्वात् । दर्शपूर्णमासाभ्यामिति तृतीयाश्रुत्या आभ्यां किं चित्कार्यमिति प्रतीयते । अतः परार्थत्वं स्पष्टं यदर्थं तत्कर्मणः कार्यस्याश्रुतित्वात् । देशादिकं प्रधानवत्प्रतीयते । तस्यापि प्राधान्यमनुपपन्नम् । प्राधान्ये ऽनुवादकत्वं नियतं प्राधान्यस्यानुवाद्यत्वव्याप्यत्वात् । अतः दर्शपूर्णमासाभ्यां यजेतेत्यस्यैवानुवादकत्वं वाच्यं तेन चाग्नेयादिवाक्यैरुत्पन्नानां कर्मणामनुवादे तृतीयान्तगुणभावानुवादासंभवः । न हि तत्र कर्मणां गुणभावः । उत्पत्तिमात्राख्यानात् । गुणभावावगमश्च फलवाक्यावगतप्रयोगविधावेव । अतो ऽत्रापि तृतीयान्तानुवादः । देशादीनां प्रयोगाङ्गत्वमेव ज्ञापयतीति निखिलसूत्रतात्पर्यं ज्ञेयम् ॥ ६ ॥

## अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेशत्वम् ॥ ७ ॥

यश्चाङ्गप्रधाननियम इति मध्ये पूर्वपक्षः स्थितः तदुत्तरमाह । अङ्गानीति । विधानत्वात्फलवाक्येनैवेति शेषः । प्रधानेन सहाङ्गानि उपदिश्येरन् । यतः साहित्यं प्रधानेन तस्मादेकदेशत्वं स्यात् ॥ ७ ॥

द्रव्यदेवतं तथेति चेत् ॥ ८ ॥

पूर्वपक्षी प्रतिबन्दीमाह । द्रव्यदेवते इति । तथा तन्त्रं स्यादिति ॥ ८ ॥

न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥ ९ ॥

सिद्धान्ती देशादीनां द्रव्यदेवतातो वैषम्यं दर्शयति । न चोदनेति । विधिशेषत्वादुत्पत्तिविधिशेषत्वात् । नियमार्थो ऽस्ति । उत्पत्तिविधिर्यागस्वरूपं दर्शयति । यागस्य रूपे हि देवता द्रव्यं च । अतस्तच्छेषदेशादिश्च प्रयोगविध्यन्वित इति विशेष इति भावः ॥ ९ ॥

तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ १० ॥

उक्तरीत्या देशादितः द्रव्यदेवतयोर्वैषम्यं प्रदर्श्य द्रव्यदेवतयोरङ्गसाधारण्ये दूषणमप्याह । तेष्विति । तेषु प्रधानयागेषु समवेतानां विहितानामङ्गेषु समवायात् । अङ्गानि तन्त्रं प्रधानाङ्गयागयोः इन्द्रसंबन्धिदधिपयोयागवत्तन्त्रेणानुष्ठानं स्यात् । साङ्गप्रधाने द्रव्यदेवतयोरैक्यादिति भावः । एवं परमते उद्भावितं दूषणं स्वमते नास्तीति दर्शयति । तद्भेदाद् द्रव्यदेवताभेदात् कर्मभेदः । स्वमते गुणात्कर्मभेदः प्रयोगे ऽनुष्ठाने ऽपि भेदः । ननु अनुष्ठानमङ्गाङ्गिनोरस्तु तन्त्रं किं बाधकमत आह । तेषां यज्ञयागानां प्रधानत्वात् । तैः सह तन्त्रेणाङ्गानुष्ठाने द्वयोरेव प्रधानत्वं स्यादिति भावः । तथा चाङ्गाङ्गिनोस्तन्त्रेणानुष्ठाने ऽन्यार्थदर्शनं चतुर्दश पौर्णमास्यामाहुतय इति दर्शनमुपपन्नम् ॥ १० ॥

दर्शपूर्णमासेष्टिप्रभृतिषु संघभेदेनाङ्गानां भेदेनानुष्ठानम् । अधि० ३ ।

## इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् ॥ ११ ॥

दर्शेष्टयाः पौर्णमासेष्ट्याश्च राजसूये बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे शितिपृष्ठो दक्षिणेन्द्रमेकादशकपालं राजन्यस्य गृहे ऋषभो दक्षिणेति विहितानां चातुर्मास्ये वसन्ते वैश्वदेवेन यजेत वर्षासु वरुणप्रघासैर्यजेतेत्यादौ अङ्गानां तन्त्रं न वेति चिन्तायां पूर्वपक्षमाह । इष्टीति । एकं कर्म फलमेषामिति विग्रहेणैकफलजनकत्वादित्यर्थः । शेषं स्पष्टम् ॥ ११ ॥

## कालभेदान्नेति चेत् ॥ १२ ॥

पूर्वपक्षमाक्षिपति । कालेति । अत्र कालग्रहणस्याप्युपलक्षकत्वम् ॥ १२ ॥

## नैकदेशत्वात्पशुवत् ॥ १३ ॥

आक्षेपं परिहरति । नेति । एकदेशत्वात् । यस्मिन्वाक्ये प्रधानानां फलसंबन्धविधानं तत्रैवाङ्गानां प्रधानोपकारकत्वेन विधानात् । तथा च समुदायोपकारस्य तन्त्रेणानुष्ठानेनाप्युपपत्तेरिति भावः । पशुवत् सवनीयपशौ वपया प्रातःसवने पुरोडाशेन माध्यन्दिने सवने अङ्गैस्तृतीयसवनइति तद्वचनेन प्रयोगविप्रकर्षमात्रं नाङ्गावृत्तिरिति भावः ॥ १३ ॥

## अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥ १४ ॥

सिद्धान्तमाह । अपि वेति । कर्मणः दर्शप्रयोगस्य पौर्णमासप्रयोगस्य पृथक्त्वात् । न तन्त्रेणाङ्गानुष्ठानम् । प्रयोगपृथक्त्वे हेतुमाह । तेषां च तन्त्रविधानात् । दर्शयागत्रयस्य तथा पौर्णमासयागत्रयस्य च तन्त्रेण एकशब्देनानुवादं कृत्वा पुनः अमावास्यायाममावास्यया यजेत पौर्णमास्यां पौर्णमास्येति विधानात् । तस्मिन् तस्मिन् प्रयोगे साङ्गानां तत्तत्प्रधानानामुपदेशः स्यात् । अन्यथा पुनर्वाक्यद्वयेन पुनर्विधानं व्यर्थं स्यादिति भावः ॥ १४ ॥

तथा चान्यदर्शनम् ॥ १५ ॥

उक्तार्थे गमकं लिङ्गमाह । तथा चेति । तथा चाङ्गावृत्ति-सिद्धौ चान्यस्य चतुर्दश पौर्णमास्यामाहुतय इत्यादिलिङ्गस्य दर्शनमुप-पन्नम् ॥ १५ ॥

तदा ऽवयवेषु स्यात् ॥ १६ ॥

एवं दर्शपूर्णमासयोर्न्यायं दृढीकृत्य यदा भिद्धिस्तदा ऽवयवेषु चातुर्मास्यावयवेषु राजसूयावयवेषु इष्टिषु च स्यात् । देशकालभेदादिति शेषः ॥ १६ ॥

पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः ॥ १७ ॥

पशौ वैषम्यं दर्शयति । पशाविति । पशौ तन्त्रमङ्गानां दुष्कम् । कुतः, चोदनैकत्वात् । आग्नेयं सवनीयं पशुमुपाकरोतीतिचोदनैकत्वात् । अयं भावः । उक्तवाक्यं कर्मणा उत्पादकमुत्पत्तिविधावङ्गानां न ग्रहण-मिति दर्शितं प्राक् । प्रचारविधौ तु तत्तदवयवप्रधाने तत्तत्कालसंबन्धमात्रं विधीयते । पौर्णमास्यां पौर्णमास्येति वाक्यस्य न कालविधायकत्वं तथा-मुत्पत्तिवाक्येष्वेव कालयोगादतः प्रयोगभेद एव तेन विधेयः । इह तु कालविषये चोदनैकत्वादिति । किं चोत्पत्तिवाक्यमाग्नेयं पशुमित्येकं वपाङ्गहोमावभ्यासरूपाविति प्रधानैक्यादङ्गावृत्तिशङ्कैव न । अतः पशौ तन्त्रस्यानुष्ठानस्य विप्रकर्षः ॥ १७ ॥

अध्वरकल्पायां त्रिषु संघेष्वङ्गानां भेदेनानुष्ठानम् । अधि० ४ ।

तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् ॥ १८ ॥

अध्वरकल्पां प्रति निर्वपेदित्युक्त्वा ततः पुरा वाचः प्रवदितोर्नि-र्वपेदित्युक्त्वा ऽऽग्नावैष्णवमष्टादशकपालं निर्वपेत्प्रातःसवनस्य काले आग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यन्दिनस्य सवनस्य काले आग्ना-वैष्णवं द्वादशकपालं निर्वपेत्तृतीयसवनस्य काले इति । अत्र कालभेदा-त्प्रयोगैक्यमुत प्रयोगत्रयमिति संशये पूर्वपक्षमाह । तथेति । तथा पशुव-देकः प्रयोगः विशेषस्य निर्वापान्ताङ्गकलापस्यैककालत्वात् । अयं भावः । पुरा वाचः प्रवदितोर्निर्वपेदित्यत्र विशेषाश्रवणात्कालत्रयनिर्ज्ञापकालवि-

धिरयम् । त्रयाणां निर्वापाणां वागुदयात्प्राक्कर्तव्यत्वे प्राप्ते निर्वापत्रयस्यापकर्षे तदन्तापकर्षः पञ्चमसिद्धः । अग्न्यन्वाधानादिनिर्वापान्तस्य तन्त्रानुष्ठाने सिद्धे उत्तराङ्गाणामपि तद्वदेव तन्त्रेणानुष्ठानमिति ॥ १८ ॥

इष्टिरिति चैकवच्छ्रुतिः ॥ १९ ॥

स्वमते साधकं लिङ्गं दर्शयति । इष्टिरिति । अध्वरकल्पेष्टिरित्येकवच्छ्रुतिः । एकवचनश्रुतिः प्रयोगैक्ये उपपन्ना ॥ १९ ॥

न वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥ २० ॥

सिद्धान्तमाह । न वेति । कर्मपृथक्त्वात् । अभ्यासेन कालरूपगुणविशिष्टकर्मणां पृथक्त्वात् । तेषां प्रातर्मध्याह्नापराह्णयोस्तत्तत्तन्त्रविधानात्साङ्गानामेव विधानमतः प्रयोगभेदः । अयं भावः । यद्यध्वरकल्पां निर्वपेदित्युत्पत्तिवाक्यं तदा भवेत्प्रयोगविप्रकर्षः । तदेव न । आग्नावैष्णवादिवाक्यैर्गुणविधौ प्राप्ते कर्मण्यनेकगुणविधाने वाक्यभेदात् । अतस्तेषामेव प्रत्येकं तत्तत्कालविशिष्टकर्मविधायकत्वात् कालभेदात्प्रयोगभेद इति भावः ॥ २० ॥

प्रथमस्य वा कालवचनम् ॥ २१ ॥

निर्वापत्रयस्यापकर्षणैककालत्वं पूर्वपक्षे साधनं यदुक्तं तद्दूषयति । प्रथमस्येति । पुरा वाचः प्रवदितोर्निर्वपेदिति कालवचनं तत्प्रथमस्यैव निर्वापस्य । अयं भावः । प्रातःकालकर्तव्यप्रधाननिर्वापस्य प्रधानकालकर्तव्यत्वेन प्रातःकालः प्राप्त एवेति तद्विशेषो नियम्यते । आपराह्णिकस्य निर्वापस्य प्रातःकालस्त्वत्यन्तमप्राप्तः तस्य विधाने ऽपूर्वविधित्वमिति गौरवमिति भावः ॥ २१ ॥

फलैकत्वादिष्टिशब्दो यथा ऽन्यत्र ॥ २२ ॥

एकवचनान्ततया निर्देशगतिं दर्शयति । फलैकत्वेति । नवानां यागानामेकफलजनकत्वादेकवचनम् । यथा सर्वपृष्ठेष्टिर्मृगारेष्टिरितिवत् ॥ २२ ॥

वसाहोमस्य तन्त्रेणानुष्ठानम् । अधि· ५ ।

## वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रधानस्यैककालत्वात् ॥२३॥

सप्तदश प्राजापत्यान्पशूनालभतइति । अत्र वसाहोमः पृथक् तन्त्रेण वेति संदेहकारणाभावादेककालत्वात्तन्त्रमिति शिष्यस्य स्पष्टतया ज्ञानार्थं सिद्धान्तमेवाह । पूर्वपक्षे युक्त्यभावात् । सूत्रार्थः स्पष्टः ॥ २३ ॥

देवताभेदे वसाहोमानां भेदेनानुष्ठानम् । अधि ६ ।

## कालभेदत्वादावृत्तिर्देवताभेदे ॥ २४ ॥

देवताभेदे एकादशिन्यामर्धर्चेन वसाहोमं जुहोतीति होमकालः तत्तद्याज्याया अर्धर्चस्य भिन्नत्वेन तत्तत्पाठकालस्य भिन्नत्वादावृत्तिर्देवताभेदे वसाहोमस्येति सिद्धान्तसूत्रम् ॥ २४ ॥

यूपैकादशिन्यां तन्त्रेण यूपाहुत्यनुष्ठानम् । अधि· ७ ।

## अन्ते यूपाहुतिस्तद्वत् ॥ २५ ॥

ज्योतिष्टोमे यूपैकादशिनीपक्षे ऽस्ति तत्र यूपस्यान्तिके ऽग्निं मथित्वा यूपाहुतिं जुहोतीति । अत्र तन्त्रमावृत्तिर्वा ऽऽहुतेरिति संशये पूर्वपक्षमाह । अन्तइति । अन्ते ऽन्तिके तद्वद् देवताभेदे वसाहोमवद् आवृत्तिः ॥ २५ ॥

## इतरप्रतिषेधो वा ॥ २६ ॥

सिद्धान्तमाह । इतरेति । इतरस्याहवनीयस्य प्रतिषेधः फलम् । अयं भावः । अनेन वाक्येन यूपसमीपदेशो न विधीयते किं तु प्राग्वंशे मथितमग्निं गृहीत्वा यूपदेशगमनं श्रमसाध्यमिति समीपदेशे गत्वा मथनं न्यायप्राप्तमनूद्य मथनमात्रमाहवनीयस्य होमत्वावच्छेदेन प्राप्तस्य प्रतिषेधार्थं विधीयते । अतो देशः अशास्त्रीयः अतस्तन्निमित्ता नाहुत्यावृत्तिरिति । एतेनोत्तरसूत्रमपि व्याख्यातम् ॥ २६ ॥

## अशास्त्रत्वाच्च देशानाम् ॥ २७ ॥

साङ्गस्यावभृथस्य अप्स्वनुष्ठानम् । अधि· ८ ।

## अवभृथे प्रधाने ऽग्निविकारः स्याद् न हि तद्धेतुरग्निसंयोगः ॥ २८ ॥

अप्स्ववभृथेन प्रचरन्तीति ज्योतिष्टोमे श्रुतम् । अत्राप्सु प्रचारः प्रधानस्य वा ऽङ्गानामपीति संशये पूर्वपक्षमाह । अवभृथइति । प्रधाने प्रधानयागएवाग्निविकारः अग्निकार्यकारित्वमपां स्यात् । अत्र हेतुर्न हीति । तद्धेतुरङ्गानामग्निसंयोगहेतुः अग्निसंयोगः प्रधानाग्नि संयोगः । अङ्गानामग्निसंयोगे प्रधानस्याग्निसंयोगो न हेतुरिति फलितम् । यथा प्रकृतौ अङ्गानां दर्शादिकालयोगे प्रधानसंयोगो न हेतुः । किं तु अमावास्यायाममावास्यया यजेतेत्यादौ स्वर्गापूर्वसाधनक्रियाकलापलक्षकत्वममावास्याशब्दस्य अतः साङ्गप्रधानस्य श्रुत्यैव कालयोगो यथा तथा यदाहवनीये जुहोतीति वाक्येन होममात्रस्याहवनीयसंबन्धविधानाद् यावद्धोमानामाहवनीयसंयोगे तदपवादो यावदंशे तावदेवाप्स्विति भावः ॥ २८ ॥

## द्रव्यदेवतवत् ॥ २९ ॥

अत्र दृष्टान्तेनाह । द्रव्येति । गतम् ॥ २९ ॥

## साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥

सिद्धान्तमाह । साङ्गो वेति । प्रयोगवचनस्य प्रयोगविधेरङ्गप्रधानसाधारणत्वात् । देशकालकर्त्रादीनां प्रयोगाङ्गत्वमिति दर्शितं प्राक् । अप्स्विति देशविधेः प्रयोगेणान्वयः । अतः साङ्गप्रधानस्याप्स्विति भावः ॥ ३० ॥

## लिङ्गदर्शनाच्च ॥ ३१ ॥

अस्मिन्नर्थे लिङ्गमपि साधकमित्याह । लिङ्गेति । अप्सु तृणं प्रास्याघारमाघारयतीति लिङ्गं, यदि अप्स्वाघारो न स्यात्तर्हि तृणं प्रास्येति विधिर्व्यर्थः स्यादिति भावः ॥ ३१ ॥

## शब्दविभागाच्च देवतानपनयः ॥ ३२ ॥

द्रव्यदेवतादृष्टान्ते वैषम्यं दर्शयन्ति । शब्देति । शब्देनावभृथशब्देनाङ्गेभ्यः देवताविभागात् । द्रव्यदेवतयोः यागरूपत्वेनोत्पत्तावेवान्वयादवभृथपदवाच्येनैवान्वितं नाङ्गेष्विति वैषम्यमिति भावः । देवतानपनय अङ्गेषु देवतायोगः । अत्र देवतापदं द्रव्यस्याप्युपलक्षकं ज्ञेयम् ॥ ३२ ॥

उत्तरदक्षिणविहारयोर्भेदेनाङ्गानुष्ठानम् । अधि० ६ ।

## दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वं विक्रियते ॥ ३३ ॥

उत्तरस्यां वेद्यामन्यानि हवींषि सादयतीति दक्षिणस्यां मारुतीमिति चातुर्मास्ये वरुणप्रघासे श्रुतम् । अत्र भेदेन दक्षिणविहारेऽङ्गानि कार्याणि उत तन्त्रमिति विचारे सिद्धान्तमाह । दक्षिणेऽग्नाविति । देशभेदात्सर्वमङ्गजातं विक्रियते आवर्तते ॥ ३३ ॥

## अचोदनेति चेत् ॥ ३४ ॥

पूर्वपक्षमाशङ्कते । अचोदनेति । फलं प्रति कर्मणः अचोदना ऽविधानमिति । अयं भावः । पूर्वमुत्पत्तिवाक्ये इतिकर्तव्यताकाङ्क्षा नास्ति किं तु फलवाक्ये एवेत्युक्तं प्राक् । नेदं फलसंबन्धबोधकम् । अत इतिकर्तव्यताकाङ्क्षाऽभावे ऽङ्गप्राप्तिरेव नास्ति तस्य तन्त्रादिविचारो व्यर्थ इति ॥ ३४ ॥

## स्यात्पौर्णमासीवत् ॥ ३५ ॥

अस्योत्तरमाह । स्यादिति । यथा पौर्णमास्यां पौर्णमास्या यजेतेत्यत्र फलसंबन्धविध्यभावे ऽपि साङ्गानुष्ठानं तथा ॥ ३५ ॥

## प्रयोगचोदनेति चेत् ॥ ३६

पूर्वपक्षमाशङ्कते । प्रयोगेति । उक्तवाक्ये प्रयोगविधिः साङ्गप्रधानं गृह्णातीति भावः ॥ ३६ ॥

## तथेह ॥ ३७ ॥

उत्तरमाह । तथेहेति । स्पष्टम् ॥ ३७ ॥

## आसादनमिति चेत् ॥ ३८ ॥

पौर्णमासीवाक्याद्वैषम्यमाशङ्कते पूर्वपक्षी । आसादनमिति । अयं भावः । पौर्णमासीवाक्ये यजतीति श्रूयते । अतः प्रयोगविधिर्युक्तः । अत्रासादयतीति श्रूयते । अनेन प्रयोगविधिः संभवतीति युक्तं न, किं तु अदृष्टार्थ आसादनमात्रविधिरिति ॥ ३८ ॥

नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥

उत्तरमाह । नेति । उत्तरेण, उत्तरस्यां वेद्यामन्यानि हवींषि सादयतीत्येतेन सह एकवाक्यत्वात् । तुल्ययोगक्षेमात् । उत्तरस्यामष्टहविषामासादनस्य यागार्थत्वाद् दक्षिणस्यामपि तदर्थमेव वाच्यं नादृष्टार्थमिति भावः ॥ ३९ ॥

अवाच्यत्वात् ॥ ४० ॥

ननु होम एवात्राश्रुतः कथं तथात्वमत आह । अवाच्यत्वादिति । होमस्यासादयतिधातुना ऽवाच्यत्वात् । लक्षणेति शेषः ॥ ४० ॥

आम्नायवचनं तद्वत् ॥ ४१ ॥

ननु लक्षणायां तात्पर्यग्राहकं किमत आह । आम्नायेति । आम्नायस्य वेदस्य वचनं यद्वाध्वर्युः करोति तत्प्रतिप्रस्थाता करोतीति तथा देवतायजानिति दक्षिणे विहारे ऽपि तद्वदुत्तरविहारवद्यागं दर्शयति ॥ ४१ ॥

उत्तरदक्षिणविहारयोः कर्तृभेदः । अधि० १० ।

कर्तृभेदस्तथेति चेत् ॥ ४२ ॥

तत्रैव दक्षिणविहारे ऋत्विजो ऽन्ये उत तएवेति चिन्तायां पूर्वपक्षमाह । कर्त्रिति । कर्तृभेदः ऋत्विग्भेदः तथा ऽङ्गवत् ॥ ४२ ॥

न समवायात् ॥ ४३ ॥

सिद्धान्तमाह । नेति । वचनेनेति शेषः । तस्माच्चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज इति कर्तृषु पञ्चत्वसमवायात् । ऋत्विगाधिक्यं नेति भावः ॥ ४३ ॥

लिङ्गदर्शनाच्च ॥ ४४ ॥

लिङ्गेति । प्रवयसमृषभं दक्षिणां ददातीति श्रूयते । अन्यत्र दक्षिणा न श्रूयते । अतो ऽप्येककर्तृकत्वम् ॥ ४४ ॥

वेदिसंयोगादिति चेत् ॥ ४५ ॥

पूर्वपक्ष्याशङ्कते । वेदीति । अन्तर्वेद्यन्यः पादो बहिर्वेद्यन्य इति हेतुः श्रुतम् । इदं होतुरैक्ये वेदिद्वये कथं घटतइत्याक्षेपाभिप्रायः ॥ ४५ ॥

## न देशमात्रत्वात् ॥ ४६ ॥

उत्तरमाह । न देशेति । देशमात्रत्वाद् देशविशेषविधिरूपत्वात् । यदि पादप्रक्षेपो वेदिसंस्कारो भवेत् तदा वेदेः प्रधानत्वात् प्रतिप्रधानमङ्गावृत्तिर्भवेत् । नैवम् । किं तर्हि होतुर्निगदपाठे देशविशेषो ऽङ्गत्वेन विधीयते । तस्य देशस्यान्यतरेणापि कार्यसिद्धेर्न तदर्थमन्यहोता संपादनाय इति भावः ॥ ४६ ॥

उत्तरदक्षिणविहारयोरापराग्निकहोमानां भेदेनानुष्ठानम् । अधि० ११ ।

## एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥ ४७ ॥

तत्रैव पत्नीसंयाजानां तन्त्रमुतावृत्तिरिति संशये पूर्वपक्षमाह । एकाग्नीति । गार्हपत्यरूपैकाग्नित्वाद् अपरेषु पत्नीसंयाजादिषु तन्त्रम् ॥ ४७ ॥

## नाना वा कर्तृभेदात् ॥ ४८ ॥

सिद्धान्तमाह । नानेति । नाना आवृत्तिः कर्तृभेदात् । अध्वर्युप्रतिप्रस्थातृभेदात् ॥ ४८ ॥

वाजपेये ब्रह्मसाम्न्यालम्भस्य कर्मशेषप्रतिषेधार्थत्वम् । अधि० १२ ।

## पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ४९ ॥

वाजपेये प्राजापत्यपशून्प्रकृत्य श्रुतं, तान्पर्यग्निकृतानुत्सृजन्तीति ब्रह्मसाम्न्यालभतइति । किमयं कर्मशेषः परिसंख्यार्थः ब्रह्मसाम्नीति कर्मान्तरमुतालम्भनादीनां तत्संबन्धिनामेव कालान्तरे प्रतिप्रसवार्थमिति संशये पूर्वपक्षमाह । पर्यग्नीति । उत्सर्ग इत्येतल्लक्षणप्रदर्शनपरं, प्राजापत्यानां पशूनां संबन्धि यच्छेषमालम्भनादि तस्योत्सर्गो विधीयते । अश्वमेधे पर्यग्निकृतानारण्यानुत्सृजत्यहिंसायाइतिवत् । कुतः, श्रुति-

साम्यात् । उत्सर्जनातिधातुसाम्यात् । तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात्कर्मान्तरं स्यात् ॥ ४९ ॥

## संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ५० ॥

सिद्धान्तमाह । संस्कारेति । संस्कारप्रतिषेधः । संस्कारकालमात्रप्रतिषेधः । पर्यग्निकरणोत्तरकालः शेषसंस्काराणामतिदेशः प्राप्तः । तन्मात्रप्रतिषेध इत्यर्थः। तस्मात्कालादुत्कृष्य ब्रह्मसामकालसंबन्धो विधीयते । कुतः, क्रतुसामान्याद् वाक्यैकत्वे सिद्धे ब्रह्मसाम्न्यालभतइत्यत्र द्रव्यदेवताऽश्रवणात् क्रतुसामान्यं पूर्वोत्तरयोरेकक्रतुत्वं सिद्धम् । सिद्धे च तस्मिन्नुभयोरेकवाक्यत्वं सिद्धम् । तस्मिंश्च सिद्धे उक्तोऽर्थः सिद्ध इति भावः । ननु पूर्वकालनिषेधस्य ब्रह्मसामकालस्य च विधाने कथमेकवाक्यतेति चेन्न । ब्रह्मसामकालविधानेनार्थसिद्धस्य पूर्वकालनिषेधस्यानुवादरूपत्वात् ॥ ५० ॥

## वपायां चानभिघारणस्य दर्शनात् ॥ ५१ ॥

उक्तार्थे लिङ्गमप्याह । वपायामिति । प्रयाजशेषेण हवींष्यभिघारयतीति प्रकृतितः प्राजापत्यवपाभिघारणं प्राप्तम् । अत्रालम्भस्योत्कृष्टत्वाद्वपायागोऽप्युत्कृष्टः । प्रयाजानन्तरं सवनीयप्रचारे जुह्वा कृते प्रयाजशेषाभावादभिघारलोपे एवमर्थवादोऽस्ति । ब्रह्म वै ब्रह्मसाम ब्रह्मसाम्न्यालभते तेनाभिघृता इति । अनभिघृतहविषः प्रकारान्तरेणाभिघारकार्यलाभप्रतिपादकोऽर्थवादः संगच्छते । भिन्नयागपक्षे प्रयाजानां पुनरनुष्ठेयत्वेन प्रयाजशेषेण वपाभिघारसंभवात्प्रकारान्तरेणाभिघारोपपादनप्रयासो व्यर्थ एव स्यादिति भावः ॥ ५१ ॥

अहीने उक्तानामुत्सर्गस्य कर्मशेषप्रतिषेधार्थत्वम् । अधि० १३ ।

## पञ्चशारदीयास्तथेति चेत् ॥ ५२ ॥

अस्ति पञ्चसंवत्सरसाध्यः पञ्चशारदीयनामकोऽहीनः क्रतुः । तत्र सप्तदशमारुतीरुपाकरोति सप्तदशोक्ष्ण इति । तत्र द्वितीयं वाक्यं तान्पर्यग्निकृतान् प्रोक्षितान् कृत्वा इतरा आलभन्ते इतरानुत्सृजन्तीति ।

स्त्रीव्यक्तीनामालम्भः पुंव्यक्तीनामुत्सर्ग इत्यर्थः । तदनन्तरं पञ्चमे संवत्सरे व्रीहीनैकैकस्मिन्नहन्याजमेरन् पञ्चोत्तमे ऽहनीति । अत्र यत्र प्रथमे संवत्सरे पर्यग्निकृता उस्राणः उत्सृष्टास्तेषामेव द्वितीयादिवत्सरेषु पर्यग्निकरणं पञ्चमे वत्सरे पञ्चसु सुत्यासु तेषामेवालम्भः उत ते भिन्ना इति संशये पूर्वपक्षमाह । पञ्चेति । तथा पूर्वाधिकरणसिद्धान्तवत् । कालप्रतिषेधमात्रं न तु शेषस्यात्यन्तनिवृत्तिरिति भावः ॥ ५२ ॥

## न चोदनैकवाक्यत्वात् ॥ ५३ ॥

सिद्धान्तमाह । नेति । पञ्चमे संवत्सरे व्रीहीनिति कर्मान्तरमपूर्वम् । एकवाक्यत्वात् । अनेकगुणविशिष्टापूर्वकर्मविधाने एकवाक्यत्वात् । गुणविधित्वे व्रीहीनिति अन्वहमिति प्राप्तकर्मानुवादेन विधाने वाक्यभेदादिति भावः ॥ ५३ ॥

## संस्काराणां च दर्शनात् ॥ ५४ ॥

साधकान्तरमाह । संस्कारेति । संस्काराणां पर्यग्निकरणप्रोक्षणादीनां पुनर्दर्शनात् । प्रथमसंवत्सरे कृतत्वेन पुनः पुनः पर्यग्निकरणश्रवणं व्यर्थमिति भावः ॥ ५४ ॥

अभिषेचनीयदशपेययोर्भेदेन प्रयोगः । अधि० १४ ।

## दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्ततः प्राचां तत्समानं तन्त्रं स्यात् ॥ ५५ ॥

राजसूये, अभिषेचनीय इत्येकाहः । ततः संसृपसंज्ञकानि हवींषि । ततो दशपेय इत्येकाहः । अत्राभिषेचनीयदशपेयाङ्गानां तन्त्रमुत पृथगनुष्ठानमिति संशये पूर्वपक्षमाह । दशपेयेति । तन्त्रम् । कुतः, क्रयप्रतिकर्षात् । सह सोमं क्रीणातीति उत्तरक्रतौ विद्यमाने सोमे क्रयस्य पूर्वक्रतावपकर्षात् । ननु भवतु सोमक्रयापकर्षः तावता तन्त्रं कथमत आह । ततः प्राचां प्रतिकर्षः ततः सोमक्रयात्प्राचामपकर्षः सिद्धः । तदन्तापकर्षस्य पञ्चमे सिद्धत्वात् । अतः सोमक्रयप्राचीनानां तन्त्रं स्यात् पूर्वाङ्गाणां तन्त्रसिद्धावुपक्रमानुसारेणोत्तराङ्गाणामपि तन्त्रमिति भावः ॥ ५५ ॥

समानवचनं तद्वत् ॥ ५६ ॥

साधकान्तरमाह । समानेति । समानवचनं समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्चेति यज्ञयोः समानवचनं तद्वत् । यत्कालिकाङ्गकलापको ऽभिषेचनीयस्तत्कालिकाङ्गकलापकत्वं दशपेये प्रतिपादयति । अतः परस्परसादृश्यमिति भावः ॥ ५६ ॥

अप्रतिकर्षो वा ऽर्थहेतुत्वात्सहत्वं विधीयते ॥ ५७ ॥

सिद्धान्तमाह । अप्रतीति । मुख्यक्रय इति शेषः । मुख्यक्रये प्रयोगाद्बहिः सोमविक्रेत्रा सह यः संवादः एतावद् द्रव्यं दास्ये त्वं सोममानयेति वादस्तस्मिन् तन्त्रं विधीयते । स एव मुख्यक्रयः । अर्थहेतुत्वात् तस्य वादस्य द्रव्यलाभहेतुत्वात् । प्रयोगान्तःपातिक्रयस्य धर्ममात्रसाधनत्वादमुख्यत्वम् । अतस्तदन्तप्रतिकर्षो न ॥ ५७ ॥

पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ५८ ॥

उक्तार्थे लिङ्गमप्याह । पूर्वस्मिन्निति । पूर्वस्मिन् अभिषेचनीये ऽवभृथदर्शनात् । समानं वा एतद्यज्ञं छिन्दन्ति यदभिषेचनीयस्यावभृथ इति । यद्यङ्गानां तन्त्रं द्वयोरवभृथः दशपेयोत्तरं भवितव्यः । पूर्वमेव श्रवणं तन्त्राभावे लिङ्गमिति भावः ॥ ५८ ॥

दीक्षाणां चोत्तरस्य ॥ ५९ ॥

तथा सप्त दीक्षयन्तीत्युत्तरस्य दशपेयस्य स्वातन्त्र्येण दशपेयदिने दीक्षाविधानं लिङ्गमाह । दीक्षेति । स्पष्टम् ॥ ५९ ॥

समानः कालसामान्यात् ॥ ६० ॥

समानं च तद्वदिति पूर्वपक्षस्योत्तरमाह । समान इति । कालसामान्यात् । क्रतुरूपं यत्कालसामान्यं स्थूलकालः तं गृहीत्वा समानशब्द उपपन्नः । अभिषेचनीयदशपेययोरेकस्मिन् क्रतावनुष्ठेयत्वेन साम्यमिति भावः ॥ ६० ॥

वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीत्यस्य कर्मान्तरोपदेशत्वम् । अधि· १५ ।

## निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदानविप्रकर्षः स्यात् ॥ ६१ ॥

वरुणप्रघासे श्रूयते, वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीति । तत्र पशुयागवत् प्रधानविप्रकर्षः उत कर्मान्तरमिति संशये पूर्वपक्षमाह । निष्कासस्येति । निष्कासस्यामिक्षायागशेषस्य वारुण्यामिक्षैकदेशत्वादेकदेवत्वाच्च पशुवत्प्रधानविप्रकर्षः ॥ ६१ ॥

## अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ६२ ॥

सिद्धान्तमाह । अपनय इति । अपनयः पूर्वकर्मणः कर्मान्तरोपदेशः । प्रसिद्धेन कर्मनामत्वेन प्रसिद्धेनावभृथशब्देनाभिसंयोगान्निर्देशात् ॥ ६२ ॥

## प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥ ६३ ॥

प्रतिपत्तिकर्मेत्याशङ्क्य समाधत्ते । प्रतीति । कर्मसंयोगात् । निष्कासेनेति तृतीयया ऽवभृथे प्रधानकर्मसंयोगात् ॥ ६३ ॥

प्रायणीयनिष्कासे उदयनीयनिर्वापस्यार्थकर्मत्वम् । अधि· १६ ।

## प्रायणीये च तद्वत् ॥ ६४ ॥

ज्योतिष्टोमे प्रायणीयस्य निष्कासउदयनीयमभिनिर्वपतीति । अत्र पूर्वपक्षमाह । प्रायणीयइति । तद्वत् । अवभृथवत् । यथा ऽवभृथधर्मकमपूर्वं कर्मैवमुदयनीयधर्मकमपूर्वं कर्मेति भावः ॥ ६४ ॥

## प्रतिपत्तिर्वा ऽकर्मसंयोगात् ॥ ६५ ॥

अपरं पक्षमाह । प्रतिपत्तिरिति । प्रायणीयाशेषप्रतिपत्तिः उदयनीयानिर्वापः । कुतः, अकर्मसंयोगात् । निष्कासपदार्थस्य उदयनीयाख्यं यत्कर्म तद्भिन्नेन निर्वापेणान्वयात् । निर्वापेण निष्कासं कुर्यादित्युपयुक्तसंस्कार इति भावः ॥ ६५ ॥

## अर्थकर्म वा शेषत्वाच्छ्रपणवत्तदर्थेन विधानात् ॥ ६६ ॥

सिद्धान्तमाह । अर्थेति । अर्थकर्म प्रधानकर्म निर्वापः । कुतः, शेषत्वात् । निर्वापं प्रति निष्कासस्य गुणत्वात् । तत्र हेतुमाह । तदर्थेन विधानात् । सः गुणः अर्थो यस्य शब्दस्य स तदर्थः । तेन सप्तम्या विधानात् । सप्तम्या अधिकरणकारकत्वेन गुणत्वं स्पष्टमित्यर्थः ॥ ६६ ॥

इति जैमिनिसूत्रवृत्तौ एकादशाध्यायस्य द्वितीयः पादः ॥ २ ॥

वेद्याद्यङ्गानां प्रधानकालान्यकालकर्तव्यत्वम् । अधि० १ ।

## अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥

पूर्वस्मिन्पादे एककालानामङ्गानां तन्त्रं विचारितमस्मिन्पादे भिन्नकालानां तन्त्रं विचार्यते । अङ्गानामिति । अङ्गानां मुख्यकालत्वात् । मुख्यस्य प्रधानस्य यः कालस्तत्कालिकत्वात् । वचनेनान्यकालिकत्वमपि । यथा पूर्वेद्युरिध्माबर्हिः करोतीति । इदं सूत्रं केवलोपदेशार्थं, सिद्धत्वेन विचार्याभावात् ॥ १ ॥

आधानस्य तन्त्रेणानुष्ठानम् । अधि० २ ।

## द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात् स्वकालत्वात् ॥ २ ॥

वसन्ते ब्राह्मणो ऽग्निमादधीतेति । इदमाधानं सर्वक्रत्वङ्गमिति कृत्वाचिन्तया इष्टिपशुसोमादिषु आधानमावर्तेतउत तन्त्रमिति संशये प्रतिक्रत्वावर्तेत अङ्गत्वादिति पूर्वपक्षे सिद्धान्तमाह । द्रव्यस्येति । आधानप्रयोगः सर्वार्थः । स्वकालत्वात् । वसन्तादिरूपस्वकालविहितत्वात् । द्रव्यस्याधानसंस्कृतवह्नेः अकर्मकाले प्रधानकालभिन्नकाले निष्पत्तेः । उत्पन्नत्वात् । प्रधानकालो ऽन्य आधानकालो ऽन्य इति भावः ॥ २ ॥

अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानम् । अधि० ३ ।

## यूपश्चाकर्मकालत्वात् ॥ ३ ॥

ज्योतिष्टोमे ऽग्नीषोमीयपशौ यूपो विहितः, दीक्षासु यूपं छिनत्तीति । अयं यूपः केवलाग्नीषोमीयार्थ उतानूबन्ध्यासवनीयपश्वर्थो ऽपीति संशये केवलाग्नीषोमीयार्थ इति पूर्वपक्षे सिद्धान्तमाह । यूप इति ।

यूपस्तयाणां तन्त्रमकर्मकालत्वात् । पाशुककर्मानुष्ठानकाले यूपस्यानुत्पत्तेः । अग्नीषोमीयतन्त्राद्बहिस्त्यन्त्रस्याग्नीषोमीयार्थमेवेति निर्णेतुमशक्यत्वादिति भावः* ॥ ३ ॥

यूपसंस्काराणां तन्त्रेणानुष्ठानम् । अधि० ४ ।

## संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ४ ॥

यूपसंस्काराणां प्रोक्षणाञ्जनादीनामावृत्तिर्न वेति संशये पूर्वपक्षमाह संस्कारा इति । संस्काराः प्रोक्षणादय आवर्तेरन् अर्थकालत्वात् । अर्थः पशुनियोजनं तत्काला एते संस्कारा अतः यस्य पशोर्नियोजनं तत्कालत्वे तदर्थमिति निर्णयो भवतीति भावः ॥ ४ ॥

## तत्कालास्तु यूपकर्मत्वात्तस्य धर्मविधानात्सर्वार्थानां वचनादन्यकालत्वम् ॥ ५ ॥

सिद्धान्तमाह । तत्काला इति । तत्काला दीक्षाकालाः संस्काराः । कुतः, यूपकर्मत्वात् । यूपः कर्म कार्यं येषां तत्त्वात् । तत्र किं मानमत आह । तस्य यूपस्य धर्मत्वेन संस्कारविधानात् । अयं भावः । दीक्षासु यूपं छिनत्तीत्यत्र द्वितीयया प्रधानं यूपमुत्पादयेदिति । अत्र छेदनमात्रेण न यूपोत्पत्तिः किं तु यावत्संस्कारविशिष्टस्यैव यूपपदवाच्यत्वात् । अतः छेदनं यावत्संस्कारोपलक्षकम् । तथा च यावतां दीक्षाकालः सिद्ध इति भावः । एवं सर्वार्थानां सतां वचनादन्यकालत्वमन्यकाले ऽनुष्ठानमात्रत्वं यथा ऽऽग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीतिवत् ॥ ५ ॥

## सकृन्मानं च दर्शयति ॥ ६ ॥

सकृन्मानं यूपमानं सकृत्त्वात्तं दर्शयति श्रुतिः । त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोतीति श्रुतिः परिव्याणमारभ्योपक्रान्ता तत्पूर्वाणां तन्त्रं दर्शयतीति भावः ॥ ६ ॥

स्वरोः साधारणयम् । अधि० ५ ।

## स्वरुस्त्वापवर्गः स्यादस्वकालत्वात् ॥ ७ ॥

---

* इत उत्तरम्, एकयूपं च दर्शयति, इति, सूत्रमधिकं भाष्ये दृश्यते ।

स्वरुः सर्वपशूनां तन्त्रमुत भेदेनेति चिन्तायां पूर्वपक्षमाह । स्वरुरिति । तन्त्रापवर्गः तन्त्रेणाग्नीषोमीयतन्त्रेणापवर्गः समाप्तिर्यस्य स इति विग्रहेणाग्नीषोमीयतन्त्रे समाप्ते स्वरुविसर्ग इत्यर्थः । कुतः, अस्वकालत्वात् । न विद्यते स्वस्य स्वरोः कालो यस्य तत्त्वात् । छेदनादिवत्प्रधानादन्यकालाभावात् । अयं भावः । स्वरुणा पशुमनक्तीति अञ्जनार्थः स्वरुः न यूपार्थः । तथा चाञ्जनकालएव तस्य विधानं न छेदनकालइति ॥ ७ ॥

## साधारणो वा ऽनुनिष्पत्तिस्तस्य साधारणत्वात् ॥

सिद्धान्तमाह । साधारणो वेति । स्वरुस्तिषु साधारण एकः यतो यूपादनुनिष्पत्तिस्तस्य साधारणत्वादेकत्वात् ॥ ८ ॥

## सोमान्ते च प्रतिपत्तिदर्शनात् ॥ ९ ॥

उक्तार्थे लिङ्गमाह । सोमान्तइति । सोमान्ते सवनत्रयान्ते स्वरोः प्रतिपत्तिदर्शनात् । संस्थिते सोमे प्रस्तरं स्वरुं च प्रहरतीति दर्शनात् । यदि भेदेन स्वरुः अग्नीषोमीयान्तएव प्रहरणं स्यादिति भावः ॥ ९ ॥

## तत्कालो वा प्रस्तरवत् ॥ १० ॥

पूर्वपक्ष्याशङ्कते । तत्काल इति । यथा प्रस्तरस्य प्रहरणे सोमान्तः काल एवं स्वरोरपि तत्कालविधिरिति भावः ॥ १० ॥

## न वोत्पत्तिवाक्यत्वात्प्रदेशात्प्रस्तरे तथा ॥ ११ ॥

इदं पक्षं दूषयति न वेति । प्रस्तरवन्न स्वरुप्रहरणमत्यन्तमप्राप्तमतो ऽत्रैवोत्पत्तिः । अतः स्वरुप्रहरणोत्पत्तिवाक्यत्वात् । ननु प्रस्तरे कालविधानं सिद्धान्ते कथमिति चेदत आह । प्रदेशाद् दर्शपूर्णमासप्रदेशात् प्रस्तरे प्राप्ते प्रस्तरप्रहरणे तथा कालविधानं प्रस्तरप्रहरणस्य प्रकृतौ सत्त्वेनातिदेशप्राप्तौ कालमात्रविधानं युक्तमिति भावः ॥ ११ ॥

द्वादशाहे कृष्णविषाणाप्रासनस्यान्त्याहे एव कर्तव्यत्वम् । अधि० ६ ।

## अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये

## प्रथमे ऽहनि वा विकल्पः स्यात् ॥ १२ ॥

ज्योतिष्टोमे नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीति। अयं द्वादशाहादावतिदेशेन प्राप्तस्तस्य प्रथमे ऽहनि चरमे ऽहनि वा विकल्प उत चरमे ऽहन्येवेति संशये पूर्वपक्षमाह। अहर्गणइति। अहर्गणे द्वादशरात्रादौ कृष्णविषाणाप्रासनं प्रथमे ऽन्त्ये वा ऽहनि धर्मविप्रतिषेधात्। पक्षद्वये कस्य चिद्धर्मस्य लोपात्। प्रथमे ऽहनि तस्य चात्वाले प्रक्षेपे द्वितीये ऽहनि माध्यन्दिने सवने दक्षिणानयनात्प्राक् कृष्णविषाणया कण्डूयते इति शास्त्रबाधः। चरमे ऽहनि प्रक्षेपे चरमात्प्रागहःसु दक्षिणानयनोत्तरं प्रकृतौ हस्तेन कण्डूयनं क्लृप्तमतिदेशप्राप्तं बाध्यते। अतो ऽन्त्यैव नियामिकेति भावः ॥ १२ ॥

## पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात्प्रातः सवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १३ ॥

सिद्धान्तमाह। पाणेरिति। चरममाध्यन्दिनसवनपर्यन्तं कण्डूयने विषाणानियमः स्यात्। कुतः, प्रातःसवनमध्यत्वात्। अहर्गणसाध्यकृतौ प्रातःसवनानि मध्ये यस्य तत्त्वात्। प्रातःसवने विषाणाकण्डूयननियमेन प्रथमे ऽहनि विषाणात्यागे विषाणाकण्डूयनलोपापत्तेरिति भावः। ननु दक्षिणादानोत्तरं हस्तकण्डूयनं लुप्येत। अत्र इष्टापत्तिं कुर्वन्नाह। पाणेः पाणिकण्डूयनस्याश्रुतिभूतत्वात्। अशास्त्रत्वात्। रागप्राप्तत्वादिति यावत्। तल्लोपे नाङ्गलोप इति भावः। ननु दक्षिणादानोत्तरं हस्तकण्डूयनेन विधिहानिरित्यत आह। शिष्टे दक्षिणादानोत्तरं कालिकांशे च विषाणानियमः स्यात्। शास्त्रस्य चरममाध्यन्दिनपर्यन्तमभिप्रवृत्तत्वात्। कृष्णविषाणाप्रासनपर्यन्तं तत्कण्डूयनस्य शास्त्रतात्पर्यादिति भावः ॥ १३ ॥

राजसूये ऽन्त्ये एव हविष्कृत्काले वाग्विसर्गः। अधि० ७।

## वाग्विसर्गो हविष्कृता वीजभेदे तथा स्यात् ॥ १४ ॥

राजसूये नानावीजेष्टिरग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुमित्यादिना वि

हिता । प्रणीताकाले नियमितवाचः हविष्कृदेहीति काले विसर्गो विहितः । न हस्तकण्डूयनवदाक्षेपलब्धः । अतः प्रथमेन चरमेण वा हविष्कृता वाग्विसर्ग इति पूर्वपक्षे सिद्धान्तमाह । वागिति । बीजभेदे नानाबीजेष्टौ तथा कृष्णविषाणाप्रासनवच्चरमेहविष्कृतैव स्यात् । अत्रापि वाग्विसर्गो न विधीयते । तस्य रागप्राप्तत्वात् । किं तु गृहीतवाङ्नियमस्य मर्यादामात्रविधिरिति भावः ॥ १४ ॥

अग्नीषोमीये पौरोडाशिककालश्च वाग्विसर्गः । अधि० ८ ।

## पशौ च पुरोडाशे समानतन्त्रं भवेत् ॥ १५ ॥

अग्नीषोमीयपशौ पाशुकं पौरोडाशिकं चेति तन्त्रद्वयमस्ति । तत्रोभयत्र वाङ्नियमः हविष्कृदाह्वानं चास्तीति कृत्वाचिन्तया सिद्धान्तमाह । पशाविति । पुरोडाशे पशौ वाङ्नियमस्य तन्त्रं भवेत् । पौरोडाशिकतन्त्रपर्यन्तं वाङ्नियमः कार्य इति भावः ॥ १५ ॥

अग्निचयनेऽग्निविमोकस्य प्रधानापवर्गकालत्वम् । अधि० ९ ।

## *अग्निसंयोगः सोमकाले तदर्थत्वात्संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात् ॥ १६ ॥

अग्नौ अग्निं युनज्मीति होमो योगः । इमं स्तनमिति होमो विमोकः । अयं विमोकः किं प्रधानान्ते स्यादुत साङ्गप्रधानान्तइति संशये पूर्वपक्षमाह । अग्निसंयोग इति । सोमकाले योऽग्निसंयोगः स साङ्गस्याङ्गसहितप्रधानस्य । कुतः, संस्कृतकर्मणः अनया ऽऽहुत्या संस्कृताग्नेः परेषु अग्निकर्मसु विशेषाश्रवणादिति शेषः । अमुककर्मार्थमिदमिति शेषानुपलब्धेः । किं च संस्कृतकर्मणः इति देहलीदीपन्यायेन तदर्थत्वादित्यनेनाप्यन्वेति । संस्कृतकर्मणः । तदर्थत्वात् साङ्गप्रधानार्थत्वात् । तस्माद्योगस्य साङ्गप्रधानार्थत्वाद् वह्नेः विमोकः सर्वापवर्गे साङ्गप्रधानसमाप्तौ स्यात् । यदर्थं योगः तत्समाप्तिं विना विमोकासंभवादिति भावः ॥ १६ ॥

## प्रधानापवर्गे वा तदर्थत्वात् ॥ १७ ॥

* अत्र पूर्वपक्षसिद्धान्तयोः वार्त्तिकमते वैपरीत्यम् ।

सिद्धान्तमाह । प्रधानेति । तदर्थत्वात् । योगस्य केवलं प्रधानार्थत्वात् । पञ्चभिर्युनक्ति षाड्भिः यावानेव यज्ञस्तमालभतइति यज्ञमात्रार्थत्वात् । योगस्येति भावः ॥ १७ ॥

अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधो ऽपवृक्तार्थत्वात् ॥ १८ ॥

उक्तार्थे युक्त्यन्तरमाह । अवभृथइति । यदि यज्ञशब्दयुक्ते ऽपि साङ्गप्रधानार्थत्वस्वीकारे ऽवभृथे ऽपि तद्वत्पूर्वाधिकरणपूर्वपक्षवत् । होतुर्वरणं साङ्गप्रधानार्थं स्यात् । यज्ञशब्दयोगश्चैवं यद्धता वषट् कुर्वन्ति यजमाने यज्ञस्याशीः प्रतितिष्ठन्तीति । न चेष्टापत्तिः । होतुर्वरणस्य साङ्गप्रधानार्थत्वे ऽवभृथेन होतारं वृणीतइति निषेधो ऽसङ्गतः स्यात् । स्वमते उपपत्तिमाह । प्रधानार्थस्य वरणस्यापवृक्तार्थत्वात् । निवृत्तकार्यत्वादवभृथे ऽतिदेशेन वरणप्राप्तौ निषेधः सफलः ॥ १८ ॥

अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात् ॥ १९ ॥

सिद्धान्तरमाह । अहर्गणइति । अहर्गणे द्वादशरात्रादौ योगविमोकयोस्तदर्थत्वात् । प्रधानार्थत्वात् । प्रत्यहं दर्शयति श्रुतिर्योगविमोकौ दर्शयति । स वा अहरहर्युनक्त्यहरहर्विमुञ्चतीति । सर्वार्थत्वे प्रथमं योगो ऽन्ते विमोकः स्यादिति भावः । एवं भाष्यसंमतः सूत्रार्थः । वार्तिकाभिमतस्तु विस्तरभयान्नेह लिख्यते । तन्त्ररत्नादाववगन्तव्यः ॥ १९ ॥

उपसत्कालस्य सुब्रह्मण्याह्वानस्य तन्त्रेणानुष्ठानम् । अधि० १० ।

सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २० ॥

ज्योतिष्टोमे प्रवर्ग्यसंनिधौ सुब्रह्मण्याह्वानं विहितं तदहर्गणे ऽतिदेशेन प्राप्तं तद्भेदेनोत तन्त्रमिति संशये सुत्याभेदाद्भेद इति पूर्वपक्षे सिद्धान्तमाह । सुब्रह्मण्येति । प्रवर्ग्यकालीना सुब्रह्मण्या तन्त्रम् । दीक्षावदन्यकालत्वात् । यथा दीक्षणीयादिः सुत्याकालादन्यकालत्वात्तन्त्रं तथा ऽत्रापीति भावः ॥ २० ॥

सुत्याकालिकस्य सुब्रह्मण्याह्वानस्य भेदेनानुष्ठानम् । अधि० ११ ।

## तत्काला स्यावर्तेत प्रयोगतो विशेषसंयोगात् ॥ २१ ॥

सुत्याकालीनसुब्रह्मण्याह्वानं तन्त्रेण भेदेन वेति संशये सिद्धान्तमाह । तत्कालेति । सुत्याकाला प्रयोगतः अद्य सुत्यामागच्छेति प्रयोगे विशेषेण अद्येति पदेन संयोगात् ॥ २१ ॥

## अप्रयोगाङ्गमिति चेत् ॥ २२ ॥

पूर्वपक्ष्याशङ्कते । अप्रेति । अद्येति प्रयोगाङ्गं नेति प्रकृतौ एका सुत्या तत्र सुत्यामागच्छेति प्रयोगे ऽपि तस्मिन्नहन्याह्वानं सिद्धमतः अद्येत्यनङ्गं सुत्यामागच्छेति विवक्षितार्थत्वबाधितः तन्त्रे ऽपीति भावः ॥ २२ ॥

## स्यात्प्रयोगनिर्देशात्कर्तृभेदवत् ॥ २३ ॥

उत्तरमाह । स्यादिति । प्रयोगे निर्देशाद् अद्येत्यस्य कर्तृभेदवत् । अयंभावः । यथा वरुणप्रघासे आहवनीये मारुत्या आपि यागसंभवे ऽदृष्टार्थदक्षिणवेदिरूपदेशभेदात्कर्तृभेदः तथा ऽदृष्टार्थमुच्चारिते ऽद्येति तस्य तदहःसंबन्धित्वे दिनान्तरे ऽन्य इति ॥ २३ ॥

## तद्भूतस्थानादग्निवदिति चेदपवर्गस्तदर्थत्वात् ॥ २४ ॥

पुनः प्रकारान्तरेणाशङ्क्य दूषयति । तद्भूतेति । तेन सकृदाह्वानेन भूतं संस्कृतं स्थानमधिष्ठानरूपा देवता तस्मादेकस्मिन्नहनि आह्वानेन संस्कृता देवता सर्वार्था सकृदाधानसंस्कृता अग्नेः सर्वार्थत्ववदिति भावः । दूषयति । तदपवर्गः तस्याह्वानस्यापवर्गः तद्दिनएव समाप्तिस्तदर्थत्वात् । यस्मिन् दिनआह्वानं तस्य तद्दिनकर्मार्थत्वात् । यथा ऽग्निसंमार्गादीनाम् ॥ २४ ॥

## अग्निवदिति चेत् ॥ २५ ॥

तत्राग्निसंमार्गो ममाहवनीयाग्निदृष्टान्त इति तुल्यमिति शङ्कते । अग्नीति ॥ २५ ॥

## न प्रयोग साधारण्यात् ॥ २६ ॥

आधानतुल्यं नेत्याह । नेति । प्रयोगसाधारण्यात् । प्रयोगान्तःपातित्वादस्याधानस्य न तथेति भावः ॥ २६ ॥

## लिङ्गदर्शनाच्च ॥ २७ ॥

लिङ्गं च दर्शयति । लिङ्गेति । संस्थिते संस्थितेऽहनि आग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यतीति प्रतिदिनं प्रैषविधानमनुष्ठाने लिङ्गम् ॥ २७ ॥

## तद्धि तथेति चेत् ॥ २८ ॥

पूर्वपक्षी तन्त्रसाधकं दृष्टान्तान्तरं दर्शयति । तदिति । तद् यूपाहुतिरूपं कर्म यथा एकादशिन्यां तन्त्रं तथेदमपि तन्त्रम् ॥ २८ ॥

## नाशिष्टत्वादितरन्यायत्वात् ॥ २९ ॥

उत्तरमाह । नेति । अशिष्टत्वात् । अविहितत्वात् । यूपाहुतेः समीपदेशविधिर्न किं त्वाहवनीयप्रतिषेधमात्रमित्युक्तम् । इह सुत्याकालआह्वाने विहितवैषम्यमिति भावः । इतरन्यायत्वात् । एतद्विषयइतराग्निसंस्कारन्याय एव युक्त इति भावः ॥ २९ ॥

## विध्येकत्वादिति चेत् ॥ ३० ॥

पूर्वपक्ष्यन्यदृष्टान्तमाह । विधीति । विधीनां विधिविहितवसतीवर्याद्विसंभरणादीनामेकत्वात्तथा ॥ ३० ॥

## न कृत्स्नस्य पुनः प्रयोगात्प्रधानवत् ॥ ३१ ॥

उत्तरमाह । न कृत्स्नेति । न, वसतीवरीवन्न । सोमाभिषवादिकृत्स्नस्य समग्रस्य पुनः प्रयोगात् । पुनरनुष्ठानात् । यथा प्रधानं पुनरनुष्ठीयते न तन्त्रं तथेदमपि । वसतीवरीसंभरणस्य सुत्याप्राग्दिनानुष्ठेयत्वाद्दीक्षणीयावत्तन्त्रं भिन्नकालत्वात् । अस्य प्रधानकालिकत्वान्न तन्त्रमिति भावः ॥ ३१ ॥

देशपात्रर्त्विजामन्यप्रयोगे पूर्वदेशाद्युपादानस्यैच्छिकत्वम् । अधि० १२ ।

## लौकिकेषु याथाकामी संस्कारार्थालोपात् ॥ ३२ ॥

विहितसंस्कारेण जनितादृष्टरूपमलौकिकं यूपाहवनीयादि तद्भिन्नेषु लौकिकेषु ऋत्विगादिषु प्रतिप्रयोगं तएव ग्राह्या उतान्ये ऽपीच्छयेति संशये प्रस्तरादिवद्यूपादिवदन्यइति पूर्वपक्षे सिद्धान्तमाह । लौकिकइति । याथाकामी इच्छेति । अन्ये वा संस्कारार्थालोपात् । संस्कारश्चार्थश्च संस्कारार्थौ तयोर्लोपः संस्कारार्थलोपस्तस्याभावः संस्कारार्थालोपस्तस्मात् । अयं भावः । लौकिकेषु देशकर्त्रादिषु पूर्वप्रयोगकृतस्य प्रयोगान्तरे उपजीव्यस्य संस्कारस्याभावेनान्यापादने ऽपि संस्कारलोपाभावात् । एवं दृष्टस्य प्रयोगनिर्वाहरूपार्थस्याप्यन्यग्रहणे लोपाभावादिच्छैव नियामिकेति ॥ ३२ ॥

पात्राणामाकर्मसमाप्ति धारणम् । अधि० १३ ।

## यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३३ ॥

यज्ञपात्राणां यावज्जीवं धारणमुत प्रतिप्रयोगमन्यानीति विचारे सिद्धान्तमाह । यज्ञेति । यज्ञायुधानि यज्ञपात्राणि । प्रतिपत्तिविधानात्, आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति । ऋजीषं गतसाराः सोमावयवाः अहर्गणे यावद्दिनसंबन्धि धार्यते ऽवभृथसमये ऋजीषमप्सु प्रहरन्तीति प्रतिपत्तिसंस्कारार्थम् ॥ ३३ ॥

## यजमानसंस्कारो वा तदर्थः श्रूयते तत्र याथाकामी तदर्थत्वात् ॥ ३४ ॥

पूर्वपक्षमाह । यजमानेति । यजमानस्याङ्गं पात्राणि न प्रतिपत्तिः तदर्थः यजमानार्थः । यजमानोत्तरद्वितीयया प्राधान्यस्य पात्रपदोत्तरतृतीयया चाङ्गत्वमिति भावः । नन्वस्तु यजमानार्थत्वं किमेतावतेत्याशङ्कायां यावज्जीवधारणाभावरूपं पूर्वसूत्राद्विपरीतं फलमाह । तत्र पात्रधारणे याथाकामी तदर्थत्वात् । यजमानार्थत्वात् । पूर्वप्रयोगपात्रत्यागे ऽपि चरमप्रयोगपात्रैर्यजमानसंस्कारसंभवादिति भावः ॥ ३४ ॥

## मुख्यस्य धारणं वा मरणस्यानियतत्वात् ॥ ३५ ॥

सिद्धान्त्येकदेशिनो मतम् । पात्राणां यजमानार्थत्वमुररीकुर्वन्नाह । मुख्यस्येति । मुख्यस्य प्राथमिकयज्ञपात्रस्य धारणं, हेतुः स्पष्टः । पूर्वप्रयोगपात्रे त्यक्ते ऽग्रिमप्रयोगात्प्राग् यजमानमरणे पात्रसंस्कारासंभवादिति भावः ॥ ३५ ॥

## यो वा यजनीये ऽहनि म्रियते सो ऽधिकृतः स्यादुपवेषवत् ॥ ३६ ॥

पक्षान्तरमुत्थापयति । यो वेति । न मुख्यधारणमन्तरा मृते नायं संस्कारः किं तु यजनीये ऽहनि यो मृतः स एवाधिकृतः । यथोपवेषेण कपालोपधाने सान्नाय्यवानेव शाखामूलस्योपवेषेणासन्नयतः शाखाऽभावादुपवेषाभावस्तथा ॥ ३६ ॥

## न शास्त्रलक्षणत्वात् ॥ ३७ ॥

उपवेषाद्वैषम्यं दर्शयति । नेति । नायं दृष्टान्तः तस्योपवेषस्य शास्त्रलक्षणत्वात् । शास्त्रविहितत्वात् । तथा हि । सान्नाय्यार्था शाखा तन्मूलमुपवेषः । असन्नयतः शाखानिवृत्ताउपवेषो निवृत्तः । अत्रान्तरा मृतस्य पात्रधारणेन संस्कारसंभवेन न तन्निवर्तकं किञ्चिदस्तीति भावः ॥ ३७ ॥

## उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३८ ॥

सिद्धान्त्येकदेशी अन्तरा मृते पात्रसंस्कारं स्वीकृत्य धारणं विनैव तदुपपत्तिं प्रकारान्तरेणाह । उत्पत्तिरिति । अन्तरा मृतौ तत्कालपात्राणामुत्पत्तिः कार्या संस्कारे प्रयोजकत्वात् । यथा क्रतुपेये घृतव्रतो भवत इत्यनेन व्रतार्थं घृतविधानेन पयोनिवृत्त्या व्रतार्थदोहननिवृत्त्या, अभावे व्रतदुहो ऽन्यां यजमानस्य व्रतदुहामाशिरे दुहन्तीत्यत्र दधिरूपाशिरार्थं गौर्नवीनैवोपादीयते तद्वत् ॥ ३८ ॥

## शब्दासामञ्जस्यमिति चेत् ॥ ३९ ॥

इमं पक्षं दूषयति । शब्देति । यज्ञपात्राणामङ्गत्वं श्रुतं, नवीने तत्कालसंपादिते यज्ञयोगाभावादसामञ्जस्यं ज्ञेयम् ॥ ३९ ॥

तथा ऽऽशिरे ॥ ४० ॥

इममेव दोषमाशिरे ऽतिदिशति । तथेति । तथा तुल्यः व्रतदुहः अभावेन बाधो ज्ञेयः ॥ ४० ॥

शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षया कृतावथेहा-पूर्वार्थवद्भूतोपदेशः ॥ ४१ ॥

समाधत्ते । शास्त्रादिति । शास्त्रात् । घृतव्रतो भवत इति शास्त्रात् । विप्रयोगः शब्दास्पृगमज्ञस्यम् । तदेव दर्शयति । तत्र प्रकृतौ ज्योतिष्टोमे एकस्या गोर्यद्द्रव्यं पयः व्रते आशिरे चेति चिकीर्षया व्रतदुघामाशिरे दुहन्तीति श्रुतम् । तच्चातिदेशेन प्राप्तौ घृतव्रतेन पयोव्रतबाधादाशिरे नवीनगोसंपादनकृताद्यप्येह दोहे न पात्राणामतिदेशेन प्राप्तिः किं त्वपूर्वार्थवद् अपूर्वार्थविधिमत् । अतो भूतस्य यज्ञसंबन्धित्वेन कृप्तस्य उपदेशो विधिः ॥ ४१ ॥

पात्राणामाधानमारभ्य धारणम् । अधि० १४ ।

प्रकृत्यर्थत्वात्पौर्णमास्याः क्रियेरन् ॥ ४२ ॥

एवमेकदेशिमतमदूषयित्वैवावान्तरं चिन्त्यते । किं पात्राणि पौर्णमासीमारभ्य धार्याण्युताधानप्रभृतीति संशये पूर्वपक्षमाह । प्रकृतीति । प्रकृत्यर्थत्वादिमानि पात्राणि अनारभ्याधीतत्वात्प्रकृत्यर्थान्यतः पौर्णमासीमारभ्य धारणम् ॥ ४२ ॥

अग्न्याधेये वा ऽविप्रतिषेधात्तानि धारयेन्मरण-स्यानिमित्तत्वात् ॥ ४३ ॥

सिद्धान्तमाह । अग्न्याधेयइति । अग्न्याधेये धारयेत् । अविप्रतिषेधाद् बाधकाभावात् । पौर्णमासीमारभ्य धारणे बाधकमाह । मरणस्यानिमित्तत्वात् । अनियतत्वात् । यद्यपि पौर्णमासार्थानि पात्राणि तथा ऽपि आधानानन्तरं पौर्णमास्याः प्राग् यजमानमरणे यजमानशरीरसंस्कारो न भवेदतः पवमानेष्ट्यामतिदेशतः प्राप्तानामेव तदारभ्य धारणमिति भावः ॥ ४३ ॥

प्रतिपत्तिर्वा ऽप्यन्येषाम् ॥ ४४ ॥

एवमन्तरा प्रक्रान्तां चिन्तां समाप्य यजमानसंस्कारार्थानि पात्राणि इत्येकदेशिमतं दूषयति । प्रतिपत्तिरिति । यथा ऽन्येषां सोमलिप्तपात्राणामवभृथेन सह नयः अप्सु प्रक्षेपः प्रतिपत्तिः एवं यजमानशरीरे प्रक्षेपः पात्राणां प्रतिपत्तिः संस्कारः । यजमानस्य दक्षिणे पाणौ जुहूं नासिकयोः स्रुवौ इत्यादौ पात्रवाचकपदोत्तरं द्वितीयाश्रवणात् । तथा ऽग्नयो ऽपि नानाकर्मसूपयुक्ताः प्रतिपादनार्हा इति तेषामपि प्रतिपत्तिरेव । आहिताग्निमग्निभिर्यज्ञपात्रैश्च दहन्तीत्यत्र तृतीयाश्रुत्या दाहे करणत्वमास्तां यजमानशरीरे निक्षेपस्तु प्रतिपत्तिरेव ॥ ४४ ॥

सर्वसोमानामुपरिष्टात् प्राजापत्यप्रचारः । अधि० १५ ।

## उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषाद्वाच्यो हि प्रकृतिकालः ॥ ४५ ॥

वाजपेये प्राजापत्यपशून्प्रकृत्य श्रूयते । उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति । तत्रैवं क्रमः । तृतीयसवने प्रथममार्भवः पवमानः ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः सोमाः । ततः शस्त्रसोमग्रहहोमः । ततो ऽग्निष्टोमसाम । तत उक्थ्यादयः सोमविकाराः । एवं क्रमे किमार्भवपवमानकाले प्राजापत्यप्रचारः उत शस्त्रवत्सोमान्ते उत विकारस्थाने उत सर्वान्तइति संशये सिद्धान्तरूपं चरमपक्षमाह । उपरिष्टादिति । सर्वेषां सोमानामुपरिष्टात्प्रवर्तन्ते । अविशेषात् । सोमानामित्यविशेषश्रवणात् । ननु प्रकृतौ आर्भपवमानकालः पशुप्रचारे प्राप्तः । कथं तस्य बाध इत्यत आह । प्रकृतिकालः आर्भपवमानकालः अवाच्यः अश्रुतः आनुमानिकः । ततो ऽपि बलवता उपरिष्टात्सोमानामिति प्रत्यक्षश्रुत्या बाध इति भावः ॥ ४५ ॥

## अङ्गविपर्यासो विना वचनादिति चेत् ॥ ४६ ॥

ननु सर्वसोमान्ते ऽनुष्ठाने आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीति प्रहृत्य परिधीन् हारियोजनेन प्रचरतीति क्रमबाधो विना वचनमिति शङ्कते । अङ्गेति । स्पष्टम् । ४६ ॥

## उत्कर्षः संयोगात्कालमात्रमितरत्र ॥ ४७ ॥

समाधत्ते । उत्कर्ष इति । अनूयाजपरिधिप्रहरणयोः पशुप्रचारोत्कर्षे उत्कर्षो न्याय्यः । कुतः, संयोगात् पशुप्रचारेण संयोगात् । पश्वर्थत्वादिति हृदयम्। नन्वाग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति प्रहृत्य परिधीञ् जुहोतीत्यनेनाग्निमारुतानूयाजयोर्हारियोजनपरिधिप्रहरणयोरङ्गत्वं प्रतीयते तस्य का गतिरत आह । कालमात्रमितरत्र । उक्तवाक्यद्वये दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवत्कालमात्रविधिरिति भावः ॥ ४७ ॥

## प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ॥ ४८ ॥

द्वितीयं पक्षमवतारयति । प्रकृतीति । शस्त्रवतामन्ते प्रचारः प्रकृतिकालालाभे ऽपि प्रकृतिकालासत्तेः ॥ ४८ ॥

## न श्रुतिविप्रतिषेधात् ॥ ४९ ॥

दूषयति । नेति । श्रुतेः सोमान्ते इति श्रुतेः विप्रतिषेधाद् बाधात् । अविशेषश्रुतस्य शस्त्रवतामन्ते इति अर्थे शब्दार्थबाध इति भावः ॥ ४९ ॥

## विकारस्थानइति चेत् ॥ ५० ॥

तृतीयं पक्षमुत्थापयति । विकारेति । विकारइति व्याख्यातम् ॥ ५० ॥

## न चोदनापृथक्त्वात् ॥ ५१ ॥

दूषयति । नेति । चोदनापृथक्त्वात् । कर्मपृथक्त्वात् । अयं भावः । तृतीयपूर्वपक्षे युक्तिर्हि सोमः प्रकृतिः पशुप्रचारो वैकृतं कर्म प्रकृत्यन्ते वैकृतमिति । नैतद्युक्तम् । सोमयागपशुप्रचारयोः स्वातन्त्र्येण पृथक्त्वात् प्रकृतिविकृतिभावाभावाद् वैकृतानामन्तइति परिभाषैव न प्रवर्ततइति ॥ ५१ ॥

सवनीये पुरोडाशे देवतोत्कर्षः । अधि० १६ ।

## उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वनङ्गत्वाद्यथा निष्कर्षे ऽनन्वयः ॥ ५२ ॥

आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीति पाशुकानूयाजोत्कर्षे तदाद्युत्कर्षनियमेन सूक्तवाकस्याप्युत्कर्षो जातः । तस्मिन् सूक्तवाके सवनी-

यपुरोडाशानामपि कीर्तनमस्ति । भृज्यन्निन्द्राय हरिवते धानाः पूषण्वते करम्भमित्यादि । तत्कीर्तनमुत्कृष्यते नेति संशये पूर्वपक्षमाह । उत्कर्षः इति । सोमदेवतानां सवनीयदेवतानां न उत्कर्षः । कुतः, तासां पश्वनङ्गत्वात् । यथा निष्कर्षे ऽनन्वयः पौर्णमासप्रयोगाङ्गभूताभ्यो दर्शदेवताभ्यो निष्कर्षे बहिर्भावे सति सूक्तवाके पौर्णमास्यां दर्शदेवताऽनन्वयो यथा तथा ॥ ५२ ॥

## वाक्यसंयोगाद्वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ५३ ॥

सिद्धान्तमाह । वाक्यसंयोगादिति । सूक्तवाकवाक्ये तासामपि देवतानां संयोगात् । सवनीयपुरोडाशपशुप्रयोगयोर्मिलित्वा एकं सूक्तवाकवाक्यं पठितम् । भृज्यन्निन्द्राय हरिवते धानाः पूषण्वते करम्भं सरस्वतीवते परिवापमयं यजमान इति । तथा इन्द्राय हरिवते धानाभिः पूषण्वते करम्भेण सरस्वतीवते परिवापेण सूपस्था अद्य देव इति च तन्मध्यपतितानामप्युत्कर्ष इति भावः । ननु दर्शपूर्णमासप्रयोगपठितानां सूक्तवाकदेवतानां कथं विभज्य पाठो ऽत आह । समानतन्त्रत्वात् । वेदे दर्शपूर्णमासप्रयोगपाठः समानतन्त्रेण कृतः । अत एकवाक्ये सर्वदेवतापाठः । तथा ऽप्यमावास्यायाममावास्यया पौर्णमास्यां पौर्णमास्येति प्रयोगद्वयस्य कालभेदेनानुष्ठाने अर्थलोपात् । अस्येष्टदेवतास्मरणरूपकार्यस्य लोपात्तत्प्रयोगे इतरानन्वयो युक्तः । इह तु सवनीये सूक्तवाक एव नास्ति यत्र पाठस्तत्रापि अनन्वये पाठवैयर्थ्यमिति भावः ॥ ५३ ॥

इति जैमिनीयसूत्रवृत्तौ एकादशस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

राजसूये आग्नावैष्णवादिके ऽङ्गानां भेदेनानुष्ठानम् । अधि० १ ।

## चोदनैकत्वाद्राजसूये ऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥

अथ चतुर्थपादे ऽस्पष्टकर्तृभेदस्थले तन्त्रावापौ विचार्येते । पौष्णं चरुं श्यामो दक्षिणा वारुणं यवमयं चरुमश्वो दक्षिणेति । अत्राङ्गानां तन्त्रमुत भेद इति संशये पूर्वपक्षमाह । चोदनेति । अनुक्तदेशकालानां

समवायात् । परस्परसहितानां फलजनकत्वात् । अत्र हेतुः चोदनैकत्वात् । राजसूयेन स्वाराज्यकाम इति समुदायनाम्ना दर्शपूर्णमासवत्फलसंबन्धबोधादिति भावः । अङ्गानि तन्त्रम् ॥ १ ॥

## प्रतिदक्षिणं वा कर्तृसंबन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्त्या तदेकशब्दोपदेशः स्यात् ॥ २ ॥

सिद्धान्तमाह । प्रतीति । प्रतिदक्षिणं कर्ता ऋत्विगन्यः संबध्यतेऽतस्तत्तद्दक्षिणाके यागे तत्तद्दक्षिणापरिक्रीतानामङ्गभूतत्वादिष्टिवत् । यथा दर्शेष्टौ पौर्णमासेष्टौ च कालभेदादङ्गावृत्तिस्तथा कर्तृभेदादावृत्तिरिति भावः । यत्तु चोदनैकत्वादिति पूर्वपक्षयुक्तिः तस्योत्तरमाह । समुदायः । इष्टिपशुसोमात्मको राजसूयपदवाच्यसमुदायः । तदेकत्वात् फलस्यैकत्वात् । तस्य फलस्य निर्वृत्त्या उत्पत्त्यभिप्रायेण विवक्षितः । अत एकशब्दस्य राजसूयशब्दोपदेशः पठनं, न प्रयोगैक्याभिप्रायेणेति भावः ॥ २॥

## तथा चान्यार्थदर्शनम् ॥ ३ ॥

तथा च प्रयोगभेदसिद्धौ चान्यस्य प्रमाणान्तरस्य दर्शनमुपलब्धिः । आग्नावैष्णवमेकादशकपालं निर्वपेद् ऐन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं वामनो दक्षिणेत्येकं त्रिकम् । अग्नीषोमीयमेकादशकपालमिन्द्रासोमीयमेकादशकपालं सौम्यं चरुं बभ्रुर्दक्षिणेत्यपरं त्रिकम् । अतस्तत्सन्निधौ यत्पूर्वं त्रिसंयुक्तं वीरजननं यदुत्तरं पशुजननमिति प्रयोगभेदात्पूर्वोत्तरभाव उपपन्नः ॥ ३ ॥

राजसूये कर्तृस्तन्त्वम् । अधि॰ २ ।

## अनियमः स्यादिति चेत् ॥ ४ ॥

राजसूये उपक्रमे यऋत्विजस्तएव समाप्तिपर्यन्तमित्यनियम उत नियम इति संशये पूर्वपक्षमाह । अनियम इति ॥ ४ ॥

## नोपदिष्टत्वात् ॥ ५ ॥

पूर्वपक्षं दूषयति । नेति । उपदिष्टत्वात् । वरणवेलायां राजसूये ऋत्विजं वृणे इति ऋत्विजं प्रति श्रावितत्वात् । आरम्भे वृतानां समाप्तिपर्यन्तमावश्यकत्वात् ॥ ५ ॥

## लाघवापत्तिश्च ॥ ६ ॥

लाघवसंपत्तिश्च । प्रतिकर्म ऋत्विग्वरणात्सकृद्वरणं लघ्विति भावः ॥ ६ ॥

## प्रयोजनैकत्वात् ॥ ७ ॥

ननु समुदाये दक्षिणाश्रवणाभावात्समुदायानतिः कथं सिध्येदत आह । प्रयोजनेति । आनतिरूपप्रयोजनस्यैकत्वात् । अवयवानत्या समुदायानतिः सिध्यति । न ह्यवयवादतिरिक्तः समुदाय इति भावः ॥ ७ ॥

## विशेषार्था पुनः श्रुतिः ॥ ८ ॥

नन्वेवं सति ज्योतिष्टोमादिवत्समुदाये एव कुतो न श्रुतेत्यत आह । विशेषेति । विशेषार्था अदृष्टार्था तत्र तत्र पुनः श्रुतिः । अवयवे दक्षिणादानमपूर्वार्थमिति भावः ॥ ८ ॥

अवेष्टावङ्गानां भेदः । अधि० ३ ।

## अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ९ ॥

राजसूये अवेष्टिनाम्नी पञ्चहविष्का इष्टिः पृथक् पृथक् पञ्चदक्षिणाका श्रुता । अग्नीन्द्रविश्वदेवमित्रावरुणबृहस्पतिदेवताका क्रमेण । तेषां पञ्चयागानां तन्त्रमङ्गानामुत भेद इति संशये पूर्वपक्षमाह । अवेष्टाविति । लिङ्गदर्शनात् । लिङ्गं, यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायेति । यदि पञ्चापीष्टयो भिन्नप्रयोगाः स्युस्तर्हि सर्वेषां प्रत्येकमेकहविष्कत्वाद् बार्हस्पत्यस्य मध्ये निधानमनुपपन्नमिति भावः ॥ ९ ॥

## वचनात्कामसंयोगेन ॥ १० ॥

सिद्धान्तमाह । वचनादिति । कामसंयोगेन सहितवचनात् । एतयाऽन्नाद्यकामं याजयेदिति वचनात् सिद्धे राजसूयबहिर्भूतप्रयोगे तन्त्रमङ्गानां लिङ्गं तत्र चरितार्थमिति पूरणीयम् ॥ १० ॥

## क्रत्वर्थायामिति चेन्न वर्णसंयोगात् ॥ ११ ॥

किं चिदाशङ्क्य दूषयति । क्रत्विति । क्रत्वर्थायामिष्टावेव लिङ्गं कुतो न निविशतइति शङ्का । समाधानं वर्णसंयोगात् । यदि ब्राह्मणो यजे-

नेति वर्णसंयोगाद् न क्रत्वर्थो द्व्यमिष्टिः । तत्र राज्ञ एवाधिकाराद् इति भावः ॥ ११ ॥

पवमानेष्टिहविषां भेदेनानुष्ठानम् । अधि० ४ ।

## पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ १२ ॥

आधाने श्रूयते । यः कामयेत वसीयान्स्यादिति सो ऽग्नये पवमानाय निरुप्य पावकशुचिभ्यां समानबर्हिषि निर्वपेदिति । किमासां तन्त्रमुत भेद इति संशये पूर्वपक्षमाह । पवमानेति । प्रयोगवचनैकत्वात् । अह्ना निरुप्याणीति वाक्यमेकं प्रयोगं बोधयत्यतः ॥ १२ ॥

## लिङ्गदर्शनाच्च ॥ १३ ॥

समानबर्हिषीति लिङ्गमपि तन्त्रे गमकमित्याह । लिङ्गेति ॥ १३ ॥

## वचनात्तु तन्त्रभेदः स्यात् ॥ १४ ॥

सिद्धान्तमाह । वचनादिति । तन्त्रभेदः । प्रथमस्य तन्त्रभेदः । वचनात् । अग्नये पवमानाय निरुप्येत्युक्त्वोत्तरयोः समानबर्हिष्ट्वेन तन्त्रवचनात् । अह्ना निरुप्याणीति एकदिनरूपकालविधायकं न त्वेकप्रयोगविधायकमिति भावः ॥ १४ ॥

## सहत्वे नित्यानुवादः स्यात् ॥ १५ ॥

यच्चोक्तं समानबर्हिषीति तस्यान्यत्र चारितार्थ्यमाह । सहत्वइति । यो ब्रह्मवर्चसकामः स्यात्तस्य सर्वाणि हवींषि सह निरुप्याणीति ब्रह्मवर्चसकामप्रयोगस्योक्तवचनेन तन्त्रसिद्धौ तत्रोक्तलिङ्गस्य नित्यानुवादरूपत्वादिति भावः ॥ १५ ॥

द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशदिनसाध्यत्वम् । अधि० ५ ।

## द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १६ ॥

द्वादशाहेन प्रजाकामं याजयेदित्यत्रैव द्वादश दीक्षा द्वादशोपसद इति श्रुतम् । तत्रैव द्वादशसुत्यानामपि प्रत्येकं द्वादश दीक्षा द्वादशोपसद इति त्रिंशद्दिनसाध्यो ऽयं याग उतैकैकस्मिन्नहनि प्रथमं दीक्षा तत एकोपसत् तत एका सुत्येति द्वादशरात्रसाध्यो याग उत प्रथमदिने

दीक्षात्रयमिति क्रमेण क्रमेण चतुर्दिनमध्ये द्वादशदीक्षास्तथोपसदश्च त्रिषु दिनेषु तथैव द्वादशसुत्याश्च त्रिषु दिनेष्विति द्वादशरात्रसाध्यो याग उत द्वादशदिने दीक्षा द्वादशदिने उपसदः द्वादशदिने सुत्येति षट्त्रिंशद्दिनसाध्य इति संशये प्रथमपक्षमाह । द्वादशाहरिति । तत्रैकैकमिति प्राग्द्वादशदीक्षोपसत्कमिति पूरणीयम् । इत्थं चेदृशविशिष्टं प्रत्येकमहरपवृज्येत समाप्येत सः ज्योतिष्टोमः प्रकृतिर्यस्य तत्त्वात् । ननु द्वादशसुत्यासमुदाये ज्योतिष्टोमवत् सदीक्षत्वं सोपसत्त्वं चास्त्येव सकृदनुष्ठाने ऽप्यत आह । कर्मणां द्वादशदिवसेष्वनुष्ठीयमानानां सुत्याकर्मणां पृथक्त्वात् । न द्वादशरात्रसमुदायस्य ज्योतिष्टोमः प्रकृतिः किंतु प्रत्येकस्य तत्प्रकृतित्वादिति भावः ॥ १६ ॥

अह्नां वा श्रुतत्वात्तत्र साङ्गं क्रियेत यथा माध्यन्दिने ॥ १७ ॥

द्वितीयं पक्षमवतारयति । अह्नामिति । अह्नां द्वादशसंख्याविशिष्टदिवसानां श्रुतिभूतत्वात् । उत्पत्तिवाक्ये श्रुतत्वात्प्रथमपक्षे तद्बाधापत्त्या तत्प्रत्येकदिने साङ्गं दीक्षोपसत्सहितं क्रियेत माध्यन्दिने मरुद्भ्यः सांतपनेभ्यो मध्यन्दिने चरुमित्यत्राङ्गानामपि माध्यन्दिन एव कालस्तथा ऽपि सुत्यारूपप्रधानकाल एवाङ्गानामिति भावः ॥ १७ ॥

अपि वा फलकर्तृसंबन्धात्सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १८ ॥

तृतीयं पक्षमुत्थापयति । अपि वेति । सह प्रयोगः अङ्गानां तन्त्रेणानुष्ठानम् । कुतः, फले प्रजारूपफले कर्तृषु च दक्षिणैक्येन समुदायेनैव संबन्धात् प्रत्येकमह्नां फलकर्तृभ्यां संबन्धाभावात् । यथा ऽग्नीषोमीयस्याग्नेयस्य चाङ्गानां तन्त्रमुक्तहेतुबलेन तथा ऽत्रापीति तन्त्रेणानुष्ठानमपि । इत्थं श्रूयमाणद्वादशाहसंपत्तये संशयप्रदर्शनवेलायां यथा दर्शितं तथा ॥ १८ ॥

सांगकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥ १९ ॥

यच्चोक्तमङ्गानां तन्त्रमिति तदङ्गीकृत्यापि सिद्धान्तमाह । साङ्गेति । स्वस्थानानां विकारः वृद्धिः स्यात् । साङ्गस्य प्रधानस्य यः कालः तस्य श्रुतत्वात् । प्रकृतितः अतिदेशेनैकाहसाध्यदीक्षा तथा त्र्यहसाध्या उपसदः तथा एकाहसाध्या सुत्या च प्राप्ता । एवं सति द्वादशाहशब्दो ऽपि संज्ञारूपः सन् योगमवयवार्थं ब्रुवन् दीक्षास्वपि तथोपसत्सु तथा सुत्यासु तुल्यं ब्रूते सर्वेषामपि द्वादशाहसंबन्धम् । अतस्त्रयाणामप्यविशेषे स्वस्वस्थानस्य वृद्धिं संपाद्यैव द्वादशाहशब्दयोगार्थः संपादनीय इति भावः ॥ १९ ॥

## तदपेक्षं च द्वादशत्वम् ॥ २० ॥

द्वादशदीक्षा इत्यादावपि द्वादशत्वं दीक्षायां योगार्थापेक्षमेवेत्याह । तदपेक्षमिति ॥ २० ॥

## दीक्षोपसदां च संख्या पृथक् पृथक् प्रत्यक्षसंयोगात् ॥ २१ ॥

ननु योगार्थः प्रधानएवोद्भिदादौ दृष्टः नाङ्गेष्वित्याशङ्क्य योगार्थं प्रधानएवाङ्गीकृत्य दीक्षोपसदां प्रत्येकं द्वादशाहसाध्यत्वमाह । दीक्षेति । द्वादशदीक्षा द्वादशोपसद इत्यनेन पृथक् पृथक् संख्यायाः प्रत्यक्षसंयोगात् । द्वादशरात्रपदयोगार्थः प्रधानएवास्तु इति भावः ॥ २१ ॥

## तथा चान्यदर्शनम् ॥ २२ ॥

ननु द्वादश दीक्षा इति दीक्षाणामेव वृद्धिं ब्रूते न द्वादशस्वहःसु कर्तव्यमिति ब्रूते कथं द्वादशत्वं दीक्षाह्नामित्यत आह । तथा चेति । तथा च दीक्षाह्नामुपसदह्नां च द्वादशत्वव्यवस्थितौ चान्यदर्शनं षड्त्रिंशदहो वा एष यद् द्वादशरात्र इति दर्शनमुपपन्नमिति शेषः ॥ २२ ॥

## चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २३ ॥

यच्चोक्तमाग्नेयाग्नीषोमयोश्चोदनापृथक्त्वे ऽपि उत्पत्तिवाक्यभेदे ऽपि समवेतानां मिलितानामङ्गसहितप्रधानानां कालसंयोगाद् एककाल-

सम्बन्धविधानात् पौर्णमास्यां पौर्णमास्या साङ्गया यजेतेति वाक्येन विधानात् कालदेशकर्त्रैक्यात्तन्त्रम् । इह तु प्रधानकालविहितानां दीक्षादीनां वसतीवरीग्रहणान्तानाम् आधानवत्स्वकालस्य स्वातन्त्र्येणाविधानादेव तन्त्रमिति भावः ॥ २३ ॥

प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानम् । अधि० ६ । .

भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात् ॥ २४ ॥

अथ सवनीयपश्वादीनामपि दीक्षावत्तन्त्रतेति उत्सूत्रे पूर्वपक्षे सिद्धान्तमाह । भेद इति । यतस्तद्भेदात् प्रधानकालभेदाद् भेदः प्रधानभेदः अतः प्रयोगे तत्तत्प्रधानप्रयोगे ऽङ्गानामपि भेदः स्यात् । तेषां प्रधानशब्दत्वात् प्रधानविधिविधेयत्वात् । दीक्षादीनां प्रधानकालान्यकालत्वात् । तन्त्रं सवनीयपश्वादीनां तत्प्रधानकालिकत्वाद्यस्य प्रधानस्य काले ऽनुष्ठितः स तदर्थ एवेति भावः ॥ २४ ॥

तथा चान्यदर्शनम् ॥ २५ ॥

उक्तार्थे साधकान्तरमाह । तथा चेति । अन्यदर्शनं पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्त इति दर्शनम् । यदि एकस्मिन्नेवाहनि सवनीयपशुः तदङ्गपत्नीसंयाजानामप्येकदिनसंबन्धित्वेन पत्नीसंयाजान्तत्वं सर्वेष्वहःसु श्रूयमाणं बाध्येतेति भावः ॥ २५ ॥

श्वः सुत्यावचनं च तद्वत् ॥ २६ ॥

अन्यलिङ्गमाह । श्व इति । श्वः सुत्यावचनम् । संस्थिते संस्थिते ऽहनि आग्नीध्रागारं प्रविश्य सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति प्रैषेणैकसुत्यासमाप्त्यनन्तरं तस्मिन्नेवाहनि सुब्रह्मण्यः श्वः सुत्या भवति । इन्द्रागच्छेति सुब्रह्मण्यावृत्तिरपि तद्वदुक्तार्थसाधकम् ॥ २६ ॥

पश्वतिरेकश्च ॥ २७ ॥

अपरं लिङ्गमाह । पश्वतिरेक इति । आग्नेयः कृष्णग्रीव इत्यादिना एकादशपशूनामेकैकस्मिन्नहनि अनुष्ठाने द्वादशाहनि अनुष्ठीयमा-

नपशोरित्थं श्रूयते, यः पशुरतिरिच्यते स ऐन्द्राग्न इति प्रत्यहमेकैकपश्वनुष्ठानएव द्वादशदिनपशावतिरेकः संभवति । एकस्मिन् दिने सवनीयपशूनामनुष्ठाने द्वादशस्य पशोरतिरेक एव नास्तीति तत्कथनं विरुद्धमिति भावः ॥ २७ ॥

उपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यत्वम् । अधि० ७ ।

## सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥ २८ ॥

प्रकृतावित्यहे सुत्यामागच्छ मघवन्निति ब्रूयादिति श्रुतम् । अत्रेतिशब्दः अहोवृत्तिसंख्यापरः इत्यहे इत्यस्यामुकदिवसे द्वितीयदिवसे तृतीयदिवसे सुत्यामागच्छेति वक्तव्यमिति तदर्थः । अयं द्वादशाहे ऽतिदेशप्राप्तः । तत्र प्रधानकालादन्यकालत्वात्तन्त्रेणानुष्ठानमित्युक्तं पूर्वपादे । तत्र तन्त्रेण क्रियमाणे सर्वेषामह्नां पृथक् पृथगुपलक्षणमुताविकारेण प्रयोग इति संशये पूर्वपक्षमाह । सुत्येति । सुत्याविवृद्धौ द्वादशाहादौ सुब्रह्मण्यायां तदाह्वानमन्त्रे सर्वेषामह्नां प्रत्येकमुपलक्षणं कार्यं त्रयोदशाहे चतुर्दशाहे इति । कुतः प्रकृतौ ज्योतिष्टोमे चतुरादिसंख्यानामहःस्वन्वयदर्शनात् । नन्वस्य मन्त्रस्य यक्ष्यमाणदेवतायाः स्मरणेन संस्कारः । स च मघवद्रूपदेवतैक्यात्सकृत्स्मरणेन संस्कृतस्य सर्वार्थत्वादहःशब्दस्याभ्यासे मानाभाव इत्याशङ्कायामाह । आवाहनवत् । आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवमित्यत्र प्रथमतृतीयदेवतयोरैक्ये ऽपि यथा ऽऽवाहनमन्त्रस्यावृत्तिः कालभेदात्तथा ऽत्रापि दिनरूपकालभेदात्संस्कारावृत्तिरिति भावः ॥ २८ ॥

## अपि वेन्द्राभिधानत्वात्सकृत्स्यादुपलक्षणम् ॥ २९ ॥

सिद्धान्तमाह । अपि वेति । इन्द्राभिधानत्वादिन्द्रवाचकत्वान्मन्त्रस्य न पूर्वोक्तरीत्योपलक्षितव्यः किं तु सकृद् अविकारेणैव प्रयोगः स्यात् । इन्द्ररूपदेवतैक्येन सकृत्संस्कृत इन्द्रः सर्वार्थो भविष्यतीति भावः ॥ २९ ॥

## कालस्य लक्षणार्थत्वादविभागाच्च ॥ ३० ॥

ननु प्रकृतौ चतुरह इत्यनेन सुत्याविशेषो यथा ज्ञायते तथा ऽत्रापि ज्ञानार्थमन्त्रे विकार आवश्यक इत्यत आह । कालस्येति । कालवाचकचतुरहादिशब्दस्य लक्षणार्थत्वात् । लक्षणाप्रतिपाद्यो यः सुत्यात्मकः कर्मविशेषः तत्कर्तृत्वात् । उपलक्षणं चतुरहादिपदानां कालरूपे स्वार्थे न तात्पर्यं किं तु सुत्यायाम् । तथा च तदर्थस्य चाबाधितत्वाद् अनूहेनैव प्रयोग इति सिद्धान्ताभिप्रायः । ननु देवतैक्ये सकृत्संस्कारस्वीकारे पूर्वोक्ताऽऽवाहनमन्त्रस्याप्यावृत्तिर्न स्यात् । तत्रापि दैवतैक्याद्रतस्ततो ऽत्र वैलक्षण्यं दर्शयति । अविभागाच्च । आग्नेयं कृष्णग्रीवमिति पूर्वोदाहृतयोराग्नेययागयोः विभागः सौम्ययागेन व्यवधानमस्ति इह तु सुत्याः सर्वा अपि केन चिदन्तरिता अतो विभागाद्वैलक्षण्यमिति भावः ॥ ३० ॥

वाजपेये प्राजापत्येषु शूलादीनां तन्त्रता । अधि· ८ ।

## पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात् ॥ ३१ ॥

प्राजापत्यपशौ कुम्भ्यादीनां भेद उत तन्त्रमिति संशये भेद इति पूर्वपक्षे सिद्धान्तमाह । पशुगणइति । पशुगणे पशुसमुदाये कुम्भी पश्वङ्गश्रपणपात्रं शूलं हृदयशूलं हृदयकमलपाकसाधनीभूतस्तीक्ष्णाग्रो दारुविशेषः । वपाश्रपणी वपाया अग्नौ श्रपणपात्रम् । एषां तन्त्रभावः स्यात् । तन्त्रे ऽपि कार्यसाधने प्रभुत्वात् क्षमत्वात् ॥ ३१ ॥

भिन्नदेवताकेष्वपि शूलादीनां तन्त्रता । अधि· ९ ।

## भेदस्तु संदेहाद्देवतान्तरे स्यात् ॥ ३२ ॥

एकादशिनीषु देवताभेदेन यस्यै देवतायै उपाकृतः पशुः तस्या उद्देशेन तत्पशुप्रदानं न संभवत्येककुम्भ्यां श्रपणे सर्वावयवानामेकजातीयत्वात् । अतः कुम्भ्यादिभेद इति पूर्वपक्षमाह । भेद इति । व्याख्यातप्रायम् ॥ ३२ ॥

## अर्थाद्वा लिङ्गकर्म स्यात् ॥ ३३ ॥

कुम्भ्यां प्रक्षेपवेलायां चिह्नकरणेन संदेहनिवारणसम्भवात् तत्रापि तेषां तन्त्रमिति सिद्धान्तमाह । अर्थादिति । अर्थात् संशयनिवृत्तिरूपकार्यसिद्धेः लिङ्गकर्म चिह्नकर्म ॥ ३३ ॥

कुम्भ्या अपि तन्त्रता । अधि॰ १० ।

## अयाज्यत्वाद्वसानां भेदः स्यात्स्वयाज्याप्रदानत्वात् ॥ ३४ ॥

वसायाश्चिच्छूकरणासम्भवात्कुम्भीभेद इति पूर्वपक्षमाह । अयाज्यत्वादिति । वसानां स्वयाज्याप्रदानत्वात् । स्वयाज्याया अर्धर्चे स्वपशुवसाया होमस्य विहितत्वात्कुम्भीभेदमन्तरा ऽयाज्यत्वाद् वसानामुक्तरीत्या होमकर्मत्वासम्भवाद्भेदः कुम्भीभेदः ॥ ३४ ॥

## अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात्स्वत्वस्याश्रुतिभूतत्वात् ॥ ३५ ॥

सिद्धान्तमाह । अपि वेति । वसाहोमस्य प्रतिपत्तिरूपत्वात् । यद्दैवताकः पशुः तस्यै तद्वसेत्यत्र प्रमाणाभाव इति भावः । ननु स्वयाज्यार्धकाले स्वपशुवसाप्रतिपत्तिरपेक्षिता तद्वा कथमत आह । स्वत्वस्य स्वयाज्यार्धर्चेइति स्वत्वस्य अश्रुतिभूतत्वात् । अर्धर्चे वसाहोमं जुहोतीत्यत्राश्रुतत्वात् ॥ ३५ ॥

## सकृदिति चेत् ॥ ३६ ॥

यस्याः कस्याश्चिद्याज्याया अर्धर्चे यस्य कस्य चित्पशोर्वसाहोमः सिद्धश्चेत्प्रथमार्धर्चएव सर्ववसाहोमः सकृत्स्यादित्याशङ्कते । सकृदिति ॥ ३६ ॥

## न कालभेदात् ॥ ३७ ॥

अर्धर्चइति नाधिकरणे सप्तमी बाधात् किं तु निमित्तसप्तमी । तथा च निमित्तानामर्धर्चानां भिन्नकालत्वाद् निमित्तानां कालभेदेनावृत्तौ नैमित्तिकानामावृत्तिरिति समाधत्ते । नेति ॥ ३७ ॥

भिन्नजातिषु पशुषु कुम्भ्या भेदः । अधि॰ ११ ।

## जात्यन्तरे भेदः स्यात्पक्तिवैषम्यात् ॥ ३८ ॥

सौत्रामण्यां भिन्नजातिपशवः आश्विनं धूम्रमालभते सारस्वतं मेषमैन्द्रमृषभमिति । अत्रापि तन्त्रं कुम्भ्या इति पूर्वपक्षे सिद्धान्तमाह । जात्यन्तरइति । भेदः कुम्भीभेदः पक्तिवैषम्यात् । यावता कालेनानडुहो

ऽवयवाः पच्यन्ते तावता कालेनाजावयवा अतिशिथिला अवदानाक्षमा भवेयुरिति भावः ॥ ३८ ॥

## वृद्धिदर्शनाच्च ॥ ३९ ॥

सौत्रामण्यां शूलैरवभृथं यन्तीति बहुवचनेन शूलवृद्धिदर्शनं लिङ्गं कुम्भीवृद्धावित्याह । वृद्धीति ॥ ३९ ॥

अश्वप्रतिग्रहेष्ट्यां प्रतिपुरोडाशं चतुष्कपालभेदः । अधि० १२ ।

## कपालानि च कुम्भीवत्तुल्यसंख्यानाम् ॥ ४० ॥

यावतो ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदित्यत्र पूर्वपक्षमाह । कपालानीति । तुल्यसंख्यानां समसंख्याककपालककर्मणां कपालानि कुम्भीवत्तन्त्रं पुरोडाशसंख्यानुसारेण कपाले दैर्घ्यं संपाद्य चतुर्षु कपालेष्वेव बहूनामपि पाक इति भावः ॥ ४० ॥

## प्रतिप्रधानं वा प्रकृतिवत् ॥ ४१ ॥

सिद्धान्तमाह । प्रतीति । प्रतिप्रधानं प्रतिपुरोडाशं भिन्नानि चतुष्कपालानि यथा प्रकृतौ आग्नेयो ऽष्टाकपालः अग्नीषोमीय एकादशकपालः तत्र भिन्नेषु श्रपणं तथा । अन्यथा तत्राप्यष्टौ कपालानि पुरोडाशद्वयस्थितियोग्यानि किंचिद्दीर्घाणि त्रीणि किंचिद्ध्रस्वान्येकपुरोडाशस्थितियोग्यानि स्युरिति भावः ॥ ४१ ॥

## सर्वेषां चाभिप्रथनं स्यात् ॥ ४२ ॥

उक्तार्थे लिङ्गमपि दर्शयति । सर्वेषामिति । यावत्कपालं पुरोडाशं प्रथयतीति सर्वकपालमभिव्याप्य पुरोडाशं विस्तारयतीत्यर्थः । इदं च तन्त्रपक्षे न संभवतीति भावः ॥ ४२ ॥

व्रीह्यवहननादौ प्रतिप्रहारं मन्त्रस्यानावृत्तिः । अधि० १३ ।

## एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम् ॥ ४३ ॥

व्रीहीनवहन्तीत्यनेन विहिते ऽवहनने अवरक्षो दिवः सपत्नं वध्यासमिति मन्त्रस्य प्रत्यवहननमावृत्तिरुत सकृदिति चिन्तायामवहननरूपक्रियाव्यक्तिभेदान्मन्त्रावृत्तिरिति पूर्वपक्षे सिद्धान्तमाह । एकेति । संस्कारा-

णां वितुषीभावपर्यन्तावहननव्यक्तिसंघस्यैकविधिविहितत्वेनैककर्मत्वमिति व्याख्यातं पञ्चमे । अतः कर्मैक्याच्च मन्त्रावृत्तिरिति भावः ॥ ४३ ॥

नानाबीजेष्टौ द्रव्यभेदेन संस्कारावृत्तौ मन्त्रावृत्तिः । अधि० १४ ।

## द्रव्यान्तरे कृतार्थत्वात्तस्य पुनः प्रयोगान्मन्त्रस्य तद्गुणत्वात्पुनः प्रयोगः स्यात्तदर्थेन विधानात् ॥ ४४ ॥

यत्र व्रीहयः श्यामाका नीवाराश्चेति नानाबीजेष्टिः तत्राप्यवहननमन्त्रः सकृदिति पूर्वपक्षे सिद्धान्तमाह । द्रव्यान्तरइति । द्रव्यान्तरे मन्त्रस्य पुनः प्रयोगः स्यात् । प्रथमबीजे मन्त्रस्य कृतार्थत्वाद् बीजान्तरे तस्यावघातस्य पुनः प्रयोगान्मन्त्रस्य तत्प्रयोगे गुणत्वाच्च चोदकशास्त्रेण तदर्थेन तदर्थत्वेनापि विधानात् । द्रव्यभेदेन संस्कारावृत्तौ मन्त्रावृत्तिरिति भावः ॥ ४४ ॥

दर्शपूर्णमासादौ प्रतिनिर्वपणादि मन्त्रावृत्तिः । अधि० १५ ।

## निर्वपणलवनास्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् ॥ ४५ ॥

चतुरो मुष्टीन्निर्वपति अयुजो मुष्टीन् लुनाति त्रिधा तु पञ्चधा तु वा वेदीं स्तृणाति चतुर्जुह्वां गृह्णातीति । एषु क्रमेण, देवस्य त्वेति, बर्हिर्देवसदनं सीदामीति, ऊर्णम्रदसं त्वेति, शुक्रं त्वेति, मन्त्राः सकृत्पठनीया उतावृत्त्येति संशये पूर्वपक्षमाह । निर्वपणेति । एकद्रव्यवत् । व्रीहिमात्रावहननवत् सकृत्पाठः । मुष्टिचतुष्टयनिर्वापस्यापि वितुषीभाववत्पार्यवदेकफलत्वात् ॥ ४५ ॥

## द्रव्यान्तरवद्वा स्यात्तत्संस्कारात् ॥ ४६ ॥

सिद्धान्तमाह । द्रव्येति । द्रव्यान्तरवद् नानाबीजावहननवत् । संस्कार्यद्रव्यभेदेन मन्त्रेण स्मरणपूर्वकनिर्वापक्रियया पृथग्द्रव्याणां संस्कारस्यावश्यकत्वादिति भावः ॥ ४६ ॥

वेदिप्रोक्षणे प्रत्यावृत्ति मन्त्रानावृत्तिः । अधि० १६ ।

## वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४७ ॥

वेदिरसीति मन्त्रेण त्रिर्वेदीं प्रोक्षतोऽन्यत्र मन्त्रावृत्तिः सकृद्वेति संशये पूर्वपक्षमाह । वेदीति । कर्मणः पुनः प्रयोगात् । प्रोक्षणक्रियां प्रत्यङ्गं मन्त्रः क्रिया प्रधानम् । इत्थं च प्रतिप्रधानमङ्गावृत्तिरिति भावः ॥ ४७ ॥

## एकस्य वा गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत्प्रयोगः स्यात् ॥ ४८ ॥

सिद्धान्तमाह । एकस्येति । एकस्यैव कर्मणः त्रिरित्यनेनाभ्यासरूपगुणविधिः न क्रियाभेदः द्रव्यैकत्वात् । तस्मात्सकृत्प्रयोगः । प्रधानक्रियाभेदकप्रमाणाभावादिति भावः ॥ ४८ ॥

कण्डूयनमन्त्रस्य सकृत्प्रयोगः । अधि० १७ ।

## कण्डूयने प्रत्यङ्गं कर्मभेदः स्यात् ॥ ४९ ॥

दीक्षितस्य कृष्णविषाणया कण्डूयनमन्त्रः कृष्णेत्येति तदा युगपदेव नानादेशकण्डूयनप्रसक्तौ मन्त्रावृत्तिर्न वेति संशये पूर्वपक्षमाह । कण्डूयने इति । स्पष्टम् ॥ ४९ ॥

## अपि वा चोदनैककालमैककर्म्यं स्यात् ॥ ५० ॥

सिद्धान्तमाह । अपि वेति । न ह्यत्र कण्डूयनमङ्गसंस्कारार्थं चोद्यते रागप्राप्तकण्डूयने साधनमात्रं विवक्षितम् । फलं च तत्कालिकदुःखनिवृत्तिः । इत्थं च तत्कालिकदुःखनिवृत्तिजनककण्डूयनव्यक्तिभेदे ऽपि अवहननवदेकफलत्वान्नावृत्तिर्मन्त्रस्येति भावः ॥ ५० ॥

ज्योतिष्टोमे स्वप्नादिषु मन्त्रानावृत्तिः । अधि० १८ ।

## स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५१ ॥

दीक्षितस्य स्वप्ने त्वमग्ने व्रतपा इति, नदीतरणे देवीराप इति, तथा ऽभिवृष्टौ उन्दतीरिति, अमेध्यदर्शने बद्धं मन इति । एष्वपि पूर्वाधिकरणसिद्धान्तमतिदिशति । स्वप्नेति । प्रतिमन्त्रणेषु तत्तन्निमित्तमन्त्रपाठेषु ॥ ५१ ॥

दीक्षितस्य प्रयाणे मन्त्रानावृत्तिः । अधि० १९ ।

## प्रयाणे त्वा ऽर्थनिर्वृत्तेः ॥ ५२ ॥

तथा प्रयाणे भद्रादभिप्रेय इति मन्त्रः प्रयाणेन निष्पाद्यो यो ऽर्थः कार्यं तन्निर्वृत्तिः तत्सिद्धिः तावत्सकृदिति राद्धान्तः ॥ ५२ ॥

उपरवमन्त्रस्यावृत्तिः । अधि० २० ।

## उपरवमन्त्रस्तन्त्रं स्याल्लोकवच्च बहुवचनात् ॥ ५३ ॥

रक्षोहणो वलगहनो वैष्णवान् खनामीति उपरवखननमन्त्रः । उपरवा नाम सोमाभिषवाधः सुषिररूपाश्चत्वारस्तत्र प्रत्युपरवं मन्त्र आवर्तते नेति संशये पूर्वपक्षमाह । उपरवेति । तन्त्रं सकृद् वैष्णवानिति बहुवचनात् । लोकवत् । लोके एवंतात्पर्यं बहुवचनं दृष्टं तथा ॥ ५३ ॥

## न सन्निपातित्वादसन्निपातिकर्मणां विशेषाग्रहणे कालैकत्वात्सकृद्वचनम् ॥ ५४ ॥

सिद्धान्तमाह । नेति । न तन्त्रमुपरवमन्त्रस्य सन्निपातित्वात् । अनुष्ठेयक्रियास्मरणजनकत्वात् । ये मन्त्रा अर्थस्मरणद्वारा नादृष्टजनकाः किं तु साक्षाददृष्टार्थमेवोच्चार्या तत्र कालैक्ये एतदर्थमेवेति विशेषाग्रहणात्तन्त्रं भवतु प्रकृते तथात्वाभावान्न तन्त्रमित्याह । असंनिपातिनां साक्षाददृष्टजनकानाम् । शेषं व्याख्यातम् । अयं भावः । उपरवा हविर्धाने खायन्तइत्युत्पत्तिवाक्ये बहुवचनादुपरवभेदसिद्धौ न सर्वेषां सकृत्खननेन सिद्धिः । अतः प्रत्युपरवं खननमपि भिन्नं तच्च खननं रक्षोहण इति मन्त्रेण स्मृत्वा कर्तव्यं यावदेव मन्त्रजनितं ज्ञानं तावदेव तत्क्रियाकरणमेकवारमुच्चारणजनितं ज्ञानं तावत् स्यातुमक्षमत आवृत्तिरिति ॥ ५४ ॥

हविष्कृदादिमन्त्राणामावृत्तिः । अधि० २१ ।

## हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात् ॥ ५५ ॥

ज्योतिष्टोमे प्रतिसवनं सवनीयपुरोडाशास्तेषु प्रकृतितः हविष्कृदाह्वानं प्राप्तम् । एवं वाजपेये ये सवनीयपशुः प्राजापत्यपशवश्च तेषु अध्रिगुप्रैषः प्राप्तः । एवमाग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवमित्यत्राग्नेयद्वये पुरोनुवाक्या च प्राप्ता । मनोतामन्त्रश्च । अमीषां

सकृत्प्रयोग उत भेदेनेति संशये न हि मन्त्रान्ते अनुष्ठेयं कर्म स्मृत्वा करणमंत्रास्ति किं तु हविष्कृदध्रिगुप्रैषौ परप्रत्यायनार्थौ पुरोनुवाक्या-मनोतामन्त्रौ केवलस्मरणजनने कृतार्थौ अतः पूर्ववैषम्यात्तन्त्रमिति पूर्व-पक्षे सिद्धान्तमाह । हविष्कृदिति । कालभेदादिति सर्वसाधारणो हेतुः । हविष्कृन्मन्त्रे तत्तत्सवनकालभेदः । अध्रिगुमनोतामन्त्रे सवनीयसंब-न्धिनि प्रातःसवनं प्राजापत्यसंबन्धिनि तृतीयसवनं पुरोनुवाक्यायाम-ग्नियागसंबन्धिन्यां सौम्ययागव्यवहितः काल इति भेदो द्रष्टव्यः ॥ ५५ ॥

## अध्रिगोश्च विपर्यासात् ॥ ५६ ॥

अध्रिगुप्रैषे तन्त्रेण कृते दोषान्तरमपि तत्राह । अध्रिगोश्चेति । विपर्यासाद् विहितक्रमलोपात् । तथा हि । प्राजापत्यसंबन्धिनः अध्रिगोः प्राचीना ये पश्वालम्भनाभ्युतप्रत्याभ्युतजेदग्न्यादयः तेषां प्रातःसवने ऽनुष्ठाने पर्यग्निकरणान्ते उत्सर्गो विहितः स बाधितः । यदि तृतीय-सवने क्रियते तदा ऽपि प्राजापत्याध्रिगोः पुरस्तात्कर्तव्यानां परस्तादिति क्रमलोपः अतः आवृत्तिः ॥ ५६ ॥

## करिष्यद्वचनात् ॥ ५७ ॥

करिष्यदिति । करिष्यदुच्चारणाव्यवहितोत्तरक्षणे अनुष्ठापकं वचनं शब्दो यत्र तत्त्वात् । अध्रिगुमन्त्रे आरभध्वमित्यादिशब्दैरुच्चा-रणाव्यवहितोत्तरक्षणे कर्तव्यता प्रतीयते । प्रातःसवने ऽनुष्ठिते बहुकर्मणा व्यवहितमेवानुष्ठानं मन्त्रप्रतिपादितार्थस्येति तद्बाधो द्रष्टव्यः ॥ ५७ ॥

इति श्रीमज्जैमिनीयसूत्रवृत्तौ एकादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥

संपूर्णोयमेकादशस्तन्त्राध्यायः* ॥ ११ ॥

---

* ऋतुशैलेन्दुसंख्याके शाके फाल्गुनमासके । सिते पक्षे दशम्यां श्रीविश्वनाथ-प्रसादतः ॥ १ ॥ रामेश्वरः प्राप्तमतिः तन्त्राध्यायस्य वृत्तिकाम् । विरच्य श्रीविश्व-भर्तुश्चरणे ऽर्पितवानिमाम् ॥ २ ॥ भ्रमप्रमादापतितान् दोषान्वै गतमत्सराः । साध-वश्चोद्धरिष्यन्ति श्लाघयिष्यन्ति वै गुणान् ॥ ३ ॥

इति त्रयः श्लोकाः गो· दा· पु· पुं· उपलभ्यन्ते ।

अग्नीषोमीयप्रयाजादिभिः पुरोडाशस्योपकारः। अधि० १।

## तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रमतुल्येषु तु भेदो विधिक्रमतादर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात् ॥ १ ॥

एकादशे ऽध्याये तन्त्रावापौ विचार्य तदुपजीव्य प्रसङ्गः द्वादशे विचार्यते। तन्त्रोपजीव्यत्वं प्रसङ्गस्येत्थम्। अनेकोद्देशेन सकृदनुष्ठानमनेकोपकारकमिति पूर्वाध्यायेन सिद्धे एकोद्देशेनानुष्ठितमप्यङ्गं देशकालकर्त्रैक्ये अनुद्देश्यमप्युपकरोति न वेतिसंशयनिवर्तकत्वात्प्रकृतचिन्तायास्तत्त्वं युक्तम्। तथा च तादृशसंशये पूर्वपक्षमाह। तन्त्रीति। तन्त्रं साधारणो धर्मः। साधारणो ऽङ्गकलाप इति यावत्। स येषां ते तन्त्रिणः। तेषां समवाये देशकालकर्त्रैक्ये चोदनातः विधिवाक्यात् समानानामेकानामेकविधिचोदितानामिति यावत्। यद्यपि समानशब्दस्तुल्यवाचको ऽन्यत्र तथा ऽप्यत्राभिन्नवाचकः। वह्निधूमयोः सामानाधिकरण्यमिति यावत्। एकतन्त्रमेकप्रयोगः अङ्गानां सकृदनुष्ठानमित्यर्थः। अतुल्येषु भिन्नविधिबोधितेषु भेदः अनुष्ठानभेदः अङ्गावृत्तिरिति यावत्। कुतः विधिप्रक्रमतादर्थ्यात्। विधिः अङ्गानामनुष्ठानं तस्य यः प्रक्रमः आरम्भः तस्य तादर्थ्यात्। अयं भावः। यथा पशुप्रयोग एकः तद्वत्पुरोडाशप्रयोग एकः। तत्र पशुप्रयोगः पशुप्रयोगापूर्वोपकारार्थत्वेन तदङ्गान् गृह्णाति पुरोडाशयागश्च तदङ्गान्। तदपूर्वोपकारकत्वेनारम्भवेलायां यदुपकारकत्वेन गृह्णाति तदर्थः तदङ्गानुष्ठानप्रयोगो नान्यार्थः। अतो न तन्त्रसंभवः पशुप्रयाजानां पुरोडाशप्रयाजानां चेति। ननु द्वयोः प्रयोगयोर्यदि कालभेदः स्यात्तदोपक्रमयोर्भेदात्तयोर्भिन्नार्थता सिध्येत् तत्रैव प्रमाणाभाव इत्यत आह। श्रुतिकालनिर्देशात्। श्रुत्या प्रयोगारम्भकालभेदस्य निर्देशात्। अग्नीषोमीयं प्रणीयाग्नीषोमीयतन्त्रं प्रक्रमयति, वपया प्रचर्य पुरोडाशतन्त्रं प्रक्रमयतीति वाक्याभ्याम् ॥ १ ॥

## गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥

उक्तार्थे हेत्वन्तरमप्याह। गुणेति। पाशुकप्रयोगगृहीताङ्गपुरोडा-

शप्रयोगगृहीताङ्गयोर्गुणकालभेदात् । तथा हि । पाशुकप्रयाजे एकादश-संख्या गुणः तिष्ठन्तं पशुं प्रयजतीति पशुजीवनकालः । तथा ऽनूयाजे एका-दशसंख्या पृषदाज्यं द्रव्यम् । पौरोडाशिकेषु तु उभयत्र क्रमेण पञ्चत्व-त्रित्वसंख्या केवलाज्यं द्रव्यं वपायागोत्तरः काल इति भेदात्तन्त्रभेदः स्यात् ॥ २ ॥

## तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥

सिद्धान्तमाह । तन्त्रेति । मुख्यतन्त्रेण पशुप्रयोगेण पुरोडाशा-पूर्वोपकारसिद्धिः स्यात् । कुतः, तन्त्रमध्ये पाशुकतन्त्रमध्ये पुरोडाशस्य विधानात् । तन्त्रमध्ये विधानं कथं प्रसङ्गसाधकमत आह । तन्त्रार्थ-स्येति । तन्त्रस्याङ्गकृतस्यार्थस्योपकारविशिष्टत्वाद् ऐक्यात् । अयं भावः । पुरोडाशयागेन पशूपकारं भावयेदित्युत्पत्तिवाक्यादवगते कथमिति व्या-पाराकाङ्क्षायामाप्तिमिकन्यायेन द्रव्यदेवतासादृश्यादग्नीषोमीययागवदिति चोदकशास्त्रपरिकल्पने पश्चात्पुरोडाशप्रयोगविधिना ऽग्नीषोमीयाङ्गानां सकलानां पशुपुरोडाशयागसांनिध्यं संपादनीयं स्वोपकारार्थं ततः प्रागेव पशुप्रयोगविधिना प्रयाजानूयाजादीन् पशूपकारसिद्धये पशुयागसांनिध्यं संपादितं तत्सांनिध्ये तत्प्रयोगान्तःपातिपुरोडाशयागसांनिध्यमपि सिद्ध-मेव तेषामिति पाशुकप्रयोगविधिप्रापितसांनिध्यकान्यङ्गानि पुनः पुरोडा-शप्रयोगविधिः न गृह्णाति । यानि चाज्यभागादीनि पाशुकयागसमीपे कृतानि तान्येव तत्प्रयोगविधिर्गृह्णातीति न प्रयाजादीनामावृत्तिरिति ॥ ३ ॥

## विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ॥ ४ ॥

अथ यदुक्तं गुणकालभेदादावृत्तिरिति तत्रोत्तरमाह । विकारा-दिति । विकाराद् एकादशत्वपृषदाज्यरूपगुणविकाराद् न भेदः न प्रयोग-भेदः । प्रयाजादीनां नावृत्तिरिति फलितो ऽर्थः । कुतः, अर्थस्याङ्गजनितो-पकारस्याविकृतत्वात् । प्रकृतौ पञ्चत्वादिविशिष्टे य उपकारः तस्यैव पशौ अतिदिष्टत्वेन फलांशे विकाराभावात् । अयं भावः । एकादश

प्रयाजान्यजतीत्यत्र प्रकृतितश्चोदकशास्त्रेण ये प्रयाजाः प्राप्तास्तान-नूद्यैकादशत्वादिरूपो गुणो विधीयते नापूर्वः गुणविशिष्टः । तथा सति नक्षत्रेष्ट्युपहोमन्यायेन प्राकृतवैकृतसमुच्चयापत्तेः । न चेष्टापत्तिः । वैश्वदेवे पर्वणि त्रिंशत्संपद्यन्त इत्याहुतिसंख्याकथनविरोधात् । प्राकृतानां तु प्रयाजादीनां स्वोपकारसहितानामतिदेशाद् द्वयोरुपकारो न भिन्नः । अतो गुणप्रयुक्ता आवृत्तिर्नेति । न च गुणानुग्रहाय प्रधानावृत्तिर्न्याय्येति फलितं तात्पर्यम् ॥ ४ ॥

## एकेषां चाशक्यत्वात् ॥ ५ ॥

पुरोडाशचोदकशास्त्रप्रापितानां यावदङ्गानां मध्ये केषां चिद्भेदेनानुष्ठानं कर्तुमशक्यं यथा वेदिः अग्निविहरणस्य वेद्यन्तरे क्रियमाणे साङ्गप्रधानस्यानुष्ठाने देशकर्त्रैक्यनियमो भज्येत । प्रधानपशुयागवेदिः तदङ्गभूतपुरोडाशयागवेदेर्भिन्नत्वात् । अत उभयोर्वेदिरेकैवेत्यवश्यमभ्युपेयम् । तथा च तत्र प्रसङ्गसिद्धौ किमपराद्धं प्रयाजानुयाजैरित्यभिप्रायेणाह । एकेषामिति । एकेषां वेद्यादीनामुक्तयुक्त्या ऽऽवृत्तेरशक्यत्वात् ॥ ५ ॥

## एकाग्निवच्च दर्शनम् ॥ ६ ॥

ननु साङ्गप्रधानानां देशैक्यं न्यायसिद्धं ततो ऽपि प्रबलेन चोदकशास्त्रेण बाध्यतामत आह । एकेति । एकाग्निवत् । पशुयागपुरोडाशयागयोरग्न्यभेदस्य दर्शनं प्रत्यक्षश्रुतिदर्शनं मध्ये ऽग्नेराज्याहुतीर्जुहोति पुरोडाशाहुतीः पश्वाहुतीश्चेति दर्शनम् । तथा च प्रणयनस्य प्रसङ्गसिद्धिर्गले पतिता । तथा च तत्र प्रसङ्गसिद्धावन्यत्रापि सिध्यतीतिभावः ॥ ६ ॥

पुरोडाशे आज्यभागयोः कर्तव्यत्वम् । अधि॰ २ ।

## जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥ ७ ॥

पशुपुरोडाशे आज्यभागौ कर्तव्यौ नेति संशये पाशुकप्रयोगविधिना पौरोडाशिकचोदकबाधाद् आज्यभागप्रापकाभावाच्च कर्तव्याविति पूर्वपक्षे सिद्धान्तमाह । जैमिनेरिति । जैमिनेराचार्यस्य मते आज्यभागौ कर्तव्यौ परतन्त्रापत्तेः । परतन्त्रं पाशुकतन्त्रं तेनापत्तेः प्राप्तेः । प्रयाजादीनां तद्वि-

षये स्वतन्त्रस्य पुरोडाशतन्त्रस्य प्रयोगविधेः प्रतिषेधः स्यात् । यद्विषये आज्यभागादिविषये परस्याप्राप्तिः तत्र न बाध इति भावः ॥ ७ ॥

सोमे दार्शिकवेदेरकरणम् । अधि० ३ ।

## नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ८ ॥

सौमिकवेदिनिर्माणानन्तरं ज्योतिष्टोमाङ्गभूतदर्शपूर्णमासप्रकृतिके कर्मणि तदङ्गवेद्यन्तरं कर्तव्यं न वेति संशये पूर्वपक्षमाह । नानेति । दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् । पृथग्वेदिः स्यादित्यर्थः । कुतः, नानार्थत्वात् । सौमिकदर्शपूर्णमासवेद्योः भिन्नफलत्वात् । सौमिकवेदेः प्रचारः फलमवदानग्रहणादिजातं प्रचार इति धूर्तस्वामिभाष्ये इतरा वेदिर्हविरासादनार्थेति नानार्थत्वात् ॥ ८ ॥

## अकर्म वा कृतदृषा स्यात् ॥ ९ ॥

सिद्धान्तमाह । अकर्मेति । अकर्म वेद्यन्तरस्याकरणं यतः कृतदृषा सा क्रियमाणा सौमिक्या वेद्या दूषणरूपा स्यात् । दूषणरूपता चेत्थं, यत्कार्यं हविरासादनरूपं दार्शिकवेदेः तत्कार्यक्षमा सौमिकी वेदिरिति । न चेदं वास्तवं सौमिक्यां हविर्धारणक्षमत्वात् । प्रचारार्थाया अपि धारणस्य प्रसङ्गेन सिद्धे न वेद्यन्तरमिति भावः ॥ ९ ॥

सोमे दार्शिकैः स्रुवादिभिः पात्रैः सावनपश्वादिहोमः । अधि० ४ ।

## पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ १० ॥

ज्योतिष्टोमे एकसुत्यादिने ग्रहचमसेषु गृहीतेषु दर्शपूर्णमासप्रकृतिकं कर्म सावनपुरोडाशादिरूपं तत्रजुहूपभृत्प्रभृतिपात्राणि सन्ति उत ग्रहचमसैरेव होम इति संशये पूर्वपक्षमाह । पात्रेष्विति । पात्रेषु होमसाधनपात्रेषु प्रसङ्गः ग्रहचमसैरेव होमसिद्धिः उभयोरपि होमार्थत्वाविशेषात् ॥ १० ॥

## न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ॥ ११ ॥

सिद्धान्तमाह । न्याय्यानीति । दर्शपूर्णमासपात्राणि होमे न्याय्यानि योग्यानि । कुतः, प्रयुक्तत्वात् तेषां परिग्रहात् । प्रयाजादिवैव-

ध्यमाह । अप्रयुक्ते अपरिग्रहे प्रसङ्गः स्यात् । सौमिकतन्त्रात्प्राक् सावन-तन्त्रं प्रक्रान्तम् । अथ यद्गृहीत्वा ऽऽज्यानि सोममासादयन्ति न यजमानं हन्तीति वाक्येनाज्यासादनान्तस्य प्राकृतस्य पूर्वं विहितत्वात् । तथा च प्राकृतजुह्वादीनां संनिहितत्वेन प्रसङ्गासंभवः । प्रयाजादिषु नेत्यम् । लोके ऽपि गमनप्रसङ्गे तदुपकाराय स्वयाने समवहिते न परकीयमपे-क्षत इति भावः ॥ ११ ॥

शामित्रे पशुपुरोडाशश्रपणाभावः । अधि० ५ ।

## शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १२ ॥

पशुपुरोडाशश्रपणं शामित्रे उत गार्हपत्ये इति संशये शामित्रस्य हविःश्रपणहेतुत्वं क्लृप्तमिति पुरोडाशश्रपणे ऽप्यग्नेः प्रसङ्गसंभवात्तत्रैव श्रपणमिति पूर्वपक्षे सिद्धान्तमाह । शामित्रइति । सूत्रे पशुपुरोडाशशब्दः तच्छ्रपणपरः । तन्न स्याच्छामित्रे । इतरस्य गार्हपत्यस्य शामित्रात्प्राक् प्रवृत्तत्वात् सिद्धत्वात् ॥ १२ ॥

कौण्डपायिनामयने ऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणम् । अधि० ६ ।

## श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वात् ॥ १३ ॥

कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्यत्र हविःश्रपणं शा-लामुखीये उत मुख्यगार्हपत्यइति संशये यतः प्रणयति स गार्हपत्य इत्य-ग्नीषोमप्रणयनोत्तरमाहवनीयस्य गार्हपत्यत्वेन चोदितत्वाच्छालामुखीये श्रपणमिति पूर्वपक्षे सिद्धान्तमाह । श्रपणमिति । प्राजहितस्य मुख्यगार्हप-त्यस्य । शेषं स्पष्टम् । अयं भावः । शालामुखीये गार्हपत्यशब्दो गौणः मुख्ये संभवति गौणकल्पनमन्याय्यमिति ॥ १३ ॥

हविर्धानशकटान्येन श्रौषधद्रव्यकाणां पुरोडाशानां निर्वापः । अधि० ७ ।

## हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् ॥ १४ ॥

हविर्धानशकटप्रवृत्त्यनन्तरं सवनीयादिपुरोडाशनिर्वापः तत्र कार्य उत शकटान्तरे इति संशये पूर्वपक्षमाह । हविर्धाने इति । हविर्धाने

सोमाधारभूते शकटे निर्वापार्थे सवनीयादिनिर्वापार्थे निर्वापरूपकार्यं साधयेतामुत्पादयेताम् । शेषं स्पष्टम् ॥ १४ ॥

## असिद्धिर्वाऽन्यदेशत्वात्प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ॥ १५ ॥

सिद्धान्तमाह । असिद्धिरिति । हविर्धानशकटयोर्निर्वापसाधनस्यासिद्धिः प्रधानवैगुण्यात् । प्रधानवैगुण्यं दर्शयति । अन्यदेशत्वात् । सोमशकटयोर्हविर्धानमण्डपे स्थितयोर्निर्वापदेशे गार्हपत्यपश्चाद्भागे नयने प्रधानस्य सोमयागस्य वैगुण्यं स्यादिति भावः । अतः अवैगुण्ये एव प्रसङ्गो युक्तः ॥ १५ ॥

## अनसां च दर्शनात् ॥ १६ ॥

ननु यथा पशुपुरोडाशे चोदकप्राप्तः हविरासादनोत्तरकालः प्रयाजानुष्ठानस्य तं कालं बाधित्वा प्रसङ्ग आदृतः तथा गार्हपत्यपश्चाद्देशं बाधित्वा प्रसङ्गस्वीकारे बाधकाभावोऽत आह । अनसामिति । अनांसि प्रवर्तयन्तीति वाक्येन शकटबहुत्वं श्रूयते सोमाधारशकटयोर्द्वित्वेन बहुवचनानुपपत्त्या न प्रसङ्ग इति भावः ॥ १६ ॥

प्रायणीयादिषु दीक्षाजागरणस्याभावः । अधि० ८ ।

## तद्युक्तं च कालभेदात् ॥ १७ ॥

दीक्षादिने रात्रौ जागरणं श्रुतं तथा दर्शपूर्णमासयोरोपवसथ्येऽहनि रात्रौ जागरणं श्रुतं प्रायणीयादिष्वतिदिष्टं तस्य दीक्षाजागरणेन प्रसङ्गसिद्धिरिति पूर्वपक्षे सिद्धान्तमाह । तदिति । तत् पृथग् जागरणं युक्तं कालभेदात्स्पष्टम् ॥ १७ ॥

विहारभेदे मन्त्रभेदः । अधि० ९ ।

## मन्त्राश्च संनिपातित्वात् ॥ १८ ॥

वरुणप्रघासे मारुतीप्रचारार्थं प्रतिप्रस्थाताऽऽज्यानि गृह्णाति इतरार्थमध्वर्युः तत्राज्यग्रहणमन्त्राणां तन्त्रमुतावाप इति संशये तन्त्रमिति पूर्वपक्षे सिद्धान्तमाह । मन्त्रा इति । तथेति शेषः । पूर्वाधिकरणसिद्धान्त-

वदावृत्तिः । संनिपातित्वात् । मन्त्राणामर्थस्मरणद्वारा संनिपत्योपकारकत्वात् । मन्त्रे गृह्णामीत्युत्तमपुरुषश्रुतार्थस्यान्योपकारकत्वासंभवादिति भावः ॥ १८ ॥

दीक्षणीयादिषु अग्न्यन्वाधानस्याभावः । अधि० १० ।

## धारणार्थत्वात्सोमे ऽग्न्यन्वाधानं न विद्यते ॥ १९ ॥

सोमे दीक्षणीयादिष्वग्न्यन्वाधानं नास्त्यस्ति वेति संशये सौमिकाद् दीक्षणीयादिसंबन्धिनः कालभेदाज्जागरवदस्ति दीक्षणीयादिष्वन्वाधानमिति पूर्वपक्षे सिद्धान्तमाह । धारणेति । सौमिकान्वाधानस्य समाप्तिपर्यन्तं धारणार्थत्वात् सोमे सोमसंबन्धिदीक्षणीयादिषु । शेषं स्पष्टम् ॥ १९ ॥

दीक्षणीयादिषु व्रतोपायनस्याभावः । अधि० ११ ।

## तथा व्रतमुपेयत्वात् ॥ २० ॥

सौमिकव्रतेनैष्टिकव्रतस्य प्रसङ्गेन सिद्धिरिति पूर्वन्यायमतिदिशति । तथेति । उपेयत्वात् । अप्राप्तप्रापणमुपगमनं व्रतस्य परिगृहीतत्वेनाप्राप्तत्वाभावादिति भावः ॥ २० ॥

## विप्रतिषेधाच्च ॥ २१ ॥

बाधकान्तरमाह । विप्रतीति । सौमिकव्रते परिगृहीते व्रतस्य वर्तमानत्वेन व्रतं चरिष्यामीति भविष्यदर्थो विप्रतिषिद्धो बाधितः स्यादतः ॥ २१ ॥

## सत्यवदिति चेत् ॥ २२ ॥

प्रथमसूत्रे उपेयत्वादिति हेतुमाक्षिपति । सत्येति । सत्यं वदेति स्मृतिप्राप्तव्रतपरिग्रहे ऽपि पुनर्दर्शपूर्णमासप्रकरणे पुनरुच्यते सत्यं वदेति तद्वत्किं न स्यादिति भावः ॥ २२ ॥

## न संयोगपृथक्त्वात् ॥ २३ ॥

वैषम्यदृष्टान्तं दर्शयति । नेति । संयोगपृथक्त्वात् संयोगः सम्यक्प्रयोगः संबन्धो यत्रेति व्युत्पत्त्या विधेयार्थसंबन्धाश्रयः उद्देश्यमर्थः ।

तस्य पृथक्त्वात् । स्मृतिः पुरुषमुद्दिश्यान्यच्च क्रत्वपूर्वमुद्दिश्येति पृथक्त्वं प्रकृते उभयमपि क्रत्वपूर्वमुद्दिश्येति ॥ २३ ॥

ऐष्टिकेषु अग्न्यन्वाधानानुष्ठानम् । अधि० १२ ।

## ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ २४ ॥

सौमिकान्वाधानस्य धारणार्थत्वात्प्रसङ्ग इत्युक्तं दशमाधिकरणे । तत्र न केवलं धारणार्थमग्न्यन्वाधानं किं तु देवतापरिग्रहार्थमपि । यो वै देवताः पूर्वाः परिगृह्णाति स एनाः श्वो भूते यजतइति ताः पूर्वाः परिगृह्णातीति च लिङ्गात् । तथा च देवतापरिग्रहो न सिध्यति प्रसङ्गेनोभयोर्देवताभेदादित्याक्षेपे समाधानमाह । ग्रहार्थमिति । अन्वाधानं पूर्वं प्राथमिकं ग्रहार्थं देवतापरिग्रहार्थमपि आस्तां तथा ऽपि प्रसङ्गेन तस्यापि सिद्धिरिति पूरणीयम् । कथं सिद्धिरिति दर्शयति । इष्टेः दीक्षणीयेष्टेः तदर्थत्वाद् देवतापरिग्रहार्थत्वात् । अयं भावः । आग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाण इति दीक्षणीयेष्ट्युत्पत्तिवाक्यं, तदर्थवादश्चैवमग्निर्वै देवानामवमो विष्णुः परमः यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य यजमानो ऽवरुन्धइति अर्थवादेनेष्टयाः परिग्रहार्थत्वादिति ॥ २४ ॥

## शेषवदिति चेत् ॥ २५ ॥

पूर्वपक्षयाशङ्कते । शेषेति । शेषवत् । अङ्गदेवतावत् । ऐष्टिकमन्वाधानम् । अयं भावः । दीक्षणीयेष्टावन्वाधानमङ्गभूतैष्टिकदेवतापरिग्रहार्थं दीक्षणीयेष्टया च प्रधानदेवतापरिग्रह इति भिन्नार्थत्वान्न प्रसङ्गसिद्धिरिति ॥ २५ ॥

## न वैश्वदेवो हि ॥ २६ ॥

दूषयति । नेति । हि० यस्मात्प्रधाने वैश्वदेवग्रहो ऽस्ति तत्र विश्वे देवा देवताः विश्वदेवपदवाच्यं देवतात्वावच्छिन्नसामान्यं देवतात्वावच्छिन्नान्तःपातिनामङ्गदेवतानामपि तद्ग्रहसंबन्धात्प्रधानत्वमस्तीति [illegible] ॥ २६ ॥

## स्याद्वा व्यपदेशात् ॥ २७ ॥

पूर्वपक्ष्याशङ्कते । स्यादिति । व्यपदेशाद्भेदेन निर्देशाद् ऐष्टिकान्वाधानं स्यात् । अयं भावः । अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वदेवैरित्यत्र वस्वाद्यपेक्षया विश्वेषां देवानां भेदेन निर्देशेन मरुदादिवद्विश्वदेवशब्दो ऽपि गणविशेषवाची । तथा चाङ्गदेवतानां तद्वाच्यत्वाभावात्तदर्थमैष्टिकमन्वाधानं स्यादिति ॥ २७ ॥

## न गुणार्थत्वात् ॥ २८ ॥

दूषयति । नेति । गुणार्थत्वात् । स्तुत्यर्थत्वात् । अयं भावः । उक्तस्थले विश्वदेवशब्दो न भेदनिर्देशपरः किं तु बृहस्पतिस्तुतिपरः । स्तुतिश्चेत्थम् । अग्न्यादयो वरुणान्ताः मरुदाद्येकदेशयुक्ताः । बृहस्पतिस्तु सकलदेवतायुक्त इति श्रेष्ठ इति ॥ २८ ॥

ऐष्टिकेषु पत्नीसंनहनाननुष्ठानम् । अधि॰ १३ ।

## संनहनं वृत्तत्वात् ॥ २९ ॥

मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीमिति सौमिकसंनहनेन प्रायणीयादिषु संनहनं प्रसङ्गेन सिध्यतीति सिद्धान्तरूपं सूत्रमाह । संनहनमिति । वृत्तत्वात्प्राकृतसंनहनात्प्राक् प्रवृत्तत्वात् । प्रयाजादिन्यायवैषम्यमन्वाधानादिन्यायवैषम्यं मत्कृतविहारवाण्यां ज्ञेयं विस्तरभयान्नेह लिख्यते ॥ २९ ॥

ऐष्टिकेषु आरण्यभोजनाभावः । अधि॰ १४ ।

## अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम् ॥ ३० ॥

पयो ब्राह्मणस्य व्रतमिति सौमिकं दर्शपूर्णमासयोः आरण्यस्याश्नातीति विहितं प्रायणीयादिषु अतिदेशप्राप्तं तस्य सौमिकेन प्रसङ्गसिद्धिरिति सिद्धान्तमाह । अन्येति । अन्यस्य पयसः वृत्त्यर्थं प्राणधारणार्थमेकेन चारितार्थ्यादिति भावः ॥ ३० ॥

ऐष्टिकेषु शेषभक्षानुष्ठानम् । अधि॰ १५ ।

## शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ॥ ३१ ॥

इडाभक्षणादिनिवर्तनं न वेति संशये तस्यापि वृत्त्यर्थत्वाभिप्रायेण पूर्वपक्षमनूद्य दूषयति । शेषेति । तथा निवर्तते । अन्यार्थत्वात् । संस्कारार्थत्वात् । एतेन पूर्वाधिकरणवैषम्यं दर्शितं, हविःशेषान् भक्षयन्तीति द्वितीयया संस्कारार्थत्वावगमादिति भावः ॥ ३१ ॥

ऐष्टिकेषु अन्वाहार्यदानाभावः । अधि· १६ ।

## भृतत्वाच्च परिक्रयः ॥ ३२ ॥

अन्वाहार्यदक्षिणा निवर्तते न वेति संशये सिद्धान्तमाह । भृतेति । परिक्रयः दर्शपूर्णमासपरिक्रयरूपो ऽन्वाहार्यः निवर्तते इति शेषः । भृतत्वात् । ज्योतिष्टोमदक्षिणया परिक्रीतत्वात् ॥ ३२ ॥

ऐष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यत्वम् । अधि· १७ ।

## शेषभक्षास्तथेति चेत् ॥ ३३ ॥

शेषभक्षेष्वपि ऋत्विक्परिक्रयार्थत्वमाशङ्कते । शेषेति । तथा परिक्रयार्थाः ॥ ३३ ॥

## न कर्मसंयोगात् ॥ ३४ ॥

दूषयति । नेति । कर्मसंयोगात् । कर्मवाचकद्वितीयाश्रवणात् ॥ ३४ ॥

ऐष्टिकेषु होतुर्वरणसद्भावः । अधि· १८ ।

## प्रवृत्तवरणात्प्रतितन्त्रं वरणं होतुः क्रियते ॥ ३५ ॥

सोमे प्रथममग्निर्मे होतेति होतृवरणं क्रियते पश्चाद्दीक्षणीयादिषु प्रकृतितः अग्निर्देव इति मन्त्रेण प्राप्तं वरणमस्ति न वेति संशये वरणस्य ऋत्विगनुमतिप्रकाशनार्थत्वात्तस्यैकेन सिद्धत्वादपरं न कर्तव्यमिति पूर्वपक्षे सिद्धान्तमाह । प्रवृत्तेति । प्रतितन्त्रं प्रतीष्टि होतुर्वरणं क्रियते। कुतः, प्रवृत्तवरणात्। कर्मणि प्रवृत्त्यनन्तरं वरणात् । अयं भावः । यद्यग्निर्देव इत्यैष्टिकवरणमृत्विगनुमतिप्रकाशार्थं तर्हि कर्मणि प्रवृत्तेः पूर्वं स्यात् । इह तु कर्मप्रवृत्त्यनन्तरं मध्ये वरणमस्त्यतः अदृष्टार्थं तददृष्टं सौमिकेन न सिध्यत्यत आवृत्तिरिति ॥ ३५ ॥

ब्रह्मापीति चेत् ॥ ३६ ॥

तर्हि भूपते भुवनपते इति ब्रह्मणो ऽपि वरणं कर्ममध्यएवा-
स्तीति तस्याप्यावृत्तिः स्यादिति शङ्कते । ब्रह्मेति ॥ ३६ ॥

न प्राङ् नियमात्तदर्थं हि ॥ ३७ ॥

होतृवरणाद्ब्रह्मवरणे वैषम्यं दर्शयति । नेति । प्राक् क्रतुसंबन्धि-
ब्रह्मकर्तृकक्रियातः प्राग् नियमात् वरणाद् । तदर्थं हि ब्रह्मानुमतिज्ञा-
नार्थं तद्वरणम् । अन्यकर्तृकक्रियायाः पूर्वं प्रवृत्तावपि ब्रह्मकर्तृकक्रिया वर-
णात्प्राग् न का ऽप्यस्तीति वैषम्यमिति भावः ॥ ३७ ॥

निर्दिष्टस्येति चेत् ॥ ३८ ॥

पौर्णमास्यां प्राग् न का ऽपि क्रिया तथा ऽप्यमावास्यायां पूर्व-
द्दिने वेदिपरिग्रहार्थमनुज्ञा ॐपरिगृहाणेतिरूपा ऽस्तीत्याशङ्कते ।
निर्दिष्टस्येति । निर्दिष्टस्य अमायां पूर्वद्युर्वेदिं करोतीति विहितस्य
परिग्रहानुज्ञारूपं यदङ्गं तस्य पूर्वं सत्त्वात्पूर्वसूत्रार्थो ऽसिद्ध इति
भावः ॥ ३८ ॥

नाश्रुतत्वात् ॥ ३९ ॥

आशङ्कां परिहरति । नेति । स्पष्टो ऽर्थः । पूर्वद्युर्वेदिकरणं श्रुतं न
परिग्रह इति भावः ॥ ३९ ॥

होतुस्तथेति चेत् ॥ ४० ॥

होतुरपि वरणात्प्राग् न कर्मेत्याशङ्कते । होतुरिति । स्पष्टो
ऽर्थः ॥ ४० ॥

न कर्मसंयोगात् ॥ ४१ ॥

होतुर्वरणात्प्राग् अस्ति कर्मेत्याह । नेति । कर्मसंयोगात् ।
अवृतः सामिधेनीरन्वाहेति कर्मविधानात् ॥ ४१ ॥

आतिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाद्यभावः । अधि० १६ ।

यज्ञोत्पत्त्युपदेशे ऽनुष्ठितकर्मप्रयोगभेदात्
प्रतितन्त्रं क्रियते ॥ ४२ ॥

सोमे श्रुतं, यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येति । अत्र बर्हिषा प्रोक्षणं बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेति विहितम् । इदमुपसत्स्वग्नीषोमपशौ च कार्यं न वेति संशये पूर्वपक्षमाह । यज्ञोत्पत्तीति । यज्ञस्यातिथ्याख्यस्यापि समीपदेशे ऽनुष्ठितं गृहीतं कर्म प्रोक्षणादि, तदर्थमिति शेषः ।

अत उपसदादेः प्रयोगस्य भिन्नत्वात् प्रतितन्त्रं प्रतिप्रयोगं यदुत्पत्तिविधिऋथंभावगृहीतानि यान्यङ्गानि तानि तत्प्रयोगविधिर्गृह्णाति । अतस्तत्प्रोक्षणादि आतिथ्यार्थमेवेति भावः ॥ ४२ ॥

## न वा कृतत्वात्तदुपदेशो हि ॥ ४३ ॥

सिद्धान्तमाह । न वेति । प्रतिप्रयोगं नावृत्तिः कृतत्वात् । यदि आतिथ्योद्देशेन प्रोक्षणं तर्हि प्रधानावृत्त्या तदावृत्तिर्भवेत् । बर्हिषः संस्कारः स च न भिन्नः अतो नावृत्तिरिति भावः । इदमेव संक्षेपेणानुवदति । तदुपदेशो हि । तस्य बर्हिषः उद्देश्यत्वेनोपदेशः बर्हिः प्रोक्षतीति द्वितीयया निर्देशो हि यस्मात् ॥ ४३ ॥

आतिथ्यायां स्तरणमन्त्रस्यावृत्तिः । अधि० २० ।

## देशपृथक्त्वान्मन्त्रो ऽप्यावर्तेत ॥ ४४ ॥

तत्रैवोर्णम्रदसं त्वेति स्तरणमन्त्रस्यापि प्रसङ्गेन सिद्धिरिति पूर्वपक्षे सिद्धान्तमाह । देशेति । शालामुखीयोत्तरवेदिपश्चाद्भागयोर्भिन्नत्वात् । शेषं स्पष्टम् ॥ ४४ ॥

बर्हिषो देशान्तरनयने संनहनहरणमन्त्रयोरप्रयोगः । अधि० २१ ।

## संनहनहरणे तथेति चेत् ॥ ४५ ॥

तत्रैव पूषा ते ग्रन्थिमिति संनहनं, बृहस्पतेर्मूर्ध्ना हरामीति हरणम् । तौ मन्त्रौ आवर्तेते नेति चिन्तायां पूर्वपक्षमाह । संनेति । तथा स्तरणमन्त्रवत् । देशान्तरे नयनस्य संनहनस्य आवृत्तत्वादिति भावः ॥ ४५ ॥

## नान्यार्थत्वात् ॥ ४६ ॥

सिद्धान्तमाह । नेति । अन्यार्थत्वात् । अयं भावः । न वेद्यां स्तरणाय ये संनहनहरणे तदर्थाविमौ मन्त्रौ किं तु दर्भदेशाच्छेदनं कृत्वा संनह्याहरणार्थौ तयोरेकत्वान्नावृत्तिरिति ॥ ४६ ॥

इति श्रीजैमिनिसूत्रवृत्तौ द्वादशाध्यायस्य प्रथमः पादः ॥ १ ॥

विहाराग्नेर्वैदिककर्ममात्रार्थत्वम् अधि० १ ।

## विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् ॥ १ ॥

पूर्वपादे तन्त्रमध्यवर्तिनः प्रसङ्गश्चिन्तितः । अस्मिन्पादे तन्त्रबहिर्भूतस्य प्रसङ्गश्चिन्त्यते । यश्चाधानेनोत्पन्नस्त्रेताऽग्निः स वैदिक एव नियुज्यते उत पार्वणस्थालीपाकादावपीति संशये पूर्वपक्षमाह । विहार इति । विहारः गार्हपत्याद्यग्नित्रयं प्रभुत्वात्समर्थत्वात् । अनेनाग्नेर्लिङ्गेन विनियोगः सूचितः । शेषं स्पष्टम् ॥ १ ॥

## मांसपाकप्रतिषेधश्च तत् ॥ २ ॥

स्वमते साधकान्तरमाह । मांसेति । मांसं न पचेयुः तस्मिन्यत्पचेयुः क्रव्यादं कुर्युरिति मांसपाकनिषेधः तत्तस्मादुपपन्न इति शेषः । अयं भावः । निषेधो हि प्राप्तिपूर्वः वैदिकमांसस्य शामित्रे पाकविधानान्न तत्प्राप्तिः । अतस्त्रेताग्नेर्लौकिककर्मण्यपि विनियोगकल्पने भोजनार्थं तण्डुलादिपाकवत्तत्र मांसपाकस्यापि प्रसक्तौ निषेधः संगत इति ॥ २ ॥

## निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥

सिद्धान्तमाह । निर्देशादिति । निर्देशात् त्रेताग्नेः गार्हपत्ये पत्नीः संयाजयन्ति दक्षिणाग्नौ फलीकरणहोमं करोति यदाहवनीये जुहोतीत्यादिप्रत्यक्षवाक्यैः कार्यनिर्देशात् । शेषं स्पष्टम् । तेनैव निराकाङ्क्षमिति भावः ॥ ३ ॥

## सति चौपासनस्य दर्शनात् ॥ ४ ॥

साधकान्तरमाह । सतीति । सति विहारे सति च औपासनविधानं श्रूयते, यं कामयेत राष्ट्रमस्य प्रजायै स्यादिति तस्यौपासने

पशुमालभ्य जुहुयादिति राजसूयमध्ये कर्तव्यत्वेन श्रुतम् । यदि त्रेताग्निः लौकिके ऽपि कर्मणि तर्हि अस्य कर्मणः लौकिकस्य विहारएव संभवादौपासने विधानमनर्थकं स्यादिति भावः ॥ ४ ॥

अभावदर्शनाच्च ॥ ५ ॥

या च पूर्वपक्षे मांसपाकप्रतिषेधयुक्तिः तां परिहरति । अभावेति । त्रेताग्नौ पाकाभावदर्शनाच्चेत्थं कल्प्यते । विहितमांससंयोगादन्यमांससंयोगो ऽत्र न कर्तव्य इति भावः ॥ ५ ॥

मांसपाको विहितप्रतिषेधः स्याद्वा ऽऽहुतिसंयोगात् ॥ ६ ॥

प्रकारान्तरेण समाधानमाह । मांसेति । मांसपाकः मांसपाकप्रतिषेधः विहितप्रतिषेधरूपः । वपाश्रपणमाहवनीये विहितं तत्प्रतिषेधरूपः । तथा च विकल्पे पर्यवसानमिति भावः । कुतः, आहुतिसंयोगात् तस्मिन्नग्नौ न मांसं पचति यस्मिन्नाहुतीर्जुहोतीति निषेधवाक्ये आहुत्याधाररूपे ऽग्नौ प्रतिषेधः यदाहवनीये जुहोतीत्याहवनीयस्य तथात्वात् ॥ ६ ॥

वाक्यशेषो वा दक्षिणस्मिन्ननारभ्यविधानस्य ॥ ७ ॥

समाधानान्तरमाह । वाक्येति । दक्षिणस्मिन्दक्षिणे ऽग्नौ पत्नीव्रतं श्रपयतीति अनारभ्यविधानस्य वाक्यस्य शेषः । अयमभिप्रायः । यदा पत्न्या रोगादिनिमित्तमेव मांसव्रतं प्रसक्तं तत्र मांसस्यापि श्रपणं दक्षिणाग्नौ प्राप्तं तथा सति मांसभिन्नं यत्पत्नीव्रतं तद्दक्षिणाग्नौ श्रपयतीति व्रतश्रपणवाक्यैकवाक्यतामापन्नं सन्निषेधार्थकं न किं तु पर्युदासार्थमिति । विधानस्येति समासघटकवाक्येनाभेदान्वयासंभवे ऽपि तद्घटितसमास आर्षः ॥ ७ ॥

सवनीयपशौ पशुपुरोडाशस्य कर्तव्यत्वम् । अधि० २ ।

सवनीये छिद्रापिधानार्थत्वात्पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥

सवनीयपशोरङ्गभूतः पुरोडाशयागः कार्यो न वेति संशये पूर्वपक्षमाह । सवनीयइति । छिद्रापिधानार्थत्वात् । वपानिष्कासने यच्छिद्रं तत्पिधानार्थत्वात्तदर्थत्वं च, पशोरेव छिद्रमपिदधातीत्यर्थवादासिद्धम् । अन्येषामनुसवनं पुरोडाशान्निर्वपतीति विहितानामेवमर्थत्वात् । तदर्थवादे ऽप्यपिहित्याइति तत्कार्यस्यैवोक्तत्वात् । शेषं स्पष्टम् ॥ ८ ॥

## क्रिया वा देवतार्थत्वात् ॥ ९ ॥

सिद्धान्तमाह । क्रिया वेति । क्रिया कर्तव्यः पुरोडाशः देवतार्थत्वात् । देवतासंस्कारार्थत्वात् । तदर्थत्वं यथा तथा दशमे प्रतिपादितम् ॥ ९ ॥

## लिङ्गदर्शनाच्च ॥ १० ॥

अवश्यकर्तव्यत्वे लिङ्गमाह । लिङ्गेति । वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने सवनइति । यदि पुरोडाशो न स्यात्तर्हि प्रयोगविप्रकर्षविधानं निर्विषयं स्यादिति भावः ॥ १० ॥

सवनीयपुरोडाशे हविष्कृदाह्वानस्याभावः । अधि० ३ ।

## हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्धियमानत्वात् ॥ ११ ॥

सवनीये पुरोडाशे हविष्कृदाह्वानमस्ति नेति चिन्तायां सिद्धान्तमाह । हविष्कृदिति । प्रकृतौ हविष्कृदाह्वानमोषधिद्रव्यएव न सान्नाय्ये । पशोः सान्नाय्यप्रकृतिकत्वेन तत्र हविष्कृदाह्वानमप्राप्तमतः प्रकृतौ सान्नाय्यौषधिद्रव्यसाधारणमाह्वानमिति क्त्वाचिन्तयेदमधिकरणमिति ज्ञापयितुं प्रकृतौ यदीत्युक्तम् । क्त्वाचिन्तायां पशौ आह्वानमस्ति तेनैव सवनीयपुरोडाशे सिद्धिरिति भावः ॥ ११ ॥

तृतीयसवने हविष्कृदाह्वानस्यापुनरावृत्तिः । अधि० ४ ।

## पशौ तु संस्कृते विधानात्तार्तीयसवनकेषु स्यात्सौम्याश्विनयोश्चापवृत्तार्थत्वात् ॥ १२ ॥

तृतीयसवने पश्वङ्गश्रपणात्प्राक् सवनीयनिर्वापः । पश्चात्सौम्यश्चरुराश्विनो द्विकपालश्च विहितः । चरुद्विकपालादौ हविष्कृदाह्वानमस्ति नेति संशये पूर्वपक्षमाह । पशाविति । तार्तीयसवनकेषु तृतीयसवनसंबन्धिषु पुरोडाशेषु सौम्याश्विनयोश्चाह्वानं भेदेन स्यात् । पशौ पश्वङ्गेषु संस्कृतेषु पक्केषु ततो विधानात् । अपवृत्तार्थत्वात् सवनीयपुरोडाशेषु गतार्थत्वात् । सवनीयपुरोडाशार्थमाहूता तस्य हविषः सिद्धानन्तरं सा कृतार्था सती गृहकार्यार्थं गमिष्यति पुनराह्वानेन विना आगमनमनुपपन्नमिति भावः ॥ १२ ॥

## योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् ॥ १३ ॥

यदुक्तं गृहकर्मसु गमिष्यत्यत आह्वानं भेदेनेति । तत्र गृहकर्मसु गमनमयुक्तमित्यभिप्रायेण सिद्धान्तमाह । योगाद्विति । यज्ञाय योगात् । यज्ञे नियुक्तत्वात् कस्त्वा युनक्ति इति । स त्वा विमुञ्चत्विति व्रतविमोक्ष एव विसर्गः गृहकार्यादिषु । तथा चान्यत्र गमनाभावात्तेनैवाह्वानेन सौम्यादिषु सिद्धिरिति भावः ॥ १३ ॥

निशियज्ञे ऽमावास्यातन्त्रप्रयोगः । अधि॰ ५ ।

## निशियज्ञे प्राकृतस्याप्रवृत्तिः स्यात्प्रत्यक्षशिष्टत्वात् ॥ १४ ॥

काम्येष्टिकाण्डे श्रूयते, अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यं रक्षांसि सचेरन्निति । तथा निशि तायाममावास्यायां निर्वपेदिति । अस्या इष्टेर्दर्शमध्यपतितत्वाद् अमावास्यातन्त्रं प्रसज्यते नेति चिन्तायां पूर्वपक्षमाह । निशीति । निशियज्ञे उक्तेष्ट्यां प्राकृतस्य दर्शेष्टितन्त्रस्याप्रवृत्तिः । प्रत्यक्षशिष्टत्वात् कस्य चिदनङ्गत्वेन स्वातन्त्र्येण प्रत्यक्षं श्रुतत्वात् ॥ १४ ॥

## कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ॥ १५ ॥

साधकान्तरमाह । कालेति । कालवाक्यभेदाच्चेति कालभेदः काम्येष्टेरर्धरात्रः कालः दर्शेष्टेर्द्वितीयदिने दिवेति । वाक्यभेदात् ।

उत्पत्तिवाक्ययोर्भिन्नदेशत्वात् । यत्र दर्शयागोत्पत्तिस्तत्र नेयमिष्टिरुत्पन्ना किं तु काम्येष्टिकाण्डइति भावः । अतस्तन्त्रभेदः प्रयोगभेदः ॥ १५ ॥

## वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥

प्रयोगभेदे ऽपि न यावदङ्गानामावृत्तिः किं तु केषां चिदङ्गानामावृत्तिरित्याह । वेद्यीति । वेदिखननं व्रतग्रहणं दार्शिकमेव स्यात् । विप्रतिषेधाद् दर्शार्थनिर्मितवेदेरत्र खनने तन्नाशेन दर्शो विगुणः स्यात् । व्रतस्य गृहीतस्य पुनर्ग्रहणासंभवात् ॥ १६

## तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥

सिद्धान्तमाह । तन्त्रेति । सवनीयवत् सवनीयाः पुरोडाशाः न तावत्पशुकर्मोद्देशेन विधीयन्ते केवलं पशुतन्त्रमध्ये विधानमात्रेण तन्त्रं तथा । शेषं स्पष्टम् ॥ १७ ॥

## वैगुण्यादिध्माबर्हिर्न साधयेदग्न्याधानं च यदि देवतार्थम् ॥ १८ ॥

सर्वेषां न तन्त्रं केषां चिदावृत्तिरित्याह । वैगुण्यादिति । इध्माबर्हीं राक्षोघ्नयागोपकारं न साधयेत् । तथा ऽग्न्यन्वाधानमपि । देवतापरिग्रहार्थत्वकल्पे वैगुण्यात् । दर्शार्थसंपादितेध्मेनाग्निसमिन्धनं प्रतिपदि स्यात् । तदिन्धनं निशि पूर्वकाले राक्षोघ्नस्योपकारं न साधयेत् । राक्षोघ्नयागो विगुणः स्याद् इति भावः । एवमन्यत्राप्यूह्यम् ॥ १८ ॥

विकृतिष्वप्यारम्भणीयानुष्ठानम् । अधि० ६ ।

## आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थं न ॥ १९ ॥

सौर्यादियागेष्वारम्भणीया कार्या न वेति संशये पूर्वपक्षमाह । आरम्भणीयेति । प्रकृतिकालपातित्वात् । यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति वाक्येन जीवनपरिमितः कालो ऽङ्गत्वेन विधीयते । एकस्मि-

काले ऽनुष्ठीयमानः प्रयोग एक एवेति तन्मध्यपातित्वात्सौर्यादीनां प्रयोगो ऽपि प्रकृतिकालएवेति कालैक्येनान्वारम्भणीयायाः प्रसङ्गेन सिद्धिरिति भावः । कृता यावज्जीवप्रयोगार्थं या कृता सैव पुनः तदर्थं सौर्याद्यर्थं ऽपि कृता न पुनरनुष्ठानम् ॥ १९ ॥

## *सकृद्वा ऽऽरम्भसंयोगात् ॥ २० ॥

पूर्वपक्षी प्रकारान्तरेणापि सकृदनुष्ठानं साधयति । सकृदिति । सकृदनुष्ठानमुक्तकर्मणः आरम्भसंयोगात् । आरप्स्यमान इति संयोगात् । दर्शपूर्णमासावारप्स्यमान एतामिष्टिं कुर्यादित्यत्रारप्स्यमान इत्यनेन पुरुषसंस्कारः प्रतीयते तया संस्कृतो ऽसावनुष्ठानमध्यपातिषु यावत्कर्मसु संस्कृत इति भावः ॥ २० ॥

## स्याद्वा कालस्याशेषभूतत्वात् ॥ २१ ॥

द्वितीयपक्षस्य नवमे निरस्तत्वात् प्रथमपक्षं दूषयति । स्याद्वेति । अशेषभूतत्वाद् यावज्जीवकालस्यानङ्गत्वात् । कालविधिपक्षे काले लक्षणापत्तेः । निमित्तपरत्वादिति भावः । तथा च प्रतिपर्वं भिन्नप्रयोगत्वेन तन्त्रमध्यपाताभावान्न प्रसङ्ग इति स्थितम् ॥ २१ ॥

## आरम्भविभागाच्च ॥ २२ ॥

प्रकारान्तरेणापि समाधानमाह । आरम्भेति । आरम्भविभागात् । दर्शपूर्णमासारम्भाङ्गमिति पूर्वं नवमे उक्तं दर्शपूर्णमासारम्भात्सौर्यारम्भस्य भिन्नत्वेन प्रधानभेदात्प्रतिप्रधानमङ्गावृत्तिरिति भावः ॥ २२ ॥

प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानम् । अधि० ७ ।

## विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ २३ ॥

पञ्चदशरात्रे सुत्याकालीनं सुब्रह्मण्याह्वानं चोदकशास्त्रेण प्राप्तं

---

* सूत्रं, शाबरभाष्ये अत्रत्यपृथक्सूत्रत्वेन न दृश्यते किं तु "सकृद्वा ऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात्" इतिनवमाध्यायप्रथमपादस्य पञ्चत्रिंशत्तमसूत्रघटकत्वेन ।

तत्सकृदनुष्ठितं सर्वत्रोपकरोतीत्युक्तं प्राक् । द्वादशरात्रादिष्वेकरूपत्वात्प्रसङ्गः कतमेनेति शङ्कानवकाशः । इह तु प्रथमाहः अग्निष्टुन्नामकः । तत्राग्निष्टुन्नामकैकाहाद् नाम्ना प्रबलेनाग्नेयी सुब्रह्मण्या ऽतिदिष्टा इतरच्चतुर्दशाहःसु सा ऽऽनुमानिकी ऐन्द्री सुब्रह्मण्या ऽतिदिष्टा । तथा सति प्रसङ्गेन सर्वोपकारसाधिका का वा सुब्रह्मण्या ग्राह्येति संशये वेदोपक्रमाधिकरणन्यायेनासंजातविरोधात् प्राथमिक्येवाग्नेयी सुब्रह्मण्या कार्या तयैव सर्वासां सुत्यानामुपकार इति पूर्वपक्षे सिद्धान्तमाह । विप्रतीति । विप्रतिषिद्धधर्माणामुक्तरीत्या विरुद्धधर्माणां मध्ये समवाये ऽन्यतरानुष्ठानप्रसक्तौ भूयसां सधर्मत्वं भूयःसु यो धर्मः स धर्मः । एकजातीयो यो धर्मः स स्यात् । अग्रिमसूत्रे लोकवदिति अत्राप्यपकृष्यते । यथा लोके दश दीपा एकत्र सन्ति एको दीपो ऽन्यत्र । गृहस्वामिना पुस्तकावलोकनायान्यतरमध्ये यत्र रोचते तत्रोपविशेत्युक्ते प्रकाशबाहुल्याद् भूयोनुग्रहमेव करोति तद्वत् ॥ २३ ॥

तुल्यसंख्याकानां धर्मविरोधे प्रथमस्यैव धर्मानुष्ठानम् । अधि· ८ ।

## मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २४ ॥

विप्रतिषिद्धधर्मौ यत्र तुल्यौ यथा ऽऽग्नावैष्णवमेकादशकपालं निर्वपेत्सरस्वत्याज्यभागेति । अत्राग्नावैष्णवे ऐन्द्राग्नतन्त्रं वृधन्वतीमन्त्रः । सरस्वत्या उपांशुयागतन्त्रं वार्त्रघ्नमन्त्रः । अत्र तुल्यत्वेनेच्छैवानुष्ठापिकेति पूर्वपक्षे सिद्धान्तमाह । मुख्यमिति । मुख्यं प्राथमिकं तन्त्रं पूर्वचोदनात् । आग्नावैष्णवस्य प्रथमं विधानात् । प्रथमविधिना प्रथमोपस्थितप्रयोगानुष्ठाने तेनैव उत्तरस्य प्रसङ्गसिद्धिरिति भावः । अत्र मुख्यं वेति वाकारस्वारस्याद् विप्रतिषिद्धेति सूत्रमस्यैवाधिकरणस्य पूर्वपक्षसूत्रम् । तथा च सूत्रद्वयं मिलित्वैकमधिकरणमिति केचित् । तद्दूषणं भाष्यवार्तिकादिषु स्पष्टम् । अधिकरणद्वयमेव युक्तम् ॥ २४ ॥

अङ्गगुणविरोधे प्रधानगुणस्यैव बलवत्त्वम् । अधि· ९ ।

## *अङ्गगुणविरोधे च तादर्थ्यात् ॥ २५ ॥

* अतः पूर्वं, तथा चान्यार्थदर्शनम् इति सूत्रमधिकं भाष्ये दृश्यते ।

य इष्ट्या पशुना सोमेन वा यजेत सो ऽमावास्यायां पौर्णमास्यां वेत्यनेनेष्टित्वाद्दीक्षणीयायाः पर्वसंबन्धः । तथा सोमस्यापि पर्वसंबन्धः । तत्रैकदीक्षा तिस्र उपसद इति पक्षे द्वयोः पर्वसंबन्धो न संभवति । तदा कस्य बाध इति संशये पूर्वाधिकरणन्यायेन प्रथमोपस्थितत्वाद्दीक्षणीयागुण एवानुग्राह्य इति पूर्वपक्षे सिद्धान्तमाह । अङ्गेति । दीक्षणीयारूपाङ्गस्य प्रधानसोमयागगुणेन साकं विरोधे मुख्यत्वमपि त्यक्त्वा प्रधानगुण एव रक्षणीयः तादर्थ्यात् । अङ्गगुणस्यापि प्रधानसाद्गुण्यार्थत्वात् । अयं भावः । प्रधानसाद्गुण्याय ह्यङ्गानि । तानि स्वयं गुणानि सन्ति प्रधानाङ्गलोपं कर्तुं न समर्थाः । यथा भृत्यः स्वामी उभावप्यरण्ये गतौ चोरैः सर्वमपहृतमेकं वस्त्रं शिष्टं तत्परिधानं स्वामिनं कारयित्वा स्वयं कौपीनादिधारणं करोति तथा । लोकवदित्यत्राप्यनुवर्तते ॥ २५ ॥

परिधौ परिधियूपोभयधर्मानुष्ठानम् । अधि० १० ।

## परिधिरर्थत्वादुभयधर्मा स्यात् ॥ २६ ॥

चातुर्मास्ये सपशुके परिधौ पशुं नियुञ्जीतेति श्रुतम् । अत्र यूपधर्माः परिधिधर्माश्च समुच्चिताः स्युः परिधियूपोभयकार्ययोरेकत्र विधानादित्यभिप्रायेणोत्तराधिकरणोत्थित्यर्थं सिद्धानुवादरूपं सिद्धान्तमाह । परिधिरिति ॥ २६ ॥

परिधौ विरोधियूपधर्माननुष्ठानम् । अधि० ११ ।

## यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २७ ॥

यत्र यूपपरिधिधर्मयोर्विरोधस्तत्र कस्य धर्मो ऽनुष्ठेय इति संशये पूर्वपक्षमाह । यौप्य इति । यौप्यः यूपधर्मः कर्तव्यः मुख्यानन्तर्यात् । यागनिर्वर्तकत्वात्पशुर्मुख्यः तस्यानन्तर्यं सामीप्यं यूपे ऽस्ति अतः । अपूर्वं प्रति साधनं यागः तत्साधनं पशुः तस्याङ्गं यूपः । अन्यत्र तु अपूर्वं प्रति साधनं यागः तत्साधनं पशुः तत्संस्कारसाधनमग्निः तत्संस्कारसाधनं परिधिरिति बहिरङ्गम् । अपूर्वस्य यूपापेक्षया परिधिर्विप्रकृष्ट इति भावः । अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीय इति । ते च धर्मास्तक्षणाष्टाश्रीकर-

खनिखननादयः । तत्तक्षाष्टाश्रीकरणे परिधिधर्मेण सत्त्वत्वेन विरुध्येते एवमन्ये ऽप्यूह्याः ॥ २७ ॥

## इतरो वा तस्य तत्र विधानात् ॥ २८ ॥

सिद्धान्तमाह । इतरो वेति । इतरः परिधिधर्मः कर्तव्यः तस्य पशुनियोजनस्य परिधौ विधानात् । परिधौ परिधित्वं संरक्ष्य तस्मिन्पशुनियोजनं विध्यभिप्रेतम् । तच्च परिधित्वं सत्त्वत्वादिरूपमेव । तस्य तक्षणादिना नाशे परिधिभङ्ग एव स्यादिति भावः ॥ २८ ॥

## उभयोश्चाङ्गसंयोगः ॥ २९ ॥

अन्तरङ्गेण दर्शितं प्राबल्यं परिहरति । उभयोरिति । उभयोः पक्षयोरङ्गेनैव संयोगो न प्रधानेन । कस्यापि प्रधानसंनिकृष्टत्वम् । अन्तरङ्गत्वं न श्रूयमाणविधिविरोधे प्रबलमिति भावः ॥ २९ ॥

सवनीयपशुपुरोडाशयोः पशोरेव तन्त्रित्वेन पाशुकतन्त्रस्यैवादानम् । अधि० १२ ।

## पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३० ॥

प्रातःसवने आग्नेयं पशुमुपाकरोतीति सवनीयपशुः श्रुतः । तस्याङ्गकलापप्राप्तिश्चोदकादेव तथा ऽनुसवनं पुरोडाशान् निर्वपन्तीति विहितपुरोडाशयागस्याप्यङ्गकलापप्राप्तिश्चोदकादेव । तथा च द्वयोर्मध्ये तन्त्री कतम इति संशये यस्याङ्गकलापः प्रत्यक्षतया श्रूयते स तन्त्री तन्मध्ये श्रूयमाणस्य यागस्यानुष्ठानस्य पूर्वतन्त्राङ्गैः प्रसङ्गसिद्धिर्यथा पशुपुरोडाशे प्रयाजानाम् । इह त्वङ्गानामुभयत्र पाठाभावेन नियामकाभावादिच्छया एकतन्त्रं यस्य कस्य चिदनुष्ठानेनापरस्य प्रसङ्गसिद्धिरित्यभिप्रायेण पूर्वपक्षमाह । पश्विति । पशुसवनीयेषु पशुप्रयोगपुरोडाशप्रयोगयोर्विकल्पः । पञ्च प्रयाजा एकादश वा कार्या इति भावः । वैकृतश्चेच् चोदकशास्त्रगृहीताङ्गकश्चेत् । अत्र चेदिति संशयद्योतको न । तयोर्वैकृतत्वेन निश्चयात् । किं तु शास्त्राणि चेत्प्रमाणानि यास्यन्त्येव परां गतिमिति शास्त्रेषु प्रामाण्यनिश्चये ऽपि प्रयोगात् । उभयोरश्रुतिभूतत्वात् । उभयाङ्गानामश्रवणात् ॥ ३० ॥

पाशुकं वा तस्य वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ॥ ३१ ॥

सिद्धान्तमाह । पाशुकमिति । पाशुकमेव तन्त्रं कर्तव्यं न तु विकल्पः । तस्य पाशुकतन्त्रस्य वैशेषिकाम्नानात् । विशेषेण पाठात् । सूक्तवाके अग्नीषोमीयपशौ अग्निमद्योति प्रैषमन्त्रः आम्नातस्तस्य चोदकशास्त्रेण प्राप्तावपि प्रकृत्यपेक्षया मन्त्रः अयं सुतासुती यजमान इति विकृत्यविशेषरूपेण पठितो नित्यवच्छ्रुतश्च । विकल्पे तन्नित्यवच्छ्रवणमनर्थकं स्यात् । तस्मात्पशुरेव तन्त्री ॥ ३१ ॥

पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥

पशोरेव तन्त्रित्वे युक्त्यन्तरमाह । पशोरिति । विप्रकर्षः प्रयोगविप्रकर्षः । वपया प्रातःसवने पुरोडाशैर्माध्यन्दिने सवने अङ्गैस्तृतीयसवनइति श्रूयते । अतस्तत्तन्त्रमध्ये एव पुरोडाशयागस्तस्मादपि पाशुकमेव तन्त्रं नियतं चिरकालसाध्यप्रयोगमध्यपतितमल्पकालसाध्यमिति फलितम् ॥ ३२ ॥

समानतन्त्रयोः प्रकृतिविकृत्योः विकृतितन्त्रानुष्ठानम् । अधि॰ १३ ।

अपूर्वं च प्रकृतौ समानतन्त्रं चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३३ ॥

नैमित्तिकीनां काम्यानामिष्टीनां प्रकृतेश्च संनिपाते कस्य तन्त्रमनुष्ठेयमिति संशये नित्यत्वात्प्राकृतमेव तन्त्रमिति पूर्वपक्षे सिद्धान्तमाह । अपूर्वमिति । अपूर्वं काम्यं नैमित्तिकं च समानतन्त्रं यदि नित्येन तन्त्रेण गतार्थं तर्हि काम्यतन्त्रस्याज्यं प्रोक्षणमाज्येन मार्जयन्ते इत्यादीनामानर्थक्यमेव स्यात्तस्मात्तत्प्रसक्तौ तत्तन्त्रमेवानुष्ठेयं तदप्रसक्तौ नित्यतन्त्रम् ॥ ३३ ॥

आग्रयणे प्रसूनबर्हिर्वामेव ग्रहणम् । अधि॰ १४ ।

अधिकश्च गुणः साधारणे ऽविरोधात्कांस्यभोजिवदमुख्ये ऽपि ॥ ३४ ॥

आग्रयणे ऐन्द्राग्नं वैश्वदेवं द्यावापृथिव्यमिति क्रमेण हवींषि । तत्राद्ययोः पुष्पिता अपुष्पिता वा कुशा बर्हिः द्यावापृथिव्यं बर्हिः पुष्पितमेवेति नियमः । आग्रयणे ऽनियमो नियमो वेति संशये भूयोनुग्रहाय प्रथमोपस्थितत्वेन मुख्यत्वाच्चानियम एवेति पूर्वपक्षे सिद्धान्तमाह । अधिक इति । अमुख्ये ऽपि चरमोपस्थिते ऽपि अधिकः गुणः प्रसूनमेवेति नियमरूपः स साधारणे प्रसूनाप्रसूनसाधारणे ऐन्द्राग्नादौ कर्तव्यः अविरोधात् । ऐन्द्राग्नादावुभयथा ऽप्यङ्गलोपाभावेन विरोधाभावात् । कांस्यभोजिवत् । शिष्यस्य कांस्यपात्रभोजननियमः गुरूच्छिष्टपात्रभोजननियमश्च गुरोर्भोजनपात्रे ऽनियमः । तथा ऽपि अमुख्यशिष्यनियमानुरोधेन स्वस्य प्रत्यवायाभावात् कांस्यपात्रे भुङ्क्ते गुरुस्तथा ऽत्रापीति भावः ॥ ३४ ॥

द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रिता । अधि० १५ ।

## तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३५ ॥

तत्रैवाग्रयणे ऐन्द्राग्नतन्त्रमुत द्यावापृथिव्यतन्त्रमिति संशये पूर्वपक्षमाह । तत्प्रवृत्तिरिति । तस्य प्रसूनबर्हिर्नियमस्य प्रवृत्त्या द्यावापृथिव्यतन्त्रस्य नियमः स्यात् । यथा ऽस्मिन्नेव पादे द्वादशाधिकरणे पाशुकसूक्तवाकमन्त्रप्रवृत्त्या पाशुकतन्त्रनियमस्तथा ॥ ३५ ॥

## न वा ऽविरोधात् ॥ ३६ ॥

सिद्धान्तमाह । न वेति । दृष्टान्तवैषम्यमाह । अविरोधात् । अयं भावः । सूक्तवाके प्रैषमन्त्रः सवनीयस्य पशोः हविता देव्येति । सवनीयस्य पुरोडाशस्याग्निमद्येति । उभे विरुद्धे अङ्गे । एकानुष्ठाने अपराङ्गस्य बाध एव द्वारलोपात् । इह तु ऐन्द्राग्नस्य प्रसूनबर्हिरङ्गं तथा द्यावापृथिव्यस्यापि इति अङ्गबाधभीत्यभाव इति ॥ ३६ ॥

## अशास्त्रलक्षणाच्च ॥ ३७ ॥

अन्यदपि वैषम्यं दर्शयति । अशास्त्रेति । न विद्यते प्रत्यक्षशास्त्रं यस्य प्रसूनबर्हिषः स्वरूपस्य तदशास्त्रं तादृशलक्षणं स्वरूपं यस्य बर्हिषः

तत्त्वाच्च । सूक्तवाकमन्त्रश्च सवनीयपशुसमीपे प्रत्यक्षपठितो वैकृतः प्रसूनबर्हिस्तु वैश्वदेवपर्वणि द्यावापृथिव्यैककपालादतिदेशप्राप्तः । स तद्वन्नियन्तुं नार्हतीति मुख्यत्वादैन्द्राग्नतन्त्रमेव तत्रेति ॥ ३१ ॥

इति जैमिनिसूत्रवृत्तौ द्वादशाध्यायस्य द्वितीयः पादः ॥ २ ॥

अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयः । अधि० १ ।

## विश्वजिति वत्सत्वग्नामधेयादितरथा तत्रभूयस्त्वादहतं स्यात् ॥ १ ॥

अस्मिन्पादे प्रसङ्गापवादश्चिन्त्यते । अस्त्यतिरात्रनामकः क्रतुः । तस्य प्रथममहर्विश्वजिन्नामकं षडहनामकानि षट् ततोऽभिजिन्नामकमेकम् । तत्र प्रथमेऽहनि एकाहरूपविश्वजिद्यागाद् नाम्ना परिधानसाधनं वत्सत्वगतिदिष्टं शेषेषु सप्तस्वहःसु ज्योतिष्टोमादहतं वासोऽतिदिष्टं चोदकेन । एवं सत्येकेनापरत्र प्रसङ्गसिद्धिर्भवति तत्र केन परिधानमिति संशये पूर्वपक्षमाह । विश्वेति । अष्टस्वप्यहःसु वत्सत्वङ्नामधेयाद् नाम्नाऽतिदेशात् । चोदकात्तस्य बलवत्त्वादितिभावः । इतरथा नामातिदेशाभावे अहतं स्यात् । भूयस्त्वादह्नाम् । एतेन भूयोनुग्रहान्नामातिदेशस्य बलवत्त्वं सूचितम् ॥ १ ॥

## अविरोधो वोपरिवासो वत्सत्वक् ॥ २ ॥

सिद्धान्तमाह । अविरोध इति । गुह्याच्छादनमहतं नाभेरूर्ध्वं प्रावरणार्थं वत्सत्वगिति विरोधाभावात्समुच्चय इति भावः ॥ २ ॥

अनुनिर्वाप्यपशुपुरोडाशानां पशुपुरोडाशस्यैव तन्त्रित्वम् । अधि० २ ।

## अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥ ३ ॥

अग्नौ श्रूयते, अग्नीषोमीयपशुपुरोडाशमनु अष्टौ देवसुवां हवींषि निर्वपतीति । तत्रानुशब्दस्वारस्यादष्टहविषां पशुपुरोडाशतन्त्रमध्यपातित्वं स्पष्टम् । तत्तन्त्रमध्यवृत्तित्वेऽपि भूयोनुग्रहायाष्टहविषां तन्त्रस्यानुष्ठानेन पशुपुरोडाशाङ्गानां प्रसङ्ग इत्यभिप्रायेण पूर्वपक्षमाह । अन्विति । स्पष्टम् ॥ ३ ॥

## आगन्तुकत्वाद्वा स्वधर्मा स्यात् श्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥

सिद्धान्तमाह । आगन्तुकेति । अष्टानां हविषामागन्तुकत्वादमुख्यत्वात् । पशुपुरोडाशः स्वधर्मा स्यात् । पशुपुरोडाशे मुख्यत्वमुपपादयति । श्रुतिविशेषात् । अनुशब्दस्वारस्यात् । चैत्रमनुगतो मैत्र इत्यत्र चैत्रे मुख्यत्ववत् । इतरस्य पशुपुरोडाशस्य ॥ ४ ॥

## स्वस्थानत्वाच्च ॥ ५ ॥

स्वेति । पशुपुरोडाशस्थानं वपाहोमानन्तरकालरूपो देशः तत्त्वाच्च प्राबल्यम् ॥ ५ ॥

## स्विष्टकृच्छ्रवणान्नेति चेत् ॥ ६ ॥

पूर्वपक्ष्याशङ्कते । स्विष्टकृदिति । अग्नीषोमीयस्य चैकादशकपालस्य देवसुवां च हविषामग्नये स्विष्टकृते समवद्यतीति वचनेन स्विष्टकृच्छ्रूयते । इदमनुनिर्वाप्यतन्त्रपक्षे घटते न पशुतन्त्रपक्षे ॥ ६ ॥

## विकारः पवमानवत् ॥ ७ ॥

स्विष्टकृच्छ्रवणस्य गतिमाह । विकार इति । यथा ऽग्नये पवमानो गुणः एवमग्निषोमादिदेवसूदेवतानां स्विष्टकृदिति गुणविधिरिति भावः ॥ ७ ॥

## अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥ ८ ॥

विकारपक्षे वाक्यभेदभिया प्रकारान्तरमनुसरति । अविकार इति । अविकारः अस्विष्टकृच्छब्दकं कर्तव्यं प्रकृतिवत् । यथा प्रकृतावग्न्यादिशब्दास्तथा स्विष्टकृच्छब्दस्य का गतिरत आह । चोदनां प्रति भावाच्च । चोदनां प्रति विधिं प्रति भावात् सिद्धशब्देनानुवादात् । विध्युद्देश्यसमर्पणादिति फलितम् । यथा शरमयं बर्हिरित्यत्र बर्हिष्कार्यमनूद्य तदुद्देशेन शरविधिस्तथा स्विष्टकृत्कार्यमुक्तहविष्कदेवताभिः साधयेदिति वाक्यगतिरिति भावः ॥ ८ ॥

दृष्टद्वारभेदाद् भिन्नोपकारकाणां गुणानां समुच्चयः । अधि० ३ ।

## एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ९ ॥

यत्रैककर्मोद्देशेनानेके गुणा विधीयन्ते यथा ऋजुमाघारयति सन्ततमाघारयतीति, तत्र समुच्चय इति सिद्धान्तमाह । एकेति । एककर्मणि आघाररूपैककर्मणि शिष्टत्वाद्विधानाद् गुणानां सर्वकर्म सकलानुष्ठानम् ॥ ९ ॥

प्रयोजनैक्ये गुणानां विकल्पः । अधि० ४ ।

## एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात् ॥ १० ॥

एककार्योद्देशेनैव यत्र साधनद्वयं विधीयते तत्र विकल्प इति सिद्धान्तमाह । एकार्था इति । एकार्था एककार्यजनका एतेषां विकल्पः । समुच्चये दोषमाह । समुच्चये अनेकद्रव्यप्रयुक्ता प्रधानावृत्तिः स्यात् ॥ १० ॥

## अभ्यस्येतार्थवत्त्वादिति चेत् ॥ ११ ॥

पूर्वपक्षी आवृत्तौ इष्टापत्तिमाह । अभ्यस्येतेति । अर्थवत्त्वादपूर्वात्मकार्थवत्त्वात् ॥ ११ ॥

## नाश्रुतित्वात् ॥ १२ ॥

दूषयति । नेति । अश्रुतित्वात् । न विद्यते श्रुतिर्यद्विषयिणी तत्त्वात् । अपूर्वसाधनत्वं विना शास्त्रं न सिध्यतीति भावः ॥ १२ ॥

## सति चाभ्यासशास्त्रत्वात् ॥ १३ ॥

अभ्यासशास्त्रं यत्रास्ति तत्र युक्तो ऽभ्यास इत्याह । सतीति । अभ्यासशास्त्रे सति यथा उभे बृहद्रथंतरे भवत इति तस्याभ्यासशास्त्रत्वादभ्यस्येत् ॥ १३ ॥

## विकल्पवच्च दर्शयति ॥ १४ ॥

क्व चिद्विकल्पो ऽपि स्पष्ट इत्याह । विकल्पेति । विकल्पयुक्तं प्रयोगं दर्शयति श्रुतिः बैल्वो वा खादिरो वा पालाशो वेति ॥ १४ ॥

कालान्तरे ऽर्थवत्त्वं स्यात् ॥ १५ ॥

विकल्पे ऽपि एकेन चारितार्थ्ये ऽपरवैयर्थ्यमत आह । कालेति । कालान्तरे प्रयोगान्तरे ऽप्यर्थवत्त्वं चारितार्थ्यम् ॥ १५ ॥

वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पः । अधि॰ ५ ।

प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मा-त्सर्वस्य निर्घातः ॥ १६ ॥

यत्र पुरुषापराधेन क्रतुवैगुण्यं तत्परिहाराय प्रायश्चित्तं विधीयते । एकापराधनिमित्तमेव प्रायश्चित्तद्वयम् । तथा दर्शपौर्णमासलोपे ऽग्नये पथिकृते ऽष्टाकपालः वैश्वानरो द्वादशकपालस्तयोः समुच्चय इति पूर्वपक्षे सिद्धान्तमाह । प्रायश्चित्तेष्विति । निष्पन्नेनोत्पन्ननिमित्तेन दर्शादिलोपरूपेणाभिसंबन्धः उक्तप्रायश्चित्तेषु कृतः शास्त्रेणात एकदोषपरिहारजनकत्वरूपसंबन्धः शास्त्रेण बोधित इति भावः । तस्य सर्वस्य वैगुण्येषु निर्घातो नाश एकस्मादेव भवति तस्मादैकार्थ्यान्न समुच्चयः । क्रतुवैगुण्यस्यापि शास्त्रैकगम्यत्वेन तन्निर्घातस्यापि शास्त्रैकगम्यत्वादिति भावः ॥ १६ ॥

नैमित्तिकप्रायश्चित्तानां समुच्चयः । अधि॰ ६ ।

समुच्चयस्त्वदोषो ऽर्थेषु ॥ १७ ॥

यत्र यादृशनिमित्ते क्रतुवैगुण्यं पुरुषस्य प्रत्यवायो वा न श्रूयते किं तु कर्मकर्तव्यतामात्रं श्रूयते तादृशकर्मणां प्रयाजादिवदङ्गत्वमात्रावगमात्समुच्चय इति पूर्वाधिकरणापवादमात्रम् । अस्योदाहरणं शास्त्रदीपिकायां भिन्ने जुहोति स्कन्ने जुहोतीति । भाष्ये तु यस्याहुते ऽग्निहोत्रमहुतं सूर्यो ऽभ्युदेति अनुद्धृते ऽभ्युदियादिति उभयत्रापि भेदनस्कन्दनादिरूपनिमित्तभेदाद् द्वयोः समुच्चयस्य सिद्धत्वेनानेन सूत्रेणानुवादमात्रं कृतमिति बोध्यम् ॥ १७ ॥

कर्मकाले ऽनध्याये ऽपि मन्त्राणां प्रयोगः । अधि॰ ७ ।

मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ॥ १८ ॥

कर्माङ्गत्वेन विधीयमाना मन्त्रा अनध्याये पठनीया न वेति संशये पूर्वपक्षमाह । मन्त्राणामिति । कर्मसंयोगात्कर्मार्था ये मन्त्रास्तेषां मन्त्राणामपि स्वधर्मेणानध्यायभिन्नकालपठितत्वरूपेण धर्मेणैव प्रयोगः स्यात् । धर्मस्य स्वाध्याये पठितत्वरूपधर्मस्य तन्निमित्तत्वात् । पठननिमित्तत्वात् । पठननिमित्तत्वाद् यदा पठनं तदा स्वाध्याय इति नियम आवश्यक इति भावः ॥ १८ ॥

विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात्कर्मार्थत्वात्प्रयोगस्य ॥ १९ ॥

सिद्धान्तमाह । विद्यामिति । सर्वकालमनध्याये स्वाध्याये च । अनध्याये पाठनिषेधवाक्यं विद्यां प्रति विद्यार्थमपूर्वग्रहणार्थं तत्परं यतः । अपूर्वग्रहणाङ्गं स काल इति भावः । प्रयोगस्य प्रयोगसमये पाठस्य कर्मार्थत्वात्तन्न नियमः ॥ १९ ॥

कर्मणि प्रवचनस्वरेणैव मन्त्रोच्चारणम् । अधि० ८ ।

भाषास्वरोपदेशेषु ऐरवत्प्रवचनप्रतिषेधः स्यात् ॥ २० ॥

यो मन्त्रः अपूर्वग्रहणकाले एकेन स्वरेण युक्तः तस्य मन्त्रस्य विनियोगकाले ब्राह्मणवाक्ये ऽन्यः स्वरः श्रूयते । तत्र प्रयोगे केन स्वरेण पाठ इति संशये पूर्वपक्षमाह । भाषेति । ऐरवत् । यथोत्पत्तिसमये स्थितस्य गिरापदस्य ब्राह्मणवाक्यनिर्दिष्टेरापदेन बाधः तथा ऽत्रापि भाषास्वरोपदेशेषु उत्पत्तिसमये मन्त्राणां यः स्वरोपदेशस्तद्विषये इति निवृत्त्यन्वयि । अत्र सूत्रपाठपुस्तके भाष्यपुस्तके च स्वरोपदेशादिति पञ्चम्यन्तं दृश्यते तदा ऽपि पञ्चमी सप्तम्यर्थिका । मन्त्रोपदेशेष्विति भाष्ये विवरणात् । दृश्यते च शास्त्रदीपिकासोमनाथीयपुस्तकेषु सप्तम्यन्त एव पाठः। प्रवचनेन ब्राह्मणस्वरेण प्रतिषेधः निवृत्तिः स्यात् । ब्राह्मणस्वरेण मन्त्रोत्पत्तिकालिकस्वरबाध इति भावः ॥ २० ॥

मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः ॥ २१ ॥

सिद्धान्तमाह । मन्त्रेति । भाषिके उत्पत्तिकाले श्रुतिर्यस्येति व्युत्पत्त्या उत्पत्तिकालिकस्वर एव कर्मकाले न ब्राह्मणस्वरः । प्रायापत्तेरुत्पत्तिकालिकस्वरबाधापत्तेः । ननु अयमर्थः कथं लब्धः तत्पदादिति चेच्छृणु । प्रपूर्वकायधातोः प्रकृष्टमयनमुत्पत्तिर्यस्येति व्युत्पत्त्या सम्यगुत्पन्नः भाषिकः स्वरः तस्य पुनः स्वबाधे लक्षणात् । तथा च लक्षितलक्षणायां तात्पर्यं बोध्यम् । ननु ब्राह्मणवचनेन गिरापदस्येव भाषिकस्वरबाधे न किं चिद्बाधकमत आह । मन्त्रोपदेशः ब्राह्मणवाक्येन मन्त्रेण चाङ्गत्वोपदेशः क्रियते न भाषिकस्य । स्वरोपदेशे ऽपि वाक्यभेदापत्तेरिति भावः ॥ २१ ॥

## विकारः कारणाग्रहे ॥ २२ ॥

इरापदेन गिरापदबाधवैषम्यमाह । विकारेति । गिरापदस्याने इरापदविकारः । अविकारे कारणाग्रहात् । उक्तरीत्या वाक्यभेदादिरूपं यद्विकारकारणं तदभावात् । प्रकृते विकारकल्पने यथा वाक्यभेदस्तथा तत्र नेति भावः ॥ २२ ॥

भाषिकेणोपदिष्टानां भाषिकस्वरेणैवोच्चारणम् । अधि० ६ ।

## तन्न्यायत्वाददृष्टो ऽप्येवम् ॥ २३ ॥

यत्र मन्त्रकाण्डे न पठितो मन्त्रः केवलब्राह्मणएव पठितः तत्र कथं पाठ इति संशये पूर्वपक्षमाह । तन्न्यायत्वात् । पूर्वन्यायेन । अदृष्टो ऽपि मन्त्रकाण्डे ऽदृष्टो ऽपि । एवं यज्ञकर्मण्यजपन्यूङ्खसामस्वितिव्याकरणशास्त्रप्राप्तस्वरेण पाठो न्याय्यः । न ब्राह्मणस्वरेण । पूर्ववन्मन्त्रमात्रविधायकत्वेन स्वरविधायकत्वाभावादिति भावः ॥ २३ ॥

## तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ २४ ॥

सिद्धान्तमाह । तदुत्पत्तेरिति । तस्मिन्ब्राह्मणे उत्पत्तिस्तस्मात् । तत्रैवोत्पन्नत्वेन यथा पाठः स एव स्वर इति भावः । ननु ब्राह्मणपठितस्य ब्राह्मणत्वमेव न मन्त्रत्वमित्याशङ्कायामाह । प्रवचनलक्षणत्वात् । प्रवचनस्य मन्त्रस्य लक्षणं द्वितीयोक्तं यस्य तस्त्वान्मन्त्रत्वमव्याहतमिति ॥ २४ ॥

पदार्थकरणमन्त्राणां पाठानन्तरमेव पदार्थानुष्ठानम् । अधि॰ १० ।

## मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात्सर्वस्य वचनार्थत्वात् ॥ २५ ॥

मन्त्राणां कर्मस्मारकत्वस्य प्रथमे क्लृप्तत्वेन यत्रेमामगृभ्णन्निति क्रियास्मारकं लिङ्गं तत्र तावतैव स्मृतत्वेन शेषपाठो व्यर्थ इति पूर्वपक्षे सिद्धान्तमाह । मन्त्राणामिति । करणार्थत्वात् । स्वार्थे ल्युट् । क्रियार्थत्वात् स्मृतिद्वारा मन्त्रान्तेन कर्मादिसंनिपातः संबन्धः कार्यः सर्वस्य वचनार्थत्वात् । लिङ्गकल्पितविध्यभिप्रेतत्वात् । अयं भावः । मन्त्राणां लिङ्गकल्पितविधिवाक्येन हि विनियोगः । अनेन मन्त्रेणेदं कर्म कर्तव्यमिति । तस्य यथा वैयर्थ्यभिया मन्त्रेणैव स्मर्तव्य इति विधितात्पर्यं कल्प्यते तथा निखिलमन्त्रेणापि स्मर्तव्यमिति कल्प्यते । अन्यथा शेषमन्त्रपाठवैयर्थ्यादिति ॥ २५ ॥

वसोर्धारायां पूर्ववन्मन्त्रान्ते कर्मसंनिपातः । अधि॰ ११ ।

## संततवचनाद्धारायामादिसंयोगः ॥ २६ ॥

अग्नौ श्रूयते, संततां वसोर्धारां जुहोतीति । अत्रादिसंयोगो ऽन्त्यसंयोगो वा कर्मण इति शङ्कायां पूर्वपक्षमाह । संततेति । संपूर्वकतनुधातोरेकीभूय विस्तारः द्वयोरत्यन्तसंयोगेन विस्तारः संयोगो द्वयोर्भविष्यति प्रक्रान्ते उभे मन्त्रक्रिये । अतो धारायां मन्त्राणामादिना क्रियासंयोगः ॥ २६ ॥

## कर्मसंतानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ॥ २७ ॥

सिद्धान्तमाह । कर्मेति । संतानः अत्यन्तसंयोगः न क्रियामन्त्रयोः किं तु क्रियाणामेव संतानः । ननु क्रिया त्वेका एकस्य संतानः कथमत आह । नानाकर्मत्वात् । द्वादश द्वादश जुहोतीति संख्यया अनेककर्मत्वात् । किं चेतरस्य क्रियामन्त्रयोः संतानकरणस्याशक्यत्वाच्च । क्रिया आशुतरविनाशिनी मन्त्रस्तु चिरस्थायी तुल्यकालयोरेव संतानसंभवादिति भावः ॥ २७ ॥

आघारे ऽपि पूर्ववन्मन्त्रान्ते कर्मसन्निपातः । अधि· १२ ।

**आघारे चेद्दीर्घधारत्वात् ॥ २८ ॥**

दर्शपूर्णमासयोः संततमाघारयतीति श्रुतम् । तत्र कर्मण एकत्वेन संयोगार्थमन्यस्य मन्त्रस्यैव ग्रहणमिति मन्त्रादिसंयोगः क्रियाया इति पूर्वपक्षे सिद्धान्तमाह । आघारइति । संततवचनस्य दीर्घधारापरत्वात् । तत्रापि मन्त्रान्तएवेति सिद्धम् ॥ २८ ॥

पूषा वाम् इत्याद्येककार्यार्थमन्त्राणां विकल्पः । अधि· १३ ।

**मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् ॥ २९ ॥**

यत्रैकजातीयक्रियास्मारकमन्त्राणामनेकेषां श्रवणं तत्र तस्यां क्रियायां मन्त्राणां विकल्प इति सिद्धान्तमाह । मन्त्राणामिति । संनिपातित्वात् स्मरणद्वारा संनिपत्योपकारकत्वात् तस्य स्मरणस्यैकेनैव संभवाद् एकार्थानां विकल्पः स्यात् ॥ २९ ॥

चतुर्भिरभ्रिमादत्ते इत्यादौ मन्त्राणां समुच्चयः । अधि· १४ ।

**संख्याविहितेषु समुच्चयो ऽसंनिपातित्वात् ॥ ३० ॥**

यत्रैकमेव मन्त्रचतुष्टयं मन्त्रकाण्डे ब्राह्मणवाक्ये तु चतुर्भिरभ्रिमादत्तइति संख्यायुक्तं तत्र समुच्चय इति सिद्धान्तमाह । संख्येति । असंनिपातित्वात्कर्मणि स्मरणद्वारा हेतुत्वादाद्यानां त्रयाणां चरममन्त्रेणैव स्मरणसिद्धेर्विधिबलेनादृष्टार्थत्वादिति भावः ॥ ३० ॥

ब्राह्मणविहितानामुरु प्रथस्वेत्यादिमन्त्राणां विकल्पः । अधि· १५ ।

**ब्राह्मणविहितेषु च संख्यावत्सर्वेषामुपदिष्टत्वात् ॥ ३१ ॥**

उरु प्रथस्वेति पुरोडाशं प्रथयति उरु प्रथाह इति यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयतीति ब्राह्मणवाक्येन पुरोडाशप्रथने मन्त्रद्वयं विहितमनयोः समुच्चयो विकल्पो वेति संशये पूर्वपक्षमाह । ब्राह्मणेति । संख्यावत् । पूर्वाधिकरणविषयसंख्यावत्सर्वेषां मन्त्रद्वयस्यापि ब्राह्मणवाक्येनोपदिष्टत्वाद्विहितत्वात् समुच्चय एव युक्तः ॥ ३१ ॥

**याज्यावषट्कारयोश्च समुच्चयदर्शनम् ॥ ३२ ॥**

दृष्टान्तान्तरमाह । याज्येति । याज्यया जुहोति वषट्कारेण जुहोतीतिवाक्यद्वयविहितयोरपि समुच्चयदर्शनं तद्वत् ॥ ३२ ॥

**विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ ३३ ॥**

सिद्धान्तमाह । विकल्प इति । अश्रुतित्वात् अश्रवणात् ॥ ३३ ॥

**गुणार्थत्वादुपदेशस्य ॥ ३४ ॥**

ननु तर्हि लिङ्गेनैव विनियोगसिद्धौ पुनर्विधानं व्यर्थं सत्समुच्चयं विधत्ते इति विकल्पो नेत्यत आह । गुणेति । गुणार्थत्वात् स्तुतिरूपगुणार्थत्वात् । अर्थवादरूपं वाक्यद्वयमिति भावः । तदुक्तं, गुणार्थेन पुनः श्रुतिः, परिसंख्या, ऽर्थवादो वेति ॥ ३४ ॥

**वषट्कारे नानार्थत्वात्समुच्चयः ॥ ३५ ॥**

याज्यावषट्कारदृष्टान्ते वैषम्यं दर्शयति । वषडिति । नानार्थत्वात् । याज्यातो भिन्नकार्यत्वात् । याज्यया देवतास्मरणं वषट्कारेण प्रदानमिति ॥ ३५ ॥

हौत्राणां मन्त्राणां समुच्चयः । अधि॰ १६ ।

**हौत्रास्तु विकल्पेरन्ननेकार्थत्वात् ॥ ३६ ॥**

यत्र हौत्रे यूपायोच्छ्रीयमाणायानुब्रूहीति प्रैषानन्तरं होत्रा उच्छ्रयणलिङ्गकमन्त्रः पठनीयः । उच्छ्रयणलिङ्गक उच्छ्रयस्व वनस्पतइत्येकः । समिद्धस्येति द्वितीयः । ऊर्ध्वम् ऊषुण इति तृतीयः । ऊर्ध्वो न इति चतुर्थः । अमीषां विकल्पः समुच्चयो वेति संशये पूर्वपक्षमाह । हौत्रा इति । स्पष्टम् ॥ ३६ ॥

**क्रियमाणानुवादित्वात् समुच्चयो वा हौत्राणाम् ॥ ३७ ॥**

सिद्धान्तमाह । क्रियमाणेति । निर्वापादिमन्त्रवत् कर्तुः स्मारका नैते मन्त्राः किं तु अध्वर्युणा क्रियमाणमनुवदति होता अतो हौत्रे समुच्चय एव ॥ ३७ ॥

**समुच्चयं च दर्शयति ॥ ३८ ॥**

उक्तार्थे लिङ्गमपि दर्शयति । समुच्चयमिति । तत्रैव त्रिः प्रथमामन्वाह त्रिरुत्तमामिति । अत्र प्रथमोत्तमत्वं मन्त्रगणमन्तरा न संभवतीति भावः ॥ ३८ ॥

इति जैमिनीयसूत्रवृत्तौ द्वादशाध्यायस्य तृतीयः पादः ॥ ३ ॥

जपस्तुत्याशीरभिधानानां समुच्चयः । अधि॰ १ ।

## जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् ॥ १ ॥

पूर्वपादे अस्पष्टसमुच्चयो दर्शितः । अस्मिन्पादे स्पष्टविषयः समुच्चय उच्यते । वैष्णवीमनूच्य वाचं यच्छति सरस्वतीमनूच्य वाचं यच्छतीत्याद्या जपरूपा मन्त्राः । न तत्र लिङ्गेन स्मृत्या ऽनुष्ठेया क्रिया ऽस्ति । तथा स्तुत्यभिधाना अग्निर्मूर्धा इत्यादय आशीरभिधाना आयुर्मे देहि वर्चो मे देहीत्यादयः । किमेषां विकल्प उत समुच्चय इति विचारे सिद्धान्तमेवाह । जपाश्चेति । अकर्मसंयुक्ताः कर्मप्रकाशकलिङ्गशून्याश्च यजमानेन पठ्यमानेषु पूर्वोक्तास्तेषां समुच्चयः आयुर्वर्चोरूपाशीःपृथक्त्वात् । एवं जपस्तुत्योरपि दृष्टार्थत्वेन वैष्णविच्वस्याध्यमपूर्वं न सारमतः ऋचां समुच्चयः ॥ १ ॥

## *समुच्चयं च दर्शयति ॥ २ ॥

समुच्चये लिङ्गमाह । समुच्चयमिति । शस्त्रपाठे त्रिः प्रथमामन्वाह त्रिरुत्तमामिति व्याख्यातं पूर्वम् ॥ २ ॥

ऐन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पः । अधि॰ २ ।

## याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥

इदं वामास्ये हविरित्यनुवाके ऐन्द्राबार्हस्पत्यलिङ्कानेकयाज्यापुरोनुवाक्यायुगलमाम्नातं, तेषां पूर्वन्यायेन समुच्चय इति पूर्वपक्षे सिद्धान्तमाह । याज्येति । देवतोपलक्षणार्थत्वात् । स्मरणार्थत्वात् । दृष्टं फलमेकमिति भावः ॥ ३ ॥

## लिङ्गदर्शनाच्च ॥ ४ ॥

उक्तार्थं द्रढयितुं लिङ्गमपि दर्शयति । लिङ्गेति । द्वे द्वे संभरति

* इदं मुद्रितशाबरभाष्यपुस्तके सूत्रत्वेन नोल्लिखितम् ।

याज्यानुवाक्ययोरेव रूपं करोतीति लिङ्गमेका याज्या एका पुरोनुवाक्येति दर्शयति ॥ ४ ॥

सोमक्रयसाधनानामजादीनां समुच्चयः । अधि० ३ ।

**क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ॥ ५ ॥**

सोमक्रये अजया क्रीणाति, हिरण्येन क्रीणातीति द्रव्याणां विकल्प इति पूर्वपक्षमाह । क्रयणेष्विति । स्पष्टो ऽर्थः ॥ ५ ॥

**समुच्चयो वा प्रयोगे द्रव्यसमवायात् ॥ ६ ॥**

सिद्धान्तमाह । समुच्चय इति । प्रयोगे क्रयरूपव्यापारे द्रव्यस्य समवायात् । अधिकद्रव्यसंबन्धसंभवात् ॥ ६ ॥

उपयजनादिप्रतिपत्तिकर्मणां समुच्चयः । अधि० । ४ ।

**संस्कारे च तत्प्रधानत्वात् ॥ ७ ॥**

अग्नीषोमीयपशौ गुदेनोपयजतीति । इदं चैकादशिनेष्वप्यतिदिष्टं तत्र विकल्पेन यत्किंचिद्गुदेन होम इति पूर्वपक्षे सिद्धान्तमाह । संस्कारे चेति । गुदस्य प्रतिपत्तिसंस्कारे तत्प्रधानत्वात् । गुदस्य प्रधानत्वात् प्रतिप्रधानमङ्गावृत्तिरिति सकलगुदानां होमे समुच्चयः ॥ ७ ॥

आधाने विविधसंख्याकानां दक्षिणानां विकल्पः । अधि० ५ ।

**संख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात् ॥ ८ ॥**

आधाने एका देया षड् देया द्वादश देया इति दक्षिणादानं श्रुतम् । एषां क्रयवत्समुच्चय इति पूर्वपक्षे सिद्धान्तमाह । संख्यास्विति । श्रुतिविप्रतिषेधात् । संख्याश्रुतिविरोधात् । एकस्य षण्णां समुच्चये सप्त दत्ता भवेयुः नैकस्य षण्णां वा दानमिति विरोध इति भावः ॥ ८ ॥

पशुगणेषु जाघनीनां विकल्पः । अधि० ६ ।

**द्रव्यविकारं च पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ ९ ॥**

दर्शपूर्णमासयोराज्येन जाघन्या वा पत्नीः संयाजयन्तीति श्रुतं, तत्र प्रतिपत्त्यसंभवाद् अर्थकर्म । क्रियैव प्रधानं जाघनी गुणः । सा च

जाघनी अग्नीषोमीयपशौ प्राप्ता चोदकेन । तथा ऽपि तत्संनिधौ पुनर्जाघन्या पत्नीः संयाजयन्तीति श्रुतं, तेनाग्नीषोमीयपशौ जाघन्यैवेति नियमः कृतः । तस्मात्पशुगणे ऽतिदेशः । तत्र यावज्जाघनीनां समुच्चय उत विकल्प इति संशये सिद्धान्तेनारभते । द्रव्येति । द्रव्यस्य पशोः विकारमवयवः । पूर्ववत् । आधाने दानं प्रधानमेकत्वादिविशिष्टं गुण इति अर्थकर्म तथा ऽत्रापि पत्नीसंयाजाननूद्य जाघनीगुणविधानादर्थकर्म । एवं दर्शपूर्णमासयोराज्येन विकल्पाच्चोदकशास्त्रेण पशावपि विकल्पप्राप्तौ पशुप्रकरणपठितवाक्येन नियमो जाघन्यैवेति । नन्वेतावता पशुगणे जाघनीसमुच्चयः किं न स्यादत आह । प्रधानत्वात् । प्रधानकर्मत्वान्न समुच्चयः । अयं भावः । यत्र गुणः कर्म द्रव्यं प्रधानं तत्र निखिलद्रव्येषु क्रियासंबन्ध एकस्मिन् प्रयोगे । प्रकृते कर्म प्रधानमतो न समुच्चय इति ॥ ९ ॥

## द्रव्यत्वे ऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ १० ॥

सिद्धान्तमाक्षिपति । द्रव्यत्वे ऽपीति । क्रियां प्रति गुणभूतद्रव्यत्वे ऽपि समुच्चयो युक्तः कीदृशस्य कर्मनिष्पत्तेर्द्रव्यस्य कर्मनिष्पत्तेरिति षष्ठ्यन्तं हेतुगर्भम् । यतः पशुविशसनरूपकर्मणा जाघनीरूपद्रव्यस्य निष्पत्तिरतः यत्पुरुषव्यापारेण निष्पन्नं तत्कार्यमपेक्षते यथा बर्हिरादीति भावः । नन्वेवमप्येकेन पत्नीसंयाजरूपकार्ये कृते कार्याकाङ्क्षा निवृत्ता समुच्चये सर्वेषां जाघनीनां कथं सिध्यतीत्यत आह । प्रतिपशु कर्मभेदात् । यावन्तः पशवस्तावन्ति विशसनानि । तथा च विशसनरूपकर्मभेदात् प्रतिविशसनजन्यजाघनी प्रत्येकं कार्यमपेक्षते । इत्थं च समुच्चय इति भावः । इत्थं च यथाप्रकृति प्रकृतौ अशेषजाघन्या पत्नीसंयाजसंपादनं तथा ऽत्रापि कृतं भवति ॥ १० ॥

## कपाले ऽपि तथेति चेत् ॥ ११ ॥

यथा पशुगणे जाघनीसमुच्चयस्तथा पुरोडाशगणे तुषोपवापार्थे मध्यमकपालानामपि समुच्चय इत्याह । कपाले ऽपीति ॥ ११ ॥

न कर्मणः परार्थत्वात् ॥ १२ ॥

उभयत्रापि समुच्चयं दूषयति । नेति । कर्मणः विशसनकर्मणः परार्थत्वात् । हृदयाद्येकादशावदानार्थत्वात् । एकादशावदानान्यवद्यन्तीति श्रुतेः । तथा पुरोडाशश्रपणार्थत्वात् कपालसंपादनस्य, न जाघनीतुषोपवापार्थौ तौ विशसनकपालसंपादनव्यापारौ । इत्थं च यदुद्देश्यको यो व्यापारस्तदुत्पन्नः अवश्यं कार्यमपेक्षते जाघन्यां कपाले च न तथेति न समुच्चय इति भावः ॥ १२ ॥

प्रतिपत्तिस्तु शेषत्वात् ॥ १३ ॥

तथा ऽप्यर्थकर्मत्वे भवेद्विकल्पः । तदेव न । किं तु प्रतिपत्तिकर्मेति पुनः समुच्चय आपतितः इत्याशङ्क्ते । प्रतीति । निर्वर्तिते पशुकरणे यागे शेषत्वात् । हुतशेषद्रव्यं प्रतिपत्तिमपेक्षते गुदवदिति भावः ॥ १३ ॥

श्रुते ऽपि पूर्ववत्स्यात् ॥ १४ ॥

जाघन्यां प्रतिपत्तिसंस्कारं व्यवस्थाप्याभ्युदयेष्टौ दधिशृतयोरपि प्रतिपत्तिं व्यवस्थापयति । शृते ऽपीति । ये ऽशिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति विहिते शृते चरौ ऽपि । अत्र शृतपदं ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुमित्यत्र दध्नो ऽप्युपलक्षकम् । पूर्ववत् । जाघनीवत्प्रतिपत्तिः प्रधानत्वादित्यन्तेन ॥ १४ ॥

विकल्पे त्वर्थकर्म नियमप्रधानत्वात् ॥ १५ ॥

जाघन्यामर्थकर्मत्वं व्यवस्थापयति । विकल्पइति । नियमप्रधानत्वाद् नियममात्रतात्पर्यकत्वात् । अयं भावः । दर्शपूर्णमासतः अग्नीषोमीयपशौ चोदकेन विकल्पेन प्राप्तौ पुनरग्नीषोमीयपशौ जाघन्या पत्नीः संयाजयन्तीति वाक्यं व्यर्थं सत्पशौ चोदकेनाज्येन सह प्राप्ते विकल्पे जाघन्यैव कर्तव्यमिति नियममात्रविधायकं सद् वारयति आज्यं न त्वर्थकर्मत्वं प्रकृतिप्राप्तम् । प्रकृतावर्थकर्मत्वमुभयवादिसिद्धमिति नियममात्रे विधितात्पर्यमिति पशुगणे जाघन्या विकल्पे नियमप्रधानत्वमबाधितमतो ऽर्थकर्म ॥ १५ ॥

## शेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १६ ॥

एवं काम्यामर्थकर्मत्वं व्यवस्थाप्य शृते ऽपि साधयति । शेष इति । कर्मणा संस्काररूपकर्मणा कार्यस्यापूर्वस्य समवायः उत्पत्तिः शेषे उपयुक्तशेषे भवति । अयं भावः । यत्र प्रतिपत्तिसंस्कारः तत्र संस्कार्यस्य क चिदुपयोगानन्तरमुपयुक्तशेषस्य प्रतिपत्तिर्दृष्टा । इह दधिशृतयोः कुत्राप्युपयोगाभावात्र तस्य प्रतिपत्तिः संभवतीति । तस्मादुक्तहेतोः तेन शृतेनार्थकर्मैव स्यात् ॥ १६ ॥

उखायां काम्येन नित्याग्नेर्विकारः । अधि० ७ ।

## उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १७ ॥

अग्नौ उखां प्रकृत्य श्रूयते, संतापेनाग्निं जनयतीति । आहवनीये उखामत्यन्तं संताप्य तस्माज्जनितो नित्यत्वेन तत्रैव । वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्यावदध्यादिति । वनदाहे वृक्षप्रदीप्तो यो ऽग्निः स काम्यः अनयोः समुच्चयो ऽथ वा काम्येन नित्यबाध इति संशये पूर्वपक्षमाह । उखेति । नियोगे विधिवाक्ये आहृत्य निधानस्य कामदर्शनात् । फलश्रवणात् । वृक्षाग्निः केवलनिधानार्थः संतापाग्निः होमार्थः इति भिन्नार्थत्वेनैकेनापरबाधासंभवादिति भावः ॥ १७ ॥

## असति चासंस्कृतेषु कर्म स्यात् ॥ १८ ॥

असति समुच्चये वृक्षाग्राज् ज्वलदग्निना नित्यस्य बाधे असंस्कृतेषु आधानादिना ऽसंस्कृतेषु अग्निषु कर्महोमः स्यात् । अतो ऽपि समुच्चयः ॥ १८ ॥

## तस्य च देवतार्थत्वात् ॥ १९ ॥

अपि च तस्याधानस्य देवतार्थत्वाद् देवतोद्देश्यकहोमार्थत्वात् । अग्न्युत्पत्तिद्वारा सर्वहोमार्थत्वाद् आधानस्यातो नित्येन समुच्चयो युक्त इति भावः ॥ १९ ॥

विकारो वा तदुक्तहेतुः ॥ २० ॥

सिद्धान्तमाह । विकारो वेति । नित्यस्य होमार्थं विहितस्य विकारः । तत्कार्यकारी तत्स्थानापन्न इति यावत् । स चासावुक्तश्च तदुक्तहेतुः उक्तार्थसाधकश्चतुर्थे उक्तो हेतुरित्यर्थः । यश्च नियोगे काम-दर्शनादिति पूर्वपक्षहेतुः तत्परिहारो भाष्यादवगन्तव्यः ॥ २० ॥

वचनादसंस्कृतेषु कर्म स्यात् ॥ २१ ॥

यश्चासंस्कृतेषु कर्म स्यादिति हेतुः तं परिहरति । वचनादिति । न हि वचनस्यातिभार इति भावः ॥ २१ ॥

संसर्गे चापि दोषः स्यात् ॥ २२ ॥

परोक्तहेतून् दूषयित्वा परपक्षे दोषमाह । संसर्गइति । नित्यकाम्ययोः संसर्गे दोषश्रवणात् । अग्नये शुचये ऽष्टाकपालं निर्वपेद् यस्याग्निः ग्राह्याग्नेन संसृज्येतेति श्रवणेनाशुचिरग्निः स्यात् ॥ २२ ॥

वचनादिति चेत् ॥ २३ ॥

पूर्वपक्ष्याशङ्कते । वचनात् काम्ययुक्तवचनात् । नाशुचित्वं न वचनातिभार इति भावः ॥ २३ ॥

तथेतरस्मिन् ॥ २४ ॥

मन्यते ऽपि वचनबलादसंस्कृते ऽपि होम इत्याह । तथेति ॥ २४ ॥

उत्सर्गे ऽपि परिग्रहः कर्मणः कृतत्वात् ॥ २५ ॥

तस्य देवतार्थत्वादित्यत्र परिहारमाह । उत्सर्गइति । संस्कृताग्नेरुत्सर्गे ऽपि परिग्रहः देवतापरिग्रहो विरुद्धः कर्मणः देवतोद्देश्यकहोमस्य कृतत्वात् । अन्यन्वाधानं देवतापरिग्रहार्थं नाग्निस्तदर्थः । अन्वाधानमत्रापि क्रियतइति भावः ॥ २५ ॥

वैकारिकाग्नेराहवनीयत्वाभावः । अधि ८ ।

स आहवनीयः स्यादाहुतिसंयोगात् ॥ २६ ॥

वृत्ताद्यादानीतो ऽग्निः आहवनीयपदवाच्यो न वेति संशये पूर्व-

पक्षमाह । स इति । स पूर्वोक्तो ऽग्निः आहवनीयः स्यात् । आहुति-संयोगात् । हूयते यस्मिन्निति योगसंभवात् ॥ २६ ॥

## अन्यो वोद्धृत्य हरणात् ॥ २७ ॥

सिद्धान्तमाह । अन्य इति । वृत्ताद्धृत्य हरणाद् आहवनीयः । आधानादिसंस्कृते ऽग्नौ योगरूढ आहवनीयशब्दो न योगेनान्यत्र नेतुं शक्यः पङ्कजादिवदिति भावः ॥ २७ ॥

वैकारिकाग्नेराधानिकसंस्काराभावः । अधि॰ ९ ।

## तस्मिन् संस्कारकर्म शिष्टत्वात् ॥ २८ ॥

पूर्वोक्ते ऽग्नौ आधानादिसंस्कारः कार्यो न वेति संशये पूर्वपक्ष-माह । तस्मिन्निति । संस्कारादिकर्म आधानादि कर्तव्यं शिष्टत्वात् । सर्वकर्मशेषत्वेन विहितत्वात् । यद्याधानं न क्रियेत तस्मिन् होमो विगुणः स्यादिति भावः ॥ २८ ॥

## स्थानाद्वा परिलुप्येरन् ॥ २९ ॥

सिद्धान्तमाह । स्थानादिति । असंस्कृताग्नेः संस्कृतस्य स्थानात् तत्स्थाने विहितत्वात् । यथा चैत्रो मैत्रकार्ये विनियुक्तः मैत्रकार्यं कुरुते मैत्रमातुरुदरान्निःसरणादि नापेक्षते तथेत्यर्थः ॥ २९ ॥

नित्यस्योख्यस्याग्नेर्धारणम् । अधि॰ १० ।

## नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात् ॥ ३० ॥

नित्याग्नेस्तत्रैव धारणे विकल्प उत नित्यं धार्य इति संशये पूर्वपक्षमाह । नित्य इति । विकल्पः अकस्मात्प्राप्तिं विना प्रतिषेधो न स्यात् । न प्रतिसमाधीयत इति धारणप्रतिषेधः । अयं प्राप्तिपूर्वक इति धारणविधिः कल्प्यते । तथा विधिप्रतिषेधाभ्यां विकल्प इति भावः ॥ ३० ॥

## नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ ३१ ॥

सिद्धान्तमाह । नित्य इति । "गतश्रियः नित्यधारणात् । गत-श्रियो नित्यधारणस्य विहितत्वात् तस्यैव प्रतिषेधः उखाग्नावुच्यते उक्तवाक्येनातो न विकल्पः ॥ ३१ ॥

सत्राहीनयोः शुक्रस्पर्शादीनामेकयजमानकर्तृकत्वम् । अधि० ११ ।

## परार्थान्येको यजमानगणे ॥ ३२ ॥

सत्रे सर्वेषां यजमानत्वाच्च शुक्रं यजमानो ऽन्वारभत इति यानि फलार्थानि कर्माणि तानि कर्तुं यजमानसमुच्चय इति पूर्वपक्षे सिद्धान्तमाह । परार्थानीति । स्पष्टम् ॥ ३२ ॥

अहीने शुक्रस्पर्शादेर्यस्य कस्य चिद् यजमानस्य कर्तृत्वम् । अधि० १२ ।

## अनियमो ऽविशेषात् ॥ ३३ ॥

एकेन यत्कार्यं तद्गृहपतिसंज्ञकेन कार्यमिति पूर्वपक्षे सिद्धान्तमाह । अनियम इति । येन केनापि कार्यम् ॥ ३३ ॥

सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्तृत्वम् । अधि० १३ ।

## मुख्यो वा ऽविप्रतिषेधात् ॥ ३४ ॥

सत्रे याजमानं येन केनापि पठनीयमिति पूर्वपक्षे सिद्धान्तमाह । मुख्य इति । मुख्यः गृहपतिरेव । अविप्रतिषेधात् । अविरोधात् ॥ ३४ ॥

सत्रे ऽञ्जनादिसंस्काराणां सर्वगामित्वम् । अधि० १४ ।

## सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ ३५ ॥

सत्रे अञ्जनाभ्यञ्जनादयः गृहपतेरेव उत सर्वेषामेवेति संशये पूर्वपक्षमाह । सत्र इति । गृहपतिरेव उक्तसंस्कारसंस्कृतः असंयोगात् । असंयोगाभावात् । गृहपतिं दीक्षयन्तीति वाक्ये यद्गृहपतिपदं तस्य यः असंयोगाभावः संबन्धाभावाभावः संबन्धः शक्तिरूपः स यत्र तस्मात् । गृहपतिशब्दशक्तिः अबाधिता भवतीति भावः । यथा होतृशब्दशक्तेरबाधाय होत्रा क्रियमाणकर्मण्येव हौत्रमिति प्रयोगः ॥ ३५ ॥

## आम्नायवचनाच्च ॥ ३६ ॥

साधकान्तरमाह । आम्नायेति । गृहपतेः फलभूयस्त्वाम्नायः । अधिकफलश्रवणरूपवचनात् । तद्वचनं च सत्रे भूयसां यजमानानां यो गृहपतिः स भूयिष्ठामृद्धिमृध्नोतीति ॥ ३६ ॥

## सर्वे वा तदर्थत्वात् ॥ ३७ ॥

सिद्धान्तमाह । सर्व इति । सर्वे संस्कार्या एषां सप्तदशानामर्थः फलम् ॥ ३७ ॥

## गृहपतिरिति च समाख्या सामान्यात् ॥ ३८ ॥

ऋद्धिकामाः सत्रमासीरन्नित्यनेन सर्वार्थत्वात् । गृहस्य शालाया मखस्य वा प्रभुत्वं सर्वसाधारणं शक्यार्थबाधाभावः । सर्वेषां संस्कार इति भावः ॥ ३८ ॥

## विप्रतिषेधे परम् ॥ ३९ ॥

यत्र याजमानार्त्विज्ययोर्विरोधः तत्र परमार्त्विज्यमृत्विक्कर्म कार्यं ये यजमानास्ते ऋत्विज इत्यनेन ऋत्विक्कर्मणः आतिदेशिकयाजमाना-पेक्षया प्रबलत्वादिति भावः ॥ ३९ ॥

## हौत्रे परार्थत्वात् ॥ ४० ॥

एवमन्तरा प्राप्तं विषयं व्यवस्थाप्य पूर्वाधिकरणपूर्वपक्षे हौत्रव-दिति हेतुद्वयं साधकत्वेन यदुक्तं तदुभयं सूत्रद्वयेन दूषयति । हौत्रइति । द्वाभ्यां हौत्रे कर्मणि होमः परार्थत्वात्कर्मार्थत्वात् । अतो होता गुण-भूतः अत एकेनापि कृतं चरितार्थमभ्यञ्जनं फलसंस्कारः तत्र यजमानः प्रधानमतः प्रधानसंस्काराद्वृत्तिरिति भावः ॥ ४० ॥

## वचनं परम् ॥ ४१ ॥

यच्च फलभूयस्त्ववचनं तत्परमर्थवादः ॥ ४१ ॥

ब्राह्मणस्यैवार्त्विज्ये ऽधिकारः । अधि० १५ ।

## प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४२ ॥

आर्त्विज्यं सर्ववर्णैः कार्यमुत ब्राह्मणैरेवेति संशये पूर्वपक्षमाह । प्रभुत्वात्सामर्थ्यात् ॥ ४२ ॥

## स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ४३ ॥

सिद्धान्तमाह । स्मृतेरिति । कल्पसूत्रे ब्राह्मणानामार्त्विज्यमिति स्मृतेः ॥ ४३ ॥

## फलचमसविधानाच्चेतरेषाम् ॥ ४४ ॥

लिङ्गमप्याह । फलेति । यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं विभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति सोमपाननिषेधात् । ऋत्विजां सोम-पानावश्यकत्वाद् नार्त्विज्यमितरेषाम् ॥ ४४ ॥

सान्नाय्ये ऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥ ४५ ॥

सान्नाय्ये ऽपि न राजन्यो न वैश्यो वा सान्नाय्यं पिबेत् असोमपीथो ह्येष इति सान्नाय्यपाननिषेधहेतुतया सोमपानानर्हत्वं दर्शयतीत्याह । सान्नाय्यइति । स्पष्टम् ॥ ४५ ॥

चतुर्धाकरणे च निर्देशात् ॥ ४६ ॥

दर्शपूर्णमासे चतुर्धाकरणमन्त्रलिङ्गमपि ब्राह्मणस्यैवार्त्विज्यं द्रढयतीत्याह । चतुरिति । निर्देशाद् लिङ्गनिर्देशात् । ब्राह्मणानामिदं हविः सौम्यानां सोमपीथिनां नेहाब्राह्मणस्यास्तीति । इदं चतुर्धाकरणमब्राह्मणस्य नास्तीत्याह ॥ ४६ ॥

अन्वाहार्ये च दर्शनात् ॥ ४७ ॥

अन्वाहार्ये अन्वाहार्यार्थवादे च यदन्वाहार्यमाहरन्त्येते वै देवाः प्रत्यक्षं यद्ब्राह्मणास्तानेव तेन प्रीणातीति दर्शनात् ॥ ४७ ॥

इति जैमिनीयसूत्रवृत्तौ शितिकण्ठविरचितायां
द्वादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥
अध्यायश्च संपूर्णः १२ संपूर्णो ऽयं पूर्वमीमांसाग्रन्थः ॥ ० ॥

श्रीमज्जैमिनिसूरिसूत्ररचना गम्भीरभावा क्व च ।
क्वाहं मन्दमतिस्तथा ऽपि च गुरोः पादाम्बुजं चिन्तयन् ॥
बुद्धेर्मान्द्यमपास्य भावमखिलं संक्षेपतः पण्डिताः ।
यत्र क्व स्खलितं विशोध्य सगुणां कुर्वन्तु मत्प्रीतये ॥ १ ॥
सप्तर्ष्यद्रिक्ष्मामिते शालिवाहशाके ऽविमुक्तके ।
सहस्यसितपक्षे ऽथ द्वितीयायां रवौ निशि ॥ २ ॥
रामेश्वरः सूत्रवृत्तिं निर्मायाथ यथामति ।
अन्नपूर्णाविश्वभर्तृचरणे ऽर्पितवान् मुदे ॥ ३ ॥
गुरुत्वं च पितृत्वं च यत्रैकत्र स्थितं मम ।
वन्दे तच्चरणाम्भोजे ते एव शरणं मम ॥ ४ ॥
एते श्लोका अधिका गोविन्ददासगुप्तपुस्तके उपलभ्यन्ते ।

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|
| स्यन्तरं | स्यनन्तरं | ३ । | ५ |
| शुत्यामपि | शुत्वा ऽपि | ३ । | १२ |
| वृद्धिप | वृद्धिः प | ६ । | ४ |
| ते | तूले | ६ । | ८ |
| ऽविरूपनि | विरूप नि | ७ । | १३ |
| वह | वहन | ९ । | ८ |
| तएवं | यएवं | ९ । | १६ |
| नार्तये | नार्ता | ९ । | १६ |
| न सं | नासं | ९ । | २३ |
| स्मिन् | स्माद् | १० । | ८ |
| कत्वमु- | कमु | १० । | ८ |
| ज्ञाने | ज्ञानेन मुखं | १० । | १९ |
| रूप | रूपधर्म | ११ । | २० |
| वेत | वेतस | १२ । | १२ |
| निवृत्तिप्रक्षाण- स्वेच्छा | निवृत्तेर्वेप्सा इच्छा | १३ । | १८ |
| नर्मित | नद्दति | १३ । | २३ |
| पूर्णा | पूर्णा | १३ । | २६ |
| वर्थः पु- | वर्थः सः पु | १८ । | ९ |
| ष्टय | छ्व | २० । | २ |
| संयोगा | असंयोगा | २१ । | ११ |
| योगव्य | योगः व्य | २७ । | ३ |
| यस्या | परस्या | ४१ । | २७ |
| वेत्या | वेत्या | ४२ । | २१ |
| रम्भः । आशु | रम्भः अत आशु | ४२ । | २४ |
| त्वेन चि | त्वेन न चि | ४३ । | ११ |
| त्वात् । लो | त्वात् । लोक- वत् । लो | ४४ । | १९ |
| पधान | पाठान | ४५ । | २३ |
| प्राका | प्रका | ४७ । | ११ |
| शास्त्राद् | शस्त्राद् | ४८ । | ११ |
| मात्र- | मात्रे | ४९ । | ११ |
| तच्छ | यच्छ | ४९ । | ११ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|
| विभे | विच्छे | ५३ । | १० |
| क्यस्य | क्यस्य- | ५६ । | १३ |
| ये त- | ये अतः त- | ५८ । | ६ |
| त्यपि | त्यस्यापि | ६४ । | ४ |
| यास्त | यास्तु | ६४ । | १२ |
| श्रुतौ | क्रतौ | ६४ । | १७ |
| पष्ठाह्नी | पष्ठौह्नी | ६५ । | २१ |
| बन्धप | बन्धविधिप | ६८ । | २४ |
| धर्मणां | धर्माणां | ७१ । | २५ |
| न भे- | नाभे- | ७६ । | १७ |
| श्रिचत्त | श्रिचत्तं | ७८ । | १० |
| स्य प- | स्य यः प- | ७९ । | १४ |
| कथं न | कथनं | ८० । | १७ |
| याजिना | याजिनो | ८० । | २० |
| तथा | यथा | ८१ । | १९ |
| त्वात् । ग्रह- त्वात् । य- | त्वात् । य- | ८८ । | १ |
| ग्रास्त्रा | शाखा | ९३ । | ९ |
| स्य देव | स्य पूषदेव | ९४ । | २४ |
| माह । हि | माह । यथेति । हि | १०२ । | ६ |
| पलीव- | पालीव- | १०३ । | १८ |
| संबन्धः व- | संबन्धः उच्चै- स्त्व संबन्धः व- | १०८ । | १७ |
| पाशु- | पांशु- | १०९ । | २४ |
| संबध | संबन्ध | १२८ । | २ |
| सवैन | सवैनं | १२९ । | ५ |
| वषट्कारः | वषट्कारे | १३६ । | १६ |
| न्यस्य | न्यस्मै | १३६ । | २० |
| निमित्तत्वात् | तन्निमित्तत्वात् | १३९ । | १७ |
| नैमित्तिक- | नैमित्तिको | १४५ । | १८ |
| प्रकरणावि | प्रकरणव | १४९ । | १० |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । पङ्क्तौ |
|---|---|---|
| मग्नि- | मग्निः | १५१ । ६ |
| सवनीस्य | सवनीयस्य | १५४ । २४ |
| श्रुतं | शृतं | १५५ । ८ |
| श्रुत- | शृतं | १५५ । १२ |
| समा- | संमा- | १५५ । २६ |
| तत्र यु- | तत्प्रयु- | १६१ । ८ |
| क्षोक्तृ | क्षोक्तृ | १६२ । ५ |
| मर्हति | मर्हन्ति | १६२ । ६ |
| वास्यायाम् | वास्याम् | १६२ । १७ |
| तत्र | तत्तत्- | १६६ । ८ |
| संज्ञया ऽना- | संज्ञपना | १६७ । १४ |
| त्वाद | त्वाद्ध | १६८ । २० |
| सिद्धो क- | सिद्धो ते क- | १६८ । २४ |
| होत्रे | होत्रा | १७३ । ५ |
| मर्थ्यं अनु | मर्थ्यं पुरुषस्य ऋत्विजः सामर्थ्यं अनु- | १७३ । १२ |
| पि यज्ञ | पि याजमाने यज्ञ | १७४ । १२ |
| तत्वाद् वेदे | तत्वात् समाख्ययोद्गातृगणनामेवेति पूर्वपक्षे सिद्धान्तमाह । गुणत्वादिति । गुणत्वाद् ऋत्विजां संस्काररूपत्वाद् वेदे | १७४ । २४ |
| पि व्यव- | पि समाख्यया व्यव- | १७५ । १ |
| सिद्धान्तन्या- | सिद्धो तत्त्वा- | १७५ । २१ |
| होतुः | होतोः | १७७ । २३ |
| कमा | कर्मा | १७८ । ४ |
| स्येम | मस्य | १८४ । २३ |
| सदर्थ- | सदर्थं | १८७ । २१ |
| कर्मत्व | कर्मत्वे | १८८ । ५ |
| दण्डन | दण्डेन | २०० । ५ |
| नीतासु घा- | नीतासु दक्षिणासु घा- | २०० । २२ |
| कर्मणाः | कर्मणा | २१४ । १३ |
| श्रुतिः | स्तुतिः | २१७ । १० |
| अङ्गादि | अङ्गानि | २१८ । ६ |
| प्रकृतः | प्राकृतः | २२६ । १२ |
| अत्र | तत्र | २२८ । १६ |
| बधा | बन्धा | २२८ । २७ |
| से ऽङ्गा | से ऽङ्ग | २३१ । ११ |
| शास्त्रे | शास्त्रेण | २४५ । २१ |
| सत | सप्त | २४६ । २२ |
| ष्टोमः उ- | ष्टोमः स उ- | २४७ । २४ |
| वींषि | हवींषि | २५० । २६ |
| नन्वग्निर्वै | नन्वाग्नेयो वै | २५३ । १ |
| रादूर्ध्वं | रा ऊर्ध्वं | २५४ । ६ |
| वृत्तिः | वृत्तिः | २५६ । ८ |
| काङ्क्षि | काङ्क्षित | २५६ । २३ |
| दिषु मनु | दिषु समर्थमनु | २५६ । २६ |
| त्सव | त्सत्त्व | २६६ । १४ |
| सर्वं | सत्त्व | २६६ । १८ |
| यथा | याथा | २६७ । २ |
| नुरक्तं | नुरक्तां | २६७ । १४ |
| व्यार | व्यापार | २६७ । १६ |
| क्षप्रा | क्षप्रा | २६८ । १७ |
| वगि | वर्गि | २७५ । २३ |
| तथा | तथा | २७८ । १२ |
| स्यात्सं | स्यात्तत्सं | २७८ । २३ |
| २७ | २० | २८३ । १२ |
| कारणात् | कारणत्वात् | २८४ । १२ |
| माः प्रा- | मा इडां प्रा- | २८४ । २२ |
| आर्वं | विशेष | २८६ । ६ |
| न ल | न तल्ल | २८८ । १४ |
| सिद्ध | सिद्धे | २९१ । १६ |
| आन | अग्नि | २९५ । १८ |
| नम | नम्र | ३०५ । १२ |
| संबन्धस्तस्मात् | संबन्धात्त्व विघातः स्यात् । | ३०७ । ६ |
| नवीनाना | नवीनानां | ३११ । ११ |
| पू | पूर्वं | ३१३ । १४ |
| दान- | तद्धान- | ३१४ । १७ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|
| दर्शनात्व· | दर्शनात्मागा- धानात्व | ३२४ । | १४ |
| वत्यः क- | वत्यः तासां क- | ३३५ । | २२ |
| कत्वादीति | कत्वं स्या· दिति | ३३९ । | १९ |
| षड्हधर्मा | षड्हात् षड- हनाम· काद्धर्मा- | ३४१ । | १५ |
| तं ऽस्या | तं स्या | ३४७ । | ११ |
| धर्मार्थं | धर्मादन्य | १४९ । | ३ |
| प्रति | विप्रति | ३४९ । | २० |
| सोमस्य | द्वादशाहस्य | ३५८ । | ३ |
| यन्त | यन्ते | ३६४ । | १८ |
| गायत्र्यां | अगायत्र्यां | ३७५ । | १६ |
| नतन्त्रेण | नातन्त्रेण | ३९४ । | १९ |
| गाया | गीया | ३९५ । | १८ |
| चतुथा | चतुर्था | ३९७ । | ३ |
| स्येव | स्यैव | ४०१ । | १३ |
| गायताति | गायतीति | ४०५ । | २५ |
| मित्यत्य | मित्य | ४११ । | २२ |
| पेक्षत्वा- | पेक्षः स्यां- | ४१४ । | १५ |
| यथार्थं च न्याय | यथार्थं त्वन्याय्य | ४२५ । | १ |
| पक्ष | द्विपक्ष | ४२६ । | १४ |
| ज्यनो | ज्यं ना | ४२६ । | २५ |
| प्रथप | प्रथमप | ४२९ । | २५ |
| पत्या | पत्न्या | ४३० । | २० |
| शिष्यात् | श्रोष्यात् | ४३१ । | १ |
| इति । नियमः | इति बहुदेवते उक्तोदाहरणे नियमः | ४३२ । | ५ |
| विशति | विंशति | ४३३ । | १५ |
| मधिगो | मधिगोः | ४३४ । | २५ |
| स्मृत्वा व्य | स्मृत्वा ऽव्य | ४३५ । | २३ |
| स्या दृष्टा | स्यादृष्टा | ४३५ । | २३ |
| यथा | तथा | ४३६ । | ९ |
| व्यति | व्येति | ४३६ । | १२ |
| स्तथा वि | स्तथा ऽवि | ४३६ । | १८ |
| स न्यश्च | सन्यश्च | ४३७ । | १५ |
| तु र | तुपर | ४३७ । | १६ |
| वचनात् चतु- | वचनात् चतुस्त्रिंशद्वाजिनो देवबन्धोरिति वचनाद् अश्वस्य वङ्क्रयः चतुस्त्रिंशदिति सिद्धम् । अतस्तद्वचनादेव वैशेषिकम् । अध्रिगुप्रैषे ऽपि चतु- | ४३७ । | १९ |
| शब्दस्य | शदस्य | ४३७ । | १९ |
| अतः वि | अतः अवि | ४३८ । | १३ |
| द्वेर | द्वैर | ४३८ । | १४ |
| निषेधस्य | निषेधस्य | ४३८ । | १५ |
| इरवत् | इरापदवत् | ४३८ । | १८ |
| लक्षणा | लक्षणा | ४३८ । | १८ |
| लक्षणां | लक्षणां | ४३८ । | २३ |
| मारा.दिष्ट्य | मा राविष्टां | ४३९ । | १ |
| मान | माना | ४३९ । | १ |
| प्रशंमा | प्रशसा | ४३९ । | १० |
| कवषोरु | कवष | ४३९ । | १८ |
| शलास | शला | ४३९ । | २५ |
| कत्स्नवक्तं | कत्स्नमवत्तं | ४४० । | ६ |
| तदर्था | तदर्थं | ४४० । | ६ |

अशुद्धम् ।

विधीयते ॥ २६ ॥ आधानादिसंस्कृतस्याहवनोयस्य सर्वकर्मार्थं नित्यं धारणं च विहितं गतश्रियो नित्यं धार्य इति तत्यानुगते पूर्वोक्तेष्टिरनुष्ठेया न वेति संशये सर्वार्थत्वादग्निहोत्रस्यापि सर्वकर्ममध्ये सत्त्वात्तदर्थमपि धारणमिति निमित्तसत्त्वात् नैमित्तिकेष्टिरनुष्ठेयेति पूर्वपक्षे सि-

शुद्धम् ।

विधीयते ॥ २६ ॥ अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतो ऽहुते ऽग्निहोत्रे उद्वायादिति । इयमिष्टिः दर्शार्थमुद्धृते ऽग्निहोत्रे ऽहुते ऽन्यनुगमने ऽपि कार्या न वेति संशये तस्याग्निहोत्रार्थत्वादपि कर्तव्येष्टिरिति पूर्वपक्षे सिद्धान्तमाह । प्रासङ्गिकमिति । दर्शपूर्णमास-

| अशुद्धम् । | शुद्धम् । |
|---|---|
| द्धान्तमाह ॥ २६ ॥ धाय्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यनुष्ठानम् अधि॰ ॥ ८ ॥ धारणे च परार्थत्वात् ॥ २७ ॥ धारण इति । | क्रियासिद्ध्यर्थमुद्धरणमपि होत्रार्थोद्धरणकार्यस्य प्रसङ्गेन सिद्धिरिति प्रासङ्गिके उद्धरणे उक्तप्रायश्चित्तं न विद्यते हि यस्मात् उक्तवाक्येन तदर्थं उद्धरणकर्माग्न्यनुगमनएव निमित्ते कर्म विधीयते । उक्तस्थले परार्थत्वात् दर्शपूर्णमासार्थत्वात् निमित्ताभावाच्च नैमित्तिकमिति भाव: ॥ २६ ॥ धाय्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानम् । अधि॰ ७ । धारणे च परार्थत्वात ॥ २७ ॥ आधानादिसंस्कृतस्याहवनीयस्य सर्वकर्मार्थं नित्यं धारणं विहितं गतश्रियो नित्यं धार्य इति । तस्यानुगते पूर्वोक्तेष्टिरनुष्ठेया न वेति संशये सर्वार्थत्वादग्निहोत्रस्यापि सर्वकर्ममध्ये सत्त्वात्तदर्थमपि धारणमिति निमित्तसत्त्वार्थेमिति) केष्टिरनुष्ठेयेति पूर्वपक्षे सिद्धान्तमाह । धारणइति । पृ॰ ४४० । पं॰ १० |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|
| उद्धरणाङ्ग | उद्धरणमा-धानाङ्ग | ४४० । | २१ |
| स तु | न तु, | ४४१ । | ६ |
| तच्चरु | सच्चरु | ४४१ । | १५ |
| धर्म | धर्मा | ४४२ । | १३ |
| ये ऽगिष्ठाः | ये स्यविष्ठाः | ४४४ । | १ |
| तदर्थत्वात् | तदर्थवत् | ४४४ । | १६ |
| ग्रहणस्या | ग्रहणस्या | ४४५ । | २३ |
| मात्र | मात्रस्य | ४४५ । | २७ |
| इत्या | इत्या | ४४६ । | २५ |
| बाधः | बाधः । अधि.१ | ४४७ । | ५ |
| तादृश | यादृश | ४४८ । | २४ |
| होना | होनां | ४४९ । | ७ |
| स्पर्धेनचे | स्फ्येन वे | ४५० । | २ |
| वहन | वाहन | ४५० । | ६ |
| बाधः । | बाधः । अधि. २ | ४५० । | २१ |
| बाधः । | बाधः । अधि. ३ | ४५१ । | ६ |
| सर्वार्थो सान्तो | सर्वार्थमारम्भो | ४५१ । | १६ |
| आरम्भः | आरम्भः स | ४५१ । | १८ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|
| बाधः । | बाधः । अधि॰४ | ४५१ । | २० |
| दृंहश | नञा- | ४५२ । | ३ |
| क्रियते । यथा | क्रियते न । त्वङ्गार्थं पृथक् । यथा | ४५२ । | ६ |
| गीया | गीयाया | ४५२ । | ८ |
| रम्भोङ्ग | रम्भाङ्ग | ४५२ । | ८ |
| गते | गति | ४५२ । | २५ |
| बाधः । | बाधः । अधि.५ | ४५३ । | ३ |
| बाधः । | बाधः । अधि ६ | ४५३ । | २० |
| स्यशी | स्याशी | ४५३ । | २१ |
| यच्चै | यच्चे- | ४५४ । | ११ |
| कर्मता । | कर्मता । अधि.७ | ४५५ । | ५ |
| अन्या | अन्या | ४५५ । | १३ |
| समेत्य- | समेत्यत्र | ४५५ । | १५ |
| एकार्थो | येनार्थो | ४५५ । | २२ |
| स्वाह- | स्वाहा | ४५५ । | २७ |
| कल्पते । अति- | कल्पते । अन्यथा अति- | ४५६ । | २ |
| वैयथ्या- | वैयर्थ्या- | ४५६ । | ३ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्ती |
|---|---|---|---|
| कारकत्वम् । | कारकत्वम् । अधि. ८ | ४५६ । | ६ |
| संस्कारकत्वम् । | संस्कारकत्व-म् । अधि.९ | ४५६ । | २५ |
| ग्नीधयोनिः | ग्नीध्रीयोऽग्निः | ४५७ । | १७ |
| प्राभुक्तं | वृषभ | ४५७ । | २० |
| तथा | यथा | ४५७ । | २७ |
| मत्र च | मत्र न | ४५८ । | ४ |
| वत्कृ | वदुत्कृ | ४५८ । | ७ |
| भाग | याग | ४५८ । | १२ |
| सस्कार | संस्कार | ४५८ । | १८ |
| लोपादृद्ध | लोपाद् व्यृद्ध | ४५९ । | ५ |
| ग्रह- | ग्रहा | ४५९ । | ८ |
| हुचन | हुचनं | ४५९ । | १९ |
| अविरुद्ध | अविरुद्धा | ४६० । | ४ |
| वाधित्वम् । | वाचित्वम् । अधि.१० | ४६१ । | २० |
| सौम्यं | सौर्यं | ४६१ । | २२ |
| धार | धारत्व | ४६२ । | १६ |
| कपालं | कपालं गुणाः | ४६२ । | १९ |
| सच्छ | सच्छु | ४६२ । | २५ |
| भूता अन्य- | भूतान्य | ४६२ । | २६ |
| द्विशिष्य | द्विच्छिष्य | ४६३ । | ७ |
| वेति । | वेति, | ४६३ । | ७ |
| नेयं | नेयम् । | ४६३ । | ७ |
| द्यागो | द्यागो | ४६३ । | १० |
| ऋध्रया | ऋध्रुया | ४६३ । | १३ |
| जपकत्वं | जनकत्व- | ४६३ । | १५ |
| माङ्क्तं प्रा- | माङ्क्तप्रा- | ४६३ । | २० |
| दनेत्य | दनेनेत्य | ४६३ । | २२ |
| पाकः । | पाकः । अधि.११ | ४६३ । | २४ |
| ओदनः | स ओदनः | ४६४ । | १ |
| शास्त्रत्वा | शास्त्राभावा | ४६४ । | २ |
| विशेषात् | ऽविशेषात् | ४६४ । | ८ |
| लोष्मणो | लोष्मणा | ४६४ । | १२ |
| चरोर | चराव | ४८४ । | १४ |
| चरौ | चरौ वा | ४६४ । | १८ |
| स्वे स्व- | सोम- | ४६४ । | २१ |
| बाधः । | बाधः । अधि.१२ | ४६४ । | २२ |
| सृष्टौ | स्पृष्टौ | ४६४ । | २७ |
| सिद्धान्तना | सिद्धान्तेना | ४६७ । | ३ |
| टकं व्या- | टकं वचनं व्या- | ४६७ । | १५ |
| चतुष्क | चतुष्क्व | ४६८ । | ३ |
| संसर्गा | ऽसंसर्गा | ४६९ । | १ |
| कृत्य | कृत्यं | ४६९ । | २४ |
| संस्कारार्थत्वात्। ४७। क्रत्वर्थं | संस्कारार्थत्वा-त्। ४७ अ-स्थियागे क-त्वर्थकर्मानु-ष्ठानम्। अधि.२० क्रत्वर्थे | ४७६ । | ११ |
| अधि. २० | अधि. २१ | ४७६ । | १५ |
| अधि. २१ | अधि. २२ | ४७६ । | २३ |
| अधि. २२ | अधि. २३ | ४७७ । | ७ |
| अधि. २३ | अधि. २४ | ४७७ । | १३ |
| अधि. २४ | अधि. २५ | ४७७ । | २४ |
| वंस्वारे | सर्वस्वारे | ४७८ । | १ |
| अधि. २५ | अधि. २६ | ४७८ । | १ |
| अधि. २६ | अधि. २७ | ४७८ । | ११ |
| अधि. २७ | अधि. २८ | ४७८ । | १६ |
| अधि. २८ | अधि. २९ | ४७८ । | २१ |
| अधि. २९ | अधि. ३० | ४७९ । | १७ |
| अधि. ३० | अधि. ३१ | ४७९ । | २५ |
| अधि. ३१ | अधि. ३२ | ४८० । | ३ |
| अधि. ३२ | अधि. ३३ | ४८० । | १३ |
| अधि. ३३ | अधि. ३४ | ४८० । | २१ |
| अधि. ३३ | अधि. ३५ | ४८१ । | १ |
| ७३ | ७२ | ४८१ । | २ |
| प्रयाजना | प्रयाजाना | ४८३ । | ३ |
| रविधि | विधि | ४८२ । | २७ |
| जनो | जन्यो | ४८५ । | १५ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|
| प्रकृति | प्रकृतिविकृति | ४९५ | २१ |
| तृतीयः | चतुर्थः | ५११ | अध्यायादिप्रदर्शकपङ्क्तौ |
| देवताना | देवतानां | ५१३ | ६ |
| दर्शनं वि | दर्शनं निषेधदर्शनं वि- | ५२३ | २० |
| मुख्यन | मुख्येन | ५२८ | १६ |
| यतैव | यतैवं | ५३१ | २१ |
| समानं | समानविधानं | ५३२ | १९ |
| तत्प | तत्परि | ५५१ | १५ |
| द्वयं | द्वयत्वं | ५५८ | ८ |
| एम | प्रथम | ५५९ | ५ |
| कल्पेन | विकल्पेन | ५६१ | २५ |
| सामानि गायतीति | सामानि गायति तस्माच्च ब्रह्मा सामानि गायतीति | ५७१ | ११ |
| ग्रहणवत् | ग्रहणाग्रहणवत् | ५७१ | १५ |
| प्रकृत | प्राकृत | ५७३ | ३ |
| तदभिघारयतीति | यदभिघारयति | ५७६ | १३ |
| मानं संबध्येत | माने बाध्येत | ५८० | ७ |
| याव तथा | यावत्प्रयोगेषु संबन्धः तथा | ५८१ | १ |
| शब्दानु | शब्दार्थानु | ५८२ | २४ |
| कुतः अनु- | कुतः अनुमानात् अनु- | ५८४ | ११ |
| न्मयू । | न्मयूरा | ५८७ | ४ |
| सकत्र | त्रिकत्रय | ५८७ | २० |
| बोधकं वा | बोधकवा | ५८७ | २६ |
| अर्थाद् फ- | अर्थात् फलहेतुका फ- | ६०१ | ६ |
| कालवद्देशस्याप्युपलक्षकत्वम् | कालपदं देशस्याप्युपलक्षकम् | ६०७ | १० |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|
| साद- | आसाद | ६१३ | ३ |
| हविसा | हविषा | ६१३ | ४ |
| दना | दनो | ६१४ | ६ |
| मात्रत्वं | मात्रं, | ६२० | १९ |
| अनून्याजौ | अनूयाजौ | ६२० | १९ |
| स्वस्त | स्वकस्त | ६२० | २६ |
| कोनरं का- | नेतरका- | ६२२ | २० |
| दाहुनं | दाह्यानं | ६२३ | १० |
| षेपा | विषेपा | ६२३ | २० |
| ऽस्मृथेन | ऽसमृथे न | ६२४ | १० |
| सुत्याकाला | तत्काला सुत्याकाला | ६२५ | ४ |
| मनु | मन्त्रानु | ६२६ | ७ |
| प्रत्तिपत्ति | प्रतिपत्ति | ६३० | ८ |
| आर्भप | आर्भवप | ६३० | २० |
| तदेकश | तदेकत्वादेकश | ६३३ | ५ |
| तत्प | तत्र प्र | ६३६ | १५ |
| क्रियेत मा | क्रियेत यथा मा | ६३६ | १५ |
| स्तथा ऽपि | स्तथा ऽत्रापि | ६३६ | १७ |
| त्सद्ध- | त्सह | ६३६ | १८ |
| दाक्षा | दीक्षा | ६३७ | १९ |
| यच्चोक्तमाग्ने | यच्चोक्तमाग्नेयाग्नीषोमीयं चरुत्वं तत्रेत्याह। चोदनेति । तन्त्राग्ने- | ६३७ | २४ |
| प्रधानकाल | प्रधान भक्षकाल | ६३८ | २ |
| स्वातन्त्र्येणावि | स्वातन्त्र्येणावि | ६३८ | ३ |
| तन्त्र- | न तन्त्र- | ६३८ | ४ |
| सीदामीति | दामीति | ६४३ | १८ |
| तत्कालिक | तात्कालिक | ६४४ | १६ |
| तत्कालिक | तात्कालिक | ६४४ | १७ |
| कारवि | कारस्यावि | ६४८ | ११ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|
| वेद्याः | वेद्योः | ६५० । | ६ |
| सिद्धे | सिद्धेः | ६५० । | १७ |
| साधनस्या | साधनत्वस्या | ६५२ । | ५ |
| माणः दी- | माणः इति दी- | ६५४ । | १३ |
| शाखे | शाखेवतैकदे- शाखे- | ६५५ । | २ |
| नं | ते | ६५६ । | १ |
| बर्हिषा | बर्हिषः | ६५८ | २ |
| नियु | विनियु- | ६५९ । | ६ |
| योगकल्पने | योगः कल्प्यते | ६५९ । | १६ |
| यागस्यानु | यागस्याङ्गानु | ६६७ । | १९ |
| तन्त्रं | तन्त्रस्य | ६६७ । | २१ |
| द्रुणानां | द्रुणानां | ६७२ । | २ |
| एतेषां | येषां | ६७२ । | ११ |
| तथा | यथा | ६७३ । | ६ |
| वैगुण्येषु | वैगुण्यस्य | ६७३ । | १३ |
| बाध- | बाधे | ६७५ । | ११ |
| द्वादश द्वादश | द्वादश द्वाद- शानि | ६७६ । | २३ |
| आधारे चैन्द्री- | आधारे च दी- | ६७७ । | २ |
| दर्शनम् | दर्शनं तद्वत् | ६७७ । | २६ |
| रचनेका- | रचेका- | ६७८ । | १३ |
| दृष्टं | दृष्टं | ६७९ । | २१ |
| घृत | शृत | ६८२ । | १३ |
| प्रतिसमाधीयत | प्रतिसमि- न्धीत | ६८५ । | २१ |
| प्रतिषेधः | प्रतिषेधः श्रूयते | ६८५ । | २१ |
| तथा- | तथा च | ६८५ । | २२ |
| फलम् ॥ ३७ ॥ | फलम् । ऋद्धि- कामाः सत्र- मासीरन्नित्य- नेन सर्वार्थ- त्वात् ॥ ३७ ॥ | ६८६ । | २८ |
| ऋद्धिकामाः सत्रमासीर- न्नित्यनेन सर्वा- र्थत्वात् । गृहस्थ | असंयोगादि- त्यस्य हेतो- र्निराकरण- माह । गृह- पतिरिति । सामान्यात् । सर्वेष्वपि साधारणा- त् । गृहस्थ | ६८७ । | २ |
| विति हेतु | विति आम्नाय- वचनाच्चेति हेतु | ६८७ । | १० |
| साचाय्य | साचाय्यं | ६८८ । | २ |

